यस्य चित्तं ह्यविशुद्धं शीलसंवरवर्जितम् ।
किं भाति मुनिवेषेण स नटर्षिरिवोन्मदः ॥ ५१ ॥

यस्य लोके दया नास्ति बालवृद्धादिदुःखिते ।
किं तस्य ब्रह्मवृत्तेन चित्ते * परिमोहिते[17] ॥ ५२ ॥

यस्य न कुशलोत्साहं चित्ते[18] लोकार्थं साधितुम् ।
तस्य किं तपसा सिद्धे[19] केवलं पापहेतुभिः ॥ ५३ ॥

यस्य चित्तं प्रविक्षिप्तं क्लेशाब्धिरसमाहितम् ।
स किं गुहानिविष्टो ऽपि न साधुर्दुष्टजन्तुवत् ॥ ५४ ॥

यस्य प्रज्ञा विशुद्धा न सद्धर्मगुणसाधने ।
तस्य किं ब्रह्मचर्येण केवलं दुःखहेतुना ॥ ५५ ॥

यश्च दाता विशुद्धात्मा सर्वसत्त्वानुपालकः ।
नीचो ऽपि स द्विजकल्पो[20] यतो दाता प्रजापतिः ॥ ५६ ॥

येन संरक्षितं नित्यं शीलं संयमसंवृतम् ।
स एव ब्राह्मणः शुद्धः श्रोत्रियो वेदवान्यतिः ॥ ५७ ॥

यस्य चित्तं दयाशूलं सर्वसत्त्वहितेषितम्[21] ।
चण्डालो ऽपि स विप्रः स्याल्लोकेशो हि क्षमाकरः ॥ ५८ ॥

---

MSS. 56. °कल्पा. — 57. शीलसंय°......P °वाग्यतिः.

17) One syllable is wanting after चित्ते, perhaps हि or सु.

18) *Utsāha* a neuter, cp. n. 15. As to साधितुम् for साधयितुम्, such formations are met with sometimes in this kind of writings: K f. 34 a 5 *darçitum*; ibid. f. 89 a 7 *pūritum*; f. 139 a 3 *vyavalokitum*; R f. 34 a 2 °*ḍhaukitum*; ibid. f. 151 b 5 *choritvā* instead of *chorayitvā*; Aç. f. 230 a 6 *saṃsthāpitum*. Cp. also Av. I, 95 n. 9.

19) Doubtless corrupt. If the plural °हेतुभिः were not an obstacle, we might correct तस्य किं तपसा सिध्येत्.

20) Pāda *c* is unmetrical, which may be corrected by transposing: नीचो ऽपि द्विजकल्पः स. In the same way çl. 51 *a* may be put in order.

21) This line is corrupt; the correction seems doubtful. I surmise दयाशीलं. For °हितेषितं perhaps read: °हितैषितं or हिते रतं.

येनैवं दुष्करं कर्म साधितं सत्त्वहेतुना ।
स एव ब्राह्मणो धीरो विश्वकर्मा यतो विधिः ॥ ५९ ॥

यस्य चित्तं सदा सत्त्वहितार्थेषु समाधितम् ।
स हि विप्रो महाभिज्ञो ब्रह्मा ध्यानरतो यतः ॥ ६० ॥

यस्य प्रज्ञा जगल्लोकहितानुशासनोज्ज्वला ।
सैव[22] द्विजवरो विज्ञो वेदधर्मास्थितो द्विजः ॥ ६१ ॥

येनैवं निर्जिताः क्लेशाश्चतुर्ब्रह्मविहारिणा ।
स्वचित्ते भावितं ब्रह्म स एव ब्राह्मणोत्तमः ॥ ६२ ॥

तस्मात्पुत्र मया प्रोक्तं श्रुत्वा लोकहितोत्सुकः ।
सर्वक्लेशान्विनिर्जित्य सद्धर्माभिरतो भव ॥ ६३ ॥

इति पितुर्वचः श्रुत्वा सुभूतिः सो ऽनुमोदितः ।
कृताञ्जलिस्तथा नत्वा पितरमित्यभाषत ॥ ६४ ॥

Subhūti yields to the importunities of his father.

तथा सत्यं मनस्तात[23] रोचते तपसे मम ।
तदाज्ञां देहि मे तात चरिष्ये ब्रह्मसद्व्रतम् ॥ ६५ ॥

तेनैवं प्रार्थ्यमानो ऽसौ सुभूतिना पिता ततः ।
परिष्वज्यात्मजं पुत्रं पुनरप्यब्रवीन्मुदा ॥ ६६ ॥

Second exhortation of the father.

एवं चेत्तव वाञ्छास्ति पुत्र ब्रह्मसुसाधनैः[24] ।
चर ब्रह्मव्रतं सम्यग्धीरचित्तसमाहितः ॥ ६७ ॥

आदौ क्रोधरिपुं जित्वा दुष्टमारान्विनिर्जय ।
यावत्क्रोधमनिर्जित्य दुष्टाञ्जेतुं न शक्नुयाः ॥ ६८ ॥

---

MSS. 59. सत्त्व is wanting in C. — 61. °नोज्ज्वला ॥ स एव. — 64. P °रमभ्यभाषत.

22) *Sandhir ārṣaḥ*, cp. n. 6 on Av. I, 20.

23) Ex conject.; C मनोज्ञात, P मनस्थात.

24) I follow here P; C ब्रह्मेषुसाधने. But the reading is probably corrupt.

पावद्दुष्टाननिर्जित्य धर्मे स्थातुं न शक्नुयाः ।
असुसंस्थितधर्माणां हन्युर्मारा हि सर्वथा ॥ ६९ ॥

तस्माद्वाञ्छति यो ब्रह्म तेनादौ चित्तकोटरात् ।
विनिःकृष्य प्रयत्नेन हन्तव्यः क्रोधपन्नगः ॥ ७० ॥

क्रोधो हि वसते यस्य चित्ते मानमदाकुले ।
तावत्सद्गुणयुक्तो ऽपि सेव्यते नैव सज्जनैः ॥ ७१ ॥[25]

तस्मात्सर्वप्रयत्नेन क्रोधजिष्णुः समाहितः ।
प्रव्रज्यां समुपासित्य चर ब्राह्मण्यमादरात् ॥ ७२ ॥[26]

तथेत्यसौ प्रतिश्रुत्य सुभूतिः संप्रमोदितः ।
सहसा पितरौ नत्वा मुनीनामाश्रमं ययौ ॥ ७३ ॥

Subhūti obtains the *ṛṣipravrajyā*.

तत्र प्राप्तो मुनीन्नत्वा कृताञ्जलिपुटो मुदा ।
ब्राह्मण्यसंवरं प्राप्तुं प्रव्रज्यां समयाचत ॥ ७४ ॥

गुरो ब्रह्मविदां श्रेष्ठ कल्याणवर्त्मदेशक ।
प्रव्रज्यां देहि मे सत्यं चरेयं भवमुक्तये ॥ ७५ ॥

इति तस्य वचः श्रुत्वा गुरुर्ब्रह्मविदां वरः ।
एहि वत्स चर ब्रह्मचर्यं जित्वा षडिन्द्रियम् ॥ ७६ ॥

इत्युक्तो गुरुणा सो ऽभूत्सुभूतिर्मुनिवेशभृत् ।
ब्रह्मविहारसंपन्नो विनीतः श्रद्धयान्वितः ॥ ७७ ॥

He is as irascible as before, though a *muni*.

तथापि दैवसामर्थ्यात्क्रोधसंरक्तमानसः ।
किञ्चिन्निमित्तमात्रे ऽपि विग्रहवानसंयतः ॥ ७८ ॥

---

MSS. 70. °कोटलात् ॥ विनिकृष्य. — 71. क्रोधा; P मारमदा°. — 73. सुभूतिस°. — 75. C कल्याणब्रह्मदेशक. — 76. P °न्द्रियां. — 77. C इत्युक्ता, P इत्युक्ते; both °संपन्ना. — 78. देवसा°.

25) If not rather, by conjecture, तावत्स गुणा°.

26) Sic MS. I think that it must be: समुपाश्रित्य.

वेदसिद्धान्तशास्त्रेषु विवादी क्रोधव्याकुलः[27] ।
अतीव रोषसंक्रुष्टो विचिन्तेप यतोर्नपि ॥ ७९ ॥
धर्मार्थकाममोक्षेषु निरपेक्षः सुतीक्ष्णवाक् ।
सर्वत्र मुनिभिश्चापि विग्रहाग्रहसमाहितः ॥ ८० ॥
इत्येनं क्रोधसंरब्धं वेदसिद्धान्तमानिनम् ।

His guru pities him. सुभूतिं ब्राह्मणं दृष्ट्वा गुरुश्चैवमचिन्तयत् ॥ ८१ ॥

अहो दैवबलाधानात्सुभूतिर्ब्राह्मणो ऽप्ययम् ।
[28]स्वसिद्धान्तसमानो ऽथ क्रूरवाग्विग्रहोत्सुकः ॥ ८२ ॥
अग्निकल्पो महातीक्ष्णः सर्वशास्त्रार्थकोविदः ।
विशारदो महाभिज्ञो धर्मसंयमतत्परः ॥ ८३ ॥
तपश्चरणसंरक्तस्तीक्ष्णबुद्धिः कृतोद्यमः ।
महोत्साहो महावीरः सिद्धविद्यो[29] महोत्कटः ॥ ८४ ॥
सर्वशास्त्रकलाभिज्ञो मन्त्रसिद्धिप्रयोगवित् ।
वेदसिद्धान्तयोगानां पारगश्च महासुधीः ॥ ८५ ॥
किं तु क्रोधाविशुद्धात्मा विग्रही वादसंरतः ।
किंचिन्निमित्तमात्रे ऽपि विक्रुष्टो ऽथ रुषाशयः[30] ॥ ८६ ॥
कदाचित्कुपितो रुष्टः संक्लेशाधीरचेतनः[31] ।
शापाशनिप्रहारेण लोके ऽनर्थं करिष्यति ॥ ८७ ॥

---

MS. 79. °व्याकुल ॥ ...... विचिन्तेप. — 80. C निरपेक्ष, P निरहोन्त; C सुतिक्ष्ण°, P सुतीक्षुः. — 83. C °तिक्ष्णः, P °तीक्षुः. — 85. °लाभिज्ञा.

27) Metri causa, cp. *supra* n. 12 and *infra*, çl. 285.

28) The reading is not wholly certain. P स्वसिद्धान्तमानोथेः unmeaning and missing one syllable.

29) Ex conject.; MSS सिद्धविद्या.

30) I follow P. C has: °क्रुष्टोवरुषाशया.

31) Ex conject.; MSS. संक्लेशोधीर°.

तदहं संप्रबोध्यैनं सुभूतिं द्विजसत्तमम् ।
समाधिध्यानचर्यासु योजयेयं च सर्वथा ॥ ८८ ॥
इति मत्वा गुरुश्चैनं सुभूतिं समबोधयत् ।

Long sermon of the guru in order to heal Subhūti from his angry mind.

शृणु वत्स हितं वक्ष्ये तत्र भव समाहितः ॥ ८९ ॥
सर्ववर्णाग्रजो विप्रः सर्वजातिवरोत्तमः ।
ब्राह्मणो ऽस्मीत्यहंकारो न कर्तव्यः कदाचन ॥ ९० ॥
न जीवो ब्राह्मणस्तावद्यस्मात्संस्कारतो द्विजः ।

He demonstrates the futility of a Brahman's pride on account of his caste,

जीवश्चेद्ब्राह्मणस्तावद्वृथा स्याद्धर्मसंस्कृतिः ॥ ९१ ॥
आद्यन्ते पशवो देवा इति वेदे ऽपि कथ्यते[32] ।
ततो धर्माभिसंस्कारैः सर्वे स्युर्मानवा द्विजाः ॥ ९२ ॥
श्वपचा अपि धर्मस्थाः संस्कृताः स्युर्द्विजाधमाः[33] ।
गुणधर्मानुसारैश्च देवा दैत्याश्च मानुषाः ॥ ९३ ॥
सत्त्वधर्मधरा देवा रजोधर्मधरा नराः ।
तमोधर्मधरा दैत्या इति सिद्धान्तसंमतम् ॥ ९४ ॥
इति धर्मगुणाधानात्त्रिधातुकभवालये ।
चतुर्योनिसमुद्भूताः षड्गतिषु भ्रमन्ति ते ॥ ९५ ॥
तत्रापि कर्मभेदेन जातिभेदा ह्यनेकशः ।
जातिष्वपि च सर्वासु स्वकर्मपरिणामतः[34] ॥ ९६ ॥
सत्त्वा नैकविधा जाता अधमोत्तममध्यमाः ।

---

MS. 90. °हङ्कारा. — 93. स्वपचा.

32) I think that the meaning is this: the animals and the devas are each at one of the ends of the series of creatures.

33) So P; C संस्कृतेस्यद्विजानराः utterly corrupt. But I am not sure that even the reading of P is right. Perhaps द्विजा ननु?

34) Ex conject.; MSS. °परिमाणतः.

and explains the cosmology.

ये सत्त्वास्तामसा रौद्रा हिंसाकर्मानुसंरताः ।
ते ऽधोभुवनसंजाता वसन्ति क्लेशभागिनः[35] ॥ ९७ ॥

रजोधर्मरता ये हि रागचर्यानुसारिणः ।
ते सत्त्वा भूमिसंजाता वसन्ति मानुषादयः ॥ ९८ ॥

सत्त्वधर्मरता ये तु सात्त्विकाः शान्तचारिणः[36] ।
ते देवा निर्मलानन्दा वसन्ति स्वर्गतिं गताः ॥ ९९ ॥

तथैते सर्वसत्त्वाश्च गुणधर्मानुसारतः ।
स्वकृतं कर्म भुञ्जन्तो भ्राम्यन्ति त्रिभवालये[37] ॥ १०० ॥

वृद्धिं प्राप्य गुणाश्चैत्थमेकैकं गुणवृद्धितः[38] ।
* * * * * * * * * * * * * * * * ॥ १०१ ॥

आकाशस्य गुणश्चैकः शब्द एव न चापरः ।
शब्दस्पर्शौ च वायोर्वै द्वौ गुणौ परिकीर्तितौ ॥ १०२ ॥

अग्नेः शब्दश्च स्पर्शश्च रूपमेव त्रयो गुणाः ।
शब्दस्पर्शरूपरसाश्चवार्येव समीरणे[39] ॥ १०३ ॥

स्पर्शः शब्दो रसो रूपं गन्धश्च पृथिवीगुणाः ।
एवं मिलितयोगैश्च ब्रह्माणोत्पत्तिरुच्यते[40] ॥ १०४ ॥

---

MS. 97. C तेधोभु°; P °भुवनसंत्राता. — 98. °नुचारिणः. — 100. स्वकृतकर्म. — 102. C शब्दस्पर्शौ, P शब्दस्वर्गौ.

35) A çloka of six pādas, it seems.

36) I follow P; C °न्तसारिणः.

37) To understand the last word it must be supposed that *tribhavā°* (*tribhuvā°*?) means the same as *tribhuvanālaye*, as it seems to do also (Paris MS.) f. 47 a 7 त्रिभवाध्यसु (read: °घसु).

38) One line must have been lost here in the archetype of both MSS.

39) Cp. my *Sanskrit Syntax* § 28 b).

40) In this line and in the following one ब्रह्माणो° must be a blunder for ब्रह्मणो°; in this case we should have here a new instance of *sandhir ārṣaḥ*, cp. n. 22.

सर्वे जीवा मिलित्वैव ब्रह्माणांशसमुद्भवाः ।
चतुरशीति[41] लक्षाश्च प्रोक्ता वै जीवजातयः ॥ १०५ ॥

धर्मतः सुखिनो भूताः पापतो दुःखभागिनः ।
मिश्रतो मिश्रभुक्तार[42] इत्युक्तमवदानिकैः ॥ १०६ ॥

[43] भारते ऽपि तथा प्रोक्तमृषिभिः कर्मवादिभिः ।
सप्त व्याधा दशारण्ये मृगाः कालिंजरे गिरौ ॥ १०७ ॥

चक्रवाकौ शरद्वीपे हंसाः सरसि मानसे ।
ते ऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः ॥ १०८ ॥

उक्तं च मानवे धर्मे मुनिना मनुना * * ।[44]
मिथ्याजीवेन जीवन्यः पतितो ब्राह्मणो ह्यसौ[45] ॥ १०९ ॥

Cp. Vajrasūcī çl. 18 वृषलीफेनपीतस्य निःश्वासोपहतस्य च ।
तयैव सह सुप्तस्य निष्कृतिर्नोपलभ्यते[46] ॥ ११० ॥

Cp. Vajras. çl. 19 शूद्रोदृस्तेन यो भुङ्क्ते मासमेकं निरन्तरम् ।
जीवमानो भवेच्छूद्रो मृतश्च स प्रजायते ॥ १११ ॥

---

MSS 106. °क्तमव°. — 107. °तृमाष°.... मृगाक्रो (C लिंजले). — 108. P चक्रवाका. — 109. जीवंयः. — 111. C मृतश्चा, P मृवःश्च.

41) The numeral is indeclinable, it seems; likewise çl. 113. Cp. Avadānaç. I, 204 n. 1.

42) भुक्तारः instead of भोक्तारः in both MSS.

43) The passage quoted is found in the Harivaṃça 1209 foll. and is also adduced in Açvaghoṣa's *Vajrasūcī*, which is apparently the source of our author here and from which he drew several other places which I have noticed on the margin.

44) The last two syllables of the line are in C नस or तस, in P वसा; both unmeaning. Here we should expect खलु, cp. vs. 45. 118. 129.

45) I cannot identify this quotation, and the text of this line is suspected.

46) Cp. Manu III, 19, whence I have taken निष्कृतिः, which seems to be corrupt in MSS: C नैसृतिर्नो°, P निःसृतर्नो°. As to çl. 111 cp. çl. 208.

IV

Cp. Vajras. çl. 4 — अधीत्य चतुरो वेदान्साङ्गोपाङ्गांश्च तत्त्वतः ।
शूद्रात्प्रतिग्रहग्राही ब्राह्मणो जायते खरः ॥ ११२ ॥

Cp. Vajras. çl. 5 — खरो द्वादश जन्मानि षष्टि जन्मानि सूकरः ।
(47) श्वानः सप्तति जन्मानि इत्येवं मनुरब्रवीत् ॥ ११३ ॥

तथोक्तमवदाने ऽपि बुद्धेनाद्वयवादिना ।
(48) ब्राह्मणो ऽदत्तमादाय बभूव वानराधिपः ॥ ११४ ॥

तत्र (49) स बुद्धनाथाय ददौ च पणासं मुदा ।
ततश्च मानवो भूत्वा पांशुदाता ह्यभूच्छिशुः ॥ ११५ ॥

तत्कर्मफलतो राजा (50) सर्वानन्दो बभूव सः ।
तत्रापि बुद्धनाथाय पिण्डपातं ददौ मुदा ॥ ११६ ॥

तद्दीपंकरप्रसादेन बोधिसत्त्वो भवेन्नृपः (51) ।
सर्वपारमिताः पूर्य (52) बुद्धो ऽपि स भविष्यति ॥ ११७ ॥

इत्युक्तमवदाने ऽपि जिनेनाद्वयवादिना ।
तस्माच्चैवं विजानीया न जीवो ब्राह्मणः खलु ॥ ११८ ॥

---

MSS 112. अधित्य ..... शूद्रान्प्र°. — 113. C जत्मानी शूकरः, P जत्मानिशू°. — 114. तथोक्तंमव°. — 116. C. पिंदपात्रं, P पिण्डपात्रं, cp. Avadānaç. I, p. 13 n. 1.

47) If the reading is right, श्वानः must be taken as the nom. sing., made after the acc. श्वानम्. Cp. Pāli *sāno*, Prākrit *sāṇo*; Hemacandra's *Grammar* VIII, 1, 52 and *Vajrasūcī* çl. 19.

48) Ex conject.; C ब्राह्मणाद°, P ब्राह्मणोद°.

49) Ex conject.; MSS तत्रसंबुद्ध°.

50) I do not know this avadāna elsewhere. Query: सर्वंददो?

51) The line is unmetrical and corrupt. Query: दीपंकरप्रसादेन बोधिसत्त्वो ऽभवन्नृपः ('= .... the king became Bodhis.')?

52) MSS सर्वपारमिता पूर्य. In the *avadānamālās* there are many instances of absolutives in °य of non-compound verbs, e. g. K Paris MS, f. 34 a 5 चित्त्य; 36 b 6 दृष्य; 48 b 2 स्थाप्य; 87 a 4 पूज्य, also R Paris MS, f. 201 b 3. — पूर्य is also met with R f. 163 a 6. 170 a 3. Cp. *infra*, çl. 420.

Origin of the different castes and divisions of men,

जात्यापि ब्राह्मणो नैव संस्कृतस्तु द्विजो भवेत् ।
जात्या चेद्ब्राह्मणो भूतो वृथा स्यात्संस्कृतेर्विधिः ॥ ११९ ॥

स्मृतौ हि तत्तथा प्रोक्तं न जात्या धर्मतो द्विजः ।
* * * * * * * * * * * * * * * * (53) ॥ १२० ॥

धर्मसंस्कृतिवृत्तिस्थः श्वपचो ऽपि द्विजो भवेत् ।
तथा हि मानवे धर्मे मनुनाभिहितं खलु ॥ १२१ ॥

Cp. Vajras. 21

शरणीगर्भसंभूतः कठिनाख्यो महामुनिः ।(54)
तपसा ब्राह्मणो जातस्तस्माज्जातिरकारणम् ॥ १२२ ॥

Vajras. 22

(55) कैवर्तिगर्भसंभूतो व्यासो नाम महामुनिः ।
तपसा ब्राह्मणो जातस्तस्माज्जातिरकारणम् ॥ १२३ ॥

Vajras. 23

उर्वशीगर्भसंभूतो वसिष्ठाख्यो महामुनिः ।
तपसा ब्राह्मणो जातस्तस्माज्जातिरकारणम् ॥ १२४ ॥

Vajras. 24

हरिणीगर्भसंभूत ऋष्यशृङ्गो महामुनिः ।
तपसा ब्राह्मणो जातस्तस्माज्जातिरकारणम् ॥ १२५ ॥

Vajras. 25

चण्डालीगर्भसंभूतो विश्वामित्रो महामुनिः ।
तपसा ब्राह्मणो जातस्तस्माज्जातिरकारणम् ॥ १२६ ॥

Vajras. 26

(56) ताण्डुलीगर्भसंभूतो नारदाख्यो महामुनिः ।
तपसा ब्राह्मणो जातस्तस्माज्जातिरकारणम् ॥ १२७ ॥

---

MSS 119. C चेद्ब्राह्मणाभूतो, P चेद्ब्राह्मणंभूतो. — 120. हितंतथा. — 121. P स्वपचोपि, C स्वपंचापि. — 122. P कथिता°, C uncertain whether कथिना° or कठिना°. — 124. वशिष्ठा°. — 127. °संभूता; ......जातिरकारणं, and so C alone çl. 122—126.

53) Here, too, for several reasons I suspect the loss of one line.

54) The name Kaṭhina is doubtless corrupt. In the *Vajrasūcī* he is called Kaṭha — कठो नाम instead of कठिनाख्यो — and thus it will be right.

55) Perhaps to correct: कैवर्तो°, but the correction is not indispensable.

56) Ex conject.; MSS तांडुली°.

एवमन्ये ऽपि सर्वे च ऋषयो ब्रह्मचारिणः । (57)

तपसा ब्राह्मणा भूता न ब्राह्मणीगर्भसंभवाः ॥ १२८ ॥ (58)

धर्मसंस्कारतः सर्वे मानवा ब्राह्मणाः खलु ।

धर्मवृत्तिप्रमाणेन सर्वे स्युर्ब्राह्मणा नराः ॥ १२९ ॥

एकवर्णमिदं सर्वं ब्रह्मसृष्टिसमुद्भवम् ।

धर्मकल्पविकल्पेन चातुर्वर्ण्यं प्रकल्पितम् ॥ १३० ॥

सर्वे वै योनिजा मर्त्याः सर्वे मूत्रपुरीषिणः ।

एकेन्द्रियक्रियार्थाश्च तस्माच्छीलगुणैर्द्विजाः ॥ १३१ ॥

शूद्रो ऽपि शीलसंपन्नो गुणवान्ब्राह्मणो भवेत् ।

ब्राह्मणो ऽपि क्रियाहीनः शूद्रात्प्रत्यवरो भवेत् ॥ १३२ ॥

गुणैर्धर्मैस्तथा शीलैर्वर्णा ह्यनेकजातयः । (59)

ब्रह्मजेषु हि सर्वेषु नरेषु किं विशेषता ॥ १३३ ॥

यथा भस्मनि सौवर्णो विशेष उपलभ्यते ।

ब्राह्मणो चान्यजातौ वा न विशेषो ऽस्ति वै तथा ॥ १३४ ॥ (60)

यथा प्रकाशतमसोर्विशेष उपलभ्यते ।

ब्राह्मणो चान्यजातौ वा विशेषो नैष विद्यते ॥ १३५ ॥

न हि ब्राह्मण आकाशान्मरुतो वा समुद्भवः । (61)

भित्त्वा वा पृथिवीं जातो जातवेदा यथारणेः ॥ १३६ ॥

expounded in a spirit opposite to the aristocratic pride of the Brāhmaṇas and preaching the equality of mankind.

---

MSS 135. C °तमसोविशे°, P °तमसाविशे°. 57) So C; P ब्राह्मणानराः.

58) The verse is too long by one syllable. It may be corrected in various ways, e. g. न ब्राह्मणीसमुद्भवाः. The last pāda I have edited, as it is found in C; P has भूतानब्राह्मणीगर्भसंभवा° ॥

59) Ex conject.; C गुणोधर्मै°..... शीलैर्वर्णा, P गुणौधर्मै°...... शीलैर्वर्णा.

60) Çl. 134—138 are also found in Divy. XXXIII, p. 623, 13—20 of the ed. of Cowell and Neil, with slight discrepancies, for the 4th pādas of çl. 135 and 137 are different. At çl. 134 and 135 Divy. has *brāhmaṇe vā*, apparently the right reading. Large fragments of this avadāna have been found in the Kashgarian Skrt Mss.; the Kashgarian version is shorter than the Divyāvad text. Cf. S. p'Oldenburg Zap. XII. 031—032.

61) Divy. has not समुद्भवः, but समुत्थितः. I have not ventured to correct the reading of both C and P, because *sambhava* occurs here sometimes as a synonym of *sambhūta*, cp. n. 88.

ब्राह्मणा योनितो जाताश्चण्डाला अपि योनितः ।
श्रेष्ठत्वे वृषलत्वे च किं वास्ति भेदकारणम् ॥ १३७ ॥

ब्राह्मणो ऽपि मृतोत्सृष्टो जुगुप्स्यो ऽशुचिरुच्यते ।
वर्णास्तथैव चाप्यन्ये का नु तत्र विशेषता ॥ १३८ ॥

यथा सिंहादिजन्तूनां पद्मादिभेदलक्षणम् ।
देहसंस्थानलिङ्गैश्च नराणां किं विशेषता ॥ १३९ ॥

यथा हंसमयूरादिपक्षिणां च विशेषता ।
मुखादिवर्णशब्दैश्च नराणां नास्ति भेदता ॥ १४० ॥

यथा च कृमिकीटानां कायसंस्थानभेदता ।
तथैव नरजातीनां नैवास्ति भेदलक्षणम् ॥ १४१ ॥

यथा भूरुहवृक्षाणां पत्राद्याकारभेदता ।
तथा नास्ति मनुष्याणामाकृतेर्भेदलक्षणम् ॥ १४२ ॥

तृणौषधादिशस्यानां यथाकृतिविशेषता ।
मानवानां तथा नास्ति संस्थानभिन्नलक्षणम् ॥ १४३ ॥

धान्यादिव्रीहिजातीनां वर्णाकारादिलक्षणम् ।
तथा नास्ति मनुष्याणां वर्णाकारविशेषता ॥ १४४ ॥

जाति[62]कुन्दादिपुष्पाणां यथा वर्णादिभेदता ।
मानवानां तथा नास्ति वर्णगन्धादिभेदता ॥ १४५ ॥

जलजानां च पुष्पाणां पद्मादीनां विशेषता ।
वर्णसंस्थानगन्धाद्यै नराणां तु तथा न हि ॥ १४६ ॥

यथाम्रादिफलानां च स्वादादिगुणभेदता ।
मनुजानां तथा नास्ति मांसास्थिगुणभेदता ॥ १४७ ॥

---

MSS 137. जाताच°. — 141. तथैवंनर°. — 142. °ष्याणांमाकृतेभेद°. — 144. C °विशेषत ॥, P °विशेषतः ॥. — 146. C °स्थानगन्धश्च, P °स्थानगन्यैश्च.

62) So MSS., not जाती.

यथा षड्रसजातीनां गुणास्वादादिभेदता ।
तथा नास्ति मनुष्याणां षडिन्द्रियविशेषता ॥ १४८ ॥

यथा हेमादिधातूनां द्रव्यवर्णादिभेदता ।
तथा नास्ति मनुष्याणां संस्थानवर्णभेदता[63] ॥ १४९ ॥

यथा वज्रादिरत्नानां संस्थानवर्णभेदता ।
तथा नास्ति मनुष्याणां शरीराकारभेदता ॥ १५० ॥

समगांसादिभेदाश्च षडिन्द्रियसमास्तथा ।
एकांशतो विशेषो न कुतो देहेषु भेदता ॥ १५१ ॥

यथा हि बालका बाला क्रीडमाना महापथे ।
पांशुपुञ्जानि[64] संपिण्ड्य स्वयं नामानि कुर्वते[65] ॥ १५२ ॥

इदं क्षीरमिदं मांसमिदं घृतमिदं दधि ।
न च बालस्य वचनात्पांशवो ऽन्ना[66] भवन्ति हि ॥ १५३ ॥

वर्णास्तथैव चत्वारः सुभूत इति कल्पिताः ।
पांशुपुञ्जाभिधानेन योगो ऽप्येष न विद्यते ॥ १५४ ॥

न केशेन न कर्णेन[67] न शीर्षेण न चक्षुषा ।
न मुखेन न नासाया[68] न ग्रीवया न बाहुना ॥ १५५ ॥

---

MSS 153. मान्संमिदं. — 154. C पांदपुन्नाभिधानेन, P पांशुपुञ्ज्या°. — 155. न च वाहुना (P °हुनां).

63) Ex conject.; MSS संस्कारवर्णा°.

64) So C; P has पुञ्ज्यानि, perhaps better. Note the neuter gender of *puñja*.

65) Çl. 152—158 are found in Divy., as before, p. 626, 13—24 with some variances and discrepancies of reading.

66) Divy. ऽन्नं. The plural, however, fits better. As to the gender cp. *supra*, notes 16 and 64.

67) Divy. has कर्णाभ्यां and पार्श्वाभ्यां in the corresponding places.

68) This form points to some Pāli prototype; Divy. नासया against the metre.

नोरसा न च पार्श्वेन[67] न पृष्ठेनोदरेण वा।
नोरुभ्यामथ जङ्घाभ्यां पाणिपादनखैर्न च ॥ १५६ ॥

न स्वरेण न वर्णेन न सर्वांशैर्न मैथुनैः।
नैका[69] विशेषता वापि मनुष्येषु न विद्यते ॥ १५७ ॥

तथा नास्ति यथान्यासु जातिर्लिङ्गं पृथक्पृथक्।
[70] सामान्यकारणं मन्ये किञ्चिन्न भेदलक्षणम् ॥ १५८ ॥

संज्ञामात्रेण कल्प्यन्ते ब्राह्मणाः क्षत्रियास्तथा।
वैश्याः शूद्रास्तथान्ये ऽपि संज्ञामात्रे हि कीर्तिताः ॥ १५९ ॥

यथैकवृक्षजातानां फलानां नास्ति भेदता।
तथैकमनुजातानां किं विशेषत्वलक्षणम् ॥ १६० ॥

गुणधर्मानुचारेण जातिभेदा भवन्ति हि।
चातुर्वर्ण्यमिदं लोकं[71] सर्वं हि मनुसंभवम् ॥ १६१ ॥

गुणधर्मप्रमाणेन जातेर्नैव प्रमाणता।
[72] तथा च प्रोच्यते बौद्धैरवदानार्थकोविदैः ॥ १६२ ॥

मानवा ये प्रशान्तास्थाः[73] सत्यधर्मव्रतान्विताः।
ब्राह्मणास्ते महाशुद्धाश्चतुर्ब्रह्मविहारिणः ॥ १६३ ॥

---

MSS 162. जातेनैव.

69) I have combined the good readings of C and P. For C has नेकोविशेषता.... न विद्यते P नैको विशे°.... नुविद्यते. Another possible correction might be एका विशेषता .... न विद्यते.

70) Ex conject.; MSS सामान्यं कारणं.

71) लोक is here a neuter. The sentence is repeated çl. 198.

72) Ex conject.; C तथा प्रोवाच्यते, P तथा प्रोच्यत.

73) Ex conject.; MSS प्रशान्तस्थाः. I think *praçāntāstha* is almost synonymous with *praçāntacitta* or *°ātman*.

परिग्रहान्परित्यज्य वनप्रस्थनिवासिनः ।
ये भजन्ति सदा ब्रह्म वानप्रस्था हि ते द्विजाः ॥ १६४ ॥
षट्कर्मनिरता ये तु श्रोत्रिया गृहवासिनः ।
महायज्ञसमाचारा उपाध्याया हि ते द्विजाः ॥ १६५ ॥
निरपेक्षाः स्वदेहे ऽपि त्यक्तमाराभिगोचराः ।
भिक्षाशिनो व्रतस्थास्ते भिक्षवो ब्रह्मवादिनः ॥ १६६ ॥
ये[74] च मारान्विनिर्जित्य निःसङ्गा धीरमानसाः ।
तपन्ति पुण्यक्षेत्रेषु मानवास्ते तपस्विनः ॥ १६७ ॥
दशाकुशलनिर्मुक्ता दशकुशलसंरताः ।
सत्यवाचो व्रतस्था ये ऋषयस्ते द्विजोत्तमाः ॥ १६८ ॥
ये च लोकप्रचारेषु विरता धर्ममानसाः ।
वाचंयमाश्च ते भद्रा मुनयः सत्यवादिनः ॥ १६९ ॥
ये च जितेन्द्रियग्रामा निर्मुक्तभवचारकाः ।
निर्ममा निरहङ्कारा यतयो योगिनो ऽपि ते ॥ १७० ॥
ये च स्थण्डिलमाश्रित्य चरन्ति व्रतमादरात् ।
ते ऽपि च मानवा धीराः स्थाण्डिला[75] जटिलास्तथा ॥ १७१ ॥
ये च भस्मविलिप्ताङ्गा हाराभरणभूषिताः ।
कापालिकाश्च ते वीराः श्मशानव्रतचारिणः ॥ १७२ ॥
ये[76] समिद्धव्यद्रव्याणि जुह्वत्यग्नौ समाहिताः ।
ते होतारश्च यज्वानो वेदधर्मार्थसाधकाः ॥ १७३ ॥

---

MSS 164. C परिग्रहापरित्यत्य (or °भ्यभ्य) P परिग्रहान्परित्यभ्य. — 173. C गुहोतारण्ययज्वानो, P तेभुंहोतारश्चयपज्वानो.

74) Ex conject.; MSS येचमायाविनिर्जित्य. Or should we read मायां वा निर्जित्य?

75) The asterisk preceding the word in PWK s. v. may be cancelled now.

76) Ex conject.; C समाद्वव्य°, P समिद्वव्य°.

ये[77] च क्षत्राणि रक्षन्तः पालयन्ति सदा प्रजाः ।
सत्त्वरक्षाव्रताचाराः क्षत्रियास्ते नृपा नराः ॥ १७४ ॥

ये रञ्जयन्ति धर्मार्थे लोकाञ्जोतिप्रयोजकाः ।
राजानस्ते महावीराः सर्वधर्माभिपालकाः ॥ १७५ ॥

ये च सत्त्वहिताधाने विविधार्थानुकारिणः ।
वेशयन्ति प्रजा धर्मे वैश्यास्ते हि नरोत्तमाः ॥ १७६ ॥

व्रताचारविहीना ये सत्त्वरक्षार्थचारिणः ।
मन्यन्ते सेवया शुद्धिं शूद्रास्ते श्रेष्ठिनस्तथा ॥ १७७ ॥

ये च क्षेत्राणि कर्षन्ति[78] धान्यादिव्रीहिसाधकाः ।
कृषिकास्ते[79] नरा धान्यैः सत्त्वजीवानुपोषकाः ॥ १७८ ॥

साधयन्ति महत्कार्यं धनादिवस्तुसंचयैः ।
वणिक्कर्माभिसंयुक्ता वणिजस्ते महोद्यमाः ॥ १७९ ॥

ये च सार्थान्समाहृत्य रत्नाकरसमागताः ।
साधयन्ति च रत्नानि सार्थवाहाश्च ते नराः ॥ १८० ॥

तथान्ये शिल्पविद्यादीन्ये च कुर्वन्ति मानवाः ।
शिल्पिनस्ते तथान्ये ऽपि स्वर्णकारादयो नराः ॥ १८१ ॥

ज्योतिर्विद्याविदो ये च गणयन्ति दिवानिशम् ।
युगान्तकालविज्ञाता गणकास्ते ऽपि मानवाः ॥ १८२ ॥

---

MSS 174. रक्षन्तिः. — 181. °दयोमराः.

77) I follow C, P has क्षेत्राणि, which does not fit the etymological argument.

78) So both MSS, not कृषन्ति.

79) PWK registers *kṛṣika* with an asterisk. — धान्यैः is my conjectural correction for MSS धान्या.

[80]धातुदोषाण्यभिज्ञाय लोकानां परिचारकाः ।
[81]भैषज्यं ये ददत्येव भिषजस्ते हि वैद्यकाः ॥ १८३ ॥

भूतदोषाण्यभिज्ञाय बलिपूजाविधानतः ।
शमयन्ति च ये भूतान्भौतिकास्ते ऽपि मानवाः ॥ १८४ ॥

एवं चान्ये ऽपि ये सत्त्वा यद्यत्कर्मानुचारिणः ।
तत्तत्कर्मानुशीलेन जातिधर्मप्रवृत्तिकाः[82] ॥ १८५ ॥

ततो ये मानवाः क्रूरा निर्दयाः सत्त्वहिंसकाः ।
चण्डवृत्तिप्रचाराश्च चण्डाला इति ते स्मृताः ॥ १८६ ॥

ये भजन्ति शिवं नित्यं शिवभक्तिपरायणाः ।
ते शैवा मनुजा ज्ञेयाः शिवधर्मानुचारतः[83] ॥ १८७ ॥

ये भजन्ति विष्णुं नित्यं विष्णुभक्तिपरायणाः ।
विष्णुधर्मसमाचाराद्वैष्णवास्ते ऽपि मानवाः ॥ १८८ ॥

ब्रह्माणं ये भजन्त्येव ब्रह्मभक्तिपरायणाः ।
ब्रह्मधर्मसमाचाराद्ब्राह्मणास्ते ऽपि मानवाः ॥ १८९ ॥

ये भजन्ति महारौद्रं भैरवभक्तिमानसाः[84] ।
माहारौद्राश्च ते ख्याता भैरविकाश्च मानवाः ॥ १९० ॥

---

MSS 183. P भेषजं; both ददत्येवं. — 185. C तेत्तत्कर्मा°. — 189. भजन्त्येवं.

80) *Doṣa* is here a neuter and *bhūta* (çl. 184) a masculine.

81) *Dadanti* must be put to the account of the paraphrast himself. It occurs also (Paris MS) f. 56 b 6.

82) Ex conject.; C प्रवृत्तिमाः, P °प्रवृत्तिनः.

83) So P; C °नुसारतः. It is difficult to make here a good choice.

84) Ex conject.; MSS भैरवंभक्ति°, cp. the 2d pādas of çl. 187—189. — Neither माहारौद्र nor भैरविक occur in PWK.

ये च माहेश्वरीं देवीं भजन्ति कुलधर्मिणः ।
माहेश्वरीव्रताधाराः कालिकास्ते ऽपि मानवाः[85] ॥ १९१ ॥

ये भजन्ति सदा बुद्धं बौद्धधर्मपरायणाः ।
ते ऽपि च मानवा बौद्धाः संबोधिपदसाधिनः ॥ १९२ ॥

ये भजन्ति जिनं चैव जैनधर्मपरायणाः ।
ते ऽपि च मनुजा जैना जैनधर्मानुचारणात्[86] ॥ १९३ ॥

एवं चान्ये ऽपि ये सत्त्वा व्रतचर्यानुलिङ्गिनः ।
ते ऽपि च मानवाः सर्वे धर्मचर्यानुवर्णिनः ॥ १९४ ॥

यादृशं साध्यते कर्म तादृशो जातिता भवेत् ।
प्रजापतेर्हि चैकत्वे निर्विशेषो ऽभवद्यतः[87] ॥ १९५ ॥

न चेन्द्रियेषु नानात्वं क्रियावादेन दृश्यते ।
ब्राह्मणे चान्यजातौ वा नैषां किंचिद्विशिष्यते ॥ १९६ ॥

न ह्यात्मनः समुत्कर्षाच्छ्रेष्ठत्वमिह युज्यते ।
शुक्रशोणितसंभूतं योनिजं सर्वमेव हि ॥ १९७ ॥

चातुर्वर्ण्यमिदं लोकमिति तीर्थ्यैर्विकल्पितम् ।
ब्रह्मजा ब्राह्मणाः' नैवं धर्मसंस्कारजाः खलु ॥ १९८ ॥

यदि वा ब्रह्मजा विप्रा ब्राह्मणी कुत्र संभवा[88] ।
ब्राह्मण्यपि तथा चैव ब्रह्मजा यदि सांप्रतम् ॥ १९९ ॥

---

MSS 193. जिनंचैवं. — 196. °ष्ठत्वंमिह ......... C योनितं, P योनिजः. — 198. C तोर्थैवि°, P तीर्थैर्वि°. Cp. çl. 240. — 199. तयाचैवं.

85) C repeats after this çloka the 2d line of çl. 190.

86) Cp. note 12.

87) Ex conject.; C °षोभवेत्पदः or °त्यदः, P °षोभवत्पतः.

88) *Sambhava* has here adjectival force, as much as *sambhūta*, cp. çl. 242 *ūrubhyāṃ sambhavaḥ*, 246 *vaiçyāpi* ..... *ūrubhyām eva sambhavā*.

ब्राह्मणस्य च सा भार्या स्याच्चेवेदं न युक्तितः[89]।
न भार्या भगिनी युक्ता ब्रह्मणां ब्रह्मजा यदि ॥ २०० ॥
न सत्त्वा ब्रह्मणो जाताः कर्मसंस्कारजास्त्वमी।
निहीनोत्कृष्टमध्याश्च सत्त्वा नानाश्रयाः पृथक् ॥ २०१ ॥
तेषां हि जातिसामान्याद्ब्राह्मणो तत्त्रिये तथा।
वैश्यशूद्रे तथान्येषु समं ज्ञानं प्रवर्तते ॥ २०२ ॥

Vajras. çl. 29 शीलं प्रधानं न कुलं प्रधानं कुलेन किं शीलविवर्जितेन।
बहवो नरा नीचकुलप्रसूताः स्वर्गं गताः शीलमुपेत्य धीराः ॥ २०३ ॥

cp. Vajras. çl. 17 न जातिर्दृश्यते देवैः शीलः कल्याणकारकः[90]।
चण्डालो ऽपि हि शीलस्थस्तं देवा ब्राह्मणं विदुः ॥ २०४ ॥

cp. Vajras. çl. 14 सत्यं ब्रह्म तपो ब्रह्म शीलश्चेन्द्रियसंयमः।
सर्वभूतदया ब्रह्म एतद्ब्राह्मणलक्षणम् ॥ २०५ ॥

cp. Vajras. çl. 15 सत्यं नास्ति तपो नास्ति नास्ति चेन्द्रियसंयमः।
सर्वभूतदया नास्ति एतच्चण्डाललक्षणम् ॥ २०६ ॥

cp. Vajras. çl. 16 देवमनुष्यनारीणां तिर्यग्योनिगतेष्वपि।
मैथुनं नाधिगच्छन्ति ते नरा ब्राह्मणाः खलु ॥ २०७ ॥
शूद्रीहस्तेन यो भुङ्क्ते मासमेकं निरन्तरम्।
जीवमानो भवेच्छूद्रो मृतः स श्वा प्रजायते[91] ॥ २०८ ॥

---

MSS 200. P °च्चचैवं न युक्तिता. — 203. गताशीलकल्या°. — 208. भुक्ते.

89) Ex conject.; MSS. युक्तिता. Çl. 199 and 200 are somewhat intricate. I think, the purport of them is this: If the Brahmans are born from Brahmā, how then, is it with the Brāhmaṇī, how may she be a Brahman's wife? If she is born from Brahmā, she is the Brahman's sister, and does not fit him for a wife. *Idam na yuktitaḥ* signifies «this is not consistent with a proper way of acting».

90) शील is a masculine, likewise in the following çloka.

91) This çloka is a variance of çl. 111.

cp. Vajras. çl. 20 शूद्रीपरिवृतो विप्रः शूद्रो च गृहमेधिनो ।
वर्जितः[92] पितृदेवैश्च रौरवं सो ऽधिगच्छति ॥ २०९ ॥

तस्माद्धर्मतपःशीलसंयमज्ञानतो द्विजः ।
न त्वेतैर्हि विना विप्रः किं स्यात्संस्कारमात्रतः ॥ २१० ॥

तत्र शरीरसंस्कारमात्रेण ब्राह्मणो भवेत् ।
संस्कृतेन द्विजो वा चेच्छूद्रो ऽपि संस्कृतो द्विजः ॥ २११ ॥

यदि विप्रः शरीरः[93] स्यात्पावको ब्रह्महा भवेत् ।
ब्रह्महत्या च बन्धूनां शरीरदहनाद्भवेत् ॥ २१२ ॥

ब्राह्मणबीजसंभूतः शूद्रो ऽपि न कथं द्विजः ।
तस्माद्धि ब्राह्मणो नैव देहसंस्कारमात्रतः ॥ २१३ ॥

cp. Vajras. çl. 10 सद्यः पतति मांसेन धावन्नतीरविक्रयी ।
ब्राह्मणो ऽपि भवेच्छूद्रः सुरया लवणेन च ॥ २१४ ॥

cp. Vajras. çl. 11 आकाशगामिनो विप्राः पतिता मांसभक्षणात् ।
विप्राणां पतनं दृष्ट्वा ततो मांसानि वर्जयेत् ॥ २१५ ॥

भक्ष्यन्ते येन मांसानि भक्ष्यते[94] तेन किं न हि ।
अभक्ष्यभक्षणाच्चैव ब्राह्मणः पतितो भवेत् ॥ २१६ ॥

पतितो ब्राह्मणश्चैवं संस्कारं नार्हति पुनः ।
तस्माज्ज्ञानं विना नैव शरीरो ब्राह्मणो भवेत् ॥ २१७ ॥

---

MSS 210. C °तपशील°, P °पयः शली°. — 211. C वा चेच्छुद्रोपि संस्कृते, P वा-चेच्छ्रादेपि संस्कृतो. — 214. C सद्यपद्यति मांसेन, P सद्यथततिमांसेन ...... C °क्रूराः, P °क्रूद्रः........ both लवनेन. — 217. C नर्हति, P नार्हतिः........ C शरीरीन्रा°.

92) Ex conject.; C वर्जितपितृवेदैवा°, P वर्जितःपितृवेदैःत्ररारवं.

93) शरीर masc., cp. çl. 217 and n. 90.

94) Perhaps should be corrected भक्ष्येत.

ज्ञानवान्हि भवेत्पूज्यो ब्राह्मणा अपि मानवाः ।
समानेषु च देहेषु कुत्राप्यस्ति विशेषता ॥ २१८ ॥
तस्माज्ज्ञानप्रमाणेन न शरीरप्रमाणता ।
यथा करोति भाण्डानि मृत्तिकयैव *भार्गवः*(95) ॥ २१९ ॥
मृत्तिकाया न भेदो ऽस्ति तत्कृतभाजनेष्वपि ।
किं तु प्रक्षिप्तवस्तूनां संज्ञयाख्यायते खलु ॥ २२० ॥
प्रक्षिप्तं यत्र यद्द्रव्यं तद्भाण्डं तेन लक्ष्यते ।
ज्ञानधर्मगुणाचारैर्लक्ष्यते मानवस्तथा ॥ २२१ ॥
ज्ञानधर्मगुणाचारैर्विहीनो मानवः पशुः ।
ज्ञानविज्ञानभेदेन वर्तते गुणभेदता ॥ २२२ ॥
*गुणभेदाद्भवेद्धर्मभेदा च संप्रज्ञायते*(96) ।
धर्मभेदात्ततः कर्मभेदता संप्रवर्तते ॥ २२३ ॥
कर्मभेदात्तथाचारभेदता च प्रवर्तते ।
तथाचारविशेषेण ज्ञातिभेदाः प्रवर्तिताः ॥ २२४ ॥
महाभूतसमुद्भूतस्कन्धेष्वायतनेषु च ।
सर्वजन्तुशरीरेषु समेषु का विशेषता ॥ २२५ ॥
ज्ञानविज्ञानमात्रेण भिद्यन्ते खलु मानवाः ।
ज्ञानविज्ञानपात्रत्वात्पूज्यन्ते नीचजा अपि ॥ २२६ ॥

---

MSS 218. देहेषु कुत्रोप्य°. — 222 P वर्त्तन्ते गुणभेदताः. — 223 C °भेदात्ततो कर्मभेदांतसंप्र°, P °भेदात्ततो कर्मभेदतासंप्र°.

95) Instead of the last word, which is corrupt, is, of course, required a word meaning ‘potter’. But it would be not advisable to correct भाण्डिकः. For *bhāṇḍika* = *bhāṇḍakāra* is unknown, and it is not in the habit of Sanskrit to use taddhitas in °*ika*, with the meaning of «manufacturer of — ». Query: भाण्डकृत्?

96) There can be no doubt about what the author intends to say, but the wording is corrupt.

ज्ञानविज्ञानहीनत्वान्मानवो ऽपि न पूज्यते ।
पशुवत्स नराकारः ततः पूजा न चाकृतेः ॥ २२७ ॥
ज्ञानेनापि द्विजो नैव कर्माचारप्रमाणतः ।
ज्ञानेन यदि वा विप्रः शूद्रो ऽपि ब्राह्मणो भवेत् ॥ २२८ ॥
अन्ये ऽपि बहवः सन्ति सकैवर्तादिनीचजाः ।
ज्ञानवन्तश्च ये धीरास्ते ऽपि स्युर्ब्राह्मणाः खलु ॥ २२९ ॥
तस्माच्च ज्ञानमात्रेण ब्राह्मणो न भवेत्खलु ।
कर्माचारप्रमाणेन न ज्ञानस्य प्रमाणता ॥ २३० ॥
कर्मणापि द्विजो नैव शुद्धाचारप्रमाणतः ।
कर्मणा वै द्विजाश्चैवं सर्वे स्युर्ब्राह्मणाः खलु ॥ २३१ ॥
सन्ति हि बहवो लोके महायज्ञादिकर्मिणः ।
क्षत्रियवैश्यशूद्राश्च कथं न ब्राह्मणा नु ते ॥ २३२ ॥
तस्मान्न कर्ममात्रेण ब्राह्मणाः स्युर्नराः खलु ।
नापि स्वाचारमात्रेण ब्राह्मणाः स्युस्तथा नराः ॥ २३३ ॥
यदि स्वाचारतो विप्रः सर्वे स्युर्ब्राह्मणाः खलु ।
ये ये स्वाचारवन्तश्च ते ते स्युर्ब्राह्मणाः किल ॥ २३४ ॥
सन्ति च बहवः शूद्राः शुद्धाचारसमन्विताः ।
व्रतोपवासधर्मिष्ठा नीचजा अपि सन्ति च ॥ २३५ ॥
ते ऽपि स्युर्ब्राह्मणाश्चैवं यद्याचारप्रमाणता ।
तस्मादाचारमात्रेण ब्राह्मणा नैव मानुषाः ॥ २३६ ॥
वेदेनापि तथा नैव ब्राह्मणाः स्युर्नरोत्तमाः ।
यदि वेदैर्भवेद्विप्रो राक्षसो ऽपि द्विजः खलु ॥ २३७ ॥
तथाभूद्रावणो नाम राक्षसो वेदपारगः ।
सर्वे ऽपि राक्षसाश्चैवं वेदकर्मानुचारकाः ॥ २३८ ॥

---

MSS 235. व्रतोपवासु°.

कथं ते ब्राह्मणा नैव यदि वेदाद्द्विजो भवेत्।
तस्माच्च वेदमात्रेण नैव स्युर्ब्राह्मणाः खलु ॥ २३९ ॥

सत्यधर्मप्रमाणेन सर्वमेकं जगद्ध्रुवम्।
चातुर्वर्ण्यमिदं लोके तीर्थिकैरिति कल्पितम् ॥ २४० ॥

तथा च कल्प्यते लोकबोधार्थमिति तीर्थिकैः।
स्वयंभूदेहसंभूतं चातुर्वर्ण्यमिदं खलु ॥ २४१ ॥

cp. Vajras. çl. 30 मुखतो ब्राह्मणो जातो बाहुभ्यां क्षत्रियः स्मृतः।
ऊरुभ्यां संभवो वैश्यः पद्भ्यां शूद्रः समुद्भवः ॥ २४२ ॥

तथा चेद्धि भवेद्दोषो धर्मेषु वर्णवादिनाम्।
अगम्यगमनाच्चैवं कथं धर्मविशुद्धिता[97] ॥ २४३ ॥

यदि विप्रो मुखाज्जातो ब्राह्मणी कुत्र संभवा।
ब्राह्मण्यपि मुखाज्जाता स्वसा भार्या कथं ननु[98] ॥ २४४ ॥

तथा च क्षत्रिया जाता बाहुभ्यामेव चेत्तथा।
क्षत्रियस्य भवेद्भार्या क्षत्रिया भगिनी खलु ॥ २४५ ॥

वैश्यापि हि तथा चैवमूरुभ्यामेव संभवा।
वैश्यस्यापि भवेद्भार्या वैश्या तु भगिनी विशः ॥ २४६ ॥

पद्भ्यां जातो यथा शूद्रः शूद्री चापि तथोद्भवा।
शूद्रस्यापि भवेद्भार्या शूद्री हि भगिनी खलु ॥ २४७ ॥

न युक्ता भगिनी भार्या तथा धर्मः कथं भवेत्।
अगम्यगमनाच्चैवमधर्म एव संभवेत् ॥ २४८ ॥

---

MSS 239 C यदि वेदाद्द्विजोत्तम ॥. — 246. चैवमुरुभ्या°.

97) Query: °विशुद्धता; cp. çl. 310. Yet the suffix °ता, in this kind of writings, is not seldom used in a pleonastic manner. Cp. Avadānaç. I, 172, n. 6.

98) Cp. çloka 198—200.

ततो ऽन्यत्तविरुद्धं स्याद्ब्रह्मजा ब्राह्मणा यदि ।
धर्मक्रियाविशेषात्तु वर्णावस्थाः प्रतिष्ठिताः ॥ २४९ ॥

cp. Vajras. çl. 31

भारते ऽपि तथा चैवं धर्मराजो युधिष्ठिरः ।

Quotation from a discourse between Yudhiṣṭhira and Vaiçampāyana

वैशम्पायनमागम्य प्राञ्जलिः पर्यपृच्छत[99] ॥ २५० ॥
के ते ये ब्राह्मणाः प्रोक्ताः किं वा ब्राह्मणलक्षणम् ।
एतदिच्छामि भो ज्ञातुं तद्भवान्व्याकरोतु मे ॥ २५१ ॥
इति श्रुत्वा महाविज्ञो वैशम्पायन आदरात् ।
प्रत्युवाचेति कौन्तेय शृणु तत्कथ्यते मया ॥ २५२ ॥
क्षान्त्यादिभिर्गुणैर्युक्तस्त्यक्तदण्डो निरामिषः ।
न हन्ति सर्वभूतानि प्रथमं ब्राह्मलक्षणम् ॥ २५३ ॥
यदा सर्वपरद्रव्यं पथि वा यदि वा गृहे ।
अदत्तं नैव गृह्णाति द्वितीयं ब्राह्मलक्षणम् ॥ २५४ ॥
त्यक्तक्रूरस्वभावस्तु निर्ममो निःपरिग्रहः ।
मुक्तश्चरति यो नित्यं तृतीयं ब्राह्मलक्षणम् ॥ २५५ ॥
देवमनुष्यनारीणां तिर्यग्योनिगतेष्वपि ।
मैथुनं हि सदा त्यक्तं[100] चतुर्थं ब्राह्मलक्षणम् ॥ २५६ ॥
सत्यं शौचं दया शौचं शौचमिन्द्रियनिग्रहः ।
सर्वभूतदया शौचं तपः शौचं च पञ्चमम् ॥ २५७ ॥
पञ्चलक्षणसंपन्न ईदृशो यो भवेद्द्विजः ।
तमहं ब्राह्मणं ब्रूयां शेषाः शूद्रा युधिष्ठिर ॥ २५८ ॥

---

MSS 249. C °ह्मजा यदि ब्राह्मणा ॥ ..... C वर्णावस्था प्रतिष्ठिता. — 251. C के तपब्राह्म°, P केतेब्राह्म°. — 252. वैसंपायन. — 254. गृह्णाति.

99) This whole would be quotation from the Mahābhārata is borrowed from the *Vajrasūcī*, it seems; only çl. 252 and 260 are not found there. Our çl. 251 = Vajras. 32, and our 253—259; 261—273 correspond with Vajras 33—51, safe some discrepancies, especially in the case of Vajras. 44. — 100) MSS त्यक्तश्च° I have adopted the reading of *Vajrasūcī* (ed. Weber).

न कुलेन न जात्या च क्रियाभिर्ब्राह्मणो न च ।
चाण्डालो ऽपि हि वृत्तस्थो ब्राह्मणः स युधिष्ठिर ॥ २५९ ॥

अहिंसा ब्रह्मचर्यं च विशुद्धात्मापरिग्रहः ।
फलेष्वनभिलिप्साथ ब्राह्मणः स्याद्युधिष्ठिर[101] ॥ २६० ॥

एकवर्णमिदं विश्वं पूर्वमासीद्युधिष्ठिर[102] ।
कर्मक्रियाविशेषेण चातुर्वर्ण्यं प्रतिष्ठितम् ॥ २६१ ॥

सर्वे वै योनिजा मर्त्याः सर्वे मूत्रपुरीषिणः ।
एकेन्द्रियक्रियार्थाश्च तस्माच्छीलगुणैर्द्विजाः ॥ २६२ ॥

शूद्रो ऽपि शीलसंपन्नो गुणवान्ब्राह्मणो भवेत् ।
ब्राह्मणो ऽपि क्रियाहीनः शूद्रात्प्रत्यवरो भवेत्[103] ॥ २६३ ॥

पञ्चेन्द्रियार्णवं घोरं यदि शूद्रो ऽपि तीर्णवान् ।
तस्मै दानं प्रदातव्यमप्रमेयं युधिष्ठिर ॥ २६४ ॥

न जातिर्दृश्यते राजन्गुणाः कल्याणकारकाः ।
गुणविद्यानिधिर्विद्वान्ब्राह्मणो ब्रह्मचारणात् ॥ २६५ ॥

जीवितं यस्य लोकार्थे धर्मार्थे यस्य जीवितम् ।
अहोरात्रं चरेन्मुक्तस्तं देवा ब्राह्मणं विदुः ॥ २६६ ॥

परित्यज्य गृहावासं ये स्थिता मोक्षकाङ्क्षिणः ।
कामेष्वसक्ताः कौन्तेय ब्राह्मणास्ते युधिष्ठिर ॥ २६७ ॥

अहिंसा निर्ममत्वं वा सत्कृत्यस्य विवर्जनम् ।
रागद्वेषनिवृत्तिश्च एतद्ब्राह्मणलक्षणम् ॥ २६८ ॥

---

MSS 259. वृत्तस्था ब्रा°. — 262 C योनिज्रो, P योनिज्रौ.

101) Ex conject.; C °लिप्सार्था, P °लिप्याथा. *Abhilipsā* is not found in PWK, but the verb *abhilipsati* is instanced in PW VI, sub लभ + अभि. — If the reading adopted is right, the protasis consists of a so called conditional clause represented by mere nominatives.

102) After this line C repeats çl. 260 a, P not so.

103) Çl. 262 and 263 are repetitions of çl. 131 and 132.

क्षमा दया दमो दानं सत्यं शौचं स्मृतिर्घृणा ।
विद्या विज्ञानमाधीत्यमेतद्ब्राह्मणलक्षणम् ॥ २६९ ॥

गायत्रीमात्रसारो ऽपि वरं विप्रः सुयन्त्रितः ।
नाधीत्य चतुरो वेदान्सर्वाशी सर्वविक्रयी ॥ २७० ॥

एकरात्रोषितस्यापि या गतिर्ब्रह्मचारिणः ।
न तां क्रतुसहस्रेण प्राप्नुवन्ति युधिष्ठिर ॥ २७१ ॥

पारगः सर्ववेदानां सर्वतीर्थाभिषिञ्चनैः ।
युक्तश्चरति धर्मं यो तं देवा ब्राह्मणं विदुः ॥ २७२ ॥

यदा न कुरुते पापं सर्वभूतेषु दारुणम् ।
कायेन मनसा वाचा ब्रह्म संपद्यते तदा ॥ २७३ ॥

यस्य लोकहिते चित्तं मैत्रीयुक्तमिवात्मने ।
तेन संपद्यते ब्रह्म तस्मान्मैत्रीं विभावय ॥ २७४ ॥

यस्य लोकेषु कारुण्यं स्वात्मने इव दुःखिते ।
तेन संपद्यते ब्रह्म तस्मात्कारुणिको भव ॥ २७५ ॥

यच्चित्तं मुदितं लोके सुखीभूते इवात्मने ।
तस्य संजायते ब्रह्म तल्लोके मोदवांश्चर ॥ २७६ ॥

यस्योपेक्षायुतं चित्तं सर्वलोकेष्विवात्मने ।
तस्य संजायते ब्रह्म तदुपेक्षायुतश्चर ॥ २७७ ॥

---

MSS 272 P °रतिया धर्मतंदेवा. — 276 C यचित्तं, P यश्चित्तं. — 277 C °क्षायितं चित्तं, ..... both सर्वलोकष्व°.

104) Note the new word *ādhītya*, the abstract noun of *adhīta* and cp. *adhītin*. Likewise *modavant* çl. 276. — Our text has preserved the good reading; Vajras. विज्ञानमाधिक्यमे° is a corruption.

105) This çloka = Manu II, 118, but the third pāda has been changed to the worse. The 2d pāda is corrupt in MSS: both have चरन्विप्रः (likewise Vajras.) and C समंत्रितः, P समन्त्रितः.

106) Ex conject.; C न तत्क्रतु° (also Vajras.), P नं तन्क्रतु°.

107) As to the new word *abhiṣiñcana*, cp. Avadānaç. I, 96, n. 7.

एतद्धि परमं ब्रह्मविहारं ब्रह्मसाधनम् ।
ज्ञात्वा लोकहितार्थेन चर ब्रह्मविहारणाम्[108] ॥ २७८ ॥
ततः क्लेशान्विनिर्जित्वा स्वात्मचित्तसमाहितः ।
ब्रह्मप्रणिधिमालम्ब्य स्थिरीभव समाधिषु ॥ २७९ ॥
[109]तथा ब्रह्मगुणाधानाद्ब्रह्मर्षिस्त्वं भवेः किल ।
पश्चाभिज्ञपदप्राप्तो ब्रह्मलोकमवाप्नुयाः ॥ २८० ॥
इति श्रुत्वा गुरोर्वाक्यं स सुभूतिर्गुणोत्सुकः ।
तथेति प्रतिसंश्रुत्य ध्यानचर्यामुपाश्रयत् ॥ २८१ ॥
ततो ऽन्यद्वनमाश्रित्य गुरोराज्ञासमाधृतः[110] ।
सर्वेन्द्रियविनिर्गत्या[111] व्यहरद्ध्यानतत्परः ॥ २८२ ॥
तत्राधिवसतो ऽस्यापि क्रोधाग्निः समुदीरितः ।
कर्माधानबलाभ्यासान्नैव शान्तिमुपाययौ ॥ २८३ ॥

Av. II, 128, 6–8.

तत्र च वनषण्डे या वसन्ती वनदेवता[112] ।
सा सुभूतिं महाक्रोधं दृष्ट्वैवं समचिन्तयत् ॥ २८४ ॥
सुभूतिर्ब्राह्मणो ह्येष सर्ववेदार्थपारगः ।
सर्वमन्त्रविधानज्ञः सुतीक्ष्णक्रोधवाकुलः ॥ २८५ ॥

---

108) I doubt the genuineness of the last word. If right, it must mean the striving after practising the four *brahmavihāras*. I think that it must be ब्रह्मविहारताम्, cp. çl. 316.

109) Ex conject.; MSS ब्रह्मगणाधाराद्ब°.

110) *sam* + *ā* + *dhṛ* is not registered in PW or PWK. It signifies 'to take at heart'.

111) Ex conject.; MSS सर्वेन्द्रियविनिर्गृत्य — in P the last akṣ. may be perhaps त्या.

112) The construction is awkward, as the participle of the present does duty for a finite verb. Yet it is not advisable to read वनषण्डेगा as one word to get rid of the difficulty.

[113] कदाचित्कुपितश्चायं क्रोधतः शापवह्निना ।
धक्ष्यति पर्वतांश्चापि सपत्निजनुमानवान् ॥ २८६ ॥

समाधिध्यानयुक्तो ऽपि नैव चित्तसमाहितः ।
ज्ञानविज्ञानधर्मेषु विशेषं नाधिगच्छति ॥ २८७ ॥

यदि बौद्धेषु धर्मेषु नियुक्तो ऽयं द्विजोत्तमः ।
क्षिप्रं क्लेशान्विनिर्जित्य बोधिचित्तं च लप्स्यति ॥ २८८ ॥

बोधिचित्ते प्रलब्धे तु तदा लोकहिते चरेत् ।
बोधिसत्त्वो महाविज्ञो भविष्यति न संशयः ॥ २८९ ॥

इति निश्चित्य सा देवी कारुण्याहितमानसा ।
तं सुभूतिं समागम्य जगादैवं पुरः स्थिता ॥ २९० ॥

Av. II, 128, 8–9. शृणु वत्स महाभाग यन्मया हितमुच्यते ।
धन्यो ऽसि त्वं महाधीर महर्षिर्द्विजसत्तम [114] ॥ २९१ ॥

किमर्थं वससे चैवमेकाकी निर्जने वने ।
निश्चित्तः [115] प्रतिसंलीनः काष्ठपाषाणवद्वृथा ॥ २९२ ॥

धर्मार्थकाममोक्षेषु यदि वाञ्छास्ति ते यते ।
मद्दस्य वचनं श्रुत्वा चर संबोधिसत्पथे ॥ २९३ ॥

बुद्धो हि भगवान्नाथः सर्वज्ञो लोकनायकः ।
मुनीन्द्रः श्रीघनः शास्ता सर्वधर्मानुपालकः ॥ २९४ ॥

तस्यैव धर्मता शुद्धा दशकुशलसंमता ।
षट् पारमिताः ख्याताः परत्रेह शिवंकराः ॥ २९५ ॥

---

MSS 289 बोधिसत्वा. — 292. चैवंमेका°.

113) Ex conject.; C कदाचिन्कुपितोश्चायं, P कदाचित्कुपितेश्चायं.

114) I have taken up the reading of P; र्षि in that MS has two dots written above it, as if to cancel it. C महर्षिर्द्विज°. The voc. महर्षे is also admissible, but not so probable as the nom.

115) So P. C निश्चितप्रतिसंलीनका°.

धन्यास्ते भिक्षवश्चैव बुद्धस्योपासकाश्च ये ।
सर्वसत्त्वहितार्थेन संबोधिगुणसाधकाः ॥ २९६ ॥

त्वं चापि हि तथा मत्वा स्वपरात्महितार्थतः ।
त्रिरत्नशरणं गत्वा चर ब्रह्मन्व्रतोत्तमम्[116] ॥ २९७ ॥

ततः क्लेशगणान्हित्वा ब्रह्मचारिञ्जिनेन्द्रवत्[117] ।
साक्षादर्हत्पदं प्राप्य निर्वृतिसुखमाप्नुयाः ॥ २९८ ॥

इति श्रुत्वा सुभूतिः स त्रिरत्नगुणवर्णनाम् ।
तथानुमोदितः प्राह तां देवतां पुरः स्थिताम् ॥ २९९ ॥

तथाहं देवते यामि संबुद्धदर्शनं प्रति ।
त्रिरत्नसमयं प्राप्तुमिच्छामि त्वत्प्रसादतः ॥ ३०० ॥

यदि ते ऽस्ति कृपा देवि मयि मोक्षार्थसाधिनि ।
संबुद्धं दर्शय क्षिप्रं तद्धर्मेषु निवेशय ॥ ३०१ ॥

त्रिरत्नशरणं गत्वा चरिष्ये तद्व्रतोत्तमम् ।
तथाशु कृपया नीत्वा मां विहारे प्रवेशय ॥ ३०२ ॥

इति श्रुत्वा वचस्तस्य सुभूतेर्वनदेवता ।
विज्ञाय बोधिमार्गेषु चित्तं तथानुमोदितम् ॥ ३०३ ॥

Av. II, 129, 1.

तत एव समागृह्य सुभूतिं ब्रह्मचारिणम् ।
ऋद्ध्या साकाशमार्गेण निनाय जिनमन्दिरम् ॥ ३०४ ॥

सुभूतिस्तत्र संप्राप्तो ददर्श जिनभास्करम् ।

Paraphrase of the cliché of the Buddha's outer appearance: Av. II, 129, 1-3.

भगवन्तं महासौम्यं लक्षणैः समलङ्कृतम् ॥ ३०५ ॥

व्यञ्जनैश्च विराजन्तं व्यामप्रभामहोज्ज्वलम् ।
सहस्रकिरणाधिक्यं रत्नाङ्गमिव जङ्गमम् ॥ ३०६ ॥

---

MSS 296 भिक्षवश्चैवं. — 300 प्राप्तुंमिच्छा°. — 306 रत्नागमिव.

116) Ex conject.; MSS ब्रह्मव्रतोत्तमं.

117) Ex conject.; C ब्रह्मचारिजिनेन्द्रवत्, P ब्रह्मचारीजिनेन्द्रवत्.

समन्ततो महाभद्रं जगन्नाथं मुनीश्वरम्।
सर्वदेवाधिपं सम्यक्संबोधिगुणसागरम् ॥ ३०७ ॥

A v. II, 129, 3–4.

दृष्ट्वैव सहसा चाथ सुभूतेस्तस्य सर्वथा।
आघातो यश्च सत्त्वेषु स प्रतिविगतो ऽप्यभूत्[118] ॥ ३०८ ॥

ततः प्रसादजातो ऽसौ सुभूतिर्द्विजसत्तमः।

A v. II, 129, 4–5.

नत्वा पादौ मुनेर्धर्मं श्रोतुं तस्थौ मुदा पुरः ॥ ३०९ ॥

ततो ऽसौ भगवांस्तस्य सुभूतेश्चित्तशुद्धताम्।
ज्ञात्वार्यसत्यधर्माणि[119] दिदेशैवं सविस्तरम् ॥ ३१० ॥

शृणु विप्र महाभाग सर्वसत्त्वहितार्थतः।

Mahāyānistic discourse of the Buddha to Subhūti taking the place of the *dharmadeçanā* A v. II, 129, 5.

यदि ते धर्मवाञ्छास्ति संबोधिपदसाधने ॥ ३११ ॥

भावनीया सदा मैत्री सत्त्वेष्वेवं यथात्मने।
धर्ममाता यतो मैत्री तन्न त्याज्या कदाचन ॥ ३१२ ॥

करुणा च तथा कार्या सत्त्वेष्वपि यथात्मने।
कारुण्याद्वर्धते धर्मस्तत्कारुण्यं सदा कुरु ॥ ३१३ ॥

मुदितापि सदा साध्या सत्त्वेषु च यथात्मने।
मुदितां हि समालम्ब्य बोधिपदमवाप्नुयाः ॥ ३१४ ॥

उपेक्षापि सदा धार्या सत्त्वेष्वपि यथात्मने।
उपेक्षातो लभेत्सौख्यं तदुपेक्षां सदा भज ॥ ३१५ ॥

इमे धर्मा हि चत्वारश्चतुर्वर्गफलाप्तये।
तत्प्राप्त्यै साध्यतां यत्नाच्चतुर्ब्रह्मविहारता ॥ ३१६ ॥

---

MSS 309 ननेधर्म. — 314 P °वाप्नुयात. — 316 यत्नाचतु°.

118) Ex conject.; C सत्येषुमुप्रति°, P सत्वेषुसुप्रति°.

119) धर्म is here a neuter, cp. çl. 317.

इति श्रुत्वार्यधर्माणि[120] स सुभूतिः प्रमोदितः ।
क्लेशसङ्घान्विनिर्जित्य बुद्धधर्मं समैन्नत[121] ॥ ३१७ ॥

Subhūti's conversion (A v. II, 129, 6—7).

सत्कायदृष्टिशैलं च विंशतिशिखरोद्गतम् ।
विदार्य ज्ञानवज्रेण संसाररतिनिःस्पृहः ॥ ३१८ ॥
स्रोतापत्तिफलं साक्षात्कृत्वा *शिक्षो* ऽभवन्मुनेः[122] ।
दृष्टसत्यो ऽथ संबुद्धं नत्वा चैव कृताञ्जलिः ॥ ३१९ ॥

Paraphrase of his becoming a monk (A v. II, 129, 7).

प्रव्रज्याप्रार्थनां चक्रे स्वाख्यातधर्मसाधने ।
नमस्ते भगवन्नाथ सर्वसत्त्वानुपालक ॥ ३२० ॥
अद्याग्रेण जगद्बन्धो यामि ते शरणं सदा ।
तथा धर्मे च सङ्घेषु[123] संबोधिगुणप्राप्तये ॥ ३२१ ॥
प्रव्रज्यां देहि मे नाथ सद्धर्मेषु निवेशय ।
ब्रह्मचर्यं चरिष्ये ऽहं त्वदाज्ञां शिरसा वहन् ॥ ३२२ ॥
इत्युक्ते भगवान्दृष्ट्वा हस्तेन तच्छिरः स्पृशन् ।
एहि भिक्षो चरस्वेति प्रवदंस्तं समग्रहीत् ॥ ३२३ ॥
एहीति प्रोक्तः स जिनेन मुण्डो पात्री सुसङ्घाटिपरीतदेहः ।
सद्यः प्रशान्तेन्द्रिय एव तस्थौ भिक्षुः सुभूतिः सुगतप्रभावात्[124] ॥ ३२४ ॥

---

MSS 318 C °शिषरोद्गतं, P °शिषरोङ्गतं.....both °निस्पृहः. — 319 स्रोता°. — 324. C प्रोक्तसज्ञि°, P प्रोक्तेसज्ञि°.

120) I follow P, C has °धर्माद्दिससुभूतिः.

121) The last word according to P, I have only added the anusvāra on the last syllable of धर्मं; C वुद्धधमसमन्नत unmeaning. But I am not sure of समैन्नत being genuine. Query: समैक्षत?

122) The 2d pāda of this çloka is doubtless corrupt, and its correction uncertain. Query: शिक्ष्या ऽभवन्मुनेः? I am, however, not aware of the gerundive *çikṣya* v. a. = pāli *sikkhamāno* (cp. Childers s. v. *sikkhati*) occurring elsewhere. Nor can शैक्ष be meant, since Subhūti had not yet obtained the pravrajyā.

123) Cp. A v. I, 50, 7 with note 5.

124) The çlokas 321—324 are the paraphrase of the cliché of the *chibhik-*

Paraphrase of the cliché about reaching Arhatship (Av. II, 129, 8—11).

सचित्तलब्धः स मुनेः प्रसादात्प्रयुज्यमानो व्यहरत्समाधौ ।
व्यायच्छमानः खलु बोधिमार्गे संबुद्धधर्मे घटमान एव ॥ ३२५ ॥

सर्वं च संसारमनित्यताहतं मत्वा च संसारगतिं विभङ्गिनीम् ।
क्लेशांश्च सर्वान्प्रविहाय संपतः(125) सातताच्च सो ऽर्हन्नभवन्महर्द्धिकः ॥ ३२६ ॥

सुवीतरागः समलोष्टहेमा(126) आकाशचित्तो घनसारवासी ।
(127)भिन्दन्नविद्याद्रिमिवाण्डकोशं प्रापदभिज्ञाः प्रतिसंविदश्च ॥ ३२७ ॥

सत्कारलाभेषु पराङ्मुखत्वात्सशक्रदेवासुरमानुषाणाम् ।
पूज्यश्च मान्यो ‹अ›भिवादनीयो बभूव स ब्रह्मविहारचारी ॥ ३२८ ॥

Av. II, 129, 12—18. अथ सुभूतिरायुष्मान्समन्वाहरदात्मवान् ।
कुतश्च्युतो ऽहमायातः कुत्र केन च कर्मणा ॥ ३२९ ॥

---

MSS 325 C सचित्त°...... both °मान एवं ॥. — 326 क्लेशाश्च. — 328 C मान्योभिवा°, P मान्योभिवा°...... both वभूवसंत्र°. — 329 P °दात्मवित.

*ṣukā* initiation, which however, in our Avadānaçataka is not found here, but elsewhere, see I, p. 284 and 347.

125) I have put संपतः instead of three syllables that are manifestly corrupt in MSS. C has विहाय सुद्दिद्वात्सातताच्च, P विहायसुदृिद्धात्सातताच्च. My correction is taken from the same paraphrase of the parallel passages in Av. nr. 61 and 62, see P f. 38b 4 and 132a 8.

126) MS °हेम, but °हेमा appears in the same cliché at P f. 66b 1. The epithet घनसारवासी answers to the enigmatical epithet वासीचन्दनकल्पः of the Av. text.

127) Ex conject.; C भिन्दनविद्याद्रिमिवाशुकोशं, P भिन्दन्नविद्याङ्गमिवाशुकोशं. The paraphrase helps here to correct a mistake, which has been made by Cowell, Feer and myself. We all were wrong in dividing the complex °कल्पोविद्याविदारिताण्डकोशो into °कल्पो विद्या°. It must be divided °कल्पो ऽविद्या°. Though from a grammatical point of view the analysis of the compound = *yasmai vidārito 'vidyāyā aṇḍakoçaḥ* may hardly be accounted for, and the other analysis = *yasmai* (or *yena*) *vidyayā vidārito 'ṇḍaçokaḥ* commends itself as the most natural, yet the traditional acceptation implied by the paraphrases here and in other places (cp. e. g. P 38b 4. 66b 1. 52a 8 अविद्याण्डविभेदिनो. 141a 6) must be the right one. It is in full accordance with the usual Buddhist terminology, the *avidyā* being the ultimate source of the evil of existence, the extermination o which is striven after; the being shut up in *avidyā* is signified by the image of the emprisonment within the egg.

अपश्यन्स ततश्चेति पञ्च जन्मशतानि च ।
नागयोनिसमुत्पन्नस्ततश्च्युत्वाहमागतः ॥ ३३० ॥

A v. II,129,14–130,1.

यद्द्वेषाभ्यासतश्चासं क्रूरो लोकोपघातकः ।
तेनैव हेतुना चाहं महद्व्यसनमाप्तवान् ॥ ३३१ ॥

इदानीं तु तथा चैतं क्रोधं प्रहातुमाचरे ।
यस्यैव हेतुना लोका भ्रमन्ति नरकेषु ते ॥ ३३२ ॥

तस्मादहं चरिष्यामि निःसङ्गो निरहंकृतिः ।
सङ्गाद्धि जायते माया मायायां जायते रतिः ॥ ३३३ ॥

रतौ रागो ऽभिजायेत रागे मोहः प्रवर्धते ।
मूढस्य दूयते चित्तं स्वेष्टकार्योपघाततः ॥ ३३४ ॥

उपघाताहते चित्ते क्रोधाग्निः परिदीप्यते ।
क्रोधानलसमुद्दीप्तो दहते स्वपरानपि[128] ॥ ३३५ ॥

यावत्क्रोधानलोद्दीप्तं स्वचित्तं क्लेशवायुभिः ।
तावत्किं तपसाप्येतन्निरर्थं[129] दुःखहेतवे[130] ॥ ३३६ ॥

धर्मसुचरितं पुण्यं दानशीलादिसाधनम् ।
कृतं कल्पसहस्रैर्यद्दहेत्क्रोधानलः क्षणात् ॥ ३३७ ॥

तस्मात्क्रोधाग्निशान्त्यर्थं[131] कृत्वेन्द्रियविनिग्रहम् ।
एकान्ते हि वसेयं च विविक्तारण्यगोचरे ॥ ३३८ ॥

---

MSS 330 अपश्चत्स ...... जत्मश°. — 332 C चैतन्क्रो°, P चैतत्क्रो°. — 334 C स्वेष्टकार्योपघातकः ॥, P स्वेष्टकार्यापघाततः ॥. — 336 (C) °नलोद्दीप्तं.

128) One should expect स्वान्परानपि.

129) Ex conject., the meaning is: «..... what is then the use of tapas? This is fruitless, only a cause of sorrow»; MS तपसाप्येवंनिरर्थं.

130) This çloka is wanting in P.

131) Ex conject.; MSS क्रोधाग्निशाम्यार्थं.

यदा च गरुडेनाहं बलादाकृष्य भक्षितः ।
यतीन्दृष्ट्वानुमोदं च कुर्वन्मृत्युमवाप्तवान् ॥ ३३९ ॥

तेनैव हेतुना चाद्य द्विजातिकुलसंभवः ।
सर्वक्लेशान्विनिर्जित्य ब्रह्मचारी भवाम्यहम् ॥ ३४० ॥

अद्यापि चेत्तथा चात्र वसे[यं] जनपदाश्रमे ।(132)
केनचित्क्लेशितश्चाहं भ्रष्टिमेवमवाप्नुयाम् ॥ ३४१ ॥

Av. II, 130, 1–5.

इति निश्चित्य चित्तेन सुभूतिर्निरहंकृतिः ।
विविक्ते ऽरण्यवासे स निःसङ्गो न्यवसत्सुधीः ॥ ३४२ ॥

तथैकाकी वसंस्तत्र चतुर्थध्यानसंयुतः ।
फलमूलाम्बुसंतुष्टो ब्रह्मचारी मुमोद सः ॥ ३४३ ॥

अथ सङ्के ऽपि ग्रामेषु देशे जनपदेषु च ।
भिक्षाहेतोर्विहर्तुं वा स सकामो ऽभवद्यदा ॥ ३४४ ॥

तदा पूर्वमसौ दृष्ट्वा गोचरमभ्यलक्षयत् ।
अहो देशेषु सर्वत्र भवन्ति निर्गुणा जनाः ॥ ३४५ ॥

मानिनो मदमोहान्धा दुष्टा मत्सरिणः शठाः ।
तत्कथं संचरिष्ये ऽत्र भिक्षाहेतोः कुले कुले ॥ ३४६ ॥

दूषयिष्यन्ति चित्तानि केचिद्दृष्ट्वैव मां यतिम् ।
(133) यद्धेतो * जनाश्चैवं भ्रमन्ति दुर्गतिष्वपि ॥ ३४७ ॥

कल्पकोटिसहस्राणि नैव मुक्ताश्च दुर्गतेः ।
तदहं सर्वसत्त्वेषु कुन्तपिपीलिकादिषु ॥ ३४८ ॥

---

MSS 341 भ्रष्टमेव°. — 345 C °चरमप्यल°.

132) The metre is violated by a line of seventeen syllables. The simplest way to restore it is by changing वसेयं into वसे.

133) C P यद्धेतोर्जना°. I suppose that one akṣara has dropped (perhaps यद्धे-<तु>तो ज°). If not rather a whole line, the last part of that beginning by यद्धेतोः and the first of that to which belongs जनाश्चैवं etc. The first line of çl. 348 continues the sentence of çl. 347, and likewise çl. 348 *c d* + çl. 349 *a b* belong together. Accordingly I have made of çl. 349 a çloka of six pādas to restore the due order.

दयाचित्तं समालम्ब्य वसेयं ध्यानसंरतः ।
येनैवं सर्वसत्त्वानां भवेच्चित्तं प्रसादितम् ।
तमेव धर्ममाधाय यतिर्मोक्षमवाप्नुयात्[134] ॥ ३४९ ॥
इति[135] संनह्य चित्तेन स सुभूतिः सुबुद्धिमान् ।
विविक्ते ऽरण्यदेशे ऽपि न्यवसद्ध्यानसंरतः ॥ ३५० ॥
अथ सो ऽर्हंस्त्रिमासानामत्ययाद्बोधिमानसः ।
इत्येवं चिन्तयामास लोकानुग्रहकारणात् ॥ ३५१ ॥

Av. II, 130, 5–6. किमत्र ध्यानसंलीनः करोमि लोकबोधनम् ।
कियत्कालं च जीवेयं काष्ठपाषाणवत्स्थितः ॥ ३५२ ॥
केवलं स्वमनस्तुष्ट्यै ध्यानं सौख्यार्थसाधनम् ।
सुखं लब्धापि किं सारं सत्त्वानुग्रहणं विना[136] ॥ ३५३ ॥
तस्माद्ध्यानात्समुत्थाय सत्त्वानुग्रहकारणात् ।
ऋद्धिं प्रदर्श्य संबोधौ स्थापयिष्ये महज्जनान्[137] ॥ ३५४ ॥
इति निश्चित्य चित्तेन स सुभूतिः समृद्धिमान् ।
सत्त्वानां विनयार्थेन प्रातिहार्यमदर्शयत् ॥ ३५५ ॥

Av. II, 130, 6–131, 2. तदृद्धिनिर्मितान्येव गरुडानां महौजसाम् ।
पञ्च कुलशतान्यत्र प्रससिरे[138] समन्ततः ॥ ३५६ ॥

---

MSS 349 प्रमादितं ॥. — 352 °णावत्थितः ॥. — 356. °तान्येवं.

134) So MSS. I surmise the true reading will be: तमेव धर्ममाधाय यदि मोक्षमवाप्नुयाम् («.... if perhaps I might obtain deliverance»).

135) Ex conject.; C इतिसंरह्य, P इतिसंरह्य. *Saṃnahya* = 'postquam se accinxit' is the very expression required here.

136) Çl. 352 and 353 are characteristic for the Mahāyānist spirit of the paraphrast's tale.

137) A strange word. One would expect महाजनान्; the corresponding passage in Av. has महाजन°.

138) Ex conject.; P प्रससिरे, C प्रसंसिरे.

एतांश्च गरुडान्दृष्ट्वा नागाः संत्रसितास्ततः[139]।
इतस्ततः समुद्भ्रान्ताः सुभूतेः शरणं ययुः ॥ ३५७ ॥
अथ स्वर्द्धिबलेनैव समाश्वास्य सुभूतिना।
सर्वे नागाः सुपर्णेभ्यः परित्राताश्च सर्वतः ॥ ३५८ ॥

Av. II, 131, 2-4.

पुनस्तेन सुपर्णानां विनयार्थं सुभूतिना।
स्वर्द्धिबलप्रभावेन महान्नागो[140] विनिर्मितः ॥ ३५९ ॥
तेनाप्येवं सुपर्णानां पञ्च कुलशतानि च।
अभिद्रुतानि नागेन समन्तत इतस्ततः ॥ ३६० ॥
तेनैवाभिद्रुताः सर्वे गरुडास्त्रासमागताः।
इतस्ततः समुद्भ्रान्ताः सुभूतेः शरणं ययुः ॥ ३६१ ॥
सुभूतिना तथा चैत्रं सर्वे ते गरुडा अपि।
स्वर्द्धिबलप्रभावेन समाश्वास्य सुरन्तिताः ॥ ३६२ ॥
एवमृद्धिप्रभावानि सुभूतेस्तस्य सन्मतेः।
दृष्ट्वा सर्वे जनौघास्ते सहर्षाद्भुतमाययुः ॥ ३६३ ॥
धन्यो ऽयमृद्धिमान्भिक्षुरर्हन्संबुद्धसेवकः।
येनैते रन्तिताः सर्वे नागाश्च गरुडा अपि ॥ ३६४ ॥

Subhūti preaches to an audience of Garuḍas and Nāgas

इति सो ऽर्हन्सुभूतिस्तान्सर्वान्दृष्ट्वा प्रसन्नितान्[141]।
सद्धर्मे विनयार्थेन मैत्रीधर्ममुपादिशत् ॥ ३६५ ॥

---

MSS 357 C गरुडादृष्ट्वा, P गरुडांदृष्ट्वा. — 358 °लेनैवं...... C सुभूतिवां, P सुभूतिवा. — 361 गरुडाःत्रास°. — 364 C येनैवरन्तितासर्वे.

A lamaist album in the Museum für Völkerkunde in Berlin contains a beautiful miniature on silk of the scene of Subhūti's preaching to nāgas and garuḍas. Cf. A. Grünwedel. Mythologie des Buddhismus etc. p. 188 (sketch of the miniature).

139) With संत्रसित cp. Pāli *santasita*. 140) I follow P. C has महानागो.

141) A strange form, but if explained as the partic. of a denominative **prasannayati*, it might be put to the account of the author of our collection. It is, however, comparatively easy to restore प्रसादितान्.

## सोम इति ५ ॥

lost

---

## [6a] वडिक इति ६ ॥

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रे-
5 ष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षगन्धर्वासुरग-[1]
रुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशय-
नासनग्लानप्रत्ययभैषज्यपरिष्कारणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथ-
पिण्डदस्यारामे। श्रावस्त्यामन्यतमो गृहपतिः श्रेष्ठी प्रतिवसति आढ्यो महाधनो महा-
भोगो विस्तीर्णविशालपरिग्रहो वैश्रवणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी। तेन सदृ-
10 शात्कुलात्कलत्रमानीतम्। स तया सार्धं क्रीडति रमते परिचारयति। तस्य क्रीडतो
रममाणस्य परिचारयतः गृहपतेः पत्नी आपन्नसत्त्वा संवृत्ता। सा नवानां मासानामत्यया-
त्प्रसूता। दारको जातो अभिरूपो दर्शनीयः प्रासादिकः॥ तस्य जातौ[2] जातिमहं
कृत्वा वडिक इति नामधेयं कृतवान्पिता। वडिको दारको ऽष्टाभ्यो धात्रीभ्यो
दत्तः अंसधात्रीभ्यां क्षीरधात्रीभ्यां मलधात्रीभ्यां क्रीडनिकाभ्यां धात्रीभ्याम्। सो
15 ऽष्टाभिर्धात्रीभिरुन्नीयते वर्ध्यते क्षीरेण दध्ना नवनीतेन सर्पिषा सर्पिमण्डेनान्यैश्चोत्तप्तो-
त्तप्तैरुपकरणविशेषैराशु वर्धते ह्रदस्थमिव पङ्कजम्। यदा महान्संवृत्तः पञ्चवर्षो षड्वर्षो
वा[3] तदा गुरौ भक्तिं कृत्वा सर्वशास्त्राणि अधीतानि। तीक्ष्ण[4]बुद्धितया शीघ्रं सर्वशास्त्रस्य
पारं गतः॥

---

1) D in inverted order देवनागयक्षासुरगन्धर्वगरु°.

2) MS जातोर्जा°.

3) Ex conject.; MS षड्वर्षम्वा, cp. *supra* p. 15 n. 7.

4) MS तीष्णा°.

तदनन्तरं तस्य वडिकस्य किञ्चित्[1]पूर्वजन्मकृतकर्मविपाकेन शरीरे कायिकं दुःखं पतितम्[2]। इति दुःखी भूतश्चिन्तापरः[3] स्थितः[4]। किं पापं कृतं मया ‹य›दिदं[5] कायिकं दुःखं मम शरीरे जातम्[6]॥ तस्य पितापि पुत्रस्येदं कायिकं दुःखभावं दृष्ट्वा महदुद्विग्नः पुत्रात्ययशङ्कया दीनमानसः[7] शोकाश्रुव्याप्तवदनस्त्वरितं वैद्यमाहूय तस्य पुत्रस्य रोगं दर्शयति[8]। को रोगः[9] केन हेतुना मम पुत्रस्य देहे जात इति। ततः स वैद्यस्तस्य रोगचिह्नं दृष्ट्वा चिकित्सां कर्तुमारब्धः॥ तथापि तस्य रोगशान्तिर्न[10] भवति पुनर्वृद्धिर्भवति॥ पिता पुत्रस्य रोगं[11] वृद्धं जातं दृष्ट्वा ह्यवश्यं पुत्रो मरिष्यति यद्वैद्येनापि चास्य[12] रोगस्य चिकित्सितुं न शक्यत इति मूर्च्छया भूमौ पतितः॥ तं दृष्ट्वा भूयो ऽपि पुत्रस्य चिन्ता जाता[13] भूयो ऽपि चिन्तया मानसी व्यथा जाता॥ स दारको रोगी भूतो ऽशक्यो[14] ऽपि वदितुं[15] कथञ्चित्पितरं

---

1) Note the use of *kiṃcit* as the theme of the indefinite pronoun in the first member of a compound. Cp. PW in kürzerer Fassung: II, 64, Sp. 3, and Jātakamālā p. 120, 3 *yatkiṃcanakāritākṣepakarkaçākṣaram*.

2) MS पतितः. 3) MS °भूतोचि°.

4) D °परो व्यवस्थितः, which seems to be a good correction.

5) Ex conject.; MS मया इदं.

6) MS जातः.

7) MS मानसो (P सा).

8) MS दर्शियति.

9) Ex conject.; MS किं रोगं. Perhaps this must remain unchanged: in that case जात इति is to be changed in जातमिति. Blunders in gender are not rare in our text. Cp. *supra*, p. 3 n. 8. In the foregoing दुःखभाव is taken as a neuter.

10) Ex conject.; MS °शान्तो न.

11) MS रोगवृ°.

12) BC वास्य; the meaning 'even' of अपि च is substantiated by one example in PW. I, 305, 1. Note the genitive with *cikitsati* and cp. my Sanskrit Syntax § 121.

13) MS जातः.

14) *Çakya* is here used with active signification, as it is Divy. 39, 12 *çakyas tvaṃ ..... vastum*, as is also the case with the verb *çakyāmi*. See Divy. 111, 10. 137, 8. 303, 30. 358, 10. 397, 24. 486, 11. — Divy. 370, 15 even *çakyate* has the meaning of *çaknoti*, as is also found in the Bhagavadgītā 11, 8 *na tu māṃ çakyase draṣṭum*.

15) P ऽशक्यो दरितुं unmeaning, cp. Feer, p. 39 n. 2; the good reading is found in the other MSS. The tale nr. 14 of Vicitrakarṇikāvadāna (f. 65b 3—70b 6 of the ms. of the I. O.) which is a periphrastic elaboration of our Vaḍika-avadāna has in the corresponding place (f. 67 a 1) these words शनैर्नीचस्वरो ऽवदत्.

बभाषे। मा तात साहसं। धैर्य[1]मवलम्ब्योत्तिष्ठ ममात्ययाशङ्कया मा भूस्त्वमपि मादृशः।
मम नाम्ना देवानां पूजां कुरु दानं देहि ततो मम स्वस्था[2] भविष्यति॥ स गृहपतिरिति
पुत्रस्य वच आकर्ण्य सर्वदेवेभ्यः पूजां कृतवान्सर्वब्राह्मणतीर्थिकपरिव्राजकेभ्यो दानं
दत्तवान्। तथापि तस्य रोगशान्तिर्न भवति॥ तदा तस्य महान्मानसो[3] दुःखो[4] ऽभूत्। सर्व-
5 देवेषु पूजा कृता दानो ऽपि दत्तः[4] पित्रा मम। तथापि स्वस्था[2] न भवति[5]॥ ततस्तथागतगु-
णा[6]<न>नुस्मृत्य बुद्धं नमस्कारं कर्तु[7]मारब्धः॥

अत्रान्तरे नास्ति किंचिद्बुद्धानां भगवतामज्ञातमदृष्टमविदितमविज्ञातम्। धर्मता
खलु बुद्धानां भगवतां महाकारुणिकानां लोकानुग्रहप्रवृत्ता[8]नामेकारक्षाणां शमथविपश्य-
<ना>विहारिणां त्रिदमथवस्तुकुशलानां चतुरोघोत्तीर्णानां चतुर्ऋ[9]द्धिपादचरणतलसुप्रति-
10 ष्ठितानां चतुर्षु संग्रहवस्तुषु दीर्घरात्रकृतपरिचयानां पञ्चाङ्गविप्रहीणानां पञ्चगतिसम-
तिक्रान्तानां षडङ्गसमन्वागतानां षट्पारमितापरिपूर्णानां सप्तबोध्यङ्गकुसुमाढ्यानामष्टाङ्ग-
मार्गदेशिकानां नवानुपूर्वविहा[6b]रसमापत्तिकुशलानां <दशबलबलिनां> दशदिक्समा[10]पू-
र्णयशसां दशशतवशवर्तिप्रतिविशिष्टानां त्री रात्रेस्त्रि[11]र्दिवसस्य बुद्धचक्षुषा लोकं व्यव-
लोक्य ज्ञानदर्शनं प्रवर्तते। को हीयते को वर्धते कः कृच्छ्रप्राप्तः कः संकटप्राप्तः कः संबा-

---

1) B धैय°, D corr.

2) Ex conject; MS स्वस्थो. I suppose स्वस्था was written by the author of this avadāna with the meaning of *svāsthyam*, *svasthatā*. This not-classic subst. *svasthā* may have been formed by analogy, cp. the adj. *saṃstha* and the subst. *saṃsthā*; *pratiṣṭha* and *pratiṣṭhā*.

3) MS मानसी.

4) The mistakes in gender may be imputed to the author of this text. Cp. *supra* p. 3 n. 8 and p. 29, n. 10.

5) Perhaps भव<ती>ति.

6) P corr.

7) The periphrastic *namaskāraṃ kṛ* has borrowed its construction from the verb *namaskṛ*, cp. my Sanskrit Syntax § 310, 2.

8) B प्रवृत्तना°, D corr.

9) BCP चतुःऋ°.

10) B °दिग्ससा°, D °दिशा°, C °दिगसमा°, P °दिग्समा°.

11) MS त्रिरात्रत्रिदि°.

धप्राप्तः कः कृच्छ्रसंकटसंबाधप्राप्तः को ऽपायनिम्नः[1] को ऽपायप्रवणः को ऽपायप्राग्भारः कमहमपायादुद्धृत्य स्वर्गे मोक्षे च प्रतिष्ठापयेयं कस्य कामपङ्कनिमग्नस्य हस्तोद्धारमनुप्रदद्यां कमार्यधनविरहितमार्यधनैश्वर्याधिपत्ये प्रतिष्ठापयेयं कस्यानवरोपितानि कुशलमूलान्यवरोपयेयं कस्यावरोपितानि परिपाचयेयं कस्य परिपक्वानि विमोचयेयम्। आह च।

अप्येवातिक्रमेद्वेलां सागरो मकरालयः।
न तु वैनेयवत्सानां बुद्धो वेलामतिक्रमेत्[2]॥

ततो भगवता वडिकस्य गृहपतेः[3] पुत्रस्य तामवस्थां दृष्ट्वा सूर्यसहस्रातिरेकप्रभाः कनकवर्णा मरीचयः सृष्टाः यैस्तद्गृहं समन्तादवभासितं कल्पसहस्रपरिभाविताश्च मैत्र्यंशव उत्सृष्टाः यैरस्य स्पृष्टमात्रं शरीरं प्रह्लादितम्। ततो भगवांस्तस्य द्वारकोष्ठकमनुप्राप्तः। दौवारिकपुरुषेणास्य निवेदितं भगवान्द्वारे तिष्ठतीति॥ अथ वडिकः श्रेष्ठिपुत्रो लब्धप्रसादो ऽधिगतसमाश्वास आह। प्रविशतु भगवान् स्वागतं भगवते आकाङ्क्षामि भगवतो दर्शनमिति॥ अथ भगवान्प्रविश्य प्रज्ञप्त एवासने निषण्णः। निषद्य भगवान्वडिकमुवाच[4]। किं ते वडिक बाधते[5] इति॥ वडिक उवाच। कायिकञ्च मे दुःखं चैतसिकं चेति॥ ततो ऽस्य भगवता सर्वसत्त्वेषु मैत्र्युपदिष्टा[6] अयं ते चैतसिकस्य[7] प्रतिपक्ष इति। लौकिकं च चित्तमुत्पादयामास[8]। अहो बत शक्रो देवेन्द्रो गन्धमादनात्[9]पर्वतात्तौरिकामौषधी[10]मानये-

1) B °यनिमग्नः, D corr. 2) MS °लामनुत्क्रमेत.

3) Visarga is wanting in MS.

4) B °डिकममुवाच, D corr.

5) Ex conject.; MS वाधक, cp. the parallel passage in Avad. nr. **50**, B 47a and Divy. 420, 4.

6) Ex conject.; B मैत्र्यं उपदिष्टाः, still more corrupted in D; P मैत्री...°ष्टाः.

7) Ex conject.; MS इयत्ते चेतसिकश्च.

8) BC लौकिकंचवित° (P लौ°...रचित°), D corr.

9) P °माडना°, C °मागुना°, as the akṣara of B they copied may be read either *gu* or *ḍa*; D corr.

10) MS here and on the following line °कामौष°. — With the two remedies applied here by Bhagavān cp. Mahābh. ed. Bomb. III, 216, 17 प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः

दिति ॥ सहचित्तोत्पादाद्भगवतः शक्रो देवेन्द्रो गन्धमादनात्पर्वतात्तीरिकामोषधीमानीय भगवते दत्तवान्भगवता च स्वपाणिना गृहीत्वा वडिकाय दत्ता इयत्ते कायिकस्य दुःखस्य परिदाहशमनीति ॥

स कायिकं प्रश्रब्धिसुखं लब्ध्वा भगवतोऽन्तिके चित्तं प्रसादयामास प्रसन्नचित्तश्च 5 राज्ञः प्रसेनजितो निवेद्य भगवन्तं सश्रावकसङ्घं भोजयित्वा शतसहस्रेण वस्त्रेणाच्छाद्य सर्वपुष्पमाल्यैरभ्यर्चितवान् ॥ ततश्चेतनां पुष्णाति स्म प्रणिधिं <च>[1] चकार । अनेनाहं कुशलमूलेन चित्तोत्पादेन देयधर्मपरित्यागेन यथैवाहं भगवता अनुत्तरेण वैद्यराजेन चिकित्सित एवमहमप्यनागतेऽध्वनि अन्धे[2] लोके अनायके अपरिणायके बुद्धो भूयासमतीर्णानां सत्त्वानां तारयिता अमुक्तानां मोचयिता अनाश्वस्तानामाश्वासयिता अपरि- 10 निर्वृतानां परिनिर्वापयितेति ॥

अथ भगवान्वडिकस्य [3]धातुपरम्परां कर्मपरम्परां च ज्ञात्वा स्मितं प्राविरकार्षीत् ॥ धर्मता खलु यस्मिन्समये बुद्धा भगवन्तः स्मितं प्राविष्कुर्वन्ति तस्मिन्समये नीलपीतलोहितावदाता अर्चिषो मुखान्निश्चार्य काश्चिदधस्ताद्गच्छन्ति काश्चिदुपरिष्टाद्गच्छन्ति । या अधस्ताद्गच्छन्ति ताः संजीवं कालसूत्रं <संघातं>[4] रौरवं महारौरवं तपनं प्रतापनम- 15 वीचिमर्बुदं[5] निरर्बुदमटटं हहवं हुहुवमुत्पलं पद्मं महापद्मं नरकान्[6]गत्वा ये उष्णनरकास्तेषु शीतीभूता निपतन्ति ये शीतनरकास्तेषूष्णीभूता निपतन्ति । तेन तेषां सत्त्वानां कारणाविशेषाः प्रतिप्रस्रभ्यन्ते । तेषामेवं भवति । किं नु वयं भवन्त इतश्च्युता आहो स्विदन्यत्रोपपन्ना इति । तेषां प्रसादसंजननार्थं भगवान्निर्मितं विसर्जयति । तेषां निर्मितं दृष्ट्वैवं

---

1) Cp. *infra* p. 37, 13.

2) MS अन्ध.

3) MS वडिकस्य तेर्धातु°. I think there is a gap after °कस्य and the author wrote वडिकस्य <गृहपते>र्धातु°, if not rather वडिकस्य <गृहपतेः पुत्रस्य> धातु°.

4) added in P.

5) Anusv. is wanting in MS.

6) MS नरकं.

भवति। न ह्येव[1] वयं भवन्त इतश्च्युता नाप्यन्यत्रोपपन्ना अपि त्वयमपूर्वदर्शनः सत्त्वो ऽस्यानुभावेनास्माकं कारणाविशेषाः प्रतिप्रस्रभ्यन्ते । ते निर्मिते चित्तमभिप्रसाद्य तन्नरकवेदनीयं कर्म क्षपयित्वा[2] देवमनुष्येषु प्रतिसन्धिं गृह्णन्ति यत्र सत्यानां भाजनभूता भवन्ति[3]। या उपरिष्टाद्गच्छन्ति ताश्चातुर्महाराजिकांस्त्रयस्त्रिंशान्[4]यामांस्तुषितान्निर्माणरतीन्परनिर्मितवशवर्तिनो ब्रह्मकायिकान्ब्रह्मपुरोहितान्महाब्रह्मणः[5] परीत्ताभानप्रमाणाभानाभास्वरान्परीत्तशुभानप्रमाणशुभाञ्छुभकृ[7 a]त्स्नाननभ्रकान्पुण्यप्रसवान्बृहत्फलानवृहानतपान्सुदृशान्सुदर्शनानकनिष्ठान्देवान्गत्वा अनित्यं दुःखं शून्यमनात्मेत्युद्घोषयन्ति गाथाद्वयं च भाषन्ते[6]।

आरभध्वं निष्क्रामत युज्यध्वं बुद्धशासने।
धुनीत मृत्युनः सैन्यं नडागारमिव[7] कुञ्जरः॥
यो ह्यस्मिन्धर्मविनये अप्रमत्तश्चरिष्यति।
प्रहाय जातिसंसारं दुःखस्यान्तं करिष्यति॥

अथ ता अर्चिषस्त्रिसाहस्रमहासाहस्रं लोकधातुमन्वाहिण्ड्य भगवन्तमेव पृष्ठतः पृष्ठतः समनुगच्छन्ति । तद्यदि भगवानतीतं कर्म व्याकर्तुकामो भवति भगवतः पृष्ठतो ऽन्तर्धीयन्ते । अनागतं व्याकर्तुकामो भवति पुरस्तादन्तर्धीयन्ते । नरकोपपत्तिं व्याकर्तुकामो भवति पादतले ऽन्तर्धीयन्ते । तिर्यगुपपत्तिं व्याकर्तुकामो भवति पार्ष्ण्यामन्तर्धीयन्ते । प्रेतोपपत्तिं व्याकर्तुकामो भवति पादाङ्गुष्ठे ऽन्तर्धीयन्ते । मनुष्योपपत्तिं व्याकर्तुकामो भवति जानुनो‹र्›न्तर्धीयन्ते । बलचक्रवर्तिराज्यं व्याकर्तुकामो भवति वामे करतले ऽन्तर्धीयन्ते ।

1) MS ह्येवं.
2) MS क्ष°.
3) MS भवति.
4) MS °कांसत्रयस्त्रिंसा° (D °कान्त्रयस्त्रिंशा)°.
5) MS °ह्मणाः.
6) MS भाषते.
7) MS मडा°.

चक्रवर्तिराज्यं व्याकर्तुकामो भवति दक्षिणे करतलेऽन्तर्धीयन्ते। देवोपपत्तिं व्याकर्तुकामो भवति नाभ्यामन्तर्धीयन्ते। श्रावकबोधिं व्याकर्तुकामो भवति आस्येऽन्तर्धीयन्ते। प्रत्येकबोधिं व्याकर्तुकामो भवति ऊर्णायामन्तर्धीयन्ते[1]। अनुत्तरां सम्यक्संबोधिं व्याकर्तुकामो भवति उष्णीषेऽन्तर्धीयन्ते॥

5 अथ ता अर्चिषो भगवन्तं त्रिः[2] प्रदक्षिणीकृत्य भगवत उष्णीषेऽन्तर्हिताः। अथायुष्मानानन्दः कृतकरपुटो भगवन्तं पप्रच्छ।

नानाविधो रङ्गसहस्रचित्रो वक्त्रान्तरान्निष्क्रमितः कलापः।
अवभासिता येन दिशः समन्तादिवाकरेणोदयता यथैव॥

गाथाश्च भाषते।

10 विगतोद्भवा दैन्यमदप्रहीणा बुद्धा जगत्युत्तमहेतुभूताः।
नाकारणं शङ्खमृणालगौरं स्मितमुपदर्शयन्ति जिना जितारयः॥
तत्कालं स्वयमधिगम्य धीर बुद्ध्या
श्रोतॄणां श्रमण जिनेन्द्र काङ्क्षितानां।
धीराभिर्मुनिवृष वाग्भिरुत्तमाभि-
15 रुत्पन्नं व्यपनय संशयं शुभाभिः॥
नाकस्माल्लवणजलाद्रिराजधैर्याः
संबुद्धाः स्मितमुपदर्शयन्ति नाथाः।
यस्यार्थे स्मितमुपदर्शयन्ति धीराः
तं श्रोतुं समभिलषन्ति ते जनौघा इति॥

20 भगवानाह। एवमेतदानन्दैवमेतत्। नाहेत्वप्रत्ययमानन्द तथागता अर्हन्तः सम्यक्संबुद्धाः स्मितं प्राविष्कुर्वन्ति। पश्यस्यानेन वडिकेन गृहपतिपुत्रेण ममैवंविधं

---

1) B उर्णा°, D corr.
2) MS त्रिप्र°.

सत्कारं कृतम् ॥ एवं भद्रन्त ॥ एष आनन्द वडिको गृहपतिपुत्रो ऽनेन कुशलमूलेन चित्तोत्पादेन देयधर्मपरित्यागेन च त्रिकल्पासंख्येयसमुदानीतां बोधिं समुदानीय महाकरुणापरिभाविताः षट् पारमिताः परिपूर्य शाक्यमुनिर्नाम[1] सम्यक्संबुद्धो भविष्यति दशभिर्बलैश्चतुर्भिर्वैशारद्यैस्त्रिभिरावेणिकैः स्मृत्युपस्थानैर्महाकरुणया च । अयमस्य देयधर्मो यो ममान्तिके चित्तप्रसाद इति ॥ 5

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

1) I read शाक्यमुनिः on account of both the Chinese and the Tibetan translations agreeing in that name of the future Buddha, cp. Mahāvastu I, 47, 13 sqq. 57, 8. Divy. 90, 6; B श्यक्तवानिर्नाम, which seems to be a corruption of शाक्यमुनि°. Nearly the same corruption is found in the Vicitrakarṇikāvadāna f. 70 a 10 शक्यावाण्यभिधो बुद्ध (sic) तथागतो भविष्यति.

---

## पद्म इति ७ ॥

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्ला-
5 नप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति स्म जेतवने ऽनाथपिण्डदस्यारामे ॥ यदा भगवाँल्लोके नोत्पन्न आसीत्तदा राजा प्रसेनजित्तीर्थिकदेवतार्चनं कृतवान्पुष्पधूपगन्धमाल्यविलेपनैः। यदा तु भगवाँल्लोके उत्पन्नो राजा च प्रसेनजिद्दहरसूत्रोदाहरणेन विनीतो भगवच्छासने श्रद्धां प्रतिलब्धवांस्तदा प्रीतिसौमनस्यजातस्त्रिर्भगव[1]न्तमुपसंक्रम्य दीपधूपगन्धमाल्यविलेपनैरभ्यर्चयति ॥

10 अथान्यतम आरामिको नवं पद्ममादाय राज्ञः प्रसेनजितो ऽर्थं श्रावस्तीं प्रविशति तीर्थिकोपासकेन च दृष्टः ‹पृष्ट›श्च[2]। किमिदं पद्मं विक्रीणीषे[3]॥ स कथयत्यामेति[4]॥ स क्रेतुका[7 b]मो यावदनाथपिण्डदो गृहपतिस्तं प्रदेशमनुप्राप्तः। तेन तस्माद्द्विगुणेन मूल्येन वर्धितम्। ततः[5] परस्परं वर्धमानौ यावच्छतसहस्रं वर्धि‹तव›न्तौ[6]॥ अथारामिक-

1) MS °ज्ञातः त्रिभग°.

2) My insertion of पृष्ट is corroborated by parallel passages, cf. Divy. 26, 10. 30, 27. 57, 13. 488, 25. 541, 20 and *infra*, tale **44**, B 42 b; tale **61**, B 58 b; tale **76**, B 71 b.

3) Ex conject.; B विक्रीनीय.

4) With आम 'yes; indeed' cp. the Pāli *āma*, e. g. Jāt. II, 92, 25. In B the akṣara रा is added on the inferior margin, to be inserted between त्या and मे, by one who did not understand the true reading. CD त्यारामेति, P भ्यारामेति.

5) MS ततो.

6) Ex conject.; MS सहस्रवर्धितौ. The passive is of course impossible. M. Feer informs me that the Tibetan translation is no obstacle to my correction.

स्थितश्चाभवत्। अयमनाथपिण्डदो गृहपतिरचञ्चलः स्थिरसत्त्वो नूनमत्र कारणेन भवितव्यमिति। तेन संशयजातेन स तीर्थिकाभिप्रसन्नः पुरुषः पृष्टः कस्यार्थे भवानेवं वर्धत[1] इति। स आह। अहं भगवतो नारायणस्यार्थे इति॥ अनाथपिण्डदाहं[2]। अहं भगवतो बुद्धस्यार्थे इति॥ आरामिक आह। क एष बुद्धो नामेति॥ ततो ऽनाथपिण्डदेन विस्तरेणास्य बुद्धगुणा आख्याताः॥ तत आरामिको ऽनाथपिण्डदमाह। गृहपते ऽहं स्वयमेव तं भग- 5
वन्तमभ्यर्चयिष्य इति॥

ततो ऽनाथपिण्डदो गृहपतिरारामिकमादाय येन भगवांस्तेनोपसंक्रान्तः। ददर्शारामिको बुद्धं भगवन्तं द्वात्रिंशता महापुरुषलक्षणैःसमलङ्कृतमशीत्या चानुव्यञ्जनैर्विराजितगात्रं व्याम[3]प्रभालङ्कृतं सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकम्। सहदर्शनाच्चारामिकेण तत्पद्मं भगवति क्षिप्तम्। ततः क्षिप्तमात्रं शकटचक्रप्रमाणं 10
भूत्वा उपरि भगवतः स्थितम्॥

अथ स[2]ारामिकस्तत्प्रातिहार्यं दृष्ट्वा मूलनिकृत्त[4] इव द्रुमो भगवतः पादयोर्निपत्य कृतकरपुटश्चेतनां पुष्णाति प्रणिधिं च कर्तुमारब्धः। अनेनाहं कुशलमूलेन चित्तोत्पादेन देयधर्मपरित्यागेन चान्धे लोके ‹अनायके› अपरिणायके बुद्धो भूयासमतीर्णानां सत्त्वानां तारयिता अमुक्तानां मोचयिता अनाश्वस्तानामाश्वासयिता अपरिनिर्वृतानां परिनिर्वाप- 15
यितेति॥

अथ भगवांस्तस्यारामिकस्य हेतुपरम्परां कर्मपरम्परां च ज्ञात्वा स्मितं प्राविरकार्षीत्। धर्मता खलु यस्मिन्समये बुद्धा भगवन्तः स्मितं प्राविष्कुर्वन्ति तस्मिन्समये नी-

---

1) B °ते इति, D °त इति. Instead of *vardhata iti* one should rather expect *vardhayatīti*, but the transitive meaning of the primitive non-causative verb is not wholly excluded from the post-Vedic period. Cp. *supra* p. 36, 13 *parasparaṃ vardhamānau*. For the rest, Divy. 403, 10 foll. may be compared.

2) Sic MS; cp. *supra* p. 20 n. 6.

3) MS व्योम°.

4) MS °कृंत.

लपीतलोहितावदाता अर्चिषो मुखान्निश्चार्य काश्चिदधस्ताद्गच्छन्ति[1] काश्चिदुपरिष्टाद्गच्छन्ति। या अधस्ताद्गच्छन्ति ताः संजीवं कालसूत्रं संघातं[2] रौरवं महारौरवं तपनं प्रतापनमवीचिमर्बुदं निर‹र›बुदमटटं हहवं हुहुवमुत्पलं पद्मं महापद्मं नरकान्गत्वा[3] ये उष्णनरकास्तेषु शीतीभूता निपतन्ति ये शीतनरकास्तेषूष्णीभूता निपतन्ति। तेन तेषां सत्त्वानां कारणाविशेषाः प्रतिप्रस्रभ्यन्ते। तेषामेवं[4] भवति। किं नु वयं भवन्त इतश्च्युता आहो स्विदन्यत्रोपपन्ना इति। तेषां प्रसादसंजननार्थं भगवान्निर्मितं[5] विसर्जयति। तेषां निर्मितं दृष्ट्वैवं भवति। न ह्येव[6] वयं भवन्त इतश्च्युता नाप्यन्यत्रोपपन्ना अपि त्वयमपूर्वदर्शनः सत्त्वोऽस्यानुभावेनास्माकं कारणाविशेषाः प्रतिप्रस्रब्धा इति। ते निर्मिते चित्तमभिप्रसाद्य तन्नरकवेदनीयं[7] कर्म क्षपयित्वा[8] देवमनुष्येषु प्रतिसन्धिं गृह्णन्ति यत्र सत्यानां भाजनभूता भवन्ति। या उपरिष्टाद्गच्छन्ति ताश्चातुर्महाराजिकांस्त्रयस्त्रिंशान्यामांस्तुषितान्निर्माणरती-[9]न्परनिर्मितवशवर्तिनो ब्रह्मकायिकान्ब्रह्मपुरोहितान्महाब्रह्मणः परीत्ताभानप्रमाणाभानाभास्वरान्परीत्तशुभानप्रमाणशुभाञ्छुभकृत्स्नाननभ्रकान्पुण्यप्रसवान्[10]बृहत्फलानबृहानतपान्सुदृशान्सुदर्शनानकनिष्ठान्देवान्गत्वा अनित्यं दुःखं शून्यमनात्मेत्युद्घोषयन्ति[11] गाथाद्वयं च भाषन्ते।

---

1) B काचि°, D corr.

2) B संघातरौ°, D corr.

3) MS °कंग°. Cp. *supra* p. 4 n. 7.

4) MS °मेवभव°.

5) B °न्निमितं, D corr.

6) MS ह्यैवं (D ह्येवं).

7) MS तंनरकंवे° (D °रकवे).

8) MS न्ने°.

9) B °तान्निर्मा°, D corr.

10) B °प्रस्र°, D corr.

11) B °षयति, D corr.

आरभध्वं[1] निष्क्रामत युज्यध्वं बुद्धशासने ।
धुनीत मृत्युनः सैन्यं नडागारमिव कुञ्जरः ॥
यो ह्यस्मिन्धर्मविनये अप्रमत्तश्चरिष्यति ।
प्रहाय जातिसंसारं दुःखस्यान्तं करिष्यति ' इति ॥

अथ ता अर्चिषस्त्रिसाहस्रमहासाहस्रं लोकधातुमन्वाहिण्ड्य भगवन्तमेव पृष्ठतः पृष्ठतः समनुगच्छन्ति । तद्यदि भगवानतीतं कर्म व्याकर्तुकामो भवति भगवतः पृष्ठतो ऽन्तर्धीयन्ते । अनागतं व्याकर्तुकामो भवति पुरस्तादन्तर्धीयन्ते । नरकोपपत्तिं व्याकर्तुकामो भवति पादतले ऽन्तर्धीयन्ते । तिर्यगुपपत्तिं व्याकर्तुकामो भवति पार्ष्ण्यामन्तर्धीयन्ते । प्रेतोपपत्तिं व्याकर्तुकामो भवति पादाङ्गुष्ठे ऽन्तर्धीयन्ते । मनुष्योपपत्तिं व्याकर्तुकामो भवति जानुनो<र्>ऽन्तर्धीयन्ते । बलचक्रवर्तिराज्यं व्याकर्तुकामो भवति वामे करतले ऽन्तर्धीयन्ते । चक्रवर्तिराज्यं व्याकर्तुकामो भवति दक्षिणे करतले ऽन्तर्धीयन्ते । देवोपपत्तिं व्या[8a]कर्तुकामो भवति नाभ्यामन्तर्धीयन्ते । श्रावकबोधिं व्याकर्तुकामो भवति आस्ये ऽन्तर्धीयन्ते । प्रत्येकबोधिं व्याकर्तुकामो भवति ऊर्णायामन्तर्धीयन्ते । अनुत्तरां सम्यक्संबोधिं व्याकर्तुकामो भवति उष्णीषे ऽन्तर्धीयन्ते ॥

अथ ता अर्चिषो भगवन्तं त्रिः[2] प्रदक्षिणीकृत्य भगवत उष्णीषे ऽन्तर्हिताः । अथायुष्मानानन्दः कृतकरपुटो भगवन्तं पप्रच्छ ।

नानाविधो रङ्गसहस्रचित्रो वक्त्रान्तरान्निष्क्रसितः कलापः ।
अवभासिता येन दिशः समन्तादिवाकरेणोदयता यथैव ॥

गाथाश्च भाषते[3] ।

विगतोद्धवा दैन्यमदप्रहीणा बुद्धा जगत्युत्तमहेतुभूताः ।
नाकारणं शङ्खमृणालगौरं स्मितमुपदर्शयन्ति जिना जितारयः ॥

---

1) B °द्धव, D corr.
2) MS त्रिप्र°.
3) MS भाषन्ते.

तत्कालं स्वयमधिगम्य वीर बुद्ध्या
श्रोतॄणां श्रमण[1] जिनेन्द्र काङ्क्षितानां ।
धीराभिर्मुनिवृष वाग्भिरुत्तमाभि-
रुत्पन्नं व्यपनय संशयं शुभाभिः[2] ॥
5 नाकस्माल्लवणजलाद्रिराजधैर्याः
संबुद्धाः स्मितमुपदर्शयन्ति नाथाः ।
यस्यार्थे स्मितमुपदर्शयन्ति धीराः
तं श्रोतुं समभिलषन्ति ते जनौघा इति ॥

भगवानाह । एवमेतदानन्दैवमेतत् । नाहेत्वप्रत्ययमानन्द तथागता अर्हन्तः सम्य-
10 क्संबुद्धाः स्मितं प्राविष्कुर्वन्ति । पश्यसि त्वमानन्दानेनारामिकेण प्रसादजातेन ममैवं-
विधां पूजां कृताम्[3] ॥ एवं भदन्त ॥ एष आरामिको ऽनेन कुशलमूलेन चित्तोत्पादेन देयध-
र्मपरित्यागेन च त्रिकल्पासंख्येयसमुदानीतां बोधिं समुदानीय महाकरुणापरिभाविताः
षट् पारमिताः परिपूर्य पद्मोत्तमो नाम सम्यक्संबुद्धो भविष्यति दशभिर्बलैश्चतुर्भिर्वैशा-
रद्यैस्त्रिभिरावेणिकैः स्मृत्युपस्थानैर्महाकरुणया च । अयमस्य देयधर्मो[4] यो ममान्तिके चि-
15 त्तप्रसाद इति ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

1) MS अवणा.

2) B शुभाभिर्नाक°, D and P corr.

3) MS °विधं पूजां (D °जा) कृतं.

4) B °धर्मो, D and P corr.

## पञ्चाल इति ८

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थ[1]वाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपात[2]शयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति स्म जेतवने ऽनाथपिण्डदस्यारामे ॥ तेन खलु समयेनोत्तरपञ्चालराजो दक्षिणपञ्चालराजेन सह प्रतिविरुद्धो बभूव । * * * * * * * *[3]

अथ राजा प्रसेनजित्कौशल्यो[4] येन भगवांस्तेनोपसंक्रान्तः । उपसंक्रम्य भगवतः पादौ[5] शिरसा वन्दित्वा एकान्ते निषण्णः । एकान्ते निषण्णो राजा प्रसेनजित्कौशल्यो भग-

---

1) B °वाथैर्दे°, D and P corr.

2) MS °पात्र°.

3) I have put here the indication of a gap in our text, because it is highly improbable that nothing should have been added to describe the nature of the war nor to account for the sudden intervention of king Prasenajit. Moreover, story 11 of ch. VIII of the Karmaçataka, translated from the Tibetan by M. Feer (A.M.G.V, 401 foll.), the beginning of which closely agrees with tale 8 of Avadānaçataka, exhibits that very missing link: «En ce temps-là, le roi du Pancâla septentrional et le roi du Pancâla méridional étaient tous les deux en grand désaccord, *et de temps en temps, ils faisaient périr (dans la bataille) de grandes multitudes d'hommes* [cp. *infra* p. 42, 3]. *Le roi Prasenajit était leur ami commun, un allié, un compagnon. Le roi Prasenajit se disait donc: Par quel moyen viendrai-je à (bout de) les réconcilier? — Cette réflexion lui vint alors à l'esprit: Bhagavat dompte les indomptables. Eh bien! je ferai une prière à Bhagavat.* — Il se rendit donc auprès de Bhagavat etc.» I have italicised the passage that is wanted in Avadānaçataka.

4) This name is always spelt in our text with श, never with स.

5) MS., owing to some blunder in A or B, पादयोः.

वक्तारमिदमवोचत् । भगवान्नाम[1] भदन्तानुत्तरो धर्मराजो व्यसनगतानां सत्त्वानां परित्राता
अन्योन्यवैरिणां[2] वैरप्रशमयिता । अयञ्चोत्तरपञ्चालो राजा दक्षिणपञ्चालराजेन सह प्रति-
विरुद्धस्तौ परस्परमेव महाजन[3]विप्रघातं कु<रु>तः । तयोर्भगवान्[4]दीर्घरात्रानुगतस्य[5] वैर-
स्योपशमं कुर्यादनुकम्पामुपादायेति । अधिवासयति भगवान्राज्ञः प्रसेनजितः कौशल्यस्य[6]
5 तूष्णीभावेन ॥ अथ राजा प्रसेनजित्कौशल्यो[7] भगवतस्तूष्णीभावेनाधिवासनां विदित्वा
भगवतः पादौ शिरसा वन्दित्वोत्थायासनात्प्रक्रान्तः ॥

अथ भगवांस्तस्या एव रात्रेरत्ययात्पूर्वाह्ने[8] निवास्य पात्रचीवरमादाय येन वारा-
णसी काशीनां नगरं[9] तेन चारिकां प्रक्रान्तः । अनुपूर्वेण चारिकां चरन्वाराणसीमनुप्राप्तो
वाराणस्यां विहरति ऋषिपतने मृगदावे ॥ यावत्तयोर्विदितं भगवानस्माद्विजित[10]मनुप्राप्त
10 इति ॥ यावद्भगवता ऋद्धिबलेन चतुरङ्गबलकायं निर्मायोत्तरपञ्चालराजस्त्रासितः[11] । स भीत
एकरथमभिरुह्य भगवत्सकाशमुपसंक्रान्तः ॥ तस्य भगवता वैरप्रशमाय धर्मो देशितः । स
तं धर्मं श्रुत्वा भगवत्सकाशे प्रव्रजितः । तेन युज्यमानेन घटमानेन व्यायच्छमानेन सर्वक्ले-
शप्रहाणादर्हत्त्वं साक्षात्कृतम् ॥

---

1) Ex conject.; MS भगवानाह, cp. Feer 43 n. 1.

2) Ex conject.; MS अन्योन्यवैरिणावैर°.

3) Ex conject.; MS महाजल°.

4) MS °गवन्दी°.

5) Ex conject.; MS °रात्रानुगतस्य. Cp. Divy. 84, 9 *dīrgharātrānugato vicikitsākathaṃkathāçalyaḥ.*

6) MS कौशलस्य.

7) BP °शलौ, corr. in D and C into °शलो.

8) So constantly spelt, it seems, in MS.

9) Ex conject.; MS गिर्गतस्ते°.

10) Ex conject., according to the Tibet. (s. Feer p. 44, 1); MS °वानस्यविज्ञि°.

11) In B the last word is written rather indistinctly, hence DCP °ज्ञास्यासितः; there can however be no doubt as to the correctness of the reading.

दक्षिणपञ्चालराजेनापि भगवान्सश्रावकसङ्घस्त्रैमास्यं शतरसेनाहारेणोप[1] निमन्त्रितः शतसाहस्रेण च वस्त्रेणाच्छादितः प्रणि[8b]धानं[2] कृतम्। अनेनाहं कुशलमूलेन चित्तोत्पादेन देयधर्मपरित्यागेन[3] चान्धे लोके अनायके अपरिणायके बुद्धो भूयासमतोर्णानां सत्त्वानां तारयिता अमुक्तानां मोचयिता अनाश्वस्तानामाश्वासयिता अपरिनिर्वृतानां परिनिर्वापयितेति ॥

अथ भगवान्दक्षिणपञ्चालराजस्य हेतुपरम्परां कर्मपरम्परां च ज्ञात्वा स्मितं प्राविरकार्षीत्। धर्मता खलु यस्मिन्समये बुद्धा भगवन्तः स्मितं प्राविष्कुर्वन्ति तस्मिन्समये नीलपीतलोहितावदाता अर्चिषो[4] मुखान्निश्चार्य काश्चिदधस्ताद्गच्छन्ति काश्चिदुपरिष्टाद्गच्छन्ति। या अधस्ताद्गच्छन्ति ताः संजीवं कालसूत्रं संघातं रौरवं महारौरवं तपनं प्रतापनमवीचिमर्बुदं निरर्बुदं[5] अटटं हहवं हुहुवमुत्पलं पद्मं महापद्मं नरकान्गत्वा[6] ये उष्णनरकास्तेषु शीतीभूता निपतन्ति ये शीतनरकास्तेषूष्णीभूता निपतन्ति। तेन तेषां सत्त्वानां कारणाविशेषाः प्रतिप्रस्रभ्यन्ते। तेषामेवं भवति[7]। किं नु वयं भवन्त इतश्च्युता आहो स्विदन्यत्रोपपन्ना[8] इति। तेषां प्रसादसंजननार्थं भगवान्निर्मितं विसर्जयति। तेषां निर्मितं दृष्ट्वा च एवं भवति। न ह्येवं[9] वयं भवन्त इतश्च्युता नाप्यन्यत्रोपपन्ना अपि त्वयमपूर्वदर्शनः[10] सत्त्वो ऽस्यानुभावेनास्माकं कारणाविशेषाः प्रतिप्रस्रब्धा इति। ते निर्मिते चित्तमभिप्र-

---

1) B शतारम्येश्यहारेणो°, D शतारसेनाहारेणो°, cp. *supra* p. 9, 8.

2) I think, we have to read प्रणिधानं ‹च› कृतम्, cp. *supra* p. 37, 13.

3) B °त्यागेनान्धे, P corr.

4) MS °षा.

5) BCP निरबुद°, D निर्बुद°.

6) MS नरकं.

7) B भवन्ति, D corr.

8) B स्विनन्य°, D corr.

9) BCP ह्येव, D ह्येवं

10) MS स्वय°.

साद्य तन्नरकवेदनीयं कर्म [1]क्षपयित्वा देवमनुष्येषु प्रतिसन्धिं गृह्णन्ति यत्र सत्त्वानां भाजनभूता भवन्ति । या उपरिष्टाद्गच्छन्ति ताश्चातुर्महाराजिकांस्त्रा[2]यस्त्रिंशान्यामांस्तुषितान्निर्माणरतीन्परनिर्मितवशवर्तिनो ब्रह्मकायिकान्ब्रह्मपुरोहितान्महाब्रह्म[3]णः परीत्ताभानप्रमा[4]णाभानाभास्वरान्परीत्तशुभानप्रमाणशुभाञ्छुभकृत्स्नाननभ्रकान्पुण्यप्रसवान्बृहत्फला-
5 नबृहानतपान्सुदृशान्सुदर्शनानकनिष्ठान्देवान्गत्वा अनित्यं दुःखं शून्यमनात्मेत्युद्घोष[5]यन्ति गाथाद्वयं च भाषन्ते ।

आरभध्वं निष्क्रामत युज्यध्वं बुद्धशासने ।
धुनीत मृत्युनः सैन्यं नडागारमिव कुञ्जरः ॥
यो ह्यस्मिन्धर्मविनये अप्रमत्तश्चरिष्यति ।
10 प्रहाय जातिसंसारं दुःखस्यान्तं करिष्यति ॥

अथ ता अर्चिषस्त्रिसाहस्रमहासाहस्रं लोकधातुमन्वाहिण्ड्य भगवन्तमेव पृष्ठतः पृष्ठतः समनुगच्छन्ति । तद्यदि भगवानतीतं कर्म व्याकर्तुकामो भवति भगवतः पृष्ठतोऽन्तर्धीयन्ते । अनागतं व्याकर्तु[6]कामो भवति पुरस्तादन्तर्धीयन्ते । नरकोपपत्तिं व्याकर्तुकामो भवति पादतलेऽन्तर्धीयन्ते । तिर्यगु[7]पपत्तिं व्याकर्तुकामो भवति पार्ष्ण्यामन्तर्धीयन्ते ।
15 प्रेतोपपत्तिं व्याकर्तुकामो भवति पादाङ्गुष्ठेऽन्तर्धीयन्ते । मनुष्योपपत्तिं व्याकर्तुकामो भवति जानुनो<ऽ>न्तर्धीयन्ते । बलचक्रवर्तिराज्यं व्याकर्तुकामो भवति वामे करे[8]ऽन्तर्धीयन्ते । चक्रवर्तिराज्यं व्याकर्तुकामो भवति दक्षिणे करे[8]ऽन्तर्धीयन्ते । देवोपपत्तिं व्याकर्तुकामो

---

1) MS क्ष°.
2) Cp. *supra*, p. 25, n. 11.
3) MS °ह्माणाः.
4) BCP °माणभा°, D °मानाभा°.
5) B °यति, D corr.
6) B व्याकर्तुकर्तुकामो, D and P corr.
7) B तियगु°, D and P corr.
8) This is a variant of the stereotyped formula, D करतले as elsewhere.

भवति नाभ्यामन्तर्धीयन्ते। श्रावकबोधिं व्याकर्तुकामो भवति आस्ये ऽन्तर्धीयन्ते। प्रत्येकबोधिं व्याकर्तुकामो भवति ऊर्णायामन्तर्धीयन्ते। अनुत्तरां सम्यक्संबोधिं व्याकर्तुकामो भवति उष्णीषे ऽन्तर्धीयन्ते ॥

अथ ता अर्चिषो भगवन्तं त्रिः प्रदक्षिणीकृत्य भगवत उष्णीषे ऽन्तर्हिताः। अथायुष्मानानन्दः कृतकरपुटो भगवन्तं पप्रच्छ। 5

नानाविधो रङ्गसहस्रचित्रो वक्त्रान्तरान्निष्क्रसितः कलापः।
अवभासिता येन दिशः समन्ताद्दिवाकरेणोदयता यथैव[1] ॥

गाथाश्च[2] भाषते[3]।

विगतोद्भवा दैन्यमदप्रहीणा बुद्धा जगत्युत्तमहेतुभूताः।
नाकारणं शङ्खमृणालगौरं स्मितमुपदर्शयन्ति जिना जितारयः ॥ 10

तत्कालं स्वयमधिगम्य वीर बुद्ध्या
श्रोतॄणां श्रमण[4] जिनेन्द्र काङ्क्षितानां।
धीराभिर्मुनिवृष वाग्भिरुत्तमाभि-
रुत्पन्नं व्यपनय संशयं शुभाभिः ॥

नाकस्माल्लवणजलाद्रिराजधैर्याः 15
संबुद्धाः स्मितमुपदर्शयन्ति नाथाः।
यस्यार्थे स्मितमुपदर्शयन्ति धीराः
तं श्रोतुं समभिलषन्ति ते जनौघा इति ॥

भगवानाह। एवमेतदानन्दैवमेतत्। नाहेत्वप्रत्ययमानन्द तथागता अर्हन्तः सम्य-

---

1) B °रेणादयता (C °रोणा°), D corr.
2) B गाथा च, P corr.
3) MS भाषन्ते.
4) MS श्रवणा.

कसंबुद्धाः स्मितं प्राविष्कुर्वन्ति । पश्यस्यानन्दानेन दक्षिणपञ्चालराजेन ममैवंविधं सत्कारं कृतम् ॥ एवं भदन्त ॥ एषानन्द[1] पञ्चालराजो ऽनेन कुशलमूलेन चित्तोत्पादेन देय-[9a]धर्मपरित्यागेन च त्रिकल्पासंख्येयसमुदानीतां बोधिं समुदानीय महाकरुणापरिभा-विताः षट् पारमिताः परिपूर्य विजयो नाम सम्यक्संबुद्धो भविष्यति दशभिर्बलैश्चतुर्भि-
5 वैशारद्यैस्त्रिभिरावेणिकैः स्मृत्युपस्थानैर्महाकरुणाया च । अयमस्य देयधर्मो यो ममान्तिके चित्तप्रसादः ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

1) Sic MS. Cp. *supra* p. 37, 3.

# धूप[1] इति ९

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देव[2]नागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपि[3]ण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्डदस्यारामे ॥ तेन खलु समयेन श्रावस्त्यां द्वौ श्रेष्ठिनौ । तावन्योन्यं[4] प्रतिविरुद्धौ बभूवतुः । ताभ्यामेकः पूरणे ऽभिप्रसन्नो[5] द्वितीयो बुद्धे भगवति ॥ ततस्तयोः परस्परं[6] कथाः संकथ्य विनिश्चये वर्तमाने पूरणोपासक आह । बुद्धात्पूरणो विशिष्टतर इति ॥ बुद्धोपासक आह । भगवान्सम्यक्संबुद्धो विशिष्टतर इति ॥ ततस्ताभ्यां [7]सर्वस्वापहरणे बन्धनिक्षेपः कृतः ॥

---

1) Ex conject.; MS धूम इति. For I greatly doubt of the exactness of this heading. There is no mention of smoke in this tale. It is rather likely that धूम is a corruption of धूप 'incense', which title would suit better. Mr. Feer informs me that the Tibetan translation confirms my suspicion, the Tibetan title being བདུག་པ་ 'incense'.

2) D inserts even मनुष्य between देव and नाग.

3) MS पिण्डपात्र°. Cp. Divy. 89, n. 2. The same error must be corrected Divy. 493, 28.

4) Anusvāra wanting in MS.

5) Ex conject.; B पूरणाभि°, CDP पूरणोभि°.

6) Ex conject.; MS कथासांकथ्य. Perhaps the right reading is कथासांकथ्ये. As to *viniçcaye vartamāne* cp. *infra* avad. nr. 58 (B 58b) and nr. 74 (B 69b).

7) B सर्वस्वपह°, changed in D into सर्वस्वप्रह°.

यावद्राज्ञः प्रसेनजितः श्रुतम् । तेनामात्यानामाज्ञा दत्ता[1] । तयोर्मीमांसा[2] कर्तव्येति ॥ ततस्तैरमात्यैस्सर्वविजिते घण्टावघोषणं कारितं सप्तमे दिवसे बुद्धतीर्थिकोपासकयोर्मीमांसा भविष्यति ये चाद्भुतानि[3] द्रष्टुकामास्ते आगच्छन्त्विति ॥ ततः सप्तमे दिवसे विस्तीर्णावकाशे पृथिवीप्रदेशेऽनेकेषु प्राणिशतसहस्रेषु संनिपतितेषु गगणतले चानेकेषु[4] 5 देवतासहस्रेषु संनिपतितेषु गोमयमण्डलके क्लृप्ते[5] सर्वगन्धमाल्येधूपच्छृतेषु पूर्वतरं तीर्थिकोपासकेन सत्योपयाचनं कृतम् । येन सत्येन पूरणप्रभृतयः षट्[6] शास्तारो लोके श्रेष्ठा अनेन सत्येनेमानि[7] पुष्पाण्ययं च धूप इदं च पानीयं तानुपगच्छन्त्विति ॥ एवं प्रव्याहृतमात्रे तानि पुष्पाणि भूमौ पतितान्यग्निर्निर्वृतः[8] पानीयं पृथिव्यामस्तं परिक्षयं पर्यादानं गतम् ॥ ततो महाजनकायेन किलकिलाप्रक्ष्वेडोच्चैर्नादो[9] मुक्तः । यमभिवीक्ष्य[10] तीर्थ्योपास-
10 कस्तूष्णीभूतो मङ्कुभूतः[11] स्रस्तस्कन्धोऽधोमुखो निष्प्रतिभानः[12] प्रध्यानपरमः करे कपोलं दत्त्वा चिन्तापरो व्यवस्थितः ॥

---

1) MS दत्ताः. 2) MS °सां.

3) So B, though written rather indistinctly, hence the word is variously corrupted in the other MS.

4) B वा, P corr.

5) Ex conject., as *kḷpta* seems the proper word to denote that the circular spot besmeared with cowdung was duly prepared; MS कृत्ये. The Tibetan renders this participle by བྱས་ཏེ = 'made', yet, if the genuine reading should be कृते, the corruption in MS could not be accounted for.

6) Ex conject; cp. *supra* p. 16, 3; B षट्शास्तव्ये[or के]लोकेँष्टाः, the sign ᵕ refers to the margin where we find श्रे to be inserted after के. In its copies(D, C, P) the words are still worse corrupted.

7) Ex conject.; MS सत्येनपरि.

8) Ex conject.; B तान्यपिनिर्वृतः with an expunged vowel (*a* or *i*) between वृ and तः; hence the younger copies have तान्यपिनिर्वातिः (D without visarga).

9) MS प्रक्षेडो°. 10) MS तीर्थ्यो°.

11) Ex conject., cp. the parallel passage Divy. 633, 24. 636, 7; B मङ्कुतः । स्र° (CP प्र°), D मङ्कुतो.

12) Ex conject.; MS °भान्यः. Cp. Jāt. II, 258, 13 *appaṭibhāno*.

ततो भगवच्छ्रावकेण हर्षात्कण्ठगतेन प्रसादविकसिताभ्यां नयनाभ्यामेकांसमुत्तरासङ्गं कृत्वा दक्षिणजानुमण्डलं पृथिव्यां प्रतिष्ठाप्य सत्योपयाचनं कृतम्। येन सत्येन भगवान्सर्वसत्त्वानामग्र्यो ऽनेन सत्येनेमानि पुष्पाणि धूप[1] उदकं भगवन्तमुपगच्छत्विति[2]। एवं प्रव्याहृतमात्रे तानि[3] पुष्पाणि हंसपङ्क्तिरिवा[4]काशे जेत[5]वनाभिमुखं संप्रस्थितानि धूपो ऽभ्रकूटवदुदकं वैडूर्यशलाकवत्[6]॥ अथ स महाजनकायस्तत्प्रातिहार्यं दृष्ट्वा किलकिलाप्रक्ष्वेडोच्चैःशब्दं कुर्वं[7]स्तेषां संप्रस्थितानां पृष्ठतः पृष्ठतः समनुबद्धः॥

ततस्तानि पुष्पाणि भगवत उपरि स्थितानि धूप[1] उदकं चाग्रतः॥ ततः स महाजनकायो लब्धप्रसादो भगवतः पादाभिवन्दनं कृत्वा पुरस्तान्निषण्णो धर्मश्रवणाय। तेषां भगवानिदं सूत्रं भाषते स्म॥

तिस्र इमा ब्राह्मणगृहपतयो ऽ[8]ग्रप्रज्ञप्तयः। कतमास्तिस्रः। बुद्धे अग्रप्रज्ञप्तिर्धर्मे[9] संघे अग्रप्रज्ञप्तिः॥ ‹बुद्धे अग्रप्रज्ञप्तिः› कतमा[10]। ये केचिद्ब्राह्मणगृहपतयः सत्त्वा अपदा वा द्विपदा[11] वा बहुपदा वा रूपिणो वा ऽ[12]रूपिणो वा संज्ञिनो वा ऽ[12]संज्ञिनो वा नै‹व›सं-

---

1) MS धूपमु°, cp. however l. 4 and p. 48, 7.

2) As to the singular of the verb, cp. my *Sanskrit Syntax* § 28, Mhbh. ed. Bomb. I, 2, 173, Kathās. 34, 29.

3) Ex conject.; MS मानि (P माणि).

4) Ex conject., cp. the examples adduced in PW s. v. पङ्क्ति p. 353, l. 24 foll.; MS हंसपतिरिवा°.

5) In D this amplification जेतवनमहाविहाराभिमुखं.

6) Cp. *supra*, p. 2, 13.

7) Ex conject.; MS कुर्वन्तस्तेषां. I cannot admit that the solecism ought to be imputed to the author rather than to copyists.

8) MS ये instead of ऽग्र. Cp. *infra* tale 57, (B 55b) and Divy. 154, 19 foll.

9) MS °प्तिधर्मसंघो अ° (from धर्मे° to °प्ति is omitted in P).

10) MS कतमे.

11) B द्विपपदा, D corr.

12) Sic MS.

ज्ञिनो नासंज्ञिनस्तथागतो ऽर्हन्सम्यक्संबुद्धस्तेषामग्र[1] [2] आख्यातः। ये केचिद्बुद्धे ऽभिप्रसन्ना अग्रे ते ऽभिप्रसन्नाः। तेषामग्रे ऽभिप्रसन्नानामग्र एव विपाकः प्रतिकाङ्क्षितव्यो देवेषु वा देवभूतानां मनुष्येषु वा मनुष्यभूतानाम्। इयमुच्यते ब्राह्मणगृहपतयो बुद्धे अग्रप्रज्ञप्तिः॥ धर्मे अग्रप्रज्ञप्तिः कतमा। ये केचिद्धर्माः[3] संस्कृता वा असंस्कृता वा विरागो धर्मस्तेषामग्र आख्यातः। ये केचिद्धर्मे ऽभिप्रसन्ना अग्रे[4] ते ऽभिप्रसन्नाः। तेषामग्रे ऽभिप्रसन्नानामग्र एव विपाकः प्रतिकाङ्क्षितव्यो देवेषु वा देवभूतानां मनुष्येषु वा मनुष्यभूतानाम्। इयमुच्यते ब्राह्मणगृहपतयो धर्मे अग्रप्रज्ञप्तिः॥ [5]सङ्घेषु अग्रप्रज्ञप्तिः कतमा। ये केचित्सङ्घा[6] वा गणा वा पूगा वा परिषदो वा तथागतश्रावकसङ्घस्तेषामग्र आख्यातः। ये केचित्सङ्घे ऽभिप्रसन्ना अग्रे ते ऽभिप्रसन्नाः। तेषामग्रे ऽभिप्रसन्नानामग्र एव विपाकः प्रतिकाङ्क्षित[9b]व्यो देवेषु देवभूतानां ‹मनुष्येषु मनुष्यभूतानाम्›[7]। इयमुच्यते ब्राह्मणगृहपतयः सङ्घे अग्रप्रज्ञप्तिः॥

अस्मिन्खलु धर्मपर्याये भाष्यमाणे तेषां ब्राह्मणगृहपतीनां कैश्चिद्बुद्धधर्मसङ्घेषु[8] प्रसादः प्रतिलब्धः कैश्चिच्छरणगमनशिक्षापदानि[8] गृहीतानि कैश्चित्प्रव्रज्य ‹इद›मेव[9] पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः शतनपतनविकरणविध्वंसनधर्म-

---

1) MS नैसंज्ञिनो वाचसंज्ञिनः त°, I have corrected according to the parallel passage B 55 b in fine.

2) MS °ग्रमाख्या°.

3) MS ये केचिद्बद्धुधर्मा संस्कृतो वा असंस्कृतो वा. I have corrected the passage with the help of B 55 b in fine and Divy. 154, 22.

4) So B; CDP अग्र.

5) Note the plural of *saṅgha* which is frequently met with in K and R.

6) B °चित्सघा, D corr.

7) The words left out in B are added in D, cp. *infra* B 56 a in initio.

8) MS कश्चि°.

9) I have filled the gap with the help of other occurrences of this frequent common-place.

तथा पराहत्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतं तेन च तीर्थ्योपासकेन तथागतान्तिके[1] प्रसादः प्रतिलब्धः। ततो मूलनिकृत्त[2] इव द्रुमः पादयोर्निपत्य प्रणिधानं कर्तुमारब्धः। अनेनाहं कुशलमूलेन चित्तोत्पादेन देयधर्मपरित्यागेन चान्धे लोके अनायके अपरिणायके बुद्धो भूयासमतीर्णानां सत्त्वानां तारयिता अमुक्तानां मोचयिता अनाश्वस्तानामाश्वासयिता अपरिनिर्वृतानां परिनिर्वापयितेति॥

अथ भगवांस्तस्य तीर्थिकोपासकस्य हेतुपरम्परां कर्मपरम्परां च ज्ञात्वा स्मितं प्राविरकार्षीत्। धर्मता खलु यस्मिन्समये बुद्धा भगवन्तः स्मितं प्राविष्कुर्वन्ति तस्मिन्समये नीलपीतलोहितावदाता अर्चिषो मुखान्निश्चार्य काश्चिदधस्ताद्गच्छन्ति काश्चिदुपरिष्टाद्गच्छन्ति। या अधस्ताद्गच्छन्ति ताः संजीवं कालसूत्रं संघातं रौरवं महारौरवं तपनं प्रतापनमवीचिमर्बुदं निरर्बुदमटटं हहवं हुहुवमुत्पलं पद्मं महापद्मं नरकान्[3]गत्वा ये उष्णनरकास्तेषु शीतीभूता निपतन्ति ये शीत[4]नरकास्तेषूष्णीभूता निपतन्ति। तेन तेषां सत्त्वानां कारणाविशेषाः प्रतिप्रस्रभ्यन्ते[5]। तेषामेवं भवति। किं नु वयं भवन्त इतश्च्युता आहो स्विदन्यत्रोपपन्ना इति। तेषां प्रसादसंजननार्थं भगवान्निर्मितं विसर्जयति। तेषां निर्मितं दृष्ट्वैवं भवति। न ह्येव[6] वयं भवन्त इतश्च्युता नाप्यन्यत्रोपपन्ना अपि त्वयमपूर्वदर्शनः सत्त्वोऽस्यानुभावेनास्माकं कारणाविशेषाः प्रतिप्रस्रब्धा इति। ते निर्मिते चित्तमभिप्रसाद्य तन्नरकवेदनीयं कर्म क्षपयित्वा[7] देवमनुष्येषु प्रतिसन्धिं गृह्णन्ति यत्र सत्यानां भाजनभूता भवन्ति। या उपरिष्टाद्गच्छन्ति ताश्चातुर्महाराजिकांस्त्रयस्त्रिंशान्यामांस्तुषितान्निर्माणरतीन्परनि-

1) MS गतोऽन्तिके.

2) MS °कृत्त, as usual, cp. *supra* 3, n. 9 and Divy. 192, n. 2.

3) MS नरकं.

4) B शीतिन°, D corr.

5) MS भ्यन्ते तेन तेषा°.

6) MS ह्येवं.

7) MS क्षे°.

र्मितवशवर्तिनो ब्रह्मकायिकान्ब्रह्मपुरोहितान्महाब्रह्मणः[1] परीत्ताभानप्रमाणाभानाभास्वरान्परीत्तशुभानप्रमाणशुभाञ्छुभकृत्स्नाननभ्रकान्पुण्यप्रसवान्[2]बृहत्फलानबृहानतपान्सुदृशान्सुदर्शनानकनिष्ठान्देवान्गत्वा अनित्यं दुःखं शून्यमनात्मेत्युद्घोषयन्ति गाथाद्वयं च भाषन्ते।

5 आरभध्वं[3] निष्क्रामत युज्यध्वं बुद्धशासने।
धुनीत मृत्युनः सैन्यं नडागारमिव कुञ्जरः॥
यो ह्यस्मिन्धर्मविनये अप्रमत्तश्चरिष्यति।
प्रहाय जातिसंसारं दुःखस्यान्तं करिष्यति ' इति॥

अथ ता अर्चिषस्त्रिसाहस्रमहासाहस्रं[4] लोकधातुमन्वाहिण्ड्य भगवन्तमेव पृष्ठतः
10 पृष्ठतः समनुगच्छन्ति। तद्यदि भगवानतीतं कर्म व्याकर्तुकामो भवति भगवतः पृष्ठतो ऽन्तर्धीयन्ते। अनागतं व्याकर्तुकामो भवति पुरस्तादन्तर्धीयन्ते। नरकोपपत्तिं व्याकर्तुकामो भवति पादतले ऽन्तर्धीयन्ते। तिर्यगुपपत्तिं व्याकर्तुकामो भवति पार्ष्ण्यामन्तर्धीयन्ते।[5] प्रेतोपपत्तिं व्याकर्तुकामो भवति पादाङ्गुष्ठे ऽन्तर्धीयन्ते। मनुष्योपपत्तिं व्याकर्तुकामो भवति जानुनोरन्तर्धीयन्ते।[6] बलचक्रवर्तिराज्यं व्याकर्तुकामो भवति वामे करतले ऽन्त-
15 र्धीयन्ते। चक्रवर्तिराज्यं व्याकर्तुकामो भवति दक्षिणे करतले ऽन्तर्धीयन्ते। देवोपपत्तिं व्याकर्तुकामो भवति नाभ्यामन्तर्धीयन्ते। श्रावकबोधिं व्या[10a]कर्तुकामो भवति आस्ये ऽन्तर्धीयन्ते। प्रत्येकबोधिं व्याकर्तुकामो भवति ऊर्णायामन्तर्धीयन्ते।[7] अनुत्तरां सम्यक्संबोधिं व्याकर्तुकामो भवति उष्णीषे ऽन्तर्धीयन्ते॥

अथ ता अर्चिषो भगवन्तं त्रिः[8] प्रदक्षिणीकृत्य भगवत उष्णीषे ऽन्तर्हिताः। अथायु-
20 ष्मानानन्दः कृतकरपुटो भगवन्तं पप्रच्छ।

---

1) MS ह्मणः.
2) B कानपुण्य°, D corr.
3) MS ध्व.
4) Anusvāra wanting in MS.
5) B पार्ष्ण्या°, D corr.
6) MS जानुनान्त° (D जानोऽन्त°).
7) B उ°, D corr. 8) MS त्रिप्र°.

नानाविधो रङ्गसहस्रचित्रो वक्त्रान्तरान्निष्क्रमितः कलापः ।
अवभासिता येन दिशः समन्ताद्दिवाकरेणोदयता यथैव ॥

गाथाश्च भाषते ।

विगतोद्भवा दैन्यमदप्रहीणा बुद्धा जगत्युत्तमहेतुभूताः ।
नाकारणं शङ्खमृणालगौरं स्मितमुपदर्शयन्ति जिना जितारयः ॥ 5

तत्कालं स्वयमधिगम्य वीर बुद्ध्या
श्रोतॄणां श्रमण[1] जिनेन्द्र काङ्क्षितानां ।
धीराभिर्मुनिवृष वाग्भिरुत्तमाभि-
रुत्पन्नं व्यपनय संशयं शुभाभिः ॥
नाकस्मााल्लवणजलाद्रिराजधैर्याः 10
संबुद्धाः स्मितमुपदर्शयन्ति नाथाः ।
यस्यार्थे स्मितमुपदर्शयन्ति धीराः
तं श्रोतुं समभिलषन्ति ते जनौघा इति ॥

भगवानाह । एवमेतदानन्दैवमेतत् । नाहेत्वप्रत्ययमानन्द तथागता अर्हन्तः सम्यक्संबुद्धाः स्मितं प्राविष्कुर्वन्ति । पश्यसि त्वमानन्दानेन तीर्थिकोपासकेन ममैवंविधं[2] 15 सत्कारं[3] कृतम् ॥ एवं भदन्त ॥ एष आनन्द तीर्थोपासको ऽनेन कुशलमूलेन चित्तोत्पादेन च[4] त्रिकल्पासंख्येयसमुदानीतां बोधिं समुदानीय महाकरुणापरिभावितः षट् पारमिताः परिपूर्य अचलो नाम सम्यक्संबुद्धो भविष्यति दशभिर्बलैश्चतुर्भिर्वैशारद्यैस्त्रिभिरावेणिकैः स्मृत्युपस्थानैर्महाकरुणया च । अयमस्य देयधर्मो यो ममान्तिके चित्तप्रसाद इति ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥ 20

---

1) MS श्रवण.
2) B तमै°, D corr.
3) B सत्कालं, D corr.
4) D after चित्तोत्पादेन mechanically inserts देयधर्मोन (sic).

## राजेति १०

बुद्धो भगवान्[1]सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रे-
ष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षगन्धर्वासुरगरुड-
किन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपात[2]शयनास-
5 नग्लानप्रत्ययभैषज्यपरिष्कारणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्ड-
दस्यारामे ॥ तेन खलु समयेन राजा प्रसेनजित्कौशलो राजा चा[3]जातशत्रुरुभावप्येतौ
परस्परं विरुद्धौ बभूवतुः ॥ अथ राजा ऽजातशत्रुश्चतुरङ्गबलकायं संनह्य हस्तिकायमश्व-
कायं[4] रथकायं[4] पत्तिकायं राजानं प्रसेनजितं कौशलमभिनिर्यातो युद्धाय ॥

अश्रौ[5]षीद्राजा प्रसेनजित्कौशलो[6] राजा अजातशत्रुश्चतुरङ्गबलकायं संनह्य हस्ति-
10 कायमश्वकायं रथकायं पत्तिकायं च * * * * ‹अभिनिर्यातो युद्धायेति श्रुत्वा च चतुरङ्ग-
बलकायं संनह्य हस्तिकायमश्वकायं रथकायं पत्तिकायं›[7] राजानमजातशत्रुं प्रत्यभिनिर्यातो

1) B बुद्धो भगवान्बुद्धो स°, D corr.

2) MS पात्र°. Cp. *supra*, p. 47, n. 3.

3) MS वाजात°.

4) Anusvāra wanting in MS.

5) MS अश्रोषी°.

6) In this tale the king's name is always written *Prasenajit Kauçalo*, not *Kauçalyo* as in tale nr. 8, except *infra* p. 56, 3.

7) That there is a gap here after *pattikāyaṃ* is plain from the context

युद्धाय ॥ अथ राज्ञा ऽजातशत्रुणा[1] राज्ञः प्रसेनजितः कौशलस्य सर्वो हस्तिकायः पर्य-स्तो[2] ऽश्वकायो रथकायः पत्तिकायः पर्यस्तः[2]। राज्ञा प्रसेनजित्कौशलो जितो भीतो[3] भग्नः पराजितः परापृष्ठीकृत[4] एकरथेन श्रावस्तीं प्रविष्टः[5]। एवं यावच्चिरपि ॥

अथ राजा प्रसेनजित्कौशलः शोकागारं प्रविश्य करे[6] कपोलं दत्त्वा चिन्तापरो व्यवस्थितः। तत्र च श्रावस्त्यामन्यतमः श्रेष्ठी आढ्यो महाधनो महाभोगो विस्तीर्णविशा- 5 लपरिग्रहो वैश्रवणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी। तेन श्रुतं यथा राजा प्रसेनजित्कौशलो[7] जितो भग्नः परापृष्ठीकृत एकरथेनेह प्रविष्ट इति श्रुत्वा च पुनर्येन राजा प्रसेनजित्कौशलस्तेनोपसंक्रान्त उपसंक्रम्य राजा<नं> प्रसेनजितं कौशलं[8] जयेनायुषा च वर्धयित्वोवाच। किमर्थं देव शोकः क्रियते ऽहं देवस्य तावत्सुवर्णमनुप्रयच्छामि येन[9] देवः

---

and from Feer's translation of the Tibetan version, see Feer p. 47. I have filled it up for the greater part, in so far as it could be easily restored; the reconstruction of the beginning is not so certain, there having dropt out some word or a couple of words meaning: 'against you' or 'against us'. For the rest cp. Mahāvastu I, p. 30, 6.

1) Sic MS, as *supra* p. 54, 8.

2) Ex conject.; MS पर्य्यन्तो, resp. न्तः. The nr. 19 of Vicitrakarṇikāvadāna (f. 85v 1 — 88r 10 of the India Office ms.) which is partly identical with this tale, partly relates the same facts in a somewhat different redaction and has the same mistake: पर्यन्तान् instead of पर्यस्तान्.

3) MS भितः.

4) Cp. Divy. 223, 10 and 259, 24 *parāpṛṣṭhībhūtvā.*

5) MS प्रतिष्ठः.

6) B कले, cp. *supra* p. 53 n. 3, P corr.

7) B °त्कोशलो, DP corr.

8) MS कोश°.

9) Ex conject.; B सेन वे (made out of वो) वः, which has been still more corrupted in its copies. The Tibetan version (ཅི་ཙམ་གྱིས་ = येन and ལྷ་ = देवः) agrees with my correction.

पुनरपि [1] यथेष्टप्रचारणां करिष्यतीति । तेन तस्य [2] महान्सुवर्णराशिः [3] कृतो [4] यत्रोपविष्टः [5] पुरुष [6] उत्थितं पुरुषं न पश्यति [6] उत्थितो वा उपविष्टम् ॥

अथ [7] राज्ञा [8] प्रसेनजित्कौशल्येन स्वविषये चरपुरुषाः समन्तत उत्सृष्टाः शृणुत जन-प्रवादानिति [9]। यावज्जेतवने [10] द्वौ [10b] मल्लावन्योन्यं संजल्पं कुरुतः । अस्ति केसरी
5 नाम संग्रामः । तत्र ये कातराः [11] पुरुषास्ते संग्रामशिरसि स्थाप्यन्ते ये मध्यास्ते मध्ये ये उ-त्कृष्टाः शूरपुरुषास्ते पृष्ठत [12] इति ॥ ततस्ते राज्ञे इति वेदितवन्तः श्रुत्वा ‹च› [13] राजा प्रसेनजि-

---

1) Ex conject.; MS यथेष्टप्रचारकं. In the Tibetan version the words ཇི་ལྟར་དགྱེས་དགུར་ represent Sanskrit *yatheṣṭa*; the rest of the compound is not separately rendered, as it seems to M. Feer. If, however, the reading of MS should be right, प्रचारक would be somehow synonymous with *iṣṭa*, and *yatheṣṭapravārakam* signify something as 'according to his wish and will'. Yet as in nr. 14 of Açokāvadānamālā, which is a metrical paraphrase of this nr. **10** of Avadānaç., the passage in question runs thus: दैवेतेन सुवर्णेन यथेष्टसप्रचारणां । कृत्वा (Cambr. MS Add. 1482, f. 219 v 7), I conclude, that *pravāraka* indeed represents a miswritten *pracārana* ('acting'). Cp. PW s. v. यथेष्ट.

2) MS मल्हासु.

3) MS °सिः.

4) Ex conject.; MS कृतमत्तोपविष्ट, which, I think, is a depravation of कृतः यत्रोपविष्ट.

5) Visarga wanting in MS.

6) MS उत्तितं and उत्तितो.

7) MS राज्ञा.

8) So MS., cp. *infra* tale **18** (B 18a), and Divy. 149, 1 *rājānaṃ Prasenajit-kauçalam idam avocan.*

9) MS °वादा इति.

10) MS °वन.

11) MS कातर्पः.

12) B पृत (ष्ठ m. s.), which was accepted by the copyists of D and P as to mean पृत changed in पृष्ठ.

13) ‹च› is a good conjectural supplement of D.

त्कौशलस्[1]तथा चतुरङ्गबलकायं [2]संनाह्य हस्तिकायमश्वकायं रथकायं पत्तिकायं च राजानमजातशत्रुमभिनिर्यातो युद्धाय ॥ ततो राज्ञा प्रसेनजिता [3]कौशलेन राज्ञो ऽजातशत्रोर्वैदेहीपुत्रस्य सर्वो हस्तिकायः पर्यस्तो[4] ऽश्वकायो रथकायः पत्तिकायः पर्यस्तो[5] राजानमप्यजातशत्रुं वैदेहीपुत्रं जितं भीतभग्नपराजितं पराप्पृष्ठीकृतं जीवग्राहं गृहीत्वा रथके ऽभिरोप्य[6] येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा एकान्ते निषीदति[7]। एकान्तनिषण्णो राजा प्रसेनजित्कौशलो[8] भगवन्तमित्यवोचत्[9]। अयं हि भदन्त राजा अजातशत्रुर्दीर्घरात्रमवैरस्य[10] मे वैरी [11]असपत्नस्य सपत्नो न चेच्छाम्येनं जीविताद्व्यपरोपयितुं यस्माद्वयस्यपुत्रो ऽयं भवति[12] मुञ्चाम्येनमिति ॥ मुञ्च महाराजेत्युक्त्वा[13] भगवांस्तस्यां वेलायां गाथां भाषते।

जयो वैरं प्रसवति दुःखं शेते पराजितः।
‹उपशान्तः› सुखं शेते हित्वा जयपराजयम्[14] ॥

---

1) B कोश°, D corr.

2) So MS, but *supra* p. 54, 7 and 9 संनह्य, likewise D.

3) B कोश°, D corr.

4) MS पर्य्यस्ताश्व°.

5) MS पत्तिकायपर्य्यस्तो (C, D °स्ता).

6) MS भिरोग्य (in D still more corrupted to भिःराज्य).

7) MS निषीदनेकान्त°.

8) B जित्को°, D corr.

9) Ex conject.; B भगवन्तमिवोवाचत्, D (by conject.) °न्तमिदमवोचत्.

10) In B the akṣara द्री looks as if added by a later hand, P corr. दीर्.

11) I accept here the excellent correction of the editors of the Divy., in the parallel place ib. p. 184, 6; MS असपन्नस्य संपन्नो. Moreover in MS the text is disturbed by dittography; B वैरी असपन्नस्य [मे वैरस्य मे वैरी असंपन्नस्य] संपन्नो, I have bracketed the repetition.

12) B seems to have भवंति, and so read the copyists of C and P; D corr.

13) Ex conject.; MS त्युक्तं.

14) The missing word is easily restored from the corresponding Pāli redaction in Saṁyuttanikāya, Sagāthavaggo III, 2, 4, and Dhp. 201. Cp. SBE, vol. X, p. 53; Feer p. 50. In the Açokāvadānamālā (MS Cambr. Add. 1482, f. 220b 5) the çloka has been a little altered; its 3d and 4th pāda are: सुखं शेते हि सदा गुप्तो हित्वा जयपराजयं, the 3d one is hypermetric.

अथ राज्ञः प्रसेनजितः कौश<ल>स्यैतदभवत् । यन्मया राज्यं[1] प्रतिलब्धं[2] तदस्य श्रेष्ठिनः प्रसादात् । यन्न्वहमेनं वरेण प्रवारयेयमिति ॥ अथ राजा प्रसेनजित्कौशलस्तं श्रेष्ठिनं वरेण प्रवारयति[3] ॥ स कथयति । आकाङ्क्षामि वरं[4] सप्ताहं मे यथाभिरुचितं राज्यमनुप्रयच्छतेति[5] ॥ ततो राज्ञा सर्वविजिते घण्टावघोषणं कारितं । दत्तं मे श्रेष्ठिने सप्ताह-
5 मेकं राज्यमिति ॥ यावत्तेन श्रेष्ठिना बुद्धप्रमुखो भिक्षुसङ्घस्सप्ताहं भक्तेनोपनिमन्त्रितः राज्ञा च प्रसेनजित्सपरिवारः यावन्तश्च काशिकोशलेषु[6] जनकायाः[7] प्रतिवसन्ति तेषां दूतसंप्रेषणं[8] कृतम् । सप्ताहं यूयं* सकला[9]* यथेष्टचारिणः सुखस्पर्शं विहरत[10] *किंचिदागत्य* बुद्धं शरणं गच्छत धर्मं च भिक्षुसङ्घं च मामकञ्च भोजनं भुञ्जानास्तथागतं[11] पर्युपास-

---

1) MS राज्य.

2) MS प्रतिरब्धं.

3) In D after प्रवारयति is added स्म.

4) MS वर.

5) The plural is the respectful one with which a king is addressed by his subject; see my Sanskrit Syntax § 24 and cp. also Jtkm. p. 88, 19—25.

6) MS कौश°.

7) MS ज्ञान°.

8) MS दूतसप्रे°.

9) B सकरा with a sign above the last akṣara, to denote, it seems, its transformation into ला, CD °रा, P °ला. *Sakalāḥ* = *sarve* may afford a fit meaning, but from the Tibetan version ཁྲལ་ཐུད་མད (or མེད)་པར answering more or less to Skṛt *adaṇḍa*, I fain would infer °रा is the right reading, and the genuine words of the author are सप्ताहं यूयमकरा etc., where I accept *akara* as = 'free from taxes'. '*Khral* est rendu par *daṇḍa* dans le Dict. Tib. Sk. et aussi dans Jaeschke qui donne aussi le sens *tax, tribute, duty.* Le sens de *thud* est obscur; *mad-par* doit être une faute pour *med-par* «sine»' (from a private letter of Feer).

10) MS विहरंति (D विहारति) । किञ्चिदागत्य which is wholly meaningless. I have changed विहरंति into विहरत, but am at a loss how to emend किञ्चित्. The context requires some particle like *kiṃ tu.* Perhaps we should read किं चेद्दागत्य. Cp. Açokāv. MS Cambr. 1482, f. 221b.

11) B भुजा°, D corr.

ध्वमिति[1] ॥ तेन सप्ताहं भगवान्सश्रावकसङ्घो महता सत्कारेण सत्कृतः बहूनि च प्राणिशतसहस्राणि कुशले नियोजितानि ॥ सप्ताहस्यात्ययेन भगवतः पादयोर्निपत्य चेत[2]नां पुष्णाति प्रणिधिं <च> चकार । अनेनाहं कुशलमूलेन चित्तोत्पादेन देयधर्मपरित्यागेन चान्धे लोके अनायके अपरिणायके बुद्धो[3] भूयासमतीर्णानां सत्त्वानां तारयिता अमुक्तानां मोचयिता अनाश्वस्तानामाश्वासयिता अपरिनिर्वृतानां परिनिर्वापयितेति ॥

अथ भगवांस्तस्य श्रेष्ठिनो हेतुपरम्परां कर्मपरम्परां च ज्ञात्वा स्मितं प्राविरकार्षीत् । धर्मता खलु यस्मिन्समये बुद्धा भगवन्तः स्मितं प्राविष्कुर्वन्ति तस्मिन्समये नीलपीतलोहितावदाता अर्चिषो मुखान्निश्चार्य काश्चिदधस्ताद्गच्छन्ति काश्चिदुपरिष्टाद्गच्छन्ति । या अधस्ताद्गच्छन्ति ताः संजीवं[4] कालसूत्रं संघातं[5] रौरवं महारौरवं तपनं प्रतापनमवीचिमर्बुदं नि<र>र्बुदमटटं हहवं हुहुवमुत्पलं पद्मं[6] महापद्मं नरकान्गत्वा[7] ये उष्णनरकास्तेषु शीतीभूत्वा निपतन्ति ये शीतनरकास्तेषूष्णीभूत्वा निपतन्ति । तेन तेषां सत्त्वानां कारणाविशेषाः प्रतिप्रस्रभ्यन्ते । तेषामेवं[8] भवति । किं नु वयं भवन्त इतश्च्युता आहो स्विदन्यत्रोपपन्ना इति । तेषां प्रसादसंजननार्थं भगवान्निर्मितं विसर्जयति[9] । तेषां निर्मितं दृष्ट्वैवं भवति । न ह्येव[10] वयं भवन्त इतश्च्युता नाप्य<न्य>[11]त्रोपपन्ना अपि त्वयमपूर्वदर्शनः सत्त्वो ऽस्या-

---

1) Note the transition of the verb *ās* to the thematic flexion, as in epic Sanskrit.

2) MS चेष्टनां. Cp. *supra* p. 32, 6. 37, 13.

3) MS बुद्धभू°.

4) B °जीवका°, D corr.

5) B °घातरौ°, D corr.

6) B पद्ममहा°, D corr.

7) MS नरकं.

8) B षामेव, D corr.

9) B विसज्ज°, P corr.

10) MS न ह्येवं.

11) D adds the akṣara left out in B.

नुभावेनास्माकं कारणाविशेषाः प्रतिप्रस्रब्धा इति । ते[1] निर्मिते चित्तमभिप्रसाद्य तन्नरक-वेदनीयं कर्म क्षपयित्वा देवमनुष्येषु प्रतिसन्धिं गृह्णन्ति यत्र सत्यानां भाजनभूता भवन्ति। या उपरिष्टाद्गच्छन्ति ताश्चातुर्महाराजिकांस्त्रयस्त्रिंशान्यामांस्तुषितान्निर्माणरतीन्परनि-र्मितवशवर्तिनो ब्रह्मकायिकान्ब्रह्मपुरोहितान्महाब्रह्मणः परीत्ताभानप्रमाणाभानाभा-
5 स्वरान्परीत्तशुभानप्रमाणशुभाञ्छुभकृ[2][11 a]त्स्नाननभ्रकान्पुण्यप्रसवान्बृहत्फलानबृहान-तपान्सुदृशान्सुदर्शनानकनिष्ठान्देवान्गत्वा अनित्यं दुःखं शून्यमनात्मेत्युद्घोषयन्ति गाथाद्वयं च भाषन्ते ।

आरभध्वं निष्क्रामत युज्यध्वं बुद्धशासने ।
धुनीत मृत्युनः सैन्यं नडागारमिव कुञ्जरः ॥
10 यो ह्यस्मिन्धर्मविनये अप्रमत्तश्चरिष्यति ।
प्रहाय जातिसंसारं दुःखस्यान्तं करिष्यति ' इति ॥

अथ ता अर्चिषस्त्रिसाहस्रमहासाहस्रं[3] लोकधातुमन्वाहिण्ड्य भगवन्तमेव पृष्ठतः पृष्ठतः समनुगच्छन्ति । तद्यदि भगवानतीतं कर्म व्याकर्तुकामो भवति भगवतः पृष्ठतो ऽन्तर्धीयन्ते । अनागतं व्याकर्तुकामो भवति पुरस्तादन्तर्धीयन्ते । नरकोपपत्तिं व्याकर्तुका-
15 मो भवति पादतले ऽन्तर्धीयन्ते । तिर्यगुपपत्तिं व्याकर्तुकामो भवति पार्ष्ण्यामन्तर्धीयन्ते । प्रेतोपपत्तिं व्याकर्तुकामो भवति पादाङ्गुष्ठे ऽन्तर्धीयन्ते । मनुष्योपपत्तिं व्याकर्तुकामो भव-ति जानुनोर॒न्तर्धीयन्ते । बलचक्रवर्तिराज्यं व्याकर्तुकामो भवति वामे करतले ऽन्तर्धीयन्ते। चक्रवर्तिराज्यं व्याकर्तुकामो भवति दक्षिणे करतले ऽन्तर्धीयन्ते । देवोपपत्तिं व्याकर्तु-कामो भवति नाभ्यामन्तर्धीयन्ते । श्रावकबोधिं व्याकर्तुकामो भवति आस्ये ऽन्तर्धीयन्ते ।
20 प्रत्येकबोधिं व्याकर्तुकामो भवति ऊर्णायामन्तर्धीयन्ते[4] । अनुत्तरां सम्यकसंबोधिं व्याक-र्तुकामो भवति उष्णीषे ऽन्तर्धीयन्ते ॥

---

1) MS तेन निर्मितं.
2) B शुभाच्छु, D corr.
3) Anusvāra wanting in MS.
4) B उ°, D corr.

अथ ता अर्चिषो भगवन्तं त्रिः[(1)] प्रदक्षिणीकृत्य भगवत उष्णीषे ऽन्तर्हिताः[(2)]। अथायुष्मानानन्दः कृतकरपुटो भगवन्तं पप्रच्छ।

नानाविधो रङ्गसहस्रचित्रो वक्त्रान्तरान्निष्कासितः कलापः।

अवभासिता येन दिशः समन्ताद्दिवाकरेणोदयता यथैव ॥

गाथाश्च भाषते। 5

विगतोद्भवा[(3)] दैन्यमदप्रहीणा बुद्धा जगत्युत्तमहेतुभूताः।

नाकारणं शङ्खमृणालगौरं स्मितमुपदर्शयन्ति जिना जितारयः ॥

तत्कालं स्वयमधिगम्य वीर बुद्ध्या

श्रोतॄणां[(4)] श्रमण[(5)] जिनेन्द्र काङ्क्षितानां।

धीराभिर्मुनिवृष वाग्भिरु‹त्तमाभि›[(6)]- 10

रुत्पन्नं व्यपनय संशयं शुभाभिः ॥

नाकस्माल्लवणजला[(7)]द्रिराजधैर्याः

संबुद्धाः[(8)] स्मितमुपदर्शयन्ति नाथाः।

यस्यार्थे स्मितमुपदर्शयन्ति धीराः

तं श्रोतुं समभिलषन्ति ते जनौघा इति ॥ 15

भगवानाह। एवमेतदानन्दैवमेतत्। नाहेत्वप्रत्ययमानन्द तथागता अर्हन्तः सम्यक्संबुद्धाः स्मितं प्राविष्कुर्वन्ति। पश्यसि त्वमानन्दानेन श्रेष्ठिना तथागतस्य सत्कारं कृतम्-

---

1) MS त्रिप्र°.

2) Owing to some blunder of the copyist of A, it seems, MS has उष्णीषत्तधीर्यत्ते. In D this whole sentence has been left out.

3) B विगातोद्भवा, D and P corr.

4) B तृणां, D corr.

5) MS श्रवण.

6) D fills the gap.

7) B लवन°, D and P corr.

8) Visarga wanting in MS.

ङ्गस्यैवंविधं सत्कारं कृतं महाजनकायं च कुशले नियुक्तम् ॥ एवं भदन्त ॥ एषानन्द[1] श्रेष्ठी अनेन कुशलमूलेन चित्तोत्पादेन देयधर्मपरित्यागेन च त्रिकल्पासंख्येयसमुदानीतां बोधिं समुदानीय महाकरुणापरिभाविताः[2] षट् पारमिताः परिपूर्याभयप्रदो नाम सम्यक्संबुद्धो भविष्यति दशभिर्बलैश्चतुर्भिर्वैशारद्यैस्त्रिभिरावेणिकैः स्मृत्युपस्थानैर्महाकरुणाया च ।
5 अयमस्य देयधर्मो यो ममान्तिके चित्तप्रसाद इति ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

1) Sic MS. Cp. *supra* p. 20, n. 6.

2) MS भषिताः.

## द्वितीयो वर्गः

### [1]नाविका इति ११

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपात[2]शयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति नद्या अजिरवत्या अधस्तान्नाविकग्रामे ॥ अथ ते नाविका येन भगवांस्तेनोपसंक्रान्ता[3] उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्ते न्यषीदन्[4] । एकान्तनिषण्णां[5]स्तान्नाविकान्भगवान्धर्म्यया कथया संदर्शयति समादापयति समुत्तेजयति संप्रहर्षयति । अनेकपर्यायेण धर्म्यया कथया संदर्श्य समादाप्य समुत्तेज्य संप्रहर्ष्य तूष्णीम् ॥ अथ ते नाविका उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा येन भग[6]वांस्तेनाञ्जलिं प्रणाम्य भगवन्तमूचुः । अधिवासयतु भगवानस्माकं नद्या

---

1) MS नाविक इति. In MS this *uddāna* of the second varga precedes: उद्दानं नावा (sic) स्तम्भश्च स्नात्रं च तथेति«» प्रातिसरकं [read: प्रातिहार्यकं] । पाञ्चवार्षिकं स्तुतिर्वरदः काशिकं दिव्यभोजनं. The third pāda of this çloka has two syllables too many.

2) MS पात्र. Cp. *supra* p. 13 n. 1.

3) MS क्रान्त.

4) MS षीदत्.

5) MS °षण्णस्ता°.

6) B भगवास्ते°, D corr.

अजिरावत्यास्तीरे श्वो भक्तेन सार्धं भिक्षुसङ्घेन नौसंक्रमे[11b]णोत्ता[1]रयिष्याम इति । अधिवासयति भगवान्नाविका‹नां› तूष्णीभावेन ॥

अथ नाविका नद्या अजिरवत्यास्तीरमप[2]गतपाषाणशर्करकठलं[3] ‹व्य›वस्था‹पया›-मासु[4]रुच्छ्रित[5]च्छत्रध्वजपताकं[6] नानापुष्पावकीर्णं[7] गन्धघटिकाधूपितम् । प्रणीतमाहारं[8] 5 कृतवन्तः प्रभूतञ्च पुष्पसंग्रहं कृत्वा नौसंक्रमं[7] पुष्पमण्डपैरलङ्कारयामासुः । भगवतश्च दूतेन कालमारोचयामासुः । समयो भदन्त सज्जं[9] भक्तं यस्येदानीं भगवान्कालं[9] मन्यत इति ॥ अथ भगवान्भिक्षुगणपरिवृतो भिक्षुसङ्घपुरस्कृतो येन नाविकग्रामकस्तेनोपसं-क्रान्त उपसंक्रम्य पुरस्ताद्भिक्षुसङ्घस्य प्रज्ञप्त एवासने न्यषीदत् ॥ अथ ते नाविकाः[10] सुखो-पनिषण्णं बुद्धप्रमुखं भिक्षुसङ्घं विदित्वा शुचिना प्रणीतेन खादनीयेन भोजनीयेन स्वहस्तं 10 संतर्पयन्ति ‹संप्रवारयन्ति›। अनेकपर्यायेण शुचिना प्रणीतेन खादनीयेन भोजनीयेन स्वहस्तं संतर्प्य संप्रवार्य भगवन्तं भुक्तवन्तं विदित्वा धौतहस्तमपनीत[11]पात्रं नीचतराण्यासनानि गृहीत्वा भगवतः पुरस्तान्निषण्णा धर्मश्रवणाय ॥ अथ भगवांस्तेषां नाविकानामाशयानु-शयं धातुं प्रकृतिञ्च ज्ञात्वा तादृशीं चतुरार्यसत्यसंप्रतिवेधिकीं[9] धर्मदेशनां कृतवान्यां

---

1) MS मेणोत्त°.

2) Ex conject., cp. *infra* B 13a. 18b, and Divy. 45, 10. 155, 23. 441, 13; MS °रमपनयपाषाण°.

3) So B, in P the word is spelt कठल्लं, in D कठल्यं.

4) MS °कठलमस्यामास. I have restored the original reading with the help of the parallel passages mentioned in note 2.

5) B उच्छ्रित°, D corr.

6) MS पताका, but in B the last akṣara is blurred.

7) Anusvāra wanting in MS.

8) Ex conject.; MS धूपितप्रणीतेनाहारं.

9) Anusvāra wanting in MS.

10) MS नाविकासु°.

11) MS पनीयपात्रं नीचतरान्या°.

श्रुत्वानेकैर्नाविकैः [1]स्रोतआपत्तिफलानि प्राप्तानि कैश्चित्सकृदागामिफलानि कैश्चिदनागामिफलानि कैश्चित्प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्वं साक्षात्कृतं कैश्चिच्छ्रावकबोधौ चित्तान्यु[2]त्पादितानि कैश्चित्प्रत्येकबोधौ कैश्चिदनुत्तरायां सम्यक्संबोधौ । सर्वा च सा पर्षद्बुद्धनिम्ना धर्मप्रवणा सङ्घप्राग्भारा व्यवस्थिता ॥ ततस्तैर्नाविकैर्भगवान्महता सत्कारेण नौसंक्रमेणोत्तारितः[3] सार्धं भिक्षुसङ्घेन ॥

भिक्षवो बुद्धपूजादर्शनादावर्जितमनसो बुद्धं भगवन्तं पप्रच्छुः[4] । कुत्रेमानि भगवतः कुशलमूलानि कृतानीति ॥ भगवानाह । तथागतेनैव भिक्षवः [5]पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि[6] येन तथाग[7]तस्यैवंविधा पूजा । इच्छथ भिक्षवः श्रोतुम् ॥ एवं भदन्त ॥ तेन हि भिक्षवः शृणुत साधु च सुष्ठु च मनसि कुरुत भाषिष्ये ॥

भूतपूर्वं भिक्षवोऽतीतेऽध्वनि भागीरथो नाम सम्यक्संबुद्धो लोक [8]उदपादि तथागतोऽर्हन्सम्यक्संबुद्धो विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां[9] बुद्धो भगवान् । स द्वाषष्ट्यर्हत्सहस्रपरिवृतो जनपदचारिकां चरन्गङ्गातीरमनुप्राप्तः ॥ तस्मिन्समयेऽन्यतरः सार्थवाहोऽनेकशतपरिवारो नद्यां गङ्गायां सार्थमुत्तारयति तस्मिंश्च[10] प्रदेशे महत्तस्करभयम् ॥ अथ ददर्श सार्थवाहो भागीरथं सम्यक्संबुद्धं द्वाषष्ट्यर्हत्सहस्रपरिवृतं दृष्ट्वा च पुनः चित्तं प्रसादयामास प्रसन्नचित्तश्च

1) Here, and often elsewhere श्रोत° is found in MS.
2) Ex conject.; B चित्तानु°, DP चित्तनु°.
3) MS रिता.
4) MS पप्रच्छ.
5) B पूव°, DP corr.
6) B श्यभागीनि (C °गिनी, P °गानि, D स्यभाविनी).
7) Ex conject.; MS तथागततास्यै°.
8) MS उत्पादिततथा° (D °दितस्तथा°); cp. *infra* p. 69, 5.
9) D changes this dvandva very often into देवानां च मनुष्याणां च.
10) B तस्मिश्च (D °स्मिं च).

भगवन्तमामन्त्रितवान् । तत्प्रथमतरमेव भगवन्तं तारयिष्यामीति[1] ॥ अधिवासयति भागीरथः सम्यक्संबुद्धः सार्थवाहस्य तूष्णीभावेन ॥ ततस्तेन सार्थवाहेन भागीरथः[2] सम्यक्संबुद्धो द्वाषष्ट्यर्हत्सहस्रपरिवृतो[3] महत्या विभूत्या नौसंक्रमेणोत्तारितः प्रणीतेन चाहारेण संतर्प्यानुत्तरायां सम्यक्संबोधौ प्रणिधानं कृतम् ॥

भगवानाह । किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन सार्थवाहो बभूवाहं सः । मया स भागीरथः सम्यक्संबुद्धो द्वाषष्ट्यर्हत्सहस्रपरिवृतो नौसंक्रमेणोत्तारितः प्रणीतेनाहारेण संतर्पितः प्रणिधानं च कृतम् । तस्य मे कर्मणो विपाकेनानन्तसंसारे[4] महत्सुखमनुभूतमिदानीमप्यनुत्तरां[5] सम्यक्संबोधिमभिसंबुद्धस्यैवंविधा[6] पूजा । तस्मात्तर्हि भिक्षव एवं शिक्षितव्यं यच्छास्तारं सत्करिष्यामो गुरुकरिष्यामो मानयिष्यामः पूजयिष्यामः शास्तारं सत्कृत्य गुरुकृत्य मानयित्वा पूजयित्वोपनिश्रित्य विहरिष्याम इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

1) B भगवंतार°, the akṣara तं being omitted, but it has been added at the bottom of the page, which correction, however, was overlooked by the copyists of C and P; as D is here very full of gaps, the whole passage from दृष्ट्वा च (p. 65, 16) to तस्य मे (p. 66, 7) is wanting.

2) MS रथस°.

3) MS °ष्ट्यहत्स°.

4) MS नन्तंसंसारे.

5) MS नुत्तरायां.

6) MS द्धस्येवं°.

## स्तम्भ इति १२

बुद्धो [12a] भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किंनरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपात[1]शयनासनग्लानप्रत्ययभैषज्यपरिष्कारणां सश्रावकसङ्घः कौरव्येषु जनपदचारिकां चरन्कौरव्यं नगरमनुप्राप्तः। स च कौरव्यो जनकायो बुद्धवैनेय उदारचित्तः प्रदानरुचिश्च॥ [2]ततो भगवत एतदभवत्। यन्न्वहं शक्रं देवेन्द्रं मरुद्गणपरिवृतमाह्वयेयं यद्दर्शनादेषां कुशलमूलविवृद्धिः स्यादिति। ततो भगवांल्लौकिकं चित्तमुत्पादयति। अहो[3] बत शक्रो देवेन्द्रो मरुद्गणसहायो गोशीर्षच[4]न्दनमयं स्तम्भमादाय गच्छेदिति॥ सहचित्तोत्पादाच्छक्रो देवेन्द्रो मरुद्गणपरिवृत आगतो[5] *यत्र* विश्वकर्मा चत्वारश्च महाराजा अनेकदेवनागयक्ष[6]कुम्भाण्डपरिवृता गोशीर्षचन्दनस्तम्भमादाय। हाहाकारकिलकिलाप्रक्ष्वेडोच्चैर्नादं कुर्वाणा भग-

---

1) MS पात्र°.

2) In the parallel story nr. 12 of Kalpadrumāvadānamālā the *laukikaṃ cittam* of the Lord is accounted for by his considering the slanderous tales spread about himself by the Tīrthikas, and it is in order to confound them that he requires the assistance of Çakra. See K. f. 94a—95b 8.

3) Ex conject.; cp. *infra* p. 73, 4; MS चित्तमुत्पादयन्होत्रत (D °यत्तोवतः).

4) MS शीर्षचंद.

5) B आगतो(or तौ, the reading being uncertain)यमत्रविश्व°; the akṣaras यमत्र are manifestly corrupted, D leaves out the म. I have put यत्र, the reading of D, into the text, because the Tibetan has གང་ན་, answering to that Sanskrit adverb, yet I doubt the exactness of the correction; *yatra* is to be understood = «among whom».

6) B त्ता, D corr.

वतो ऽर्थे गोशीर्षचन्दनमयं प्रासादमभिसंस्कृतवन्तः ॥ ततस्तस्मिन्प्रासादे शक्रेण देवेन्द्रेण भगवान्सश्रावकसङ्घो[1] दिव्येनाहारेण दिव्येन शयनासनेन दिव्यैर्गन्धमाल्यपुष्पैः सत्कृतो गुरुकृतो मानितः पूजितः ॥

[2] अथ कौरव्यो जनकायस्तां दिव्यां विभूषिकां[3] दृष्ट्वा परं विस्मयमापन्न इमां चिन्ता-
5 मापेदे । नूनं बुद्धो भगवांल्लोके ऽग्र्यो *यत्तु*[5] नाम सेन्द्रैर्देवैः पूज्यत इत्यावर्जितमना भगवन्तमुपसंक्रान्तः[6] । भगवतः पादाभिवन्दनं[7] कृत्वैकान्ते न्यषीदत्[8] । एकान्तनिषण्णः[9] कौरव्यो जनकायस्तस्मिन्प्रासादे ऽत्यर्थं प्रसादमुत्पादयति ॥

ततो भगवांस्तत्प्रासादमन्तर्धाप्य[10] अनित्यताप्रतिसंयुक्तां[11] तादृशीं धर्मदेशनां कृतवान्यां श्रुत्वानेकैः कौरव्यनिवासिभिर्मनुष्यैः स्रोतआपत्तिफलान्यनुप्राप्तानि कैश्चित्सकृदागा-
10 मिफलानि कैश्चिदनागामिफलानि कैश्चित्प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतं कैश्चिच्छ्रावकबोधौ चित्तान्युत्पादितानि[12] कैश्चित्प्रत्येकायां बोधौ कैश्चिदनुत्तरायां सम्यक्संबोधौ । सर्वा च सा पर्षद्बुद्धनिम्ना धर्मप्रवणा सङ्घप्राग्भारा व्यवस्थापिता[13] ॥

ततस्ते भिक्षवो भगवतो[14] दिव्यपूजादर्शनादावर्जितमनसो बुद्धं भगवन्तं पप्रच्छुः ।

---

1) MS संघा.

2) MS connect पूजितो ऽथ.

3) Ex conject. — *vibhūṣikā* stands to *vibhūṣā* as *vibhīṣikā* to *vibhīṣā* —; MS विभूषितान्दृष्ट्वा.

4) Anusvāra wanting in MS.

5) Sic B, as it seems, CDP यत्तु. One would rather expect यो हि.

6) MS क्रान्ताः.

7) MS पादावभिवन्दनं.

8) B षीदन्, D corr.

9) MS षणाः or षष्णाः.

10) Neuter instead of masc., cp. *supra* p. 29, n. 9.

11) B प्रतिप्रतिसंयु°, D corr.

12) MS चित्तानुत्पा°, cp. *supra* p. 65, n. 2.

13) D and P have changed this into व्यवस्थिता, cp. *supra* p. 65, 4.

14) MS भगवते.

कुत्रेमानि भगवता कुशलमूलानि कृतानीति ॥ भगवानाह ॥ तथागतेनैव भिक्षवः पूर्वमन्यासु जातिषु <कर्माणि> कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि[1] येन तथागतस्यैवंविधा पूजा । इच्छथ भिक्षवः श्रोतुम् ॥ एवं भदन्त ॥ तेन हि भिक्षवः शृणुत साधु च सुष्ठु च मनसि कुरुत भाषिष्ये ॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि ब्रह्मा नाम सम्यक्संबुद्धो लोक उदपादि[2] तथागतो ऽर्हन्सम्यक्संबुद्धो विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान् । अथ ब्रह्मा सम्यक्संबुद्धो द्वाषष्ट्यर्हत्सहस्रपरिवृतो जनपदचारिकां चरन्नन्यतमां राजधानीमनुप्राप्तः ॥ अश्रौषीद्राजा[3] क्षत्रियो मूर्ध्नाभिषिक्तो[4] ब्रह्मा सम्यक्संबुद्धो द्वाषष्ट्यर्हत्सहस्रपरिवृतो जनपदचारिकां चरन्नस्माकं विजितमनुप्राप्त इति । श्रुत्वा च पुनर्महत्या राजर्द्ध्या महता राजानुभावेन येन भगवान्ब्रह्मा सम्यक्संबुद्धस्तेनोपसंक्रान्त उपसंक्रम्य ब्रह्मणः सम्यक्संबुद्धस्य पादौ शिरसा वन्दित्वैकान्ते न्यषीदत् । एकान्तनिषण्णं राजानं क्षत्रियं मूर्ध्नाभिषिक्तं भगवान्बोधिकरकैर्धर्मैः समादापयति ॥ अथ स राजा लब्धप्रसाद[5] उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमिदमवोचत् । अधिवासयतु मे भगवानस्यां राजधान्यां त्रैमास्यवासायाहं भगवन्तं सश्रावकसङ्घमुपस्थास्यामि चीवरपिण्डपात[6]शयनासनग्लानप्रत्ययभैषज्यपरिष्कारैरिति ॥ अधिवासयति ब्रह्मा सम्यक्संबुद्धो राज्ञ[12b]स्तूष्णीभावेन ॥ अथ स राजा मूर्ध्नाभिषिक्तो भगवतो ऽर्थे गोशीर्षचन्दनमयं प्रासादं कारयामास । स तं विचित्रैर्वस्त्रालङ्कारै[7]रलङ्कृतं

---

1) BCP भागीनि, D भाविनी.

2) MS उत्पादि (D उत्पादित).

3) MS अश्रो°, as usual.

4) So this word is always written in MS.

5) B प्रसाह, D corr.

6) MS पात्र.

7) MS लङ्कालैर°. Cp. *supra* p. 53 n. 3, p. 55 n. 6.

नानापुष्पावकीर्णं गन्धघटिकाधूपितं[1] भगवतः सश्रावकसङ्घस्य निर्यात्य त्रैमास्यं प्रणीते-नाहारेण संतर्प्य विविधैर्वस्त्रविशेषैराच्छाद्यानुत्तरायां सम्यक्संबोधौ प्रणिधिं चकार ॥

भगवानाह । किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन राजा क्षत्रियो मूर्धाभिषिक्तो बभूवाहं सः । यन्मया ब्रह्मणः सम्यक्संबुद्धस्यैवंविधा पूजा कृता तस्य मे 5 कर्मणो विपाकेनानन्तसंसारे महत्सुखमनुभूतमिदानीमप्यनुत्तरां सम्यक्संबोधिमभिसंबु-द्धस्यैवंविधा[2] पूजा । तस्मात्तर्हि भिक्षव एवं शिक्षितव्यं यच्छास्तारं सत्करिष्यामो गुरु-करिष्यामो मानयिष्यामः पूजयिष्यामः शास्तारं सत्कृत्य गुरुकृत्य मानयित्वा पूजयित्वोप-निश्रित्य विहरिष्याम इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

1) MS पिता.

2) B द्धस्सैवं, D, P corr.

# स्नात्रमिति[1] १३

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो[2] बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां[3] सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्डदस्यारामे ॥ तेन खलु समयेन *श्रावस्त्यां*[4] पञ्चमात्राणि वणिक्शतानि[5] कान्तारमार्गप्रतिपन्नानि । ते मार्गात्परिभ्रष्टा वालुकास्थलमनुप्राप्ताः । ते घर्मश्रमपरिपीडिताः क्षीणपथ्यदनाश्च[6] मध्याह्नसमये तीक्ष्णाकररश्मिसंतापिता[7] जलोद्धृता[8] इव मत्स्याः पृथिव्यामावर्तन्ते दुःखां तीव्रां खरां कटुकाममनापां वेदनां वेदयमानास्तानि देवतासहस्राण्यायाचन्ते तद्यथा शिववरुणकुबेरवासवादीनि । न चैनान्कश्चित्परित्रातुं समर्थः[9] ॥

---

1) MS स्नात्त (D स्नात्त) इति; *snātra* in Buddhistic Sanskrit = *snāna*. It also occurs in the Pārçvanāthakāvya, see PWK, VII, 218.

2) B महोरगैभ्य°, D corr.

3) MS पात्र.

4) As the merchants are on the way home, the loc. श्रावस्त्यां can hardly be correct. Some derivative, meaning 'citizens of Çrāvasti' like श्रावस्तेयानां, should be expected.

5) MS वणिच्छतानि, which may perhaps be defended as a phonetical orthography.

6) Ex conject.; B seems to have षथादनाश्च, CP पथा°, D पथा°. Cp. *pathyaçana* PW, V, 1576. The parallel place in R has पथ्यादन, cp. the following note.

7) Ex conject.; MS तीक्ष्णाकर° (C °कार°). R, f. 13b 7 runs thus: भानोस्तीक्ष्णाकरैस्तप्ता घर्मातापातिखेदिताः । क्षीणपथ्यादनाश्चापि etc.

8) B जनोद्धृ°, D corr. Cp. *supra*, p. 42, n. 3.

9) MS समर्थास्तत्र.

तत्र चान्यतर उपासको[1] बुद्धशासनाभिज्ञः । स तान्वणिज आह । भवन्तो बुद्धं शरणं गच्छन्त्विति ॥ तत एकरवेण सर्व एव बुद्धं[2] शरणं गताः ॥

अत्रान्तरे नास्ति किंचिद्बुद्धानां भगवतामज्ञातमदृष्टमविदितमविज्ञातम् । धर्मता खलु बुद्धानां भगवतां महाकारुणिकानां लोकानुग्रहप्रवृत्तानामेकारक्षाणां शमथविपश्यनाविहारिणां त्रिदमथवस्तुकुशलानां चतुरोघोत्तीर्णानां चतुर्ऋद्धिपादचरणतलप्रति-ष्ठितानां[3] चतुर्षु संग्रहवस्तुषु दीर्घरात्रकृतपरिचयानां पञ्चाङ्गविप्रहीणानां पञ्चगतिसमतिक्रान्तानां षडङ्गसमन्वागतानां षट्पारमितापरिपूर्णानां सप्तबोध्यङ्गकुसुमाढ्यानामष्टाङ्गमार्गदेशिकानां नवानुपूर्वसमापत्तिकुशलानां[4] दश<बल>बलिनां दशदिक्समापूर्णयशसां दशशतवशवर्तिप्रतिविशिष्टानां त्री रात्रेस्त्रिर्दिवसस्य[5] बुद्धचक्षुषा लोकं व्यवलोक्य ज्ञानदर्शनं प्रवर्तते । को हीयते को वर्धते कः कृच्छ्रप्राप्तः कः संकटप्राप्तः कः संबाधप्राप्तः <कः> कृच्छ्रसंकटसंबाधप्राप्तः को ऽपायनिम्नः[6] को ऽपायप्रवणः को ऽपायप्राग्भारः कमहमपायादुद्धृत्य स्वर्गे मोक्षे च[7] प्रतिष्ठापयेयं कस्य कामपङ्कनिमग्नस्य हस्तोद्धारमनुप्रदद्यां कमार्यधनविरहितमार्यधनैश्वर्याधिपत्ये[8] प्रतिष्ठापयेयं कस्यानवरोपितानि कुशलमूलान्यवरोपयेयं कस्यावरोपितानि परिपाचयेयं कस्य परिपक्वानि विमोचयेयम् ।

आह च ।

अप्येवातिक्रमेद्वेलां सागरो मकरालयः ।
न तु वैनेयवत्सानां बुद्धो वेलामतिक्रमेत् ॥

---

1) Ex conject., cp. *infra* p. 78, 8; MS चान्यतरोपायको.

2) B वुद्धश°, D corr.

3) MS चरऋद्धि (D चतुऋद्धि).

4) D adds विहार before समापत्ति, cp. *supra* p. 16, 14 and p. 30, 12.

5) MS त्रि रात्रेः [ः wanting in D] त्रि दिव°.

6) B °निमग्नः, P corr. The same depravation in tale **6**, *supra* p. 31, 1.

7) B पति°, corrected in the copies.

8) B धनेश्व°, D corr.

यावत्पश्यति भगवान्संवक्कलान्[1] वणिजो व्यसनसंकटसंबाधप्राप्तान् ॥ ततश्चक्षुःसंप्रे-[2]षणमात्रेण जेतवने ऽन्तर्हितो भिक्षुगणपरिवृतस्तं प्रदेशमनुप्राप्तः ॥ ददृशुस्ते वणिजो भगवन्तं सभिक्षुसङ्घं दृष्ट्वा <च> उच्चैर्नादं मुक्तवन्तः ॥ ततो भगवता लौकिकं चित्तमुत्पादितम्। अहो बत शक्रो देवेन्द्रो माहेन्द्रं वर्षमुत्सृजतु शीतलाश्च वायवो वान्त्विति । सहचित्तोत्पादाद्भगवतः शक्रेण माहेन्द्रं वर्षमुत्सृष्टं[3] शीतलाश्च वायवः प्रेषिता यत[13 a]स्ते<षां> 5 वणिजां[4] तृषा विगता दाहश्च प्रशान्तः[5] ॥ ततस्तैर्वणिग्भिः[6] संज्ञा प्रतिलब्धा भगवता चैषां मार्ग आख्यातो येन श्रावस्तीमनुप्राप्ताः[7] ॥

ते मार्गश्रमं प्रतिविनोद्य ततो <भग>वत्सकाशमुपसंक्रान्ताः[8] । तेषां भगवता तादृशी[9] चतुरार्यसत्य<सं>प्रतिवेधिकी धर्मदेशना कृता यां श्रुत्वा कैश्चित्स्रोतआपत्तिफलमधिगतं कैश्चित्सकृदागामिफलं कैश्चिदनागामिफलं कैश्चित्प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्त्वं 10 साक्षात्कृतं कैश्चिच्छ्रावकबोधौ चित्तान्युत्पादितानि कैश्चित्प्रत्येकायां बोधौ कैश्चिदनुत्तरायां सम्यक्संबोधौ । यद्भूयसा <च> सा पर्षद्बुद्धनिम्ना धर्मप्रवणा सङ्घप्राग्भारा व्यवस्थिता ॥

भिक्षवः संशयजातास्सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः । आश्चर्यं भगवन्यावदिमे

---

1) Ex conject., cp. Jtkm. 98, 10. 203, 15; B सम्वह्लानां वणिजो (D संवक्क°, P सवक्क°).

2) As to the turn *cakṣuḥsampreṣaṇa*, cp. Divy. 369, 26 and *caksur dadāti* ,he casts his eye'. The copyist of D has changed the traditional reading into चक्षुःसंप्रेक्षण°.

3) B ष्ट, in D changed into ष्य.

4) Ex conject.; MS ते वणिजा.

5) Ex conject.; MS दाहाश्च प्रशान्ताः. But Vic. f. 96b 5 has the right reading.

6) MS ते वणिग्भिः.

7) MS प्राप्तः.

8) Ex conject., cp. Feer 62, 1; MS ततो मत्सका°, likewise Vic. f. 96b 6. Or should मत्, indeed, have been written by the author somewhat negligently?

9) MS शीं.

वणिजो भगवता कान्तारमार्गात्परित्राताः[1] [2] सहचित्तोत्पादाच्च माहेन्द्रवर्षं वृष्टं[3] शीतलाश्च
वायवः प्रवाता इति ॥ भगवानाह । तथागतेनैव भिक्षवः पूर्वमन्यासु जातिषु कर्माणि
कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि ।
मयैतानि[4] कर्माणि कृतान्युपचितानि को ऽन्यः[5] प्रत्यनुभविष्यति । न भिक्षवः कर्माणि
5 कृतान्युपचितानि बाह्ये[6] पृथिवीधातौ विपच्यन्ते[7] नाब्धातौ[8] न तेजोधातौ न वायु-
धातावपि तूपात्तेष्वेव[9] स्कन्धधात्वायतनेषु[10] कर्माणि कृतानि विपच्यन्ते[11] शुभान्यशुभानि च ।

न प्रणश्यन्ति[12] कर्माणि[13] अपि ‹कल्प›शतैरपि ।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि चन्दनो नाम सम्यकसंबुद्धो लोक उदपादि तथागतो
10 ऽर्हन्सम्यकसंबुद्धो विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता

---

1) MS कान्तारामा°.

2) MS त्रातः.

3) B वर्ष वृष्ट, in D this is depraved into वर्षमुत्सृज्य.

4) MS ममै°.

5) MS कोन्यप्र°.

6) MS वाह्ये (D वाह्ये).

7) MS विपर्यन्ते. Vic. f. 96b 9 has the right reading.

8) B नाब्धाधौ and so often in this commonplace, D corr.

9) I adopted the evident correction of Cowell and Neil, see their edition of Divy., p. 54, 6 with note, and cp. ibid. 131, 13. 141, 11. 191, 16. 311, 20. 504, 21. 582, 2. 584, 18. — MS has here वायुधातौवपितुयात्तेष्वेव, which in D is partly corrected to °तूपात्तेषेव.

10) BC °धात्याय°, DP °धातौय°. In B त्या has been made out of former तौ.

11) MS विपर्यन्ते.

12) MS प्रणस्य°, as usual.

13) MS कर्माण्यपि शतैरपि, D adds कल्प. The pāda *b*, as I constitute it, is found so in MS in other places, where this *cliché* recurs. Yet, it cannot be the original form, because the repeated *api* is quite out of place here. The variant *kalpakoṭiçatair api*, which is found in most places of the Divy., quoted above note 9, will do better. Cp. *infra*, p. 80, 13.

देवमनुष्याणां बुद्धो भगवान् । अथ चन्दनः सम्यक्संबुद्धो जनपदचारिकां चरन्नन्यतमां
राजधानीमनुप्राप्तः ॥ अथ राजा क्षत्रियो मूर्धाभिषिक्तो येन चन्दनः सम्यक्संबुद्धस्तेनोपसं-
क्रान्तः । उपसंक्रम्य चन्दनस्य सम्यक्संबुद्धस्य पादौ शिरसा वन्दित्वैकान्ते न्यषीदत् ।
एकान्ते निषण्णं राजानं क्षत्रियं मूर्धाभिषिक्तं चन्दनः सम्यक्संबुद्धो बोधिकरकैर्धर्मैः[1] समा-
दापयति । अथ राजा क्षत्रियो मूर्धाभिषिक्त उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा दक्षिणं 5
जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन चन्दनः सम्यक्संबुद्धस्तेनाञ्जलिं प्रणम्य चन्दनं
सम्यक्संबुद्धमिदमवोचत् । अधिवासयतु मे भगवानस्यां राजधान्यां त्रैमास्यवासाय[2] सार्धं
भिक्षुसङ्घेनेति । अधिवासयति चन्दनः सम्यक्संबुद्धो राज्ञस्तूष्णीभावेन ॥ तत्र च समये
महती अनावृष्टिः[3] प्रादुर्भूता यया नद्युदपानान्यल्पसलिलानि[4] संवृत्तानि पुष्पफलवियु-
क्ताश्च पादपाः ॥ ततो राजा चन्दनं सम्यक्संबुद्धमध्येषितुं प्रवृत्तः । भगवन्नस्मिन्नगर- 10
मध्ये[5] पुष्किरिणीं[6] गन्धोदकपरिपूर्णां कारयिष्यामि यत्र भगवान्सश्रावकसङ्घः स्नास्यति[7] ।
अप्येव[8] नाम भगवतः स्नानादस्मिन्मे[9] विजिते देवो वर्षेदिति[10] । अधिवासयति भगवां-
श्चन्दनः सम्यक्संबुद्धो राज्ञस्तूष्णीभावेन ॥

ततो राज्ञा क्षत्रियेण मूर्धाभिषिक्तेनामात्येभ्य आज्ञा दत्ता गन्धोदकं सज्जीकुर्वन्तु

---

1) MS करकैर्धार्मैः.

2) Ex conject., cp. *supra* p. 69, 14; MS त्रैमास्यं वा°.

3) MS अनावृष्टीः (C °वृष्टी).

4) MS दपानानल्प°.

5) Ex conject.; MS भगवन्तस्मिन्नरारमध्ये, in D the akṣ. रा is put twice. Vic f. 96 a 4 °स्मिन्नाराममध्ये.

6) Anusvāra wanting in MS. *Puṣkiriṇī* is the constant orthography of this word in all my mss.

7) Ex conject.; MS स्थास्यत्यप्ये°.

8) Ex conject.; MS प्येवं.

9) Ex conject.; MS स्थानादस्मिन्ये.

10) MS वर्षत् इत्यधि° (D वर्षदित्यधि°).

भवन्तो[1] रत्नमयांश्च[2] कुम्भान्ये‹न›[3] वयं भगवन्तं सश्रावकसङ्घं स्नापयिष्याम इति ॥ ततो राज्ञा अमात्यगणपरिवृतेन[4] तन्नगरमपगतपाषाणशर्करकठल्लं[5] व्यवस्थापितमुच्छ्रितध्वजपताकं नानापुष्पावकीर्णं[6] गन्धोदकपरिषिक्तं विचित्रधूपधूपितं पुष्करिणी चास्य[7] कारिता ॥ ततो भगवांश्चन्दनः सम्यक्संबुद्धः सर्वानुग्रहार्थमेकचीवरकः[8] पुष्करिण्यां
5 स्थितः। ततो राज्ञामात्यगणपरिवृतेन चन्दनः सम्यक्संबुद्धः सश्रावकसङ्घो नानागन्धपरिभावितेनोदकेन स्नापितः । सहस्नानादेव चन्दनस्य सम्यक्संबुद्धस्य शक्रेण देवेन्द्रेण तथाविधं माहेन्द्रं वर्षमुत्सृष्टं येन सर्वसस्यानि निष्पन्नानि तद्वैतुकञ्च[9] महाजनकायेन बुद्धे भगवति श्रद्धा प्रतिलब्धा अनेके च गन्धस्तूपाः[10] प्रतिष्ठापिताः। ये च तत्र चन्दनं सम्यक्संबुद्धं शरणं[11] गताः ‹स›र्वे ते[12] परिनिर्वृता[13] अहमेकस्तेषामवशिष्टः[14]। तस्मात्तर्हि भिक्षव

---

1) MS भगवन्तो.

2) Anusvāra wanting in MS.

3) MS कुम्भानये.

4) B वृत्तेन, D corr.

5) MS here कंठल्लं. For the rest, see *supra*, p. 64, n. 3 and cp. Divy. 460, 16 with ibid. 45, 10 and 155, 24.

6) Anusvāra wanting in MS.

7) MS विचित्रधूपधूपितं चास्य पुष्करिणी कारिता. I have changed the order of words, as it is likely, चास्य has been put by copyists in a wrong place.

8) I accept the conjecture of Feer (p. 63, n. 2), cp. also the opening words of the 8th act of the Mṛcchakaṭī; MS मेकविवरकपुष्क°.

9) Ex conject.; MS तद्धेतु°. I have changed *e* into *ai*, because the vṛddhi-vowel is here required by the constant use of the language. Cp. PW s. v. हैतुक, Bhagavadgitā 16, 8 कामहैतुक, ibid. 18, 22 अहैतुका. In this kind of form the tradition of our text has sometimes retained the good reading (e. g. *infra*, p. 82, 9), sometimes it has *e* instead of *ai*.

10) Ex conject.; MS स्तूपे प्रतिष्ठापिता.

11) Anusvāra wanting in MS.

12) Ex conject.; MS गताःष्ठते (still more depraved in D °तिष्ठते).

13) MS परिवृता.

14) For the correction of the faults in the tradition of MS, I have made use of the parallel passage of R (f. 24 a 6): ये गताः शरणं तत्र ते सर्वे निर्वृतिं ययुः। अहमेवावशिष्टः स तेषां यो ऽभून्नराधिपः.

एवं शिक्षितव्यं यच्छा[13b]स्तारं सत्करिष्यामो गुरुकरिष्यामो मानयिष्यामः पूजयिष्यामः[1] शास्तारं सत्कृत्य गुरुकृत्य मानयित्वा पूजयित्वोपनिश्रित्य विहरिष्याम इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

1) MS मानकरिष्यामः पूजकरिष्यामः. Vic. f. 97 a 10 has the true reading.

# ईतिरिति १४

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपात[1]शयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घो राजगृहमुपनिश्रित्य विहरति वेणुवने कलन्दकनिवापे ॥ तस्मिंश्च समये नाडकन्थायां महाजनमरको बभूव । ततो जनकायो रोगैः पीडितस्तानि तानि देवतासहस्राण्यायाचते शिववरुणकुबेरवासवादीनि न चास्य सा ईतिरुपशमं गच्छति ॥ अथान्यतम उपासको नाडकन्थायां प्रतिवसति । स नाडकन्थेयान्ब्राह्मणगृहपती[2]निदमवोचत् । एत यूयं बुद्धं[3] शरणं गच्छत तञ्च भगवन्तमायाचध्वमिहागमनायाप्येवं[4] भगवता स्वल्प[5]कृच्छ्रेणास्या ईतेर्व्युपशमः[6] स्यादिति ॥ अथ नाडकन्थेया ब्राह्मणगृहपतयो भगवन्तमायाचितुं प्रवृत्ताः । आगच्छतु भगवानस्माद्व्यसनसंकटान्मोच<ना>येति ॥

अत्रान्तरे नास्ति किंचिद्बुद्धानां भगवतामज्ञातमदृष्टमविदितमविज्ञातम् । धर्मता खलु बुद्धानां भगवतां महाकारुणिकानां लोकानुग्रहप्रवृत्तानामेकारक्षाणां शमथविप-

---

1) MS पात्र.

2) B प्रतीनि°, D and P पतिमि°.

3) B बुद्ध, D corr.

4) B seems to have °प्येवं, C °प्येत, D °प्यथ; P has the right reading.

5) Ex conject.; MS मल्प°.

6) MS ईतेर्न्युप°.

श्यना[1]विहारिणां त्रिदमथवस्तुकुशलानां चतुरोघोत्तीर्णानां चतुर्ऋद्धि[2]पादचरणतलसुप्रति-
ष्ठितानां चतुर्षु संग्रहवस्तुषु दीर्घरात्रकृतपरिचयानां पञ्चाङ्गविप्रहीणानां पञ्चगतिसम-
तिक्रान्तानां षडङ्गसमन्वागतानां षट्पारमितापरिपूर्णानां सप्तबोध्यङ्गकुसुमाढ्यानामष्टा-
ङ्गमार्गदेशिकानां नवानुपूर्वसमापत्तिकुशलानां दशबलबलिनां दशदिक्समापूर्णयशसां
दशशतवशवर्तिप्रतिवि<शि>ष्टानां[3] त्री रात्रेस्त्रिर्दिवसस्य[4] बुद्धचक्षुषा लोकं व्यवलोक्य ज्ञा- 5
नदर्शनं प्रवर्तते। को हीयते को वर्धते कः कृच्छ्रप्राप्तः कः संकटप्राप्तः कः संबाधप्राप्तः <कः>
कृच्छ्रसंकटसंबाधप्राप्तः कोऽपायनिम्नः कोऽपायप्रवणः कोऽपायप्राग्भारः कमहमपाया-
दुद्धृत्य स्वर्गे मोक्षे च प्रतिष्ठापयेयं कस्य कामपङ्कनिमग्नस्य हस्तोद्धारमनुप्रदद्यां कमार्य-
धनविरहितमार्यधनैश्वर्याधिपत्ये प्रतिष्ठापयेयं कस्यानवरोपितानि कुशलमूलान्यवरोप-
येयं कस्यावरोपितानि परिपाचयेयं कस्य परिपक्वानि विमोचयेयम्। आह च। 10

अप्येवातिक्रमेद्वेलां सागरो मकरालयः[5]।
न तु वैनेयवत्सानां बुद्धो वेलामतिक्रमेत्॥

अथ भगवान्पूर्वाह्णे निवास्य पात्रचीवरमादाय भिक्षुगणपरिवृतो भिक्षुसङ्घपुरस्कृतो
नाडकन्यामनुप्राप्तः। ततो भगवता तन्नगरं सर्वं हृदिमैत्र्या[6] स्फुटं यतो मरकाः[7] प्रक्रान्ताः
ईति<श्च> व्युपशान्ता। ततस्तेषां ब्राह्मणगृहपतीनां बुद्धदर्शनान्महाप्रसाद उत्पन्नः[8] प्रसा- 15

---

1) MS प्यनां.

2) MS चतुर्ऋद्धि.

3) B प्रतिविष्ठानां, D corr.

4) MS त्रिःरात्रेःत्रिदिव° (C °रात्रेःदिव°, D त्रिरात्रत्रिदिव°).

5) MS मकलालयः.

6) As to the use of *hṛdi* instead of *hṛd* see PW VII, s. v. and Mahāvastu, I, 99, 4.

7) Ex conject.; MS मनुष्याः. In R the expulsion of the *mārikās* — so the evil spirits who caused the epidemic are called there — with their wives and children by dint of a dhāraṇī pronounced by the Buddha is related in full on ff. 125b and 126a.

8) B उत्पन्नप्र°, D corr.

दत्तैश्च भगवान्सश्रावक(सं)सङ्घः[1] चीवरपिण्डपात[2]शयनासनग्लानप्रत्ययभैषज्यपरिष्कारैः सं-
प्रवारितः । ततस्तेभ्यो भगवता तादृशी चतुरार्यसत्यसंप्रतिवेधिकी धर्मदेशना[3] कृता यां
श्रुत्वानेकैर्ब्राह्मणगृहपतिभिः स्रोतआपत्ति[4]फलमनुप्राप्तमपरैः सकृदागामिफलमपरैरनागा-
मिफलमपरैः प्रव्रज्य[5] सर्वक्लेशप्रहाणादर्हत्वं साक्षात्कृतं सर्वं च तन्नगरं बुद्धनिम्नं धर्मप्र-
5 वणं सङ्घप्राग्भारं संवृत्तम् ॥

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः[6] । आश्चर्यं भदन्त या-
वदिमे सत्त्वा भगवतः प्रसादाद्व्यसनगताः सन्तो व्यसनात्परिमुक्ता इति ॥ भगवानाह ।
तथागतेनैवैतानि भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्ध[14a]-
संभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि[7] । मयैव तानि कर्माणि
10 कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति । न भिक्षवः कर्माणि कृतान्युपचितानि
बाह्ये[8] पृथिवीधातौ विपच्यन्ते नाब्धातौ न तेजोधातौ न वायुधातावपि तूपात्तेष्वेव[9] स्क-
न्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते[10] शुभान्यशुभानि च ।

न प्रणश्यन्ति[11] कर्माणि कल्पकोटिशतैरपि[12] ।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ॥

---

1) P fills the gap.
2) MS पात्र.
3) MS देशनां.
4) MS श्रोताप°.
5) MS प्रव्रज्या.
6) MS पप्रच्छ (D प्रपच्छुः).
7) MS श्यभागीनि (D र्श्यभाविनी).
8) MS वाह्ये (C चाह्ये).
9) In MS utterly corrupted वायुधातौचपीडु(DC ड, P ड्ड)पात्तेष्वै(D द्दै)व.
10) MS विपर्य्यन्ते (the last akṣara is wanting in D).
11) MS णस्यति.
12) MS कर्माण्येवापि कल्पशतैरपि. I have put into the text, what I think to have been the original form of this pāda, cp. *supra*, p. 74, n. 13. In D, in most of the occurrences of this common-place, the reading of B has been changed into कल्पकोटिशतैरपि.

भूतपूर्वं भित्तवो ऽतीते ऽध्वनि चन्द्रो नाम सम्यक्संबुद्धो लोक उदपादि तथागतो ऽर्हन्सम्यक्संबुद्धो विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान्। अथ चन्द्रः सम्यक्संबुद्धो जनपदचारिकां चरन्नन्यतमां[1] राजधानीमनुप्राप्तः॥ अश्रौषीद्राजा तत्रियो[2] मूर्धाभिषिक्तश्चन्द्रः सम्यक्संबुद्धो ऽस्माकं विजितमनुप्राप्त इति श्रुत्वा च पुनर्महत्या राजर्ध्या महता राजानुभावेन समन्वागतो येन चन्द्रः 5 सम्यक्संबुद्धस्तेनोपसंक्रान्तः। उपसंक्रम्य चन्द्रस्य सम्यक्संबुद्धस्य पादौ शिरसा वन्दित्वैकान्ते न्यषीदत्। एकान्तनिषण्णं राजानं तत्रियं मूर्धाभिषिक्तं चन्द्रस्सम्यक्संबुद्धो बोधिकरकैर्धर्मैः समादापयति॥ अथ राजा तत्रियो मूर्धाभिषिक्तो लब्धप्रसाद उत्थायासनादेकांसमुत्तरासङ्गं[3] कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन चन्द्रः सम्यक्संबुद्धस्तेनाञ्जलिं प्रणम्य चन्द्रं[4] सम्यक्संबुद्धमिदमवोचत्। अधिवासयतु मे भगवानिह वासं[5] 10 त्रैमास्यं सार्धं भित्तुसङ्घेन। अहं भगवन्तमुपस्थास्यामि चीवरपिण्डपातशयनासनग्लानप्रत्यय[6]भैषज्यपरिष्कारैरिति। अधिवासयति चन्द्रः सम्यक्संबुद्धो राज्ञस्तूष्णीभावेन॥ तस्य च राज्ञो नगरे तेन समयेन महाजनमरको[7] बभूव ईतिश्च येन स महाजनकायो ऽतीव संतप्यते[8]॥ ततो राज्ञा व्याधिप्रशमनार्थं[9] चन्द्रः सम्यक्संबुद्धो ऽधीष्टः[10]। साधु भगवन्क्रिय-

---

1) B न्यतेमां, D corr.

2) MS अश्रो°. Cp. p. 69, 8. In the sequel this standing fault will no more be noted.

3) MS देकाशमु° (D °समु°).

4) MS प्रणाम्यमयाचंद्रः सम्य°.

5) Ex conject.; MS भगवानियं मे त्रैमास्यं. The Tibetan translator had *iha vāsam* in his text, as is plain by his rendering them by འདི་ར་བཞུགས་པར་, as M. Feer informs me.

6) MS पात्र.

7) Ex conject.; MS पुरको or पूरको.

8) Ex conject.; MS संतर्प्यते. In P the akṣara ती is wanting, cp. Feer p. 66 n. 2.

9) Ex conject.; MS is here thoroughly corrupted: ततो गृहाव्याधिगंशमर्थताचे (P. °च्चे). From the context it is certain that the locus desperatus should mean 'by the king in order to stop the pestilence'. Cp. Feer, p. 66, n. 3.

10) Ex conject.; MS पीष्टः, cp. *supra* p. 75, 10.

तामस्या[1] ईतेरुपशमोपाय[2] इति ॥ ततो भगवांश्चन्द्रः सम्यक्संबुद्धो राजानमुवाच । गच्छ म-
हाराजेमां संघाटीं ध्वजाग्रे बद्धा[3] महता सत्कारेण स्वे विजिते पर्याटयास्याश्च[4] महान्तमु-
त्सवं कुरु सर्वश्च महाजनकायं बुद्धानुस्मृतौ समादापयेति ते[5] स्वस्तिर्भविष्यतीति ॥ ततो
राज्ञा यथानुशिष्टं सर्वं तथैव च कृतं तद्धेतु तत्प्रत्ययश्च सर्वा ईतयः प्रशान्ताः ॥ ततः स
5 जनकायो लब्धप्रसादो राजामात्यपौराश्च बुद्धं शरणं गता धर्मं सङ्घं ‹च›[6] शरणं गताः ॥

भगवानाह । किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन राजा बभूवाहं
सः । मयासौ चन्द्रस्य सम्यक्संबुद्धस्य महती पूजा कृता । तस्य मे कर्मणो विपाकेन देव-
मनुष्यसंप्रापकं संसारे महत्सुखमनुभूतमिदानीमपि तद्धेतुकैव[7] विभूतिर्येन यच्चिन्तयामि[8]
यत्प्रार्थये तत्तथैव[9] सर्वं समृध्यति । तस्मात्तर्हि भिक्षव एवं शिक्षितव्यं यच्छास्तारं सत्क-
10 रिष्यामो गुरुकरिष्यामो मानयिष्यामः पूजयिष्यामः[10] शास्तारं सत्कृत्य गुरुकृत्य मानयि-
त्वा पूजयित्वोपनिश्रित्य विहरिष्याम इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

1) MS यतमस्या.

2) Ex conject.; MS ईते(D मे)रुपसमोपयिईति.

3) Ex conject.; in MS this whole passage is utterly corrupted. B महाराज-सासांघाटीध्वजोर्यवध्वा and quite so in the copies CDP, except that P reads the 4th akṣara जा and the penult. च.

4) Ex conject.; MS पर्यादाया°.

5) Ex conject.; MS समादापयतिस्तेस्वास्ति° (D °पयतिते°, C °पयतित्त°). For the restitution of the whole passage R, f. 132b 6 has been of use. There it is told, Candra offered the king his *saṅghāṭī* with these words: इदं मे सौरभं वस्त्रं संघाटिकं.....ध्वजाग्रे तं वंधयित्वा.....सग्रामनगरे देशे सर्वत्रापि प्रचारय.

6) MS धर्मसंघं शर°.

7) Ex conject.; B तद्धैतक्यैव; क्यै is a correction at the bottom of the page instead of द्यै, which has been expunged in the context. In CDP this has been worse corrupted.

8) Ex conject.; MS भूतियेनय(D या)श्चित्तयामि.

9) MS त्तत्तथैव.

10) MS पूजाकरिष्यामः, cp. *supra* p. 77, n. 1.

---

## प्रातिहार्यमिति १५

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रे-
ष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुड-
किन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपात[1]शयनास-
नग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घो राजगृहमुपनिश्रित्य विहरति स्म वेणु- 5
वने कलन्दकनिवापे ॥ यदा राज्ञा अजातशत्रुणा देवदत्तविप्राहितेन पिता धार्मिको धर्म-
राजो जीविताद्व्यपरोपितः स्वयमेव च राज्ये[2] प्रतिष्ठितः तदा ये अश्राद्धास्[3]ते बलवन्तो
जाताः श्राद्धास्[3]तु दुर्बलाः [14b] संवृत्ताः ॥ यावदन्यतमो वृद्धामात्यो ऽश्राद्धो भगवच्छासन-
विद्वेषी । स ब्राह्मणेभ्यो यज्ञमा⟨र⟩ब्धो[4] यष्टुम् । तत्रानेकानि ब्राह्मणशतसहस्राणि संनि-
पतितानि । तैः क्रियाकारः कृतः न केनचिच्छ्रमणगौतमं[5] दर्शनायोपसंक्रमितव्यम् ॥ अथ 10

---

1) MS पात्र.

2) MS राज्यं.

3) MS श्रद्धा°.

4) Feer translates «institua un sacrifice pour les Brâhmanes». Instead of the dat. *brāhmaṇebhyo* the instrum. *brāhmaṇair* would rather have been expected. Should there be here perhaps room for supposing an erroneous sanscritization of a pracritic *bamhaṇehi* or *brāhmaṇehi*? In the parallel passage in K, f. 196b 4 sqq. the ministers have a *çāntika yajña* performed *by* the Brahmans.

5) I doubt of the faultlessness of the accus. *Infra*, p. 88, 8 it is said in the same connection more correctly गौतमस्य, and this seems to have been the original reading here, too.

ते ब्राह्मणाः कृतावयः[1] समग्राः संमोदमाना वीथीमध्ये वेदोक्तेन विधिना शक्रमायाचितुं प्रवृत्ता एह्येह्यकल्याणार ॥

अत्रान्तरे नास्ति किंचिद्बुद्धानां भगवतामज्ञातमदृष्टमविदितमविज्ञातम् । धर्मता खलु बुद्धानां भगवतां महाकारुणिकानां लोकानुग्रहप्रवृत्तानामेकारक्षाणां शमथविप-[2]
5 श्यनाविहारिणां त्रिदमथवस्तुकुशलानां चतुरोघोत्तीर्णानां चतुर्ऋद्धिपादचरणतलसुप्रति- ष्ठितानां चतुर्षु संग्रहवस्तु‹षु› दीर्घरात्रकृतपरिचयानां पञ्चाङ्गविप्रहीणानां पञ्चगतिसम- तिक्रान्तानां षडङ्गसमन्वागतानां षट्पारमितापरिपूर्णानां सप्तबोध्यङ्गकुसुमाढ्यानामष्टा- ङ्गमार्गदेशिकानां नवानुपूर्वसमापत्तिकुशलानां दशबलबलिनां दशदिक्समापूर्णयशसां दशशतवशवर्ति‹प्रति›विशिष्टानां त्री रात्रेस्त्रिर्दिवसस्य[3] बुद्धचक्षुषा लोकं व्यवलोक्य ज्ञा-
10 नदर्शनं प्रवर्तते । को हीयते को वर्धते कः कृच्छ्रप्राप्तः ‹कः संकटप्राप्तः›[4] कः संबाधप्राप्तः कः कृच्छ्रसंकटसंबाधप्राप्तः को ऽपायनिम्नः[5] को ऽपायप्रवणः को ऽपायप्राग्भारः कमहम- पायादुद्धृत्य स्वर्गे मोक्षे च प्रतिष्ठापयेयं कस्य कामपङ्कनिमग्नस्य हस्तोद्धारमनुप्रदद्यां कमार्यधनविरहितमार्यधनैश्वर्याधिपत्ये प्रतिष्ठापयेयं कस्यानवरोपितानि कुशलमूलान्य- वरोपयेयं कस्यावरोपितानि परिपाचयेयं कस्य परिपक्वानि[6] विमोचयेयम् । आह च ।

15 अप्येवातिक्रमेद्वेलां सागरो मकरालयः ।
न तु वैनेयवत्सानां बुद्धो वेलामतिक्रमेत् ॥

---

1) Ex conject.; B कृतावयु with expunged य before यु, out of which the copyist of D has made कृतावयेयुः. If *kṛtāvayaḥ*, as I have reason to suppose, is the right reading, it is a heteroclitical plural of *kṛtāvin*. The *brāhmaṇāḥ kṛtāvayaḥ* are = *yājñikāḥ*.

2) B शमथथवि°, D and P corr.

3) MS त्रिरात्रेस्त्रिदि°.

4) D and P fill the gap.

5) B पापनिमग्नः, D corr. Cp. *supra*, p. 72, 6.

6) B कस्याप°, with a dot on स्या; DCP कस्याप°.

पश्यति भगवान्। इमे ब्राह्मणाः पूर्वावरोपित[1]कुशलमूला गृहीतमोक्षमार्गाः स्वहितै-षिणो[2] ऽभिमुखा निर्वाणे[3] बहिर्मुखाः संसारादकल्याणमित्रसंसर्गादिदानीं मच्छासनं वि-द्विषन्ति। यन्न्वहमेषां विनयहेतोरौत्सुक्यमापद्येयेति॥ अथ[4] भगवाञ्छक्रवेषम[5]भिनिर्माय तं यज्ञवाटं दिव्येनावभासेनावभास्यावतरितुमारब्धः। ततस्ते ब्राह्मणा हृष्टतुष्टप्रमुदिता उदग्रप्रीतिसौमनस्यजाता एकसमूहेनोक्त〈वन्तः〉। एह्येहि भगवन्स्वागतं[6] भगवत इति। ततो भगवाञ्छक्रवेषधारी प्रज्ञप्त एवासने निषण्णः॥ एष शब्दो राजगृहे नगरे सम-न्ततो विसृतः यज्ञे शक्रो देवेन्द्रो ऽवतीर्ण इति यं श्रुत्वानेकानि प्राणिशतसहस्राणि संनि-पतितानि॥ ततो भगवानावर्जिता ब्राह्मणा 〈इति〉[7] विदित्वा शक्रवेषमन्तर्धाप्य बुद्धवेषे-णैव स्थित्वा तादृशीं चतुरार्यसत्यसंप्रतिवेधिकीं[8] धर्मदेशनां कृतवान्यां श्रुत्वा षष्ट्या ब्रा-ह्मणसहस्रैर्विंशतिशिखरसमुद्गतं [9]सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रोतआपत्तिफलं सा-क्षात्कृतमनेकैश्च प्राणिशतसहस्रैर्भगवति श्रद्धा प्रतिलब्धा[10]॥

ततो भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। आश्चर्यं भदन्त यावदेभिर्ब्राह्मणैर्भगवन्तमा〈ग〉म्य[11] सत्यदर्शनं कृतमनेकैश्च प्राणिशतसहस्रैर्महान्प्रसादो[12] --

---

1) Ex conject.; MS पिताकु°.

2) Ex conject.; MS °मार्गाश्चरितेषिणयो.

3) MS निर्वाणो.

4) Ex conject.; MS पद्येयेनार्थं. *Atha* and *artha(m)* are often confounded by copyists.

5) MS भगवाच्छक्रवेशम°; the orthography *veça* instead of *veṣa* is frequent in my mss. In the sequel MS varies between वेश and वेष.

6) MS भगवान्स्वा°.

7) Ex conject.; MS °र्जिता ब्राह्मणाः वि°.

8) Anusvāra wanting in MS.

9) B यत्का°, D corr.

10) MS लब्धाः instead of लब्धा।

11) Ex conject.; MS गवन्तमार्यसत्य°. Since the technical term is *satyadarça-nam kṛ*, not *āryasatyad. kṛ*, the syllables *ārya* must be the remnant of some absolutive, like *āsādya*. This cannot be here any other but आगम्य, as this is the technical term in our text to denote the intervention of the person through whose help spiritual knowledge and liberation is obtained. Cp. Index.

12) Ex conject.; MS महाप्रसादो.

ऽधिगत इति ॥ भगवानाह । तथागतेनैतानि भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्यु-
पचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि । मयै-
तानि कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति । न भिक्षवः कर्माणि कृतान्यु-
पचितानि बाह्ये[1] पृथिवीधातौ विपच्यन्ते नाब्धातौ न तेजोधातौ न वायुधातावपि तूपात्ते-
5 ष्वेव[2] स्कन्धधात्वायतनेषु[3] कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च ।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि[4] ।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि इन्द्रदमनो नाम सम्यक्संबुद्धो लोक उदपादि तथा-
गतो ऽर्हन्सम्यक्संबुद्धो विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शा-
10 स्ता देवमनुष्याणां बुद्धो भगवान् । <स> जनपदचारिकां[5] चरन्नन्यतमां राज[15a]धानीमनु-
प्राप्तः । सा राजधानी तीर्थिकावष्टब्धा ॥ अश्रौषीदन्यतमो[6] राजा क्षत्रियो मूर्धाभिषिक्त
इन्द्रदमनः सम्यक्संबुद्धो ऽस्माकं विजितमनुप्राप्त इति श्रुत्वा च पुनर्महत्या राजर्द्ध्या महता
राजानुभावेन समन्वागतो येनेन्द्रदमनस्सम्यक्संबुद्धस्तेनोपसंक्रान्तः । उपसंक्रम्य भगवत
इन्द्रदमनस्य सम्यक्संबुद्धस्य पादौ शिरसा वन्दित्वैकान्ते निषण्णः । एकान्ते निषण्णं
15 राजानं क्षत्रियं मूर्धाभिषिक्तमिन्द्रदमनः सम्यक्संबुद्धो बोधिसत्त्वकरकैर्धर्मैः समादापयति ।
अथ स राजा लब्धप्रसाद उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां
प्रतिष्ठाप्य येनेन्द्रदमनस्सम्यक्संबुद्धस्तेनाञ्जलिं प्रणम्य इन्द्रदमनं सम्यक्संबुद्धमिदमवो-

---

1) B वाह्यैर्द्धे, the middle akṣara being blurred, D corr.

2) MS वायुधातौवपितुववात्तोधव, the two hindmost akṣaras presuppose ष्वेव in A thus written that the vowel *e* was indicated by a stroke before *ṣva*. As to the right reading, see *supra* p. 74, n. 9.

3) B प्र instead of षु, D corr.

4) So D, cp. *supra* p. 74, n. 13.

5) B कांश्चरन्न°, D corr.

6) *anyatamo* looks rather singular, instead of it we should expect something like *asyā rājadhānyā*.

7) Anusvāra wanting in MS.

चत्। अधिवासयतु मे भगवांस्त्रैमास्यवासाय[1]। अहं भगवन्तमुपस्थास्यामि चीवरपिण्डपा-
[2]तशयनासनग्लानप्रत्ययभैषज्यपरिष्कारैरिति॥ भगवानाह। अस्ति ते महाराज विजिते
कश्चिद्विहारो यत्रागन्तुका गमिकाश्च भिक्षवो वासं कल्पयिष्यन्तीति॥ राजोवाच। ना-
स्ति भगवन्किं तर्हि तिष्ठतु[3] भगवानहं विहारं कारयिष्यामि यत्रागन्तुका गमिकाश्च
भिक्षवो वासं कल्पयिष्यन्तीति॥ ततो राज्ञा तथागतस्यार्थे विहारः कारित आविद्धप्रा- 5
कारतोरणो गवाक्षनिर्यूहजालार्धचन्द्रवेदिकाप्रतिमण्डित आस्तरणोपेतो जलाधारसंपूर्ण-
स्तरुगणपरिवृतो नानापुष्पफलोपेतः कृत्वा च भगवतः सश्रावकसङ्घस्य निर्यातितो
ऽधीष्टश्च[4] भगवान्महाप्रातिहार्यं प्रति॥ ततो भगवता इन्द्रदमनेन सम्यक्संबुद्धेन राज्ञो
ऽध्येषया महाप्रातिहार्यं विदर्शितं बुद्धावतंसकविक्रीडितं [5]यद्दर्शनाज्जाता सामात्यनैगम-
जानपदः सर्वे च नागराः सुप्रसन्नाः शासने संरक्ततराः[6] संवृत्ताः॥ 10

किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन राजा बभूवाहं सः। मया[7] सा
इन्द्रदमनस्य सम्यक्संबुद्धस्यैवंविधा पूजा कृता। तस्य मे कर्मणो विपाकेन संसारे
ऽनन्तं[8] सुखमनुभूतमिदानीं मे तथागतस्य सत इयं शासनशोभा। तस्मात्तर्हि भिक्षव एवं
शिक्षितव्यं यच्छास्तारं सत्करिष्यामो गुरुकरिष्यामो मानयिष्यामः[9] पूजयिष्यामः शास्तारं
सत्कृत्य गुरुकृत्य मानयित्वा पूजयित्वोप[10]निश्रित्य विहरिष्याम इत्येवं वो भिक्षवः शि- 15
क्षितव्यम्॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्॥

---

1) Ex conject., cp. *supra* p. 75, 7; MS भगवांत्रैमा(P वा)स्यंवासाय.

2) MS पात्र.

3) The signification of *tiṣṭhatu* may be illustrated by the parallel passage in K, f. 201 b 4 तावत्तु भगवानत्र तिष्ठतु सह साङ्घिकैः। यावन्न सिध्यते शास्तुर्विहारः शुभसंस्कृतः॥ Accordingly, तर्हि should, perhaps, be changed into विह.

4) Ex conject.; MS तितोपोष्टश्च. Cp. *supra*, p. 81, 14.

5) MS यंदृर्श°.

6) Ex conject.; MS शासन(C ने)सरक्तपराः.

7) MS महा. 8) MS संसारेनंतं.

9) B मानकरिष्यामः, D corr. 10) B त्वापनि°, DP corr.

## पञ्चवार्षिकमिति १६

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रे-
ष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षगन्धर्वासुरगरुड-
किन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपात[1]शयनास-
5 नग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घो राजगृहमुपनिश्रित्य विहरति स्म वेणु-
वने क[2]⟨ल⟩न्दकनिवापे ॥ यदा देवदत्तेन ⟨मोह⟩पुरुषेण[3] भगवच्छासने ऽनर्थसहस्राणि कृ-
तानि न च शकितं भगवतो रोमेञ्जनमपि कर्तुं तदा राजानमजातशत्रुमामन्त्रितवान् । क्रि-
यतां राजगृहे क्रियाकारो न केनचिच्छ्रमणस्य गौतमस्योपसंक्रमितव्यं पिण्डकेन वा प्र-
तिपादयितव्य एवमयमलब्धलाभो ऽलब्धसंमानो नियतमन्यदेशं संक्रान्तिं[4] करिष्यती-
10 ति ॥ राज्ञा तथा कारितम् ॥ तत्र ये उपासका दृष्टसत्यास्ते रोदितुं प्रवृत्ताः । हा कष्टम-
नाथीभूतं राजगृहनगरं यत्र हि नामोडुम्बरपुष्पदुर्लभप्रादुर्भावं बुद्धं भगवन्तमासाद्य तस्य
न शक्यते संग्रहः कर्तुमिति ॥ एष शब्दः श्रुतिपरम्परया भिक्षुभिः श्रुतस्[5]तत आयुष्मता-

---

1) MS पात्र.

2) B and C कन्दक°, D and P करन्द°.

3) I have filled the gap with the help of a parallel place in the beginning of tale **33**, where Devadatta bears the same epithet. Moreover, the Tibetan མི་བླུན་པོ་ '(ab) homine stulto', which, according to a private communication of M. Feer, renders here the epithet preceding *Devadattena*, confirms my correction. Cp. also Divy. 163, 20. 164, 2. 322, 19.

4) Ex conject.; MS क्रान्तं.

5) MS श्रुतंतत.

नन्देन यथाश्रुतं भगवतो निवेदितः ॥ भगवानाह । अल्पोत्सुकस्त्वमानन्द[1] अत्र तथागता एवात्र कालज्ञाः । अपि तु यावच्छासनं मे तावच्छ्रावकाणामुपकरणवैकल्यं न भविष्यति प्रागेवेदानीमि[15b]ति ॥

अत्रान्तरे शक्रस्य देवानामिन्द्रस्याधस्ताज्ज्ञानदर्शनं प्रवर्तते । स पश्यति भगवच्छासनस्यैवंविधां विकृतिम् । सहदर्शनादेव दायकदानपतीनामुत्साहसंजननार्थं बुद्धोत्पादस्य 5 माहात्म्य*संजन*[2]नार्थमजातशत्रोर्देवदत्तस्य च मदर्पच्छित्त्यर्थमात्मनश्च प्रसाद*संज*नार्थं[3] सकलं राजगृहमुदारेणावभासेनावभास्योच्चैःशब्दमुदाहरितवान्[4] । एषो ऽहमद्याग्रेण भगवन्तं सश्रावकसङ्घं दिव्यैश्चीवरपिण्डपात[5]शयनासनग्लानप्रत्ययभैषज्यपरिष्कारैरुपस्थास्यामि । इत्युक्त्वा येन भगवांस्तेनोपसंक्रान्तः । उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्ते स्थितः । अथ शक्रो देवेन्द्रो भगवन्तमिदमवोचत् । अधिवासयतु मे भगवानस्मिन्नेव राजगृहे 10 नगरे ऽहं भगवन्तमुपस्थास्यामि दिव्यैश्चीवरपिण्डपात[5]शयनासनग्लानप्रत्ययभैषज्यपरिष्कारैरिति ॥ भगवानाह । अलं कौशिक कृतमेतद्यावदेव चित्तमभिप्रसन्नं बहवो हि लोके[6] पुण्यकामा इति ॥ शक्रः प्राह । अधिवासयतु मे भगवान्पञ्च वर्षाणि तथागतस्यार्थे पञ्चवार्षिकं करिष्यामीति ॥ भगवानाह । अलं कौशिक कृतमेतद्यावच्चित्तमभिप्रसन्नं बहवो हि लोके[6] पुण्यकामा इति ॥ शक्रः प्राह । अधिवासयतु मे भगवान्पञ्च दिवसानि- 15

---

1) B °त्सुकश्चमा°, with a sign above श्च referring to an interlinear त्व; I suppose the copyist intended त्व to be put instead of श्च. The copyists of D, C and P have copied both akṣaras.

2) In the place of the corrupt reading, due to the slackness of some copyist, who iterated संजनन instead of writing the word he found in his original, I suppose something like प्रशंसन should be put. Indra does not *rouse* Buddha's grandeur, but *magnifies* it by his deed.

3) So B. This has grown in D to संजननार्थं. The sense of the corrupt word must be *in order to manifest*: दर्शनार्थं, प्रकाशनार्थं sim.

4) The ungrammatical form may be imputed to the author.

5) MS पात्र.

6) Ex conject.; MS लोक.

ति ॥ ततो भगवान्स्वपुण्यबलप्रत्यक्षीकरणार्थं शक्रस्य च देवेन्द्रस्यानुग्रहार्थमनागतप-
श्चार्षिकप्रबन्धहेतोश्चाधिवासितवांस्तूष्णीभावेन ॥

अथ शक्रो देवेन्द्रो भगवतस्तूष्णीभावेनाधिवासनं विदित्वा तद्वेणुवनं वैजयन्तं
प्रासादं प्रदर्शितवान्दिव्यानि चासनानि दिव्याः पुष्करिणीर्दिव्यञ्च भोजनम् ॥ अथ भग-
5 वान्प्रज्ञप्त एवासने निषण्णः । ततः शक्रो देवेन्द्रः सुखोपनिषण्णं बुद्धप्रमुखं भिक्षुसङ्घं विदि-
त्वानेकदेवतासहस्रपरिवृतः स्वहस्तं संतर्पयति संप्रवारयति । अनेकपर्यायेण स्वहस्तं सं-
तर्प्य संप्रवार्य भगवन्तं भुक्तवन्तं विदित्वा धौतहस्तमपनीतपात्रं नीचतरमासनं गृहीत्वा
भगवतः पुरस्तान्निषण्णो धर्मश्रवणाय । ततो भगवाञ्छक्रं देवेन्द्रं सपरिवारं धर्म्यया कथ-
या संदर्शयति समादापयति समुत्तेजयति संप्रहर्षयति ॥ पश्यति च राजा ऽजातशत्रुरुपरिप्रा-
10 सादतलगतः सन्भगवतो[1] वेणुवने एवंविधां पूजां दृष्ट्वा च पुनर्विप्रतिसारजातो महान्तं प्र-[2]
सादं प्रवेदितवान् । राजगृहनिवासिनश्च पौरा धर्मवेगप्राप्ता[3] राजानमुपसंक्रम्यैवमूचुः । मु-
ष्यन्ते[4] *देव* महाराज[5] राजगृहनिवासिनः पौरा यत्र नाम देवाः प्रमत्ताः सन्तः प्रमादविहा-[6]
रिणो दिव्यान्विषयानपहाय भगवन्तं पूजयन्ति । साधु देव उद्घाट्यतां क्रियाकार इति ॥

ततो राज्ञा ऽजातशत्रुणा क्रियाकारमुद्घाट्य राजगृहे नगरे घण्टावघोषणं[7] कारितं
15 क्रियतां भगवतः सत्कारो यथासुखमिति ॥ ततो राजगृहनिवासिनः पौराः सपरिवारा
हृष्टतुष्टप्रमुदिता[8] उदग्रप्रीतिसौमनस्यजाताः[9] पुष्पगन्धमाल्यान्यादाय भगवन्तं दर्शनायो-

---

1) Ex conject.; MS °गतःसभग°.

2) B प्रासादं, D corr.

3) BP प्तः corrupted, I believe, out of प्ता, DC प्ताः.

4) I accept *muṣyante* = «are ravished», cp. PWK, V s. v. मुष् 4) and Feer, p. 74, 4.

5) I hold देव for corrupt, the two vocat. *deva mahārāja* put together being unusual. Query: मुष्यन्ते एव or इव.

6) Ex conject.; MS प्रसाद°, but प्रमाद° is required by the context. The happiness of the Trāyastriṃça gods bears, indeed, a great affinity to the μέθη αἰώνιος of the Olympians.

7) MS षणां.

8) B ता । (D ता), P corr.

9) Visarga wanting in MS; CP जातपुष्प°.

पसंक्रान्ताः। ततो देवैर्मनुष्यैश्च भगवतो महान्सत्कारः कृतः भगवता च तदधिष्ठानं[1] देवमनुष्याणां तादृशी चतुरार्यसत्यसंप्रतिवेधिकी धर्मदेशना[2] कृता यां श्रुत्वानेकैर्देवमनुष्यैः सत्यदर्शनं कृतम्॥

भिक्षवो भगवतः पूजां[3] दृष्ट्वा संशयजाता भगवन्तं पप्रच्छुः। आश्चर्यं भदन्त यद्भगवतः शासने एवंविध उत्सव इति॥ भगवानाह। तथागतेनैवैतानि भिक्षवः पूर्वमन्यासु जातिषु 5 कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि। मयैतानि कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति। न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ पच्यन्ते नाब्धातौ न तेजोधातौ न वायुधातावपि तूपात्तेष्वेव[4] स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शु[16a]भान्यशुभानि च। 10

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि[5]।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम्॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि रत्नशैलो नाम सम्यक्संबुद्धो लोक उदपादि तथागतो ऽर्हन्सम्यक्संबुद्धो विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान्। स जनपदचारिकां चरन्नन्यतमां राजधानीमनुप्राप्तः। तस्यां 15 च राजधान्यां धर्मबुद्धिर्नाम राजा राज्यं कारयति तस्यां च राजधान्यां महती ईतिः॥ ततस्तेन राज्ञा ईतिप्रशमनहेतोर्भगवान्सश्रावकसङ्घस्त्रैमास्ये[6] भक्तेनोपनिमन्त्रितः॥ त्र-

---

1) Ex conject.; MS °ष्ठानां. Perhaps we should read °ष्ठाना. Cp. Index.

2) MS नां.

3) Anusvāra wanting in MS.

4) Cp. *supra*, p. 74 n. 9; B here तुपात्ते°.

5) MS अपि कल्पशतैरपि, cp. *supra* p. 74, n. 13.

6) Perhaps we must read त्रैमास्यं with D.

याणां मासानामत्ययेन सा ईतिः[1] प्रशान्ता ॥ ततो राज्ञा नागरैश्चावर्जितमानसैस्तथागतस्य[2] सश्रावकसङ्घस्य पञ्चवार्षिकं[3] कृतम् ॥ आह च[4] ।

राजभूतेन[5] आनन्द रत्नशैलो महाद्युतिः ।
अधीष्टः शान्तिकामेन[6] अकार्षीत्पञ्चवार्षिकमिति[7] ॥

5 किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन राजा बभूवाहं सः । यन्म-या[8] रत्नशैलस्य तथागतस्य पञ्चवार्षिकं[9] कृतं तेन मे संसारे महत्सुखमनुभूतं तद्धेतुक-श्चेदानीं[10] तथागतस्यैवंविधः सत्कारः परिनिर्वृतस्य च मे शासने अनेकानि पञ्चवार्षिकश-तानि भविष्यन्ति । तस्मात्तर्हि भिक्षव एवं शिक्षितव्यं यच्छास्तारं सत्करिष्यामो गुरुक-रिष्यामो मानयिष्यामः पूजयिष्यामः शास्तारं सत्कृत्य गुरुकृत्य मानयित्वा पूजयित्वोप-10 निश्रित्य विहरिष्याम इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

1) MS ईति । प्र°.

2) Ex conject.; MS नागराश्चा......नसस्त°.

3) Anusvāra wanting in MS.

4) It is likely that some passage of another sacred text, one or other Buddhavaṃça, is quoted here.

5) MS. with sandhi against the metre, °तेनानन्द.

6) Ex conject.; MS शान्तकायेन. The emendation has been suggested to me by Feer, p. 75 n. 1 quoting the Tibetan version.

7) The çloka quoted purports another redaction of the story, for here it is Ratnaçaila who performs the rite in behalf of the king who desirous of appeasing the calamitous epidemic had sent for him, but in the prose the rite is performed by the king to honour him.

8) MS यन्मह्या.

9) Anusvāra wanting in MS.

10) Ex conject.; cp. *supra* p. 76, n. 9 and p. 82, 9. MS तद्धेतु°. The adverb तद्धेतुतः, too, would suit.

# स्तुतिरिति १७

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपात[1]शयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्डद- 5 स्यारामे। तेन खलु समयेन श्रावस्त्यां पञ्चमात्राणि गान्धर्विकशतानि गोष्ठिकानां प्रतिवसन्ति ॥ तत्र च काले सुप्रियो नाम [2]गान्धर्विकराजो ऽभ्यागतः। तस्यैवंविधा शक्तिः। एकस्यां [3]तन्त्र्यां सप्त स्वरानादर्शयत्येकविंशतिं [4]मूर्च्छनाः[5]॥ स [6]षण्महानगराण्यपटुका[7]न्युद्घोषयमाणः श्रावस्तीमनुप्राप्तः। श्रावस्तीनिवासिभिश्च गान्धर्विकै राज्ञे निवेदितम्॥ राजाह। अल्पोत्सुका भवन्तु भवन्तो वयमत्र कालज्ञा भविष्याम इति॥ 10

अथ सुप्रियस्य गान्धर्विकराजस्यैतदभवत्। एवमनुश्रूयते राजा प्रसेनजिद्गान्धर्वै[8]

---

1) MS पात्र.

2) MS गन्धर्वि°.

3) MS तन्त्र्यां (D तन्त्र्या).

4) B °र्शयत्यै (C त्यं)कविंशति, D °र्शयत्येकविंशति.

5) Visarga wanting in MS.

6) BP षण्म°, depraved in C and D into षट्टा and षत्म respectively.

7) Ex conject.; MS °टुनान्यु°. Feer, relying on the Tibetan translation, renders this passage 'disant bien haut que les (musiciens des) six grandes villes n'étaient pas capables (de lui tenir tête)'. I take *apaṭukāni* for a bahuvrihi «the great towns had, said he, no skilled musicians».

8) MS गन्धर्वै or °र्वं.

ऽतीव कुशलः। यन्न्वहमनेन सह वादमारोचयेयमिति ॥ ततः सुप्रियो गान्धर्विकराजो येन राजा प्रसेनजित्कौशल[1]स्तेनोपसंक्रान्तः। उपसंक्रम्य राजानं प्रसेनजितं कौशलमिदमवोचत्। श्रुतं मे राजन्यथा त्वं [2]गान्धर्वकुशल इति यदि ते अगुरु[3] मीमांसस्वेति[4] ॥ ततो राज्ञा प्रसेनजिता तस्य विक्षेपः[5] कृत उक्तश्च साधो अस्ति मे गुरुर्जेतवने[6] स्थितो ऽनुत्तरो गा-
5 न्धर्विकराज एहि तत्समीपं यास्याम इति ॥ अथ राजा प्रसेनजित्कौशलः[1] पञ्चमात्रैर्गान्धर्विकशतैः[7] परिवृतः सुप्रियेण [8]गान्धर्विकराजेनानेकैश्च प्राणिशतसहस्रैर्जेत[9]वनं गतः ॥

अत्रान्तरे नास्ति किञ्चिद्बुद्धानां भगवतामज्ञातमदृष्टमविदितनविज्ञातम्। धर्मता खलु बुद्धानां भगवतां महाकारुणिकानां लोकानुग्रहप्रवृत्तानामेकारक्षाणां शमथविपश्यनाविहारिणां त्रिदमथवस्तुकुशलानां चतुरोघोत्तीर्णानां चतुर्ऋद्धिपादचरणतलसुप्रतिष्ठि-
10 तानां चतुर्षु संग्रहवस्तुषु दीर्घरात्रकृतपरिचयानां पञ्चाङ्गविप्रहीणानां पञ्चगतिसमतिक्रान्तानां षडङ्गसमन्वागतानां षट्पारमितापरिपूर्णानां सप्तबोध्यङ्गकुसुमाढ्यानामष्टाङ्गमार्गदेशिकानां नवानुपू[16b]र्वविहारसमापत्तिकुशलानां दशबलबलिनां दशदिक्समापूर्णयशसां दशशतवशवर्तिप्रतिविशिष्टानां त्री रात्रेस्त्रिर्दिव[10]सस्य बुद्धचक्षुषा लोकं व्यवलोक्य ज्ञानदर्शनं प्रवर्तते। को हीयते को वर्धते कः कृच्छ्रप्राप्तः कः संकटप्राप्तः कः संबा-

---

1) B जित्कोश, D corr.

2) MS गन्ध.

3) B अगुरुर्मी°, it seems, D corr. Cp. Feer, p. 76 n. 1.

4) Ex conject.; MS मीमांसयेति (D °यति). The verb is *mīmāṃsate* ātm., see Jtkm. p. 8, 7.

5) Visarga wanting in MS.

6) Ex conject.; B गुरुर्ज्ञातेवने, the र् above ज्ञा being added by a second hand, D गुरुर्ज्ञातवने.

7) Ex conject.; MS गंधर्वशतैः.

8) MS गंधर्वक (D °र्विक).

9) MS सहस्रैर्जे (D °स्रैःजे°).

10) MS त्रिरात्रेस्त्रि(D त्रि)दिव°.

घप्राप्तः कः कृच्छ्रसंकटसंबाधप्राप्तः को ऽपायनिम्नः[1] को ऽपायप्रवणः को ऽपायप्राग्भारः कमहमपायादुद्धृत्य स्वर्गे मोक्षे च प्रतिष्ठापयेयं कस्य कामपङ्कनिमग्नस्य हस्तोद्धारमनुप्रदद्यां कमार्यधनविरहितमार्यधनैश्वर्याधिपत्ये प्रतिष्ठापयेयं कस्यानवरोपितानि कुशलमूलान्यवरोपयेयं कस्यावरोपितानि परिपाचयेयं कस्य परिपक्वानि[2] विमोचयेयम् ।
आह च ।

अप्येवातिक्रमेद्वेलां सागरो मकरालयः ।
न तु वैनेयवत्सानां बुद्धो वेलामतिक्रमेत् ॥

ततो भगवान्वैनेयजनानुग्रहार्थं लौकिकं चित्तमुत्पादितवान् । अहो बत पञ्चशि[3]खो गन्धर्वपुत्रः सप्तगन्धर्वसहस्रपरिवृतो वैडूर्यदण्डां[4] वीणामादाय मत्सकाशमुपसंक्रामेदिति । सहचित्तोत्पादात्पञ्चशिखो[5] गन्धर्वपुत्रः सप्तगन्धर्वसहस्रपरिवृतो भगवन्तं यथावदभ्यर्च्य भगवतो वैडूर्यदण्डां[6] वीणामुपनयति स्म[7] ॥ ततः सुप्रियो गन्धर्वराजो[8] भगवतः पुरस्ताद्वीणामनुश्रावितुमारब्धो[9] यत एकस्यां तन्त्र्यां सप्त स्वराण्येकविंशतिं[10][11] मूर्छनाश्च दर्शयितुमारब्धो यच्छ्रवणाद्राजा प्रसेनजिदन्यतमश्च महाजनकायः परं विस्मयमापन्नः ॥

---

1) MS निमग्नः, cp. *supra* p. 31, n. 1.

2) MS कस्यापरिमुक्तानि, a case of excusable clerical inadvertency.

3) B वञ्च°, depraved in C into रञ्च; D पञ्चशिर्षो.

4) MS °दण्डवीणा°.

5) B पञ्चशिखोपगंध°, D corr.

6) MS दण्डं.

7) Note the use of *sma* with the present as a simple narrative tense. Cp. also Buddhac. III, 51 foll. and especially 59; Rāmāy. IV, 11, 62.

8) B राजा, D corr.

9) The irregular and syncopated form of the infin. of verbs of the X class is sometimes met with in Buddhistic Sanskrit. Cp. Divy. 398, 14 *avasthāpitum*; R. f. 34a 2 *samupaḍhaukitum*, K. f. 34a 5 *darçitum*, ib. f. 89a 7 *pūritum*, ib. f. 139a 3 *vyavalokitum*.

10) Note the neuter gender, cp. p. 29, n. 9.

11) Anusvāra wanting in MS.

ततो भगवानपि वैडूर्यदण्डां वीणामाश्रावितवान् यत एकैकस्यां तन्त्र्यामनेके[1] स्वरवि-
शेषा मूर्छनाश्च बहुप्रकारा दर्शिताः । ते च शून्याकारेणैव[2]। इदञ्च शरीरं वीणावद्दा-
दर्शितवान्स्वरानिन्द्रियवन्मूर्छनाश्चित्त[3]धातुव‹व्य›च्छ्रवणादावर्जितः सुप्रियो गान्धर्वरा-
ज्ञो[4] वीणां गन्धकुट्यां निर्यात्य भगवत्सकाशे प्रव्रजितः ॥ तेन युज्यमानेन घटमानेन व्या-
5 यच्छमानेनेदमेव पञ्चगण्डकं संसारचक्रं ‹चला›चलं[5] विदित्वा सर्वसंस्कारगतीः[6] शतनपत-
नविकिरण[7]विध्वंसन[8]धर्मतया पराहत्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम् । अर्हन्संवृत्त-
स्त्रैधातुकवीतरागः सम[9]लोष्टकाञ्चन आकाशपाणितलसमचित्तो वासि[10]चन्दनकल्पो विद्या-
विदारिताण्डकोशो विद्याभिज्ञाप्रतिसंवित्प्राप्तो[11] भवलाभलोभसत्कारपराङ्मुखः सेन्द्रोपे-
न्द्राणां देवानां पूज्यो मान्योऽभिवाद्यश्च संवृत्तः ॥

10 तत आवर्जिता देवनागयक्षासुरगरुडकिन्नरमहोरगा भगवच्छासने रक्षावरणगुप्तिं
कर्तुमारब्धाः । पञ्चानामपि गान्धर्विकशतानां प्रीतिसौमनस्यजातानामेतदभवत् । वयं
नीचे कर्मणि वर्तामहे कृच्छ्रवृत्तयश्च यन्नु[12] वयं राजानं विज्ञाप्य भगवन्तं सश्रावकसङ्घं

---

1) Ex conject.; MS °नेकास्व°.

2) Ex conject.; MS °रणाच. I accept this clause as meaning, that *he showed the very emptiness of these sounds.*

3) B च्छन्यश्चि°, D corr.

4) MS राज्ञा.

5) D fills the gap.

6) Visarga wanting in MS.

7) Although *vikiraṇa* sins against Sanskrit grammar, it cannot be regarded as a clerical error for *vikaraṇa*, cp. Pali *vikiranaṁ*. Perhaps the ambiguousness of meaning in Skr. *vikarana* may have favoured the use of a derivative, whose relationship to the verb *vikirati* is clearly expressed by its form. Bendall compares *anācchindanatā* Çikṣāsamuccaya, p. 126, 15; *anutsṛjanatā*, ibid. p. 183, 9.

8) MS सनंध°.

9) MS समरो°. Cp. *supra* p. 53, n. 3; p. 58, n. 9; p. 69, n. 7.

10) Ex conject.; MS वासी. Cp. Divy. 97, 26. 180, 26. 282, 2.

11) MS (by a singular inadvertency in A) भिज्ञासम्वित्य (D संविद्य) प्राप्तो.

12) MS यंतु.

[1]नगरप्रवेशेनोपनिमन्त्र[2]येमहीति ॥ [3]यावत्तैर्गान्धर्विकैर्लब्धानुज्ञैर्भगवान्सश्रावकसङ्घो[4] नग-
रप्रवेशेनोपनिमन्त्रितः । अधिवासितं च भगवता तेषां गान्धर्विकाणां तूष्णीभावेन ॥ तत-
स्तैर्गान्धर्विकै राजामात्यपौरजानपदसहायैः सर्वा श्रावस्ती नगरी अपगतपाषाणशर्कर-
कठल्ला[5] गन्धोदकपरिषिक्ता नानापुष्पावकीर्णा विचित्रधूपधूपिता पुष्पवितानमण्डिता
ते च गान्धर्विकाः स्वयमेव वीणामादाय मृदङ्गवेणुपणवादिविशेषैरुपस्थानं चक्रुः प्रणी-
तेन चाहारेण भगवन्तं सश्रावकसङ्घं संतर्पयामासुः ॥

ततो भगवान्स्मितमकार्षीत् ॥ धर्मता खलु यस्मिन्समये बुद्धा भगवन्तः
स्मितं प्राविष्कुर्वन्ति तस्मिन्समये नीलपीतलोहितावदाता अर्चिषो मुखान्निश्चार्य
काश्चिदधस्ताद्गच्छन्ति काश्चिदुपरिष्टाद्गच्छन्ति । या अधस्ताद्गच्छन्ति ताः संजीवं[6]
कालसूत्रं संघातं[6] रौरवं महारौरवं तपनं प्रतापनमवीचिमर्बुदं निरर्बुदमटटं[7] हहवं
हुहुवमुत्पलं पद्मं महापद्मं नरकान्गत्वा[8] ये उष्णनरकास्तेषु शीतीभूता नि-
[17a]पतन्ति ये शीतनरकास्तेषूष्णीभूता निपतन्ति । तेन तेषां सत्त्वानां का-
रणाविशेषाः प्रतिप्रस्रभ्यन्ते । तेषामेवं भवति । किं नु वयं भवन्त इतश्च्युता आहो स्विद-
न्यत्रोपपन्ना इति । तेषां प्रसादसंजननार्थं भगवान्निर्मितं विसर्जयति । तेषां निर्मितं दृष्ट्वैवं
भवति । न ह्येवं[9] वयं भवन्त इतश्च्युता नाप्यन्यत्रोपपन्ना अपि त्वयमपूर्वदर्शनः सत्त्वो ऽस्या-
नुभावेनास्माकं कारणाविशेषाः प्रतिप्रस्रब्धा इति । ते निर्मिते चित्तमभिप्रसाद्य तन्नरक-
वेदनीयं कर्म क्षपयित्वा देवमनुष्येषु प्रतिसन्धिं गृह्णन्ति यत्र सत्यानां भाजनभूता भवन्ति ।

1) Ex conject.; MS नगरेप्र°.
2) MS मन्त्रि.
3) Ex conject.; MS यावत्ते°.
4) B संघा, D corr.
5) Here B spells this word with ल्ल, *supra* (p. 64, 3) with ल.
6) Anusvāra wanting in MS.
7) B दमटटं, D and P corr.
8) MS नरकं.
9) MS न ह्येव (D °वं).

या उपरिष्टाद्गच्छन्ति ताश्चातुर्महाराजिकांस्त्रयस्त्रिंशान्यामांस्तुषितान्निर्माणरतीन्परनिर्मितवशवर्तिनो ब्रह्मकायिकान्ब्रह्मपुरोहितान्महाब्रह्मणः[1] परीत्ताभानप्रमाणाभानाभास्वरान्परीत्तशुभानप्रमाणशुभाञ्छुभकृत्स्नाननभ्रकान्पुण्यप्रसवान्बृहत्फलानबृहानतपान्सुदृशान्सुदर्शनानकनिष्ठान्देवान्गत्वा अनित्यं दुःखं शून्यमनात्मेत्युद्घोषयन्ति गाथाद्वयं च
5 भाषन्ते।

आरभध्वं निष्क्रामत युज्यध्वं बुद्धशासने।
धुनीत मृत्युनः सैन्यं नडागारमिव कुञ्जरः॥
यो ह्यस्मिन्धर्मविनये अप्रमत्तश्चरिष्यति।
प्रहाय जातिसंसारं दुःखस्यान्तं करिष्यति॥

10 अथ ता अर्चिषस्त्रिसाहस्रमहासाहस्रं लोकधातुमन्वाहिण्ड्य भगवन्तमेव पृष्ठतः पृष्ठतः समनुगच्छन्ति। तद्यदि भगवानतीतं कर्म व्याकर्तुकामो भवति भगवतः पृष्ठतो ऽन्तर्धीयन्ते। अनागतं व्याकर्तुकामो भवति पुरस्तादन्तर्धीयन्ते। नरकोपपत्तिं व्याकर्तुकामो भवति पादतले ऽन्तर्धीयन्ते। तिर्यगुपपत्तिं व्याकर्तुकामो भवति पार्ष्ण्यामन्तर्धीयन्ते।[3] प्रेतोपपत्तिं व्याकर्तुकामो भवति पादाङ्गुष्ठे ऽन्तर्धीयन्ते। मनुष्योपपत्तिं व्याकर्तुकामो भव-
15 ति जानुनो‹र›न्तर्धीयन्ते। बलचक्रवर्तिराज्यं व्याकर्तुकामो भवति वामे करतले ऽन्तर्धीयन्ते। चक्रवर्तिराज्यं व्याकर्तुकामो भवति दक्षिणे करतले ऽन्तर्धीयन्ते। देवोपपत्तिं व्याकर्तुकामो भवति नाभ्यामन्तर्धीयन्ते। श्रावकबोधिं व्याकर्तुकामो भवति आस्ये ऽन्तर्धीयन्ते। प्रत्येकां बोधिं व्याकर्तुकामो भवति ऊर्णायामन्तर्धीयन्ते। अनुत्तरां सम्यक्संबोधिं व्याकर्तुकामो भवति उष्णीषे ऽन्तर्धीयन्ते॥

20 अथ ता अर्चिषो भगवन्तं त्रिः[4] प्रदक्षिणीकृत्य भगवत ऊर्णायामन्तर्हिताः। अथायुष्मानानन्दः कृतकरपुटो भगवन्तं पप्रच्छ।

---

1) MS कान्त्रय°.
2) MS °ह्मणाः.
3) MS पाष्ण्याम° (D पार्ष्णीम°).
4) MS त्रिप्र.

नानाविधो रङ्गसहस्रचित्रो वक्त्रान्तरान्निष्कसितः कलापः।
अवभासिता येन दिशः समन्तादिवाकरेणोदयता यथैव ॥

गाथाश्च भाषते।

विगतोद्भवा दैन्यमदप्रहीणा बुद्धा जगत्युत्तमहेतुभूताः[1]।
नाकारणं[2] शङ्खमृणालगौरं स्मितमुपदर्शयन्ति जिना जितारयः ॥    5

तत्कालं स्वयमधिगम्य वीर बुद्ध्या
श्रोतॄणां श्रमणा[3] जिनेन्द्र काङ्क्षितानां।
धीराभिर्मुनिवृष वाग्भिरुत्तमाभि-
रुत्पन्नं[4] व्यपनय संशयं शुभाभिः ॥
नाकस्माल्लवणजलाद्रिराजधैर्याः[5]    10
संबुद्धाः स्मितमुपदर्शयन्ति नाथाः।
यस्यार्थे स्मितमुपदर्शयन्ति धीराः
तं श्रोतुं समभिलषन्ति ते जनौघा इति ॥

भगवानाह। एवमेतदानन्दैवमेतत्। नाहेत्वप्रत्ययमानन्द तथागता अर्हन्तः सम्यक्संबुद्धाः स्मितं प्राविष्कुर्वन्ति। पश्यस्यानन्दैभिर्गान्धर्विकैर्ममैवंविधं सत्कारं कृतम् ॥ 15 एवं भदन्त ॥ एते आनन्द गान्धर्विका अनेन कुशलमूलेन चित्तोत्पादेन देयधर्मपरित्यागेन *चापथाकालानुगतानां*[6] प्रत्येकां बोधिं समुदा[7]नीयानागते ऽध्वनि वर्णस्वरा नाम प्रत्ये-

---

1) B गजत्यु°, D and P corr.
2) Anusvāra wanting in B; D corr.
3) MS अवणा.
4) Anusvāra wanting in MS.
5) Visarga wanting in MS.
6) I have not ventured to put into the context an emendation of the corrupt compound, which most probably hides an acc. fem., not a gen. plur. M. Feer informed me of the Tibetan translation དུས་ཇི་ལྟ་བ་བཞིན་དུ. As to the whole formula cp. the *vyākaraṇa supra* p. 46, 3. 53, 17. 62, 2, pointing at *yathā* and *kāla* being in the original. According to this something like °त्यागेन च यथाकालानुगतां प्रत्येकां etc. seems to be the true reading.
7) D and P have the missing akṣara.

कबुद्धा भविष्यन्ति हीनदीनानुकम्पकाः प्रान्तशयनासनभक्ता एकदक्षिणीया लोकस्य। अयमेषां देयधर्मो यो ममान्तिके चित्तप्रसाद इति॥

भिक्षवः संशयजाताः सर्वसंशयानां छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। कानि भदन्त भगवता कु[17b]शलमूलानि कृतानि येषामयमनुभाव इति॥ भगवानाह। तथागतेनैवैतानि
5 भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि। मयैतानि[1] कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति। न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ[2] न तेजोधातौ न वायुधातावपि तूपात्तेष्वेव[3] स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च।

10 न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि[4]।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम्॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि प्रबोधनो नाम सम्यक्संबुद्धो लोक उदपादि तथागतो ऽर्हन्सम्यक्संबुद्धो विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान्[5]। स जनपदचारिकां चरन्नन्यतमां राजधानीमनुप्राप्तः।
15 अथ राज्ञ उद्यानं सर्वकुशलसंपन्नं बभूव॥ अथ स भगवांस्तदुद्यानं प्रविश्य राज्ञोनुग्रहार्थ[6]मन्यतमद्वृक्ष[7]मुपाश्रित्य निषण्णः। ततः संस्तरं प्रज्ञप्य[8] तेजोधातुं[9] समापन्नः॥ अथ राजा

---

1) MS यमेतानि.

2) B नाव्धाधौ, D corr.

3) Cp. *supra* p. 74 n. 9; B here तूपात्ते°.

4) Cp. *supra* p. 80 n. 12.

5) The virāma is wanting in B; D and C corr.

6) Ex conject,; B राज्ञा°, which P changed into °ज्ञो.

7) If the reading is right, we have yet another instance of change of gender, cp. p. 29 n. 9.

8) Ex conject.; MS प्रज्ञप्यतेतेजो°.

9) Ex conject.; MS धातुसमा°.

[1]क्षत्रियो मूर्धाभिषिक्तः स्त्रीमयेन[2] तूर्येण वाद्यमानेनोद्यानं प्रविष्टः। अथ स राजा तदुद्यान-
मनुविचरन्ददर्श भगवन्तं प्रबोधनं सम्यक्संबुद्धं प्रासादिकं प्रसादनीयं शान्तमानसं परमेण
चित्तदमव्युपशमेन समन्वागतं सुवर्णयूपमिव श्रिया ज्वलन्तं। दृष्ट्वा च पुनः प्रसादजातः स
राजा सान्तःपुरो ⟨वि⟩विधेन[3] वाद्येन वाद्यमानेन भगवन्तं ततः समाधेः प्रबोधयामास प्रणी-
तेन चाहारेण प्रतिपादितवाननुत्तरायाञ्च सम्यक्संबोधौ प्रणिधानं कृतवान्॥ 5

किं मन्यध्वे भिक्षवो योऽसौ तेन कालेन तेन समयेन राजा बभूवाहं सः। यन्मया
प्रबोधनस्य सम्यक्संबुद्धस्य पूजा कृता तेनैव हेतुना इदानीं मम गान्धर्विकैरेवंविधः स-
त्कारः कृतः। तस्मात्तर्हि भिक्षव एवं शिक्षितव्यं यच्छास्तारं सत्करिष्यामो गुरु-
करिष्यामो मानयिष्यामः पूजयिष्यामः शास्तारं सत्कृत्य गुरुकृत्य मानयित्वा पूजयित्वोप-
निश्रित्य विहरिष्याम इत्येवं वो भिक्षवः शिक्षितव्यम्॥ 10

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्॥

---

1) B क्षेत्रि°, D corr.

2) Sic MS. As to the fact, cp. *Wiener Ztschr. für die Kunde des Morgenl.* XVI, 105 n. and Buddhacarita 2, 29.

3) B सान्तःपुराविधेन (D °पुरोविधेन).

## वरद इति १८

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो ‹महा›पुण्यो[1] लाभी चीवरपिण्डपात[2]शयनासन-
5 ग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्ड‹द›स्यारामे। ग्रथ श्रावस्त्यामन्यतमः पारदारिको मलिने कर्माणि वर्तते। स राजपुरुषैर्गृहीत्वा राज्ञ उपनामितः। ततो राज्ञा ऽपराधिक इति कृत्वा वध्य उत्सृष्टः[3]॥ स राजपुरुषैर्नीलाम्बरवसनैरुद्यतशस्त्रैः करवीरमालाबद्धकण्ठे‹गु›णो[4] रथ्यावीथीचत्वरशृङ्गाटकेष्वनुश्राव्यमाणो[5] दक्षिणेन नगरद्वारेणापनीयते[6]॥

10 ग्रत्रान्तरे नास्ति किंचिद्बुद्धानां भगवतामज्ञातमदृष्टमविदितमविज्ञातम्। धर्मता खलु बुद्धानां भगवतां महाकारुणिकानां लोकानुग्रहप्रवृत्तानामेकारक्षाणां शमथविपश्यनाविहारिणां त्रिदमथवस्तुकुशलानां चतुरोघोत्तीर्णानां चतुर्ऋद्धिपादचरणतलसुप्रतिष्ठितानां[7] चतुर्षु संग्रहवस्तुषु दीर्घरात्रकृतपरिचयानां पञ्चाङ्गविप्रहीणानां पञ्चगतिसम-

---

1) महा added in D and P.

2) MS पात्र.

3) The idiom reminds one of Latin *occidendus traditur*.

4) Ex conject.; MS °कण्ठेण. Cp. the parallel passages B 95a (avad. nr. 98) and 28a (avad. nr. **30**).

5) See Index s. v. *anuçrāvayati*.

6) So B, if I read it aright. The copyists of B seem to have read there °रेणोपनीयते, which is found in DCP.

7) B प्रतिष्ठानां, D corr.

तिक्रान्तानां षडङ्गसमन्वागतानां षट्पारमितापरिपूर्णानां सप्तबोध्यङ्गकुसुमाढ्यानामष्टा-ङ्गमार्गदेशिकानां नवानुपूर्वसमापत्तिकुशलानां दशबलबलिनां दशदिक्समापूर्णयशसां दशशतवशवर्तिप्रतिवि[18a]शिष्टानां त्री रात्रेस्त्रिर्दिवसस्य[1] बुद्धचक्षुषा लोकं व्यव-लोक्य ज्ञानदर्शनं प्रवर्तते। को हीयते को वर्धते कः कृच्छ्रप्राप्तः कः संकटप्राप्तः कः संबा-धप्राप्तः कः कृच्छ्रसंकटसंबाधप्राप्तः को ऽपायनिम्नः[2] को ऽपायप्रवणः को ऽपायप्राग्भारः 5 कमहमपायादुद्धृत्य स्वर्गे मोक्षे च प्रतिष्ठापयेयं कस्य कामपङ्कनिमग्नस्य हस्तोद्धारमनु-प्रदद्यां कमार्यधनविरहितमार्यधनैश्वर्याधिपत्ये प्रतिष्ठापयेयं कस्यानवरोपितानि[3] कुशल-मूलान्यवरोपयेयं कस्यावरोपितानि[4] परिपाचयेयं ‹कस्य परिपक्वानि विमोचयेयम्›। आह च।

अप्येवातिक्रमेद्वेलां सागरो मकरालयः। 10
न तु वैनेयवत्सानां बुद्धो वेलामतिक्रमेत्॥

अथ भगवान्पूर्वाह्णे निवास्य पात्रचीवरमादाय श्रावस्तीं पिण्डाय प्राविक्षत्॥ ददर्श स पुरुषो बुद्धं भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः समलङ्कृतमशीत्यानुव्यञ्जनैर्वि-राजितगात्रं[5] व्यामप्रभालङ्कृतं सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्र-कम्। दृष्ट्वा च पुनर्भगवतः पादयोर्निपत्य भगवन्तमिदमवोचत्। वरार्हो ऽस्मि[6] भगवन्निष्टं 15 मे जीवितं प्रयच्छेति॥ ततो भगवानायुष्मन्तमानन्दमामन्त्रयते। गच्छानन्द राजानं प्रसेन-

---

1) MS त्रिरात्रेस्त्रिदि°.

2) MS °यनिमग्नः cp. *supra*, p. 31, n. 1; 72, n. 6.

3) MS °रोपितकुशल°.

4) In MS after °रोपितानि there follows a superfluous कुशलमूलानि.

5) MS व्योम, cp. *supra* p. 3, 3.

6) Ex conject. In B वराह्नोस्मि, but the stroke of the *ā* looks as if expunged, perhaps the copyist changed the former word into वरदो, which however would necessitate altering also *asmi* into *asi*. D and P have also वराह्नोस्मि, but C वरह्नस्मि. Cp. Feer, p. 81. Though *varārha* admits also the acceptation of 'very precious; very holy', and for this reason would be considered with some propriety as an epithet of Bhagavān, yet nothing prevents one taking it, in accordance with the Tibetan translation, as = 'worthy of a boon'.

जितं वद । अनुप्रयच्छ मे एतं पुरुषं प्रव्राजयामीति ॥ अथायुष्मानानन्दो येन राजा प्रसेनजि-
त्कौशलस्तेनोपसंक्रान्तः । उपसंक्रम्य राजानं प्रसेनजितं कौशलं भगवद्वचनेनोवाच । अनुजा-
नीहि भगवानेतं पुरुषं प्रव्राजयतीति ॥ भव्यरूप इति विदित्वा राज्ञा प्रसेनजित्कौशले[1]-
नानुज्ञातः ॥ स भगवता प्रव्राजित उपसंपादितश्च ॥ तेन युज्यमानेन[2] घटमानेन व्यायच्छ-
मानेनेदमेव पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः[3] शतनपतनविकि-
रणविध्वंसनधर्मतया पराहत्य सर्वक्लेशप्रहाणादर्हत्वं साक्षात्कृतम् । अर्हन्संवृत्तस्त्रैधातु-
कवीतरागः समलोष्टकाञ्चन आकाशपाणितलसमचित्तो वासीचन्दनकल्पो विद्याविदारि-
ताण्डकोशो विद्याभिज्ञा[4]प्रतिसंवित्प्राप्तो भवलाभलोभसत्कारपराङ्मुखः सेन्द्रोपेन्द्राणां दे-
वानां पूज्यो मान्यो ऽभिवाद्यश्च संवृत्तः ।

भिक्षवः संशयजाताः सर्वसंशयानां छेत्तारं बुद्धं ‹भगवन्तं› पप्रच्छुः[5] । आश्चर्यं भदन्त यद्भग-
वता सर्वं चिन्तितमात्रं समृध्यतीति ॥ भगवानाह । तथागतेनैवैतानि भिक्षवः पूर्वमन्यासु
जातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थि-
तान्यवश्यंभावीनि[6] । मयैतानि कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति[7] । न
भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ न तेजोधातौ
न वायुधातावपि तूपात्तेष्वेव[8] स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशु-
भानि च ।

---

1) B कोश°, D corr. As to the compound *Prasenajitkauçalena*, cp. *supra* p. 56, n. 8.

2) MS पूज्य° (C पुज्य°).

3) Visarga wanting in MS.

4) B विद्याभिद्याज्ञा, D corr.

5) D adds the wanting word.

6) B °भागीनि, D °भाविनी as usual wheresoever this commonplace occurs.

7) MS °भविष्यतीति। भिक्षवः, an obvious blunder.

8) Cp. *supra* p. 74 n. 9.

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि[1]।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि इन्द्रध्वजो नाम सम्यक्संबुद्धो लोक उदपादि तथागतो ऽर्हन्सम्यक्संबुद्धो विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान् । स जनपदचारिकां चरन्नन्यतमां राजधानीमनुप्राप्तः । 5 तस्यां राजधान्यां ब्राह्मणो वेदवेदाङ्गपारगो राज्ञो ऽमात्यनिकः ॥ अथेन्द्रध्वजः सम्यक्संबुद्धः पूर्वाह्णे निवास्य पात्रचीवरमादाय तां राजधानीं पिण्डाय प्राविक्षत् । अद्राक्षीत्स ब्राह्मण इन्द्रध्वजं सम्यक्संबुद्धं द्वात्रिंशता महापुरुषलक्षणैः समलङ्कृतमशीत्यानुव्यञ्जनैर्विराजितगात्रं व्यामप्रभालङ्कृतं[2] सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकम् । दृष्ट्वा च पुनर्मूलनिकृत्त[3] इव द्रुमो भगवतः पादयोर्निपत्योवाच । वरार्हो ऽस्मि[4] सुगत 10 निषी[18b]दतु भगवानयासन इति ॥ अथ भगवानिन्द्रध्वजः सम्यक्संबुद्धस्तस्यानुग्रहार्थमयासने निषण्णः । ‹अग्रासने निषण्ण›श्चेन्द्रध्वजः[5] सम्यक्संबुद्धस्तेन ब्राह्मणेन पदशतेन स्तुतः प्रणीतेन चाहारेण प्रतिपादितो ऽनुत्तरायाञ्च सम्यक्संबोधौ प्रणिधानं कृतम् ॥ तद्धेतुकं[6] यावदावर्जिता राजामात्यपौराः ॥

तत्किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन ब्राह्मणो बभूवाहं सः । 15

---

1) I follow the redaction of D, cp. *supra* p. 80 n. 12.

2) MS व्योम.

3) MS कृत्त.

4) MS वराहोस्मि, vid. *supra* p. 103, n. 6. Here, in B, a second hand has written र्दो under the syllables राहो, which addition, however, looks as if wiped away afterwards.

5) B ण्ण। श्चन्द्र, C °ण्ण। श्चेन्द्र, D °ण्णोचेन्द्र.

6) Cp. *supra* p. 76 n. 9; B तद्धेतु (here ends line 18b,1) तुकं, D and P corr. The text seems to be incomplete here; either one or more lines of the original must have dropped out before यावत्, or else reference is made to some standing formula to the effect, that Indradhvaja made a sermon on that occasion, which resulted in the conversion of many persons.

यन्मे[1] इन्द्रध्वजस्य तथागतस्य पूजा कृता तद्धैतुकं [च][2] मे संसारे ऽनन्तं सुखमनुभूतमपि य[3]-
च्चिन्तयामि यत्प्रार्थये तत्सर्वं समृध्यति। तस्मात्तर्हि भिक्षव एवं शिक्षितव्यं यच्छास्तारं
सत्करिष्यामो गुरुकरिष्यामो मानयिष्यामः पूजयिष्यामः शास्तारं सत्कृत्य गुरुकृत्य
मानयित्वा पूजयित्वोपनिश्रित्य विहरिष्याम इत्येवं वो भिक्षवः शिक्षितव्यम्॥

5 इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्॥

---

1) Here we have an instance of *me* having the function of *mayā*, see my 'Vedische und Sanskrit Syntax' § 125. Other instances occur also elsewhere in our text.

2) Ex conject.; च is superfluous, MS तद्धेतुकं च. I have corrected *taddhaitukam* (cp. *supra* p. 76 n. 9), which I accept as a substantival neuter of an adjective with the function of an adverb.

3) In B there is an erasure of two akṣaras between य and च्चि. Its copyists made श्चे (so C and P) or श्च (D) out of it. In प्रार्थये (thus D) the last akṣara in B is somewhat doubtful, P has य and C चे instead of ये. For the rest, comparing parallel places, e. g. *infra* p. 111, 5, we might expect °भूत<मिदानी>मपि.

## काशिकवस्त्रम् १६

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपात[1]शयनासनग्लानप्रत्ययभैषज्यपरिष्कारा<रा>[2]णां सश्रावकसङ्घो राजगृहे विहरति वेणुवने करन्दकनिवापे ॥ 5 यदा राज्ञा बिम्बिसारेणानेकप्राणिशतसहस्रपरिवारेण सत्यानि दृष्टानि तदा तेन कृतप्रत्युपकारसंदर्शनार्थं बुद्धपूजासंवर्तनार्थं गृहविस्तरसंदर्शनार्थं बुद्धोत्पादबहुमानसंजननार्थं च भगवान्सश्रावकसङ्घो राजकुले[3] भक्तेनोपनिमन्त्रितः । मागधकानां च पौराणामाज्ञा दत्ता भगवतो नगरप्रवेशे पुष्पगन्धमाल्यविलेपनैः पूजा कर्तव्या सर्वं च राजगृहं नगरमपगतपाषाणशर्करकठल्लं[4] व्यवस्थापयितव्यं नानापुष्पावकीर्णमुच्छ्रितध्वजपताकं[5] यावच्च 10 वेणुवनं यावच्च राजगृहमत्रान्तरा सर्वो मार्गो विचित्रैर्वस्त्रैराच्छादयितव्य इति[6] ॥ अमात्यैश्च सर्वमनुष्ठितम् ॥ ततो राजा बिम्बिसारः स्वयमेव भगवतो मूर्ध्नि शतशलाकं छत्त्रं धारयति परिशेषाः पौरा भिक्षुसहस्रस्य ॥

---

1) MS पात्र.

2) C adds रा, which is wanting in the other MSS.

3) B राजकुल, D corr., cp. *infra* p. 109, 9.

4) Anusvāra wanting in MS. Cp. also *supra* p. 97, 4.

5) B प्रताकं, P corr.

6) Ex conject.; MS तव्यमिति.

अथ भगवान्दान्तो दान्तपरिवारः[1] शान्तः शान्तपरिवारो मुक्तो मुक्तपरिवार आश्वस्त
आश्वस्तपरिवारो[2] विनीतो विनीतपरिवारोऽर्हन्नर्हत्परिवारो वीतरागो वीतरागपरि-
वारः प्रासादिकः प्रासादिकपरिवारो[3] वृषभ इव गोगणपरिवृतो गज इव कलभगणपरि-
वृतः सिंह इव दंष्ट्रिगणपरिवृतो हंस[4] इव हंसगणपरिवृतः सुपर्णीव पक्षिगण-
5 परिवृतो विप्र इव शिष्यगणपरिवृतः स्वश्व इव तुरग<गण>परिवृतः[5] शूर इव
योधगणपरिवृतो देशिक इवाध्वगगणपरिवृतः सार्थवाह इव वणिग्गणपरिवृतः[6]
श्रेष्ठीव पौरगणपरिवृतः[7] कोट्टराज इव मन्त्रिगणपरिवृतश्चक्रवर्तीव पुत्रसहस्रप-
रिवृतश्चन्द्र इव नक्षत्रगणपरिवृतः सूर्य इव रश्मिसहस्रपरिवृतो धृतराष्ट्र इव गन्धर्वगण-
परिवृतो विरूढ इव कुम्भाण्डगणपरिवृतो विरूपाक्ष इव नागगणपरिवृतो धनद इव यक्ष-
10 गणपरिवृतो वेमचित्रीवासुरगणपरिवृतः शक्र इव त्रिदशगणपरिवृतो ब्रह्मा इव ब्रह्म-
कायिकपरिवृतः स्तिमित इव जलनिधिः सजल इव जलधरो विमद इव गजपतिः[8] सुदान्तै-
रिन्द्रियैरसंक्षोभितेर्यापथप्रचारो[9]ऽनेकैरावेणिकैर्बुद्धधर्मैः परिवृतो भगवांस्तत्पुरं प्रवि-
शति[10] ॥

---

1) BCP दातो दान्ताप°, D दान्तो दान्ताप°.

2) MS °वारविनो°.

3) MS °वारवृष°, in B वृ, it seems, stands in the place of a former ऋ.

4) B हन्स इव हंसगण°, D राजहंस इव हंस°. I surmise, we have to read °हंस<राज> इव; cp. Divy. 125, 28.

स्वश्व
5) Ex conject.; B सुप्र इवातुरगणपरि, D corr., but it has अश्व, not स्वश्व. Of the other copies of B, P adopted the correction स्वश्व, C the original mistake सुप्र.

6) So D and P, who corrected B's text वणिग्जण.

7) B पौरजन°, D corr. The reverse has happened in the passage l. 11, see note 8.

8) MS गणपतिः, a corruption, I suppose, of गजपतिः as stood in the text used by the Tibetan translator. See Feer, p. 83 n. 6.

9) B प्रवरः, D and P corr.

10) This whole passage is a commonplace. See Divy. 125, 24 foll. 148, 7 foll. 182, 1 foll.

यदा च भगवता इन्द्रकीले पादो न्यस्तः तदेयं महापृथिवी षड्विकारं प्रकम्पिता ॥ भगवतः पुरप्रवेशे (1) एवंद्रूपाण्यद्भुतानि भवन्त्य[19a]न्यानि च । तद्यथा संक्षिप्तानि (2) विशा- लीभवन्ति हस्तिनः क्रोशन्ति अश्वा(3)श्च हेषन्ते ऋषभा नर्दन्ति गृहगतानि विविधवाद्यभा- ण्डानि स्वयं नदन्ति अन्धाश्चक्षूंषि प्रतिलभन्ते(4) बधिराः श्रोत्रं(5) मूकाः प्रव्याहरणसमर्था भवन्ति (6) परिशिष्टेन्द्रियविकला इन्द्रियाणि ‹परि›पूर्णानि (7) प्रतिलभन्ते मद्यमदाक्षिप्ता वि- 5 मदीभवन्ति विषपीता निर्विषीभवन्ति अन्योन्यवैरिणो मैत्रीं प्रतिलभन्ते गुर्विण्यः स्व- स्तिना प्रजायन्ते बन्धनबद्धा विमुच्यन्ते अधना धनानि प्रतिलभन्ते (8) आन्तरिक्षाश्च देवासुर- गरुडकिन्नरमहोरगा दिव्यं पुष्पमुत्सृजन्ति(9) ॥

अथ भगवानेवंविधया विभूत्या राजकुलं प्रवेष्टुमारब्धो राजा च बिम्बिसारः स्वय- मेव बहिर्द्वारशालस्थो गोशीर्षचन्दनोदकेन पाद्यं गृहीत्वा भगवतः पादौ भिक्षुसङ्घस्य च 10 प्रक्षालयति । सुखोपनिषण्णं बुद्धप्रमुखं भिक्षुसङ्घं विदित्वा शतरसेनाहारेण प्रतिपादया- मास भुक्तवन्तं काशिकवस्त्रैराच्छादितवान् । तद्धेतुकं(10) चावर्जिता मागधकाः पौराः ॥

---

1) B एवद्रू, D corr.

2) MS निशा° (in C the first akṣara is wanting).

3) श्च in B being somewhat indistinct, this aksara is variously altered in C and P and omitted in D.

4) MS °नुषि प्रतिलभ्यन्ते. Vic. (Paris MS f. 11b 11) has the same fault.

5) MS श्रोतं.

6) Ex conject.; B, it seems, परिषिष्टे°, P and C परिपि°, D परिपु°.

7) P fills up the gap at the beginning of the word. The Paris MS of Dvā-viṃçatyavadānamālā, whose tale nr. 9 corresponds to this nr. 19, has here इद्रिविकला इन्द्रियाणि परिपूणानि भवंति.

8) Ex conject.; MS अन्त°. A similar clerical error has spoiled Lalita-vistara p. 401, 6 and 15 (ed. Lefmann), instead of अमुराः कायाः read आसुराः कायाः.

9) As to this commonplace cp. Divy. 250, 23 foll. 365, 2 foll.

10) Ex conject., cp. *supra* p. 76 n. 9. MS तद्धेतुकं.

ततो भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। कुत्रेमानि भ-
गवता कुशलमूलानि कृतानि यतो भगवत एवंविधा पूजा भिक्षुसङ्घस्य चेति॥ भगवा-
नाह॥ तथागतेनैवैतानि भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसं-
भाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि[1]। मयैतानि कर्माणि कृता-
5 न्युपचितानि को ऽन्यः प्रत्यनुभविष्यति[2]। न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये
पृथिवीधातौ विपच्यन्ते नाब्धातौ[3] न तेजोधातौ न वायुधातावपि तूपात्तेष्वेव[4] स्कन्धधा-
त्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि[5]।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम्॥

10 भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि क्षेमङ्करो नाम सम्यक्संबुद्धो लोक उदपादि तथा-
गतो ऽर्हन्सम्यक्संबुद्धो विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शा-
स्ता देवमनुष्याणां बुद्धो भगवान्। स जनपदचारिकां चरन्नन्यतमां राजधानीमनुप्राप्तः।
[6]अश्रौषीद्राजा[7] क्षत्रियो मूर्धाभिषिक्तः क्षेमङ्करः सम्यक्संबुद्धो जनपदचारिकां चरन्नस्माकं
राजधानीमनुप्राप्त इति श्रुत्वा च महत्या राजर्द्ध्या[8] महता राजानुभावेन समन्वागतो येन
15 भगवान्क्षेमङ्करः सम्यक्संबुद्धस्तेनोपसंक्रान्तः। उपसंक्रम्य क्षेमङ्करस्य सम्यक्संबुद्धस्य
पादौ शिरसा वन्दित्वैकान्ते निषण्णः। एकान्ते निषण्णं राजानं क्षत्रियं मूर्धाभिषिक्तं क्षेमङ्करः

---

1) B भागीनि (D भाविनी).

2) MS °ष्यन्ति.

3) B नाब्धाधौ, D corr.

4) MS °वपि नयान्ते°, cp. *supra* p. 74 n. 9.

5) I follow the redaction of D, cp. *supra* p. 80 n. 12.

6) MS अश्रो°.

7) B °द्राज, P corr.

8) Ex conject.; MS, owing to a blunder of some copyist, राजधान्या. Cp. the parallel passage *supra* p. 86, 12.

सम्यक्संबुद्धो बोधिकरकैर्धर्मैः समादापयति ॥ अथ स राजा लब्धप्रसादः क्षेमङ्करं सम्यक्संबुद्धं राजकुले निमन्त्र्य शतरसेनाहारेण प्रतिपादयामास शतसाहस्रेण च वस्त्रेणाच्छादयामास परिनिर्वृतस्य च समन्तयोजनं स्तूपं कारितवान्कोशमुच्चत्वेन[1] ॥

किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन राजा बभूवाहं सः । यन्मया क्षेमङ्करस्य सम्यक्संबुद्धस्यैवंविधा पूजा कृता तेन मया संसारे ऽनन्तं सुखमनुभूतमिदानीं 5 तेनैव हेतुना राज्ञा बिम्बिसारेणापि[2] तथागतस्य मे एवंविधा पूजा कृता । तस्मात्तर्हि भिक्षव एवं शिक्षितव्यं यच्छास्तारं सत्करिष्यामो गुरुकरिष्यामो मानयिष्यामः पूजयिष्यामः शास्तारं सत्कृत्य गुरुकृत्य मानयित्वा पूजयित्वोपनिश्रित्य विहरिष्याम इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥ 10

---

1) D has the right reading, which in B is indistinct, the last two akṣaras being difficult to identify; P, therefore, omits them, adding the indication of a gap. — Cp. parallel places in the tales of the 7th varga.

2) Ex conject.; MS °सारेणास्य.

## दिव्यभोजनम् २०

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपात(1)शयनासनग्ला-
5 नप्रत्ययभैषज्यपरिष्काराणां <स>श्रावकसङ्घो राजगृहे विहरति वेणुव[19b]ने कलन्दकनिवापे। त(2)त्रान्यतरः श्रेष्ठी आढ्यो महाधनो महाभोगो विस्तीर्णविशालपरिग्रहो वैश्रवणधनसमुदितो वैश्रवण<धन>प्रतिस्पर्धी तीर्थ्याभिप्रसन्नश्च । स आयुष्मता महामौद्गल्यायनेनावर्जितः शासने (3)चावतारितो भगवत्यत्यर्थमभिप्रसन्नः। स च गृहपतिरुदाराधिमुक्तः(4)। तेनायुष्मान्महामौद्गल्यायन उक्तः । सहायो मे भव इच्छामि भगवतः पू(5)जां कर्तु-
10 मिति । अधिवासयत्यायुष्मान्महामौद्गल्यायनस्तस्य गृहपतेस्तूष्णीभावेन॥ अथायुष्मान्महामौद्गल्यायनस्तं गृहपतिमादाय येन भगवांस्तेनोपसंक्रान्त उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्ते निषण्णः। एकान्तनिषण्ण आयुष्मान्महामौद्गल्यायनो भगवन्तमिदमवोचत् । अयं भदन्त गृहपतिराकाङ्क्षति भगवन्तं सश्रावकसङ्घं भोजयितुं तदस्य भगवानधिवासयेदनुकम्पामुपादायेति । (6)अधिवासयति भगवांस्तस्य गृहपतेस्तूष्णीभावेन ॥ अथ स गृहपति-

1) MS पात्र.

2) B तत्रऽन्य°, D corr.

3) Ex conject.; MS शासनेसाव°.

4) Ex conject.; MS. °राधिमुक्तहस्तेना°. Cp. *supra* p. 8, 11.

5) Anusvāra wanting in MS.

6) B अधिवासयेत्यंविति the points denoting expunction, being by mistake, I suppose, put on त्य alone, as the vowel *e* and वि are likewise superfluous. C = B; the copyist of P copied mechanically °सयेविति, that of D altered it into °सयेदिति.

र्भगवतस्तूष्णीभावेनाधिवासनां विदित्वा शतरसमाहारं समुदानयति पुष्पगन्धमाल्यवि-
लेपनानि च। आयुष्मतापि महामौद्गल्यायनेन शक्रो देवेन्द्रो ऽधीष्टः क्रियतामस्य गृहप-
तेरुपसंहार इति॥ ततः शक्रेण देवेन्द्रेण वेणुवनं [1]नन्दनवनमभिनिर्मितमैरावणसुप्रति-
ष्ठितसदृशानि च नागसहस्रा<णि> * * * * * * * * * * * * * *
* * * * * * * * * * [2]वालव्यजनेन वीजयन्ति सुप्रियपञ्चशिखतुम्बुरुप्रभृ-
तीनि चानेकानि गन्धर्वसहस्राण्युपनीतानि ये[3] विचित्रैर्वाद्यविशेषैर्वाद्यं कुर्वन्ति दिव्यञ्च
सुधाभोजनम्॥ ततः स गृहपतिर्दिव्यमानुषैरुपकरणैर्भगवन्तमुपस्थाय सर्वाङ्गि[4]नं भगवतः
पादयोर्निपत्य प्रणिधानं कर्तुमारब्धो ऽनेनाहं कुशलमूलेन चित्तोत्पादेन देयधर्मपरित्या-
गेन चान्धे लोके अनायके अपरिणायके बुद्धो भूयासमतीर्णानां सत्त्वानां तारयिता अमु-
क्तानां मोचयिता अनाश्वस्तानामाश्वासयिता अपरिनिर्वृतानां परिनिर्वापयितेति।

अथ भगवांस्तस्य गृहपतेर्हेतुपरम्परां[5] कर्मपरम्पराञ्च ज्ञात्वा स्मितं प्राविः-
कार्षीत्[6]॥ धर्मता खलु यस्मिन्समये बुद्धा भगवन्तः स्मितं प्राविष्कुर्वन्ति तस्मिन्समये
नीलपीतलोहितावदाता अर्चिषो मुखान्निश्चार्य काश्चिदधस्ताद्गच्छन्ति काश्चिदुपरिष्टाद्गच्छ-
न्ति। या अधस्ताद्गच्छन्ति ताः[7] संजीवं कालसूत्रं संघातं रौरवं महारौरवं तपनं प्रतापनम-

---

1) Ex conject.; MS चन्दन°. Cp. Feer p. 87, n. 2. In Açokāv. nr. 15, which corresponds to this avadāna, *Nandana* is likewise named (f. 227 a 1).

2) The context plainly shows, there must be here a gap in MS. The Tibetan translator had the text still intact before him. In Feer's translation (p. 87) the missing portion is thus rendered: 'sont amenés et introduits; ils supportent un baldaquin valant cent, qui s'élève au-dessus du Buddha et de la confrérie de ses Bhixus; plusieurs milliers de filles des dieux sont aussi amenées et introduites'. But I greatly doubt, whether the author of Açokāv., who subjoins Tumburu and the other Gandharvas immediately to the great elephants, had a more complete text before him than ours. With him, it is the elephants who fan the Lord! (f. 228 a 5).

3) MS येर्वि°.

4) Sic MS.

5) Anusvāra wanting in MS.

6) Sic MS. Cp. *supra* p. 10 n. 1 and p. 25 n. 1.

7) B तासंज्ञो°, D corr.

वीचिमर्बुदं निरर्बुदमटटं[1] हहवं हुहुवमुत्पलं पद्मं[2] महापद्मं नरकान्[3]गत्वा ये उष्णनरका-
स्तेषु शीतीभूता निपतन्ति ये शीतनरकास्तेषूष्णीभूता[4] निपतन्ति । तेन तेषां सत्त्वानां का-
रणाविशेषाः प्रतिप्रश्रभ्यन्ते । तेषामेवं भवति । किं नु वयं भवन्त इतश्च्युता आहो स्विद्-
न्यत्रोपपन्ना इति । तेषां प्रसादसंजननार्थं भगवान्निर्मितं विसर्जयति[5] । तेषां निर्मितं दृष्ट्वैवं
5 भवति । न ह्येव[6] वयं भवन्त[7] इतश्च्युता नाप्यन्यत्रोपपन्ना अपि त्वयमपूर्वदर्शनः सत्त्वो ऽस्या-
नुभावेनास्माकं कारणाविशेषाः प्रतिप्रश्रब्धा इति । ते निर्मिते चित्तमभिप्रसाद्य तन्नरक-
वेदनीयं क‹र्म›[8] क्षपयित्वा देवमनुष्येषु प्रतिसन्धिं गृह्णन्ति यत्र सत्यानां भाजनभूता भवन्ति ।
या[9] उपरिष्टाद्गच्छन्ति ताश्चातुर्महाराजिकां[10]स्त्रायस्त्रिंशान्यामांस्तुषितान्निर्माणरतीन्परनि-
र्मितवशवर्तिनो ब्रह्मकायिकान्ब्रह्मपुरोहितान्महाब्रह्मणः[11] परीत्ताभानप्रमाणाभानाभा-
10 स्वरान्परीत्तशुभानप्रमाणशुभाञ्छुभकृत्स्नाननभ्रकान्पुण्यप्रसवान्बृहत्फलान[12]‹बृहान›तपा-
न्सुदृशान्सुदर्शनानकनिष्ठान्देवान्गत्वा अनित्यं दुःखं शून्यमनात्मेत्युद्घोषयन्ति गाथाद्वयं
च भाषन्ते ।

---

1) MS निरवुदं अटटं (D निर्वुदं).

2) Anusvāra wanting in MS.

3) MS नरकं. Cp. *supra* p. 4 n. 7.

4) B °कास्तेउष्णीभूत्वा, D corr.

5) Açokāv. f. 227b 7 paraphrases this as follows:

भगवान्निर्मितं बुद्धरूपं तत्र व्यसर्जत ।
तत्र तं निर्मितं बुद्धं दृष्ट्वा etc.

Cp. my observation in W. Z. XVI, 116.

6) MS ह्यैव.

7) MS भदन्त इ°.

8) B कतेपयित्वा, D corr.

9) MS ये.

10) Sic MS, perhaps the good orthography. Cp. *supra* p. 25 n. 11.

11) MS ब्रह्माणाः.

12) B °हृत्पला°, D corr.

13) MS शुन्य°.

आरभध्वं निष्क्रामत युज्यध्वं बुद्धशासने।
धुनीत मृत्युनः सैन्यं नडागारमिव कुञ्जरः॥
यो ह्य[20a]स्मिन्धर्मविनये अप्रमत्तश्चरिष्यति।
प्रहाय जातिसंसारं दुःखस्यान्तं करिष्यति॥

अथ ता अर्चिषस्त्रिसाहस्रमहासाहस्रं लोकधातुमन्वाहिण्ड्य भगवन्तमेव पृष्ठतः 5
‹पृष्ठतः› समनुगच्छन्ति। तद्यदि भगवानतीतं कर्म व्याकर्तुकामो[1] भवति भगवतः पृष्ठतो ऽन्तर्धीयन्ते। अनागतं व्याकर्तुकामो भवति पुरस्तादन्तर्धीयन्ते। नरकोपपत्तिं व्याकर्तुकामो भवति पादतले ऽन्तर्धीयन्ते। तिर्यगुपपत्तिं व्याकर्तुकामो भवति पार्ष्ण्यामन्तर्धीयन्ते। प्रेतोपपत्तिं व्याकर्तुकामो भवति पादाङ्गुष्ठे ऽन्तर्धीयन्ते। मनुष्योपपत्तिं व्याकर्तुकामो भवति जानुनो‹र›न्तर्धीयन्ते। बलचक्रवर्तिराज्यं[2] व्याकर्तुकामो भवति वामे करतले ऽन्तर्धीयन्ते। 10
चक्रवर्तिराज्यं व्याकर्तुकामो भवति दक्षिणे करतले ऽन्तर्धीयन्ते। देवोपपत्तिं व्याकर्तुकामो भवति नाभ्यामन्तर्धीयन्ते। श्रावकबोधिं व्याकर्तुकामो भवति आस्ये ऽन्तर्धीयन्ते। प्रत्येकां बोधिं व्याकर्तुकामो भवति [3]ऊर्णायामन्तर्धीयन्ते। अनुत्तरां सम्यक्संबोधिं व्याकर्तुकामो भवति उष्णीषे ऽन्तर्धीयन्ते॥

अथ ता अर्चिषो भगवन्तं त्रिः प्रदक्षिणीकृत्य भगवत उष्णीषे ऽन्तर्हिताः। अथायुष्मानानन्दः कृतकरपुटो भगवन्तं पप्रच्छ। 15

नानाविधो रङ्गसहस्रचित्रो वक्त्रान्तरान्निष्क्रमितः कलापः।
अवभासिता येन दिशः समन्ताद्दिवाकरेणोदयता यथैव॥

गाथाश्च भाषते।

विगतोद्भवा दैन्यमदप्रहीणा बुद्धा जगत्युत्तमहेतुभूताः। 20
नाकारणं शङ्खमृणालगौरं[4] स्मितमुपदर्शयन्ति जिना जितारयः॥

---

1) B मामो, D and P corr.
2) B राज्यव्या, D corr.
3) MS उर्णा°.
4) B गौरस्मि, D corr.

तत्कालं स्वयमधिगत्य[1] वीर बुद्ध्या

श्रोतॄणां[2] श्रमण[3] जिनेन्द्र काङ्क्षितानां ।

धीराभिर्मुनिवृष वाग्भिरुत्तमाभि-

रुत्पन्नं व्यपनय[4] संशयं शुभाभिः ॥

5 नाकस्माल्लवण[5]जलाद्रिराजधैर्याः

संबुद्धाः स्मितमुपदर्शयन्ति नाथाः ।

यस्यार्थे स्मितमुपदर्शयन्ति धीराः

तं श्रोतुं समभिलषन्ति ते जनौघा इति ॥

भगवानाह । एवमेतदानन्दैवमेतत् । नाहेत्वप्रत्ययमानन्द तथागता अर्हन्तः स-
10 म्यक्संबुद्धाः स्मितं प्राविष्कुर्वन्ति । पश्यस्यानन्दानेन गृहपतिना ममैवंविधं सत्कारं कृ-
तम् ॥ एवं भदन्त ॥[6] एषानन्द[7] गृहपतिरनेन कुशलमूलेन चित्तोत्पादेन देयधर्मपरित्यागेन
च त्रिकल्पासंख्येयसमुदानीतां बोधिं समुदानीय महा[8]करुणापरिभाविताः[9] षट् पारमिताः
परिपूर्य दिव्यानदो नाम सम्यक्संबुद्धो भविष्यति दशभिर्[10]बलैश्चतुर्भिर्वैशारद्यैस्त्रिभिरावे-
णिकैः स्मृत्युपस्थानैर्महाकरुणाया च । अयमस्य देयधर्मो यो ममान्तिके चित्तप्रसादः ॥
15 एतच्च प्रकरणं राजा बिम्बिसारो मागधकाश्च परिचारकाः श्रुत्वा[11] परं विस्मयमापन्नाः[9] ॥[12]

---

1) Sic BC; DP °गम्य.

2) BC शोतृणां, DP श्रोतृणां.

3) MS श्रवण.

4) MS °त्पन्नव्यपनयशंसय (D संशय)शु°.

5) B लवन, D corr.

6) MS एवं भगवतः ए° (visarga is wanting in P).

7) Irregular sandhi, cp. *supra* p. 20, n. 6.

8) महा is put twice in B; D and P corr.

9) Visarga wanting in MS.

10) B दशभित्र°, D corr.

11) MS have a superfluous and meaningless च between श्रुत्वा and परं.

12) This sentence is wanting in Feer's translation, by mistake, as M. Feer

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। पश्य भगवन्यावद्नेन गृहपतिना भगवान्सश्रावकसङ्घो दिव्यमानुषीभिर्ऋद्धिभिरभ्यर्चित इति ॥ भगवानाह । तथागतेनैवैतानि भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि[1]। मयैतानि[2] कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति। न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते[3] नाब्धातौ[4] न तेजोधातौ न वायुधातावपि तूपात्तेष्वेव[5] स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च। 5

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि[6]।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि पूर्णो नाम सम्यक्संबुद्धो लोक उदपादि तथागतो 10 ऽर्हन्सम्यक्संबुद्धो विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान्। अथ पूर्णः सम्यक्संबुद्धो [20b] जनपदचारिकां चरन्नन्यतमां राजधानीमनुप्राप्तः ॥ अश्रौषीद्राजा[7] क्षत्रियो मूर्धाभिषिक्तः पूर्णः सम्यक्संबुद्धो जनपदचारिकां चरन्नस्माकं[8] राजधानीमनुप्राप्त इति श्रुत्वा च पुनर्महत्या राजर्द्ध्या महता राजानुभा-

---

informed me, for it is found also in the Tibetan version. And in Açokāv. f. 228 b 5 we find its metrical counterpart:

एतत्प्रकरणं श्रुत्वा बिम्बिसारो नराधिपः।
पौरलोकाश्च सर्वेऽपि परं विस्मयमागमन् ॥

1) BP गीनि, C गिनि, D विनी.

2) MS यमेतानि (C यम°).

3) B विपर्य्यन्ते, D corr. Cp. *supra* p. 74, n. 7.

4) B नाब्धाधौ, DP corr.

5) Cp. *supra*, p. 74, n. 9.

6) All MSS have here कर्माण्यपि कल्पशतैरपि. Cp. *supra* p. 74, n. 13.

7) MS अश्रोषीराजा (D °षीद्रा°).

8) Ex conject.; cp. *supra*, p. 69, 9. 81, 4. 86, 12. 110, 13. MS (owing, it seems, to a blunder of the copyist of A) चरन्नन्यतमां.

वेन समन्वागतो येन पूर्णः सम्यक्संबुद्धस्तेनोपसंक्रान्तः । उपसंक्रम्य पूर्णस्य सम्यक्संबुद्धस्य पादौ शिरसा वन्दित्वैकान्ते निषण्णः । एकान्ते निषण्णं राजानं क्षत्रियं मूर्धाभिषिक्तं पूर्णः सम्यक्संबुद्धो बोधिकरकैर्धर्मैः समादापयति ॥ अथ राजा क्षत्रियो मूर्धाभिषिक्तः पूर्णं सम्यक्संबुद्धं सश्रावकसङ्घं त्रैमास्यं चीवरपिण्डपात[1]शयनासनग्लानप्रत्ययभैषज्यपरिष्कारैरुपनिमन्त्रितवान् । अधिवासितं च पूर्णेन सम्यक्संबुद्धेन राज्ञस्तूष्णीभावेन । अथ राजा क्षत्रियो मूर्धाभिषिक्तः पूर्णस्य सम्यक्संबुद्धस्य तूष्णीभावेनाधिवासनां विदित्वा त्रैमास्यं चीवरपिण्डपात[1]शयनासनग्लानप्रत्ययभैषज्यपरिष्कारैरुपस्थाय भगवतो रत्नमयप्रतिमां कारयित्वा बुद्धकर्षं कारितवान्यत्रानेकैः प्राणिशतसहस्रैर्महा[2]प्रसादो लब्धः[3] । तद्धेतु तत्प्र[4]त्ययं च ते परिनिर्वृताः ॥

किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन राजा बभूवाहं सः । यन्मया पूर्णस्य [5]सम्यक्संबुद्धस्य तादृशी पूजा कृता तेन मे संसारे ऽनन्तं सुखमनुभूतं तेनैव च हेतुना तथागतस्य च मे श्रेष्ठिना शक्रेण च ईदृशी पूजा कृता । तस्मात्तर्हि भिक्षव एवं शिक्षितव्यं यच्छास्तारं सत्करिष्यामो गुरुकरिष्यामो मानयिष्यामः पूजयिष्यामः शास्तारं सत्कृत्य गुरुकृत्य मानयित्वा पूजयित्वोपनिश्रित्य विहरिष्याम इत्येवं ‹वो› भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवानात्त[6]मनसस्ते च भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

1) MS पात्रैश° (C त्रश°) the first time; at l. 7 all MSS पात्रश°.

2) B सहस्त्रैमहा, P corr.

3) B लब्धां, the anusv. perhaps *sec. manu*, DP लब्ध ।, C लब्धं ।

4) Ex conject.; B तद्धेतुकत्प्रत्य°, in D and P this has been wholly corrupted.

5) B समम्य°, D and P corr.

6) B °वान्नात्त, D corr.

# तृतीयो वर्गः ॥

## चन्दन इति २१ ॥ [1]

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपात[2]शयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घो मगधेषु जनपदेषु चारिकां चरन्गङ्गातीरमनुप्राप्तः। तेन खलु पुनः समयेन गङ्गातीरस्य नातिदूरे स्तूपमवरुग्णं[3] वातातपाभ्यां परिशीर्णं भिक्षुभिर्दृष्ट्वा भगवान्पृष्टः। कस्य भगवन्नयं स्तूप इति॥ भगवानाह। चन्दनो नाम प्रत्येकबुद्धो बभूव। तस्येति॥ भिक्षव ऊचुः। कुतो भगवंश्चन्दनस्य प्रत्येकबुद्धस्योत्पत्तिर्[4]नामाभिनिर्वृत्ति[5]श्चेति॥ भगवानाह। इच्छथ यूयं भिक्षवः श्रोतुं यथा चन्दनस्य प्रत्ये-

---

1) In MS this *uddāna* of the third varga precedes: चन्दनो ह्यथ पद्मश्च चक्रं दशशिरास्तथा। सूक्ष्मीत्वक्कोतदीप्तिश्च [read सूक्ष्मत्वक्को°] नाविका गन्धमादनः। निर्मलो वल्गु‹स्वर›श्च वर्गो [B वर्गे, D corr.] भवति [pronounce: *bhoti*] समुद्दितः. As to the 7th title नाविकाः, it is not clear whether B has नावि° or नाधि°, the copyists, to be sure, read नाधि°, since DCP have नाधिका.

2) MS पात्र.

3) MS रुग्नं. Likewise K. f. 16b 8 स्तूपं विरुग्नितं.

4) MS °त्पत्तिनामा°.

5) B has here first अभिनिवृत्तिश्च, afterwards अभिनिर्वृ°, D has the second orthography both times. I believe, अभिनिर्वृ° is the right orthography, as it is favoured by reasons of etymology and by comparing Pāli *abhinibbatto* and the like. Cp. W. Z. XVI, 112.

कबुद्धस्योत्पत्तिर्नामाभिनिर्वृत्तिश्च[1] ॥ एवं भदन्त ॥ तेन हि भिक्षवः शृणु<त> साधु च सुष्ठु च
मनसि कुरु<त> भाषिष्ये ॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि[2] वाराणस्यां नगर्यां ब्रह्मदत्तो नाम राजा राज्यं कार-
यति ऋद्धं[3] च स्फीतं च क्षेमं च सुभिक्षं[4] चाकीर्णबहुजनमनुष्यं च प्रशान्तकलिकलहडिम्ब-
5 डमरं[5] तस्कररोगापगतं शालीक्षुगोमहिषीसंपन्नं धार्मिको धर्मराजो[6] धर्मेण राज्यं कारय-
ति ॥ सो ऽपुत्रः पुत्राभिनन्दी शिववरुणकुबेरशक्रब्रह्मादीनन्यांश्च[7] देवताविशेषानाया-
चते । तद्यथारामदेवता वनदेवताश्चत्वरदेवताः शृङ्गाटकदेवता बलिप्रतिग्राहिका देवताः
सहजाः सहधार्मिका नित्यानुबद्धा अपि देवता आ[21a]याचते । अस्ति चैष लोके प्रवादो
यदायाचनहेतोः पुत्रा जायन्ते दुहितरश्चेति । तच्च नैवम् । यद्येवमभविष्यदेकैकस्य पुत्रस-
10 हस्रमभविष्यत्तद्यथा[8] राज्ञश्चक्रवर्तिनः । अपि तु त्रयाणां स्थानानां संमुखीभावात्पुत्रा
जायन्ते दुहितरश्च <। कतमेषां त्रयाणाम् । मातापितरौ रक्तौ भवतः संनिपतितौ माता
कल्या भवति ऋतुमती गन्धर्वश्च प्रत्युपस्थितो भवति । एषां त्रयाणां स्थानानां संमुखीभा-
वात्पुत्रा जायन्ते दुहितरश्च> ॥ स चैवमायाचनपरस्तिष्ठति तस्य चोद्याने महापद्मिनी ।
तत्र पद्ममतिप्रमाणं जातम् । तद्दिवसे दिवसे वर्धते न तु फुल्लति ॥ तत आरामिकेण राज्ञे
15 निवेदितम् । राज्ञा उक्तः परीक्ष्यतामेतत्पद्ममिति[9] ॥ यावदपरेण समयेन सूर्योदये तत्पद्मं
विकसितं तस्य च पद्मस्य कर्णिकायां दारकः पर्यङ्कं बद्ध्वावस्थितः अभिरूपो दर्शनीयः

---

1) MS °त्पत्तिनामा°.

2) In B ध्वनि is put twice, D corr.

3) MS ऋद्धिश्च.

4) B चावकीर्णा वहु°, D चाकोर्णा वहु°. Cp. Divy. 98, 14.

5) Ex conject.; MSS everywhere omit in this commonplace the anusv., which is, however, indispensable for the understanding.

6) MS राजा.

7) MS न्याश्च.

8) MS °त्तद्यथा. I have changed my mind (cp. *supra* p. 13, n. 4), and now I consider the plural, as is found in MS, faulty, since it is not likely the neglect of the rule of sandhi should be imputed to the author of our text.

9) MS परीक्षता°; K. f. 16b 8 has the right form परीक्ष्यतां.

प्रासादिको गौरः[1] कनकवर्णश्छत्राकारशिराः प्रलम्बबाहुर्विस्तीर्णललाट उच्चघोषः[2] संगतभ्रूस्तुङ्गनासः द्वात्रिंशता महापुरुषलक्षणैः समलङ्कृतो[3] ऽशीत्यानुव्यञ्जनैर्विराजितगात्रः। तस्य मुखात्पद्मगन्धो वाति शरीराच्च चन्दनगन्धः॥ तत आरामिकेण राज्ञे निवेदितम्। ततो राजा सामात्यः सान्तःपुरश्च[4] तदुद्यानं गतः। सहदर्शनात्तेन दारकेण राजा संभाषित एहि तात अहं ते ऽपुत्रस्य पुत्र इति। ततो राजा हृष्टतुष्टप्रमुदित उवाच एवमेव पुत्र यथा वदसीति॥ ततो राजा पद्मिनीमवगाह्य तं दारकं पद्मकर्णिकायां[5] गृहीत्वा पाणितले स्थापितवान्॥ यत्र य‹त्र› स दारकः पादौ स्थापयति तत्र ‹तत्र› पद्मानि प्रादुर्भवन्ति[6]। ततस्तस्य चन्दन इति नाम कृतम्॥

यदा चन्दनो दारको ऽनुपूर्वेण महान्संवृत्तः तदा नागरै राजा विज्ञप्तः। इहास्माकं देव नगरपर्व प्रत्युपस्थितं तदर्हति देवश्चन्दनं कुमारमुत्स्रष्टुमस्माभिः[7] सह पर्वानुभविष्य-

---

1) MS गौरवः. Cp. Divy. 2, 26.

2) I doubt as to the correctness of this word. In other instances, where the commonplace recurs, there is some difference. In avad. nr. 24 it is written in B °घोणाः, in nr. 38 °घोशः, in nr. 75 °घोषणाः, in nr. 36 it looks rather indistinct, °घोणाः or °घोशः. Feer translates everywhere 'ayant la voix haute', save in avad. nr. 36 (p. 132, 19), where he has 'ayant les narines saillantes'. This presupposes skrt. *uccaghoṇa*, the other version on the contrary *uccaghoṣa*. In the Divy., where the commonplace occurs six times, I believe, the epithet in question is wanting four times (p. 2, 26. 26, 3. 58, 3 and 330, 9); it is once found as *uccaghoṣaṇaḥ* (p. 441, 9) and once as *uccaghoṇaḥ* (p. 523, 17, but with the variant °*ghoṣaḥ*).

3) MS समलंकृतमशी°....गात्रं.

4) MS सान्तपरश्च (D शा°).

5) Query कर्णिकाया? The author, however, of Kalpadrumāv. read the locat. °*kāyām*, since he paraphrased it by पद्मकर्णिकासीनं (K f. 17 a 6).

6) My additions are confirmed by K f. 17 a 7 यत्र यत्रैव पादौ स चन्दनो निदधौ भुवि। तत्र तत्रैव पद्मानि प्रादुर्भवन्ति सर्वत्र॥

7) Ex conject. (cp. Feer p. 94, 14 'accorder' and K f. 17a 8 तदर्हसि महाराजन्नु(sic)त्स्रष्टुं चन्दनं शिशुं); MS कुमारमुत्प्रच्छुम° (D °रमुन्प्रयेच्छ अ°).

ति [1]पर्वैश्च सर्वमधिष्ठानमलङ्करिष्यतीति ॥ राजाह । एवमस्त्विति ॥ ततश्चन्दनः सर्वा-
लङ्कारविभूषितोऽमात्यपुत्रपरिवृतो विविधैर्वाद्यैर्वाद्यमानै[2] राजकुलाद्बहिरुपयाति नग-
रपर्व प्रत्यनुभवितुम् । तत्र तस्य गच्छतः पदविन्यासे पदविन्यासे पद्मानि प्रादुर्भवन्ति
दर्शनीयानि मनोरमाणि च । तान्यर्करश्मिभिः स्पृष्टमात्राणि [3]म्लायन्ति शुष्यन्ति ॥

5 अथ तस्य शुद्धसत्त्वस्य कल्याणाशयस्य पूर्वबुद्धावरोपितकुशलमूलस्य तद्दर्शनाद्यो-
निशो मनसिकार उत्पन्नः । यथेमानि पद्मानि उत्पन्नमात्राणि शोभन्ते ऽर्करश्मिपरितापि-
तानि म्लायन्ति शुष्यन्ति एवमेतदपि शरीरमिति ॥ तस्यैवं चिन्तयतस्तुलयत [4]उपपरीक्षमा-
णस्य सप्तत्रिंशद्बोधिपक्ष्यधर्मा[5] अभिमुखीभूताः । तेन तस्यैव जनकायस्य मध्ये स्थितेन
प्रत्येकबोधिः साक्षात्कृता ॥ यावच्छुद्धावासकायिकैर्देवैस्तस्मै [6]काषायाण्युपनामितानि[7] ।
10 तानि च प्रावृत्य [8]गगनतलमुत्पतितो विचित्राणि च प्रातिहार्याणि कर्तुं प्रवृत्तो यद्दर्शना-
द्राजामात्यनैगमसहायेन महान्प्रसादः प्रतिलब्धो विचित्राणि च कुशलमूलान्यवरोपि-
तानि ॥

भगवानाह । अतश्चन्दनस्य प्रत्येकबुद्धस्योत्पत्तिर्नामाभिनिर्वृत्तिश्चेति[9] ॥ भिक्षवो
भगवन्तं पप्रच्छुः । कानि भदन्त चन्दनेन प्रत्येकबुद्धेन कर्माणि कृतानि येनास्य शरीरं सुग-

---

1) Ex conject. (cp. Feer p. 94, 15 'il participera avec nous à la fête'); MS सहपर्वस्तेभवि° (C सहपर्वतेभवि°).

2) MS वाद्यमनै (D °मनेकै).

3) B ग्लायन्ति, D corr., cp. *infra* l. 7.

4) MS उपपरीक्ष्य°.

5) Sic MS. I doubt the genuineness of this reading, and comparing Divy. 350, 14 and *infra* avad. nr. 24 (p. 136, 7), I surmise the author wrote बोधिपक्षा धर्मा.

6) MS काशा°.

7) MS उपनामपितानि. As to my correction, which assumes the author has written here correct Sanskrit, cp. e. g. Divy. 22, 14 and 67, 12.

8) Sic MS.

9) MS स्योत्पत्तिनामाभिनिवृत्तिश्चेति.

न्धि तीक्ष्णेन्द्रियश्चेति ॥ भगवानाह । काश्यपे भगवति प्रव्रजितो बभूव तत्रानेन केशनखस्तूपे[1] गन्धावसेकः कृतः पुष्पाणि चात्रारोपितानि प्रत्येकबोधौ चानेन मार्गो भावितः । ‹तस्मात्तर्हि भिक्षव› एवं शिक्षितव्यं यच्छास्तारं सत्करिष्यामो गुरुकरिष्यामो मानयिष्यामः पूजयिष्यामः शास्तारं सत्कृत्य गुरुकृत्य मानयित्वा [2]पूजयित्वोपनिश्रित्य विहरिष्याम इत्येवं वो[3] भिक्षवः शिक्षितव्यम् ॥ 5

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

1) Ex conject.; MS स्तूप.

2) B मानयित्वा पूजयित्वा पूजयित्वो°, CD corr.

3) B वा, P corr.

## पद्म इति २२ ॥

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिस्सार्थवाहैर्दे[1]वैर्नागैर्यक्षैरसुरैर्ग[21b]रुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुड-किन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपात[2]शयनास-
5 नग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्ड-दस्यारामे ॥ आचरितमेतन्मध्यदेशे यदारामिकाः पद्मान्यादाय[3] वीथीं गत्वा विक्रीणते[4] ॥ अथ भगवान्पूर्वाह्णे निवास्य पात्रचीवरमादाय श्रावस्तीं पिण्डाय प्राविक्षत्। अन्यतमा च[5] स्त्री दारकं स्वभुजाभ्यामादाय[6] वीथीमवतीर्णा। ददर्श च स दारको बुद्धं भगवन्तं द्वात्रिं-

---

1) MS वाहैर्दे.

2) MS पात्र.

3) Ex conject.; MS पद्माभ्यामादाय.

4) Ex conject.; MS विक्रीयते. The ātmanepada of *vi + krī* has been also corrupted in MS in the opening of tale 7, cp. *supra* p. 36, 11. That it occurs in Sanskrit Buddhist texts, is plain from Divy. 352, 14. 382, 13.

5) MS अन्यतमश्च.

6) Ex conject.; MS सुभगेना°, an evidently corrupted reading. If the Tibetan version, which according to Feer 96 n. 2 has པང་ན་ «sur son sein», has here given a literal translation, सभगेन must be a depravation of such a word as अङ्केन, as is stated by Feer. But this is not very probable. In the paraphrase of the Kalpadrum. (f. 102b 3), it is simply said that the woman had a child with her — स्त्र्येका तत्रादायैकदारकं — and there the child is to be supposed of a more advanced age, for when he sees the Buddha, he catches the lotus and भगवतः पुरो गत्वा नत्वा परिसमक्षिपत्. Should the author of that avadānamālā have altered this point of the tale because the text he used was already corrupted in the word सुभगेन?

शता महापुरुषलक्षणैः समलङ्कृतमशीत्या चानुव्यञ्जनैर्विराजितगात्रं व्यामप्रभालङ्कृतं[1] सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकम् । दृष्ट्वा च[2] पुनः प्रसादजातः सहसा[3] बाहुमभिप्रसार्यारामिकसकाशात्पद्मं गृहीत्वा भगवतो मूर्ध्नि प्रक्षिप्त⟨वान्⟩[4] । ततस्तत्पद्मं शकटचक्रमात्रं भूत्वोपरि विहायसि स्थितं भगवन्तं च गच्छन्तमनु[5] गच्छति तिष्ठन्तं तिष्ठति ॥ ततो भगवता[6] पद्मरागसदृशा प्रभा उत्सृष्टा यया सकला श्रावस्ती अवभासिता तद्धैतुकं[7] च राजामात्यपौरा आवर्जिताः ॥ 5

ततो भगवता स्मितमुपदर्शितम् । धर्मता खलु यस्मिन्समये बुद्धा भगवन्तः स्मितं प्राविष्कुर्वन्ति तस्मिन्समये नीलपीतलोहितावदाता अर्चिषो मुखान्निश्चार्य काश्चिदधस्ताद्गच्छन्ति ⟨काश्चिदुपरिष्टाद्गच्छन्ति⟩ । या अधस्ताद्गच्छन्ति ताः संजीवं कालसूत्रं संघातं रौरवं ⟨महारौरवं⟩[8] तपनं प्रतापनमवीचिमर्बुदं निरर्बुदमटटं हहवं हुहुवमुत्पलं पद्मं 10

---

Now, I think, the superfluous syllable ‑याम् put in our mss. a little higher (see p. 124, n. 3) must have its place here, in which case instead of the meaningless words सुभगेनादाय there may appear what seems to be the genuine reading स्वभुजाभ्यामादाय 'taking the child in her arms'. Cp. R f. 142a 3 ततस्तं दारकं नवा स्वभुजाभ्यां समयहीत्. Moreover, Prof. De Groot informs me, the Chinese version expressly states that the woman was in the street, holding the child within her arms 抱一小兒.

1) B व्योम, P corr.

2) Ex conject.; MS भद्रकं च दृष्ट्वा पुनः.

3) Ex conject.; MS सहस्राद्वा°, in B the stroke of the *r* in स्रा seems to be added by a second hand. K. f. 102b 9 has सहसा पद्ममेकं तूपादायारामपालकात्.

4) Ex conject.; MS प्रक्षिप्तस्ततस्त°.

5) If the text is here genuine, *anu* must be a postpos., not a prefix. Yet cp. *infra*, p. 138.

6) MS भगवतो. — Cp. K. f. 103a 2 ततो भगवता..... आभा समुत्सृष्टा.

7) Ex conject., cp. *supra*, p. 76, 7; MS तद्धेतुकं च. The passage from *taddhai°* to *āvarjitāḥ* is not found in Feer's translation.

8) D adds the missing word.

महापन्नं नरकान्गत्वा[1] ये उष्णनरकास्तेषु शीतीभूता निपतन्ति ये शीतनरकास्तेषूष्णीभूता निपतन्ति। तेन तेषां सत्त्वानां कारणाविशेषाः प्रतिप्रस्रभ्यन्ते। तेषामेवं भवति। किं नु वयं भवन्त[2] इतश्च्युता आहो[3] स्विदन्यत्रोपपन्ना इति। तेषां प्रसादसंजननार्थं[4] भगवान्निर्मितं विसर्जयति। तेषां निर्मितं दृष्ट्वैवं भवति। न ह्येव वयं भवन्त इतश्च्युता नाप्यन्य-
5 त्रोपपन्ना अपि त्वयमपूर्वदर्शनः सत्त्वो ऽस्यानुभावेनास्माकं कारणाविशेषाः प्रतिप्रस्रब्धा इति। ते निर्मिते चित्तमभिप्रसाद्य तन्नरकवेदनीयं कर्म क्षपयित्वा देवमनुष्येषु प्रतिसन्धिं गृह्णन्ति यत्र सत्यानां भाजनभूता भवन्ति। या उपरिष्टाद्गच्छन्ति ताश्चातुर्महाराजिकांस्त्रयस्त्रिंशान्यामांस्तुषितान्निर्माणरतीन्परनिर्मितवशवर्तिनो ब्रह्मकायिकान्ब्रह्मपुरोहितान्महाब्रह्मणः परीत्ताभानप्रमाणाभानाभास्वरान्परीत्तशुभान[5]प्रमाणशुभाञ्छुभकृत्स्नाननभ्र-
10 कान्पुण्यप्रसवान्बृहत्फलानबृहानतपान्सुदृशान्सुदर्शनानकनिष्ठान्देवान्गत्वा अनित्यं दुःखं शून्यमनात्मेत्युद्घोषयन्ति गाथाद्वयं च भाषन्ते।

आरभध्वं निष्क्रामत युज्यध्वं बुद्धशासने।
धुनीत मृत्युनः सैन्यं नडागारमिव कुञ्जरः॥
यो ह्यस्मिन्धर्मविनये अप्रमत्तश्चरिष्यति।
15 प्रहाय जातिसंसारं दुःखस्यान्तं करिष्यति॥

अथ ता अर्चिषस्त्रिसाहस्रमहासाहस्रं लोकधातुमन्वाहिण्ड्य भगवन्तमेव पृष्ठतः पृष्ठतः समनुगच्छन्ति। तद्यदि भगवानतीतं कर्म व्याकर्तुकामो भवति भगवतः पृष्ठतो ऽन्तर्धीयन्ते। अनागतं व्याकर्तुकामो भवति पुरस्तादन्तर्धीयन्ते। नरकोपपत्तिं व्याकर्तुकामो भवति पादतले ऽन्तर्धीयन्ते। तिर्यगुपपत्तिं व्याकर्तुकामो भवति पार्ष्ण्यामन्तर्धीयन्ते।

1) MS नरकं ग°.
2) MS भदन्त.
3) MS अहो.
4) B संजनार्थं, D corr.
5) MS °स्वरापरी°.

प्रेतोपपत्तिं व्याकर्तुकामो भवति पादाङ्गुष्ठे ऽन्तर्धीयन्ते। मनुष्योपपत्तिं व्याकर्तुकामो भवति जानुनो‹र›न्तर्धीयन्ते। बलचक्रवर्तिराज्यं व्याकर्तुकामो भवति वामे करतले ऽन्तर्धीयन्ते। चक्रवर्तिराज्यं व्याकर्तुकामो भवति दक्षिणे करतले ऽन्तर्धीयन्ते। देवोपपत्तिं व्याकर्तुकामो भवति नाभ्यामन्तर्धीयन्ते। श्रावकबोधिं व्याकर्तुकामो भवति आस्ये ऽन्तर्धीयन्ते। प्रत्येकां बोधिं व्याकर्तुकामो भवति ऊर्णायामन्तर्धीयन्ते। अनुत्तरां सम्यक्संबोधिं व्याकर्तुकामो भवति उष्णीषे[1] ऽन्तर्धीयन्ते॥ 5

अथ ता अर्चिषो भगवन्तं त्रिः प्रदक्षिणीकृत्य भ[22a]गवत ऊर्णायाम[2]न्तर्हिताः। अथायुष्मानानन्दः कृतकरपुटो भगवन्तं पप्रच्छ।

नानाविधो रङ्गसहस्रचित्रो वक्त्रान्तरान्निष्कसितः कलापः।

अवभासिता येन दिशः समन्ताद्दिवाकरेणोदयता यथैव॥ 10

गाथाश्च भाषते[3]।

विगतोद्भवा दैन्यमदप्रहीणा बुद्धा जगत्युत्तमहेतुभूताः।

नाकारणं शङ्खमृणालगौरं स्मितमुपदर्शयन्ति जिना जितारयः॥

तत्कालं स्वयमधिगम्य धीर बुद्ध्या

श्रोतॄणां[4] श्रमण[5] जिनेन्द्र काङ्क्षितानां। 15

धीराभिर्मुनिवृष वाग्भिरुत्तमाभि-

रुत्पन्नं व्यपनय संशयं शुभाभिः॥

नाकस्माल्लवणजलाद्रिराजधैर्याः

संबुद्धाः स्मितमुपदर्शयन्ति नाथाः।

---

1) B ऊष्णी°, DC corr.
2) B उर्णा°, D corr.
3) MS भाषन्ते.
4) MS श्रोतृणां.
5) MS श्रवण.

यस्यार्थे स्मितमुपदर्शयन्ति धीराः
तं श्रोतुं समभिलषन्ति ते जनौघा[1] इति ॥

भगवानाह । एवमेतदानन्दैवमेतत् । नाहेत्वप्रत्ययमानन्द तथागता अर्हन्तः सम्यक्संबुद्धाः स्मितं प्राविष्कुर्वन्ति । पश्यस्यानन्दानेन दारकेण प्रसादजातेन तथागतस्य पद्मं
5 क्षिप्तम् ॥ एवं भदन्त ॥ [2]एषानन्द दारको ऽनेन कुशलमूलेन चित्तोत्पादेन देयधर्मपरित्यागेन च पञ्चदश कल्पान्[3]विनिपातं न गमिष्यति दिव्यमानुषसुखमनुभूय पद्मोत्तरो नाम प्रत्येकबुद्धो भविष्यति । अयमस्य देयधर्मो यो ममान्तिके चित्तप्रसादः । तस्मात्तर्हि भिक्षव एवं शिक्षितव्यं यद्बुद्धप्रत्येकबुद्धश्रावकेषु कारान्[4]करिष्याम इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

1) B जनोघा, D corr.

2) Cp. *supra* p. 20, n. 6.

3) MS कल्पावि°.

4) B कारां करि° (DP कामां करि°, C कायां करि°). Cp. my observation in W. Z. XVI, 351.

# चक्रमिति २३ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपात[1]शयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घो राजगृहे विहरति वेणुवने कलन्दकनिवापे ॥ [2]राजगृहे ऽन्यतमः सार्थवाहो महासमुद्रमवतीर्णः । तस्य भार्या यौवनवती । सा स्वामिनो ऽर्थे उत्कण्ठति [3]परितप्य‹ति› न चास्या भर्ता आगच्छति ॥ तया नारायणस्य प्रणिपत्य प्रतिज्ञातं यदि मे भर्ता शीघ्रमागच्छति अहं ते सौवर्णचक्रं प्रदास्यामीति ॥ ततस्तस्याः स्वामी स्वस्तिक्षेमाभ्यां महासमुद्रादाशु प्रत्यागतः । तया सौवर्णचक्रं [4]कारितम् ॥ सा दासीगणपरिवृता [5]चक्रमादाय गन्धधूपपुष्पं च देवकुलं संप्रस्थिता ॥

अत्रान्तरे नास्ति किंचिद्बुद्धानां भगवतामज्ञातमदृष्टमविदितमविज्ञातम् । धर्मता खलु बुद्धानां भगवतां महाकारुणिकानां लोकानुग्रहप्रवृत्तानामेकारक्षाणां शमथविपश्यनाविहारिणां [6]त्रिदमथवस्तुकुशलानां चतुरोघोत्तीर्णानां चतुर्ऋद्धिपादचरणतलसुप्रति-

---

1) MS पात्र.

2) MS श्रावस्त्यामन्य°. The Tibetan has 'at Rājagṛha', see Feer 98 n. 1. Indeed, *Çrāvastyām* is likely to have been written in the archetype by mistake instead of *Rājagṛhe*. Cp. *infra* p. 130, 13.

3) Ex conject.; B परितस्यानचास्य (C °नतस्य, DP °नचास्या).

4) MS कारितः.

5) MS परिवृतचक्र° (D °तःचक्र°).

6) BCP have a superfluous य (or प?) between त्रि and द.

ष्ठितानां चतुर्षु संग्रहवस्तुषु दीर्घरात्रकृतपरिचयानां पञ्चाङ्गविप्रहीणानां पञ्चगतिसम-
तिक्रान्तानां षडङ्गसमन्वागतानां षट्पारमितापरिपूर्णानां सप्तबोध्यङ्गकुसुमाढ्यानामष्टा-
ङ्गमार्गदेशिकानां नवानुपूर्वसमापत्तिकुशलानां दशबलबलिनां दशदिक्समापूर्णयशसां
दशशतवशवर्तिप्रतिविशिष्टानां त्री[(1)]रात्रेस्त्रिर्दिवसस्य बुद्धचक्षुषा लोकं व्यवलोक्य ज्ञा-
5 नदर्शनं प्रवर्तते। को हीयते ‹को›[(2)] वर्धते कः कृच्छ्रप्राप्तः कः संकटप्राप्तः कः संबाधप्राप्तः कः
कृच्छ्रसंकटसंबाधप्राप्तः को ऽपायनिम्नः[(3)] को ऽपायप्रवणः को ऽपायप्राग्भारः कमहमपाया-
दुद्धृत्य स्वर्गे मोक्षे च प्रतिष्ठापयेयं कस्य कामपङ्कनिमग्नस्य हस्तोद्धारमनुप्रदद्यां कमार्य-
धनविरहितमार्यधनैश्वर्याधिपत्ये प्रतिष्ठापयेयं कस्यानवरोपितानि कुशलमूलान्यवरोप-
येयं कस्यावरोपितानि परिपाचयेयं कस्य परिपक्वानि विमोचयेयम्। आह च।

10 अप्येवातिक्रमेद्वेलां सागरो मकरालयः[(4)]।
न तु वैनेयवत्सानां बुद्धो वेलामतिक्रमेत्॥

पश्यति भगवानियं दारिका मद्दर्शनात्प्रत्येकबोधेः कुशलमूलान्यवरोपयिष्यती-
ति॥ ततः पूर्वाह्णे निवास्य पात्रचीवरमादाय भिक्षुगणप[22b]रिवृतो भिक्षुसङ्घपुरस्कृतो रा-
जगृहं पिण्डाय प्राविक्षत्॥ अथासौ दारिका ददर्श बुद्धं भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः
15 समलङ्कृतमशीत्या चानुव्यञ्जनैर्विराजितगात्रं व्याम[(5)]प्रभालङ्कृतं सूर्यसहस्रातिरेकप्रभं ज-
ङ्गममिव रत्नपर्वतं समन्ततो भद्रकम्। सहदर्शनाच्च लब्धप्रसादा भगवति सौवर्णचक्रं
क्षेप्तुमारब्धा। ततश्चेटिकया वार्यते नायं नारायण इति। सा वार्यमाणापि तीव्र[(6)]प्रसादाव-
र्जितमानसा बुद्धस्य भगवत उपरि सौवर्णचक्रं निक्षिप्य[(7)] गन्धमाल्यं च दत्तवती॥

---

1) MS त्रिरात्रेस्त्रिदि°.

2) added in D.

3) MS पायनिमग्नः, cp. *supra* p. 95, n. 1.

4) B मकलालयः, DP corr.

5) MS व्योम°.

6) In MS सा is repeated before तीव्रप्रसादा°. As to *tīvraprasāda* cp. Divy. 88, 23.

7) Ex conject.; MS विक्षिप्य. Cp. *infra* tale 30 B 28 a.

ततो भगवता स्मितं विदर्शितम् । धर्मता खलु यस्मिन्समये बुद्धा भगवन्तः स्मितं प्राविष्कुर्वन्ति तस्मिन्समये नीलपीतलोहितावदाता अर्चिषो मुखान्निश्चार्य काश्चिदधस्ताद्गच्छन्ति काश्चिदुपरिष्टाद्गच्छन्ति । या अधस्ताद्गच्छन्ति ताः संजीवं कालसूत्रं संघातं रौरवं महारौरवं तपनं प्रतापनमवीचिमर्बुदं [1]निरर्बुदमटटं हहवं हुहुवमुत्पलं पद्मं महापद्मं नरकान्[2]गत्वा ये उष्णनरकास्तेषु शीतीभूता निपतन्ति ये शीतनरकास्तेषूष्णीभूता निपतन्ति । तेन तेषां सत्त्वानां कारणाविशेषाः प्रतिप्रस्रभ्यन्ते । तेषामेवं भवति । किं नु वयं भवन्त इतश्च्युता आहो स्विदन्यत्रोपपन्ना इति । तेषां प्रसादसंजननार्थं भगवान्निर्मितं विसर्जयति । तेषां तं निर्मितं दृष्ट्वैवं भवति । न ह्येव[3] वयं भवन्त इतश्च्युता नाप्यन्यत्रोपपन्ना अपि त्वयमपूर्वदर्शनः सत्त्वो ऽस्यानुभावेनास्माकं कारणाविशेषाः प्रतिप्रस्रब्धा इति । ते निर्मिते चित्तमभिप्रसाद्य तन्नरकवेदनीयं यत्कर्म [4]क्षपयित्वा देवमनुष्येषु प्रतिसन्धिं गृह्णन्ति यत्र सत्यानां भाजनभूता भवन्ति । या उपरिष्टाद्गच्छन्ति ताश्चातुर्महाराजिकांस्त्रयस्त्रिंशान्यामांस्तुषितान्[5]निर्माणरतीन्परनिर्मितवशवर्तिनो ब्रह्मकायिकान्ब्रह्मपुरोहितान्महाब्रह्मणः परीत्ताभानप्रमाणाभानाभास्वरान्परीत्तशुभानप्रमाणशुभाञ्छुभकृत्स्नाननभ्रकान्पुण्यप्रसवान्बृहत्फलानबृहानतपान्सुदृशान्सुदर्शनानकनिष्ठान्देवान्गत्वा अनित्यं दुःखं शून्यमनात्मेत्युद्घोषयन्ति गाथाद्वयं च भाषन्ते ।

आरभध्वं निष्क्रामत युज्यध्वं बुद्धशासने ।
धुनीत मृत्युनः सैन्यं नडागारमिव कुञ्जरः ॥
यो ह्यस्मिन्धर्मविनये अप्रमत्तश्चरिष्यति ।
प्रहाय [6]जातिसंसारं दुःखस्यान्तं करिष्यति ॥

---

1) B निरर्वदं, CD निर्वुदं, P corr.
2) MS नरकं ग°
3) MS ह्येव (D ह्यैव).
4) MS तेप°.
5) B °षितानिर्मा°, D corr.
6) B ज्ञातिसं, DP corr.

अथ ता अर्चिषस्त्रिसाहस्र<महासाहस्रं>[1] लोकधातुमन्वाहिण्ड्य भगवन्तमेव पृष्ठतः पृष्ठतः समनुगच्छन्ति । तद्यदि भगवानतीतं कर्म व्याकर्तुकामो भवति भगवतः पृष्ठतो ऽन्तर्धीयन्ते । अनागतं व्याकर्तुकामो भवति पुरस्तादन्तर्धीयन्ते । नरकोपपत्तिं व्याकर्तुकामो भवति पादतले ऽन्तर्धीयन्ते । तिर्यगुपपत्तिं व्याकर्तुकामो भवति पार्ष्ण्यामन्तर्धीयन्ते । प्रेतोपपत्तिं व्याकर्तुकामो भवति पादाङ्गुष्ठे ऽन्तर्धीयन्ते । मनुष्योपपत्तिं व्याकर्तुकामो भवति जानुनो<र्>न्तर्धीयन्ते । बलचक्रवर्तिराज्यं व्याकर्तुकामो भवति वामे करतले ऽन्तर्धीयन्ते । चक्रवर्तिराज्यं व्याकर्तुकामो भवति दक्षिणे करतले ऽन्तर्धीयन्ते । देवोपपत्तिं व्याकर्तुकामो भवति नाभ्यामन्तर्धीयन्ते । श्रावकबोधिं व्याकर्तुकामो भवति आस्ये ऽन्तर्धीयन्ते । प्रत्येकां बोधिं[2] व्याकर्तुकामो भवति ऊर्णायामन्तर्धीयन्ते । अनुत्तरां सम्यक्संबोधिं व्याकर्तुकामो भवति उष्णीषे ऽन्तर्धीयन्ते ॥

अथ ता अर्चिषो भगवन्तं त्रिः प्रदक्षिणीकृत्य भगवत ऊर्णायामन्तर्हिताः । अथायुष्मानानन्दः कृतकरपुटो भगवन्तं पप्रच्छ ।

नानाविधो रङ्गसहस्रचित्रो वक्त्रान्तरान्निष्कासितः कलापः ।
अवभासिता येन दिशः समन्ताद्दिवाकरेणोदयता यथैव ॥

गाथाश्च भाषते ।

विगतोद्धवा दैन्यमदप्रहीणा बुद्धा जगत्युत्तमहेतुभूताः ।
नाकारणं शङ्खमृणालगौरं स्मितमुपदर्शयन्ति जिना जितारयः ॥
तत्कालं स्वयमधिगम्य वीर बुद्ध्या
[3]श्रोतॄणां [4]श्रमण जिनेन्द्र काङ्क्षितानां[5]

---

1) Added in D.
2) Anusvāra wanting in B; D corr.
3) B श्रोतृ, DP corr.
4) MS श्रवण.
5) B कांक्तिकानां, D corr.

धीराभिर्मुनिवृष वाग्भिरुत्तमाभि-

रुत्पन्नं व्यपनय संशयं शुभाभिः[1] ॥

नाकस्माल्लवणजलाद्रिराजधैर्याः[2]

संबुद्धाः स्मितमुपद[23a]र्शयन्ति नाथाः ।

यस्यार्थे स्मितमुपदर्शयन्ति धीराः 5

तं श्रोतुं समभिलषन्ति ते जनौघा[3] इति ॥

भगवानाह । एवमेतदानन्दैवमेतत्[4] । नाहेत्वप्रत्ययमानन्द तथागता अर्हन्तः सम्यक्संबुद्धाः स्मितं प्राविष्कुर्वन्ति । पश्यस्यानन्दानया दारिकया तथागतस्य सौवर्णचक्रं क्षिप्तम् ॥ एवं भदन्त ॥ एषानन्द दारिकानेन कुशलमूलेन चित्तोत्पादेन देयधर्मपरित्यागेन च पञ्चदश कल्पान्विनिपातं न गमिष्यति दिव्यं मानुषं सुखमनुभूय ‹च› चक्रान्तरो 10 नाम प्रत्येकबुद्धो भविष्यति । अयमस्य देयधर्मो यो ममान्तिके चित्तप्रसाद इति । तस्मात्तर्हि भिक्षव एवं शिक्षितव्यं यद्बुद्धप्रत्येकबुद्धश्रावकेषु कारान्करिष्याम इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमनसस्ते च भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

1) MS संशयशु°.
2) B राजधीर्या:, D corr.
3) B जनोघा°, D corr.
4) B °वमेवन्नाहेत्व°, DCP corr.

## दशशिरा इति २४ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपात[1]शयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घो मगधेषु जनपदचारिकां चरन्गङ्गातीरमनुप्राप्तः सार्धं भिक्षुसङ्घेन । अद्राक्षुस्ते भिक्षवो दूरत एव पुराणस्तूपं वातातपवर्षैरवरुग्णं प्ररुग्णं[2] दृष्ट्वा च पुनर्भगवन्तं पप्रच्छुः कस्यैष भदन्त स्तूप इति ॥ भगवानाह । दशशिरसः प्रत्येकबुद्धस्येति ॥ भिक्षव ऊचुः । कुतो भदन्त दशशिरसः प्रत्येकबुद्धस्योत्पत्तिर्नामाभिनिर्वृत्ति[3]श्चेति ॥ भगवानाह । इच्छथ यूयं भिक्षवः श्रोतुमिति ॥ त ऊचुरेवं भदन्तेति ॥ तेन हि भिक्षवः शृणु<त> साधु च सुष्ठु च मनसि कुरुत भाषिष्ये ॥

भूतपूर्वं भिक्षवोऽतीतेऽध्वनि वाराणस्यां नगर्यां ब्रह्मदत्तो नाम राजा राज्यं कारयति ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं चाकीर्णबहुजनमनुष्यं च प्रशान्तकलिकलहडिम्बडमरं[4] तस्कररोगाप<ग>तं शालीक्षुगोमहिषीसंपन्नं धार्मिको धर्मराजो[5] धर्मस्थितो धर्मेण राज्यं कारयति । स च राजाऽपुत्रः पुत्राभिनन्दी शिववरुणकुबेरशक्रब्रह्मादीनन्यांश्च देवताविशेषानायाचते । तद्यथा आरामदेवता वनदेवताश्चत्वरदेवताः शृङ्गाटकदेवता बलिप्रतिग्राहिका देवताः सहजाः सहधार्मिका नित्यानुबद्धा अपि देवता आयाचते ॥ स चैत्र-

---

1) MS पात्र.

2) Ex conject.; MS °वरुग्णं प्ररुग्णैर्दृष्ट्वा.

3) MS भिनिवृत्तिश्चेति. Cp. *supra* p. 119, n. 5.

4) MS उमर. Cp. *supra* p. 120, n. 5.

5) B राज्यो, D corr.

मायाचनपरस्तिष्ठति । तस्य चोद्याने महती पद्मिनी उत्पलकुमुदपद्मपुण्डरीकसंछन्ना हंसचक्रवाककारण्डवादिशकुनोपशोभिता नलिनी । तत्र पद्ममतिप्रमाणमकण्टकं सहसोत्पन्नम् । तद्दिवसे दिवसे वर्धते न तु फुल्लति । तत आरामिकेण राज्ञे निवेदितम् । राज्ञा उक्तः परिरक्ष्यतामेतत्पद्ममिति[1] ॥ यावदपरेण समयेन सूर्योदये तत्पद्मं विकसितम् । तस्य पद्म‹स्य› कर्णिकायां दारकः पर्यङ्कं बद्ध्वावस्थितः अभिरूपो दर्शनीयः प्रासादिको गौरः कनकवर्णश्छत्त्राकारशिराः प्रलम्बबाहुर्विस्तीर्णललाट उच्चघोणः[2] संगतभ्रूस्तुङ्गनासः द्वात्रिंशता महापुरुषलक्षणैः समलङ्कृतो ऽशीत्यानुव्यञ्जनैर्विराजितगात्रः[3] । तं दृष्ट्वारामिकेण राज्ञे निवेदितम् ॥ श्रुत्वा राजा सामात्यः सान्तःपुरश्च तदुद्यानं गतः । ददर्श राजा पद्मकर्णिकायां तथा विभ्राजमानं दृष्ट्वा च पुनर्हृष्टतुष्टप्रमुदित उदग्रप्रीतिसौमनस्यजातः पद्मिनीमवगाह्य तं गृहीत्वा महता सत्कारेण स्वगृहमानीय श्रमणब्राह्मणनैमित्तिकानां[4] निवेद्य त्रीणि सप्तकान्येकविंशति[5] दिवसान्जातस्य जातिमहं कृत्वा दशशिरा इति नामधेयं कृतवान् ॥

दशशिरा दारकः अष्टाभ्यो धात्रीभ्यो दत्तो ‹द्वाभ्या›मंसधात्रीभ्यां[6] द्वाभ्यां क्षीरधात्रीभ्यां द्वाभ्यां मलधात्रीभ्यां द्वाभ्यां क्रीडनिकाभ्यां धात्रीभ्याम्[7] । सो ऽष्टाभिर्धात्रीभिरुन्नी-

---

1) MS °रक्तता°.

2) Sic MS (C घाणाः, D घ्राणाः). Cp. *supra* p. 121, n. 2.

3) MS समलंकृतमशी.....गात्रं, cp. the same neglect of the ūha *supra* p. 120, 1 and 121, n. 3.

4) MS श्रवण.

5) In this formula °विंशति seems to be used as an indeclinable, cp. Divy. 3, 5. 26, 7. 167, 17. For the rest, instances of cardinals not declined but used in their stem-form are not uncommon in Buddhist Sanskrit. Cp. my *Ved. und Skrt. Syntax* § 149. In Hopkins' article on numbers in the Mahābhārata (J.A.O.S. XXIII, 109—155) there occur also some Mhbh. instances, as V, 43, 15 (p. 111). I, 86, 15 (p. 117). XIII, 107, 31 (p. 121).

6) MSS, except D, दत्तमत्सधा°. In B म is separed from त्त and त्स by a small blank so as to make it probable that the gap existed already in A.

7) In MS there is here much confusion. B मत्सधात्रीभ्यां द्वाभ्यां मलधात्रीभ्यां द्वाभ्यां क्रीडनिकाभ्यां द्वाभ्यां धात्रीभ्यां सो. In D the confusion is still greater. I have arranged the text according to the other occurrences of this often recurring common-place; cp. e. g. *supra* p. 15, 11.

पते वर्ध्यते[1] क्षीरेण दध्ना नवनीतेन सर्पिषा सर्पिमण्डेना[2]न्यैश्चोत्तप्तैरुपकरणविशेषैराशु वर्धते ह्रदस्थमिव पङ्कजम् ॥ [23b] स च कुमारः श्राद्धो भद्रः कल्याणाशय आत्महितपरहितप्रतिपन्नः कारुणिको महात्मा धर्मकामः प्रजावत्सलः। स पश्यति पितरं राजधर्मे स्थितं सावद्यमवद्यानि[3] कर्माणि कुर्वाणम्। दृष्ट्वा च कुमारः संविग्नः पितरं विज्ञापयामास
5 अनुजानीहि मां तात प्रव्रजिष्यामि स्वाख्याते धर्मविनय इति। यावत्पित्रानुज्ञातः केशश्मश्रु अवतार्य काषायाणि वस्त्राण्याच्छाद्य सम्यगेव श्रद्धया अगारादनगारिकां[4] प्रव्रजितः॥ तेन विनोपदेशेन सप्त[5]त्रिंशद्बोधिपक्षान्धर्मानामुखीकृत्य[6] प्रत्येका बोधिः[7] साक्षात्कृता। स गगनतलमुत्पत्य पितुः सकाशे विचित्राणि प्रातिहार्याणि चकार॥ ततो राज्ञा त्रैमास्यं पिण्डकेनोपनिमन्त्रितः॥ स शरीरभारोद्वहनपरिखिन्नो विचित्राणि प्रातिहार्याणि
10 दर्शयित्वा इन्धनक्षयादिवाग्निर्निवृत्तिमुपजगाम[8]॥ तस्यैष स्तूप इति॥

अथ भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। कानि भदन्त दशशिरसा कर्माणि कृतानि येन मातुः कुक्षौ नोपपन्नः पद्म उपपन्न इति॥ भगवानाह॥ दशशिरसैव[9] भिक्षवः कर्माणि कृतान्युपचितानि <लब्धसंभाराणि> परिणतप्रत्ययान्योघवत्प्र-

---

1) MS वर्द्धते. 2) MS सर्पिमण्डिना° (D °मण्डना°, C सर्पिपण्डना°).

3) Ex conject.; MS सावद्यान (P °ने)वद्यानि. In *sāvadya* the word *avadya* is a substantive, the meaning of the whole being: «performing blamable acts in a blamable way», or «a blamable person, performing blamable acts». Cp. Feer's translation (101, 5) 'lié à ce qui est méprisable, accomplissant des actes méprisables'; the Tibetan ཁ་ན་མ་ཐོ (or མཐོ་བ་) («rendue dans le *Dict. Tib. Sk.* par वर्ज्य» Feer in a private letter to me) བཅས་པ་དང་ is indeed the adequate rendering of Skrt. *sāvadyam.*

4) B °रादनागारिकां, D corr.

5) Note the absence of flexion in the numeral, as *supra* (p. 135, n. 5).

6) Cp. Divy. 350, 14 and *supra* (p. 122, 8).

7) Ex conject.; MS प्रत्येकां बोधिं.

8) I have not ventured to change the reading of MS, because *nivṛtti* admits here of a plausible interpretation, and confounding the terms *nirvṛti* and *nivṛtti* seems to be a very old habit of Sanskrit writing Buddhists.

9) B सैवं, C corr.

त्युपस्थितान्यवश्यंभावीनि[1]। दशशिरसा कर्माणि कृतान्युपचितानि को ऽन्यः[2] प्रत्यनुभविष्यति। न भिक्षवः कर्माणि कृतान्युपचितानि[3] बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ[4] न तेजोधातौ न वायुधातावपि[5] तूपात्तेष्वेव स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि[6]। 5

सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम्॥

भूतपूर्वमतीते ऽध्वनि एकनवते कल्पे विपश्यी[7] नाम सम्यक्संबुद्धो लोक उदपादि तथागतो ऽर्हन्सम्यक्संबुद्धो विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान्। स बन्धुमतीं राजधानीमुपनिश्रित्य विहरति॥ अथ विपश्यी सम्यक्संबुद्धः पूर्वाह्णे निवास्य पात्रचीवरमादाय भिक्षुगणपरिवृतो भिक्षुसङ्घपुरस्कृतो बन्धुमतीं राजधानीं पिण्डाय प्राविक्षत् अन्यतरश्च सार्थवाहः पद्ममादाय वीथीं[8] प्रतिपन्नः। अथासौ पश्यति विपश्यिनं सम्यक्संबुद्धं द्वात्रिंशता महापुरुषलक्षणैः समलङ्कृतमशीत्यानुव्यञ्जनैर्विराजितगात्रं व्यामप्रभालङ्कृतं[9] सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकम्। सहदर्शनाद्भगवत उपरि तत्पद्मं चिक्षेप। तत्क्षिप्तमात्रं भगवत उपरि शकटचक्रमात्रं भूत्वा भगवन्तं गच्छन्तमनुगच्छति[10] तिष्ठन्तमनुतिष्ठति[11]। 15

---

1) B वश्यभागीनि, in the copies variously corrupted.

2) MS कोन्यप्र°.

3) MS °पचितानि तानि वाह्ये.

4) B नाब्धाधौ, DP corr.

5) In MS the usual depravations. Cp. *supra* p. 74, n. 9.

6) Cp. *supra* p. 74, n. 13.

7) B has always the good orthography of this Buddha's name, the other manuscripts fluctuate between विपश्चि and विपस्वी (so always D).

8) Anusvāra wanting in MS.

9) MS व्योम.

10) MS गच्छन्ति.

11) B तिष्ठन्ति, P corr.

यावद्विपश्यिना सम्यक्संबुद्धेन स सार्थवाहः प्रत्येकबोधौ व्याकृतः॥ ततो हृष्टतुष्टप्रमुदितमनाः स्वगृहमागतः प्रजापती चास्य तेन कालेन प्रजायमाना सस्वरं क्रन्दितवती। तेन परिचारिका पृष्टा किमिदमिति। तया समाख्यातम्। ततः सार्थवाहः संविग्नः प्रणिधानं कर्तुमारब्धो मा कदाचित्संसारे मातुः कुक्षावुपपद्येयमिति[1]॥

5 भगवानाह। किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन सार्थवाहो बभूवायं स दशशिराः प्रत्येकबुद्धः। तेन कुशलमूलेनैकविंशति[2] कल्पान्न कदाचिन्मातुः कुक्षावुपपन्नः पश्चिमे चास्य भवे इयं विभूतिः। तस्मात्तर्हि भिक्षव एवं शिक्षितव्यं यद्बुद्धप्रत्येकबुद्धार्यश्रावकेषु कारान्करिष्याम इत्येवं वो भिक्षवः शिक्षितव्यम्॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्॥

---

1) Ex conject.; MS °पद्येयामिति (D °पन्नोयामिति). As to the use of the parasmaipada cp. Divy. 346, 7 *atraivopapadyeyam.*

2) The numeral is here used as an indeclinable (cp. *supra* p. 135, n. 5). Likewise in the paraphrase in R (f. 147b 2) एकविंशति कल्पानि नोद्बभूव प्रसूदरे, where the absence of the case-suffix is testified by the metre.

---

## सूक्ष्मवर्गाात[1] २५ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किंनरैर्महोरगैरिति देवनागयक्षासुरगरुडकिंनरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपात[2]शयनासनग्लानप्रत्ययभै[24a]षज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथ- 5
पिण्डदस्यारामे ॥ तेन खलु पुनः समयेन श्रावस्त्यामन्यतमः श्रेष्ठी आढ्यो महाधनो महाभोगः प्रभूतवित्तोपकरणः प्रभूतसत्त्व[3]स्वापतेयः प्रभूतमित्रामात्यज्ञातिसालोहितः । स च गृहपतिः श्राद्धो भद्रः कल्याणाशय आत्महित‹परहित›[4]प्रतिपन्नः कारुणि‹को›[5] महात्मा धर्मकामः ॥ तस्यैतदभवत् । इमे भोगा जलचन्द्रस्वभावा मरीचिसदृशा अनित्या अध्रुवा अनाश्वासिका[6] विपरिणामधर्माणः पञ्चभिरुग्रदण्डैः साधारणाः । यन्न्वहमसारेभ्यो भोगेभ्यः 10
सारमादद्यामिति ॥ तेन भगवान्सश्रावकसङ्घो भक्तेनोपनिमन्त्रितः । गृहं चापगतपाषाणशर्करकठल्यं व्यवस्थापितं चन्दनवारिपरिषिक्तं विचित्रगन्धघटिकासुरभिधूपधूपितं नानापुष्पाभिकीर्णं पुष्पासनानि प्रज्ञप्तानि । ततः सुस्वादशीतरसपानानि भक्ष्य[7]भोज्यानि च सज्जीकृत्य भगवतो दूतेन कालमारोचयति । समयो भदन्त सज्जं भक्तं यस्येदानीं भगवा-

---

1) Or rather सूक्ष्मविडिति. Cp. *infra* note 1 on p. 143.

2) MS पात्र.

3) Ex conject.; B प्रभूतमित्र/मत्तस्वा°.

4) D fills the gap.

5) D कारुणिकम°.

6) MS अनास्वसिका.

7) Ex conject.; cp. *infra*, p. 144, 13; MS भद्य (D भक्त).

न्कालं[1] मन्यत इति ॥ ततो भगवान्पूर्वाह्णे निवास्य पात्रचीवरमादाय भिक्षुगणपरिवृतो भिक्षुसङ्घपुरस्कृतो येन तस्य गृहपते‹र्निवेशनं›[2] तेनोपसंक्रान्तः । उपसंक्रम्य पुरस्ताद्भिक्षुसङ्घस्य प्रज्ञप्त एवासने निषण्णः । अथ स गृहपतिः[3] सुखोपविष्टं बुद्धप्रमुखं भिक्षुसङ्घं विदित्वा शुचिना प्रणीतेनाहारेण स्वहस्तं संतर्पयति संप्रवारयति । ‹स्वहस्तं›[4] संतर्प्य संप्रवार्य भगवन्तं ‹भुक्तवन्तं› विदित्वा धौतहस्तमपनीतपात्रं नीचतरासनं गृहीत्वा भगवतः पुरस्तान्निषण्णो धर्मश्रवणाय । अथ भगवांस्तं गृहपतिं धर्म्यया कथया संदर्शयति समादापयति ‹समुत्तेजयति› । अनेकपर्यायेण धर्म्यया कथया संदर्श्य समादाप्य समुत्तेज्य तूष्णींभूतः । अथ स गृहपतिर्लब्धप्रसादः पादयोर्निपत्य चेतनां[5] पुष्णाति ॥

ततो भगवान्स्मितं विदर्शित‹वा›न्[6] । धर्मता खलु यस्मिन्समये बुद्धा भगवन्तः स्मितं प्राविष्कुर्वन्ति तस्मिन्समये नीलपीतलोहितावदाता अर्चिषो मुखान्निश्चार्य काश्चिदधस्ताद्गच्छन्ति काश्चिदुपरिष्टाद्गच्छन्ति । या अधस्ताद्गच्छन्ति ताः संजीवं कालसूत्रं संघातं रौरवं महारौरवं तपनं प्रतापनमवीचिमर्बुदं निरर्बुदमटटं हहवं हुहुवमुत्पलं पद्मं महापद्मं नरकान्गत्वा[7] ये उष्णनरकास्तेषु शीतीभूता निपतन्ति ये शीतनरकास्तेषूष्णीभूता निपतन्ति । तेन तेषां सत्त्वानां कारणाविशेषाः[8] प्रतिप्रश्रभ्यन्ते । तेषामेवं भवति । किं नु वयं भवन्त इतश्च्युता आहो[9] स्विदन्यत्रोपपन्ना इति । तेषां सत्त्वानां प्रसादसंजननार्थं भगवान्निर्मितं विसर्जयति । तेषां निर्मितं दृष्ट्वैवं भवति । न ह्येव[10] वयं

1) Anusvāra wanting in MS.
2) Cp. *infra* p. 144, 16 and *supra*, p. 9, 7.
3) Visarga wanting in MS.
4) Cp. *supra* p. 64, 10 and Divy. 53, 13. 85, 25. 97, 8.
5) MS चेतनां.
6) MS विदर्शितं.
7) MS नरकं.
8) MS °रणाःवि° (D °रणावि).
9) MS अहो.
10) MS न हेवं (D न ह्ये°).

भवन्त इतश्च्युता नाप्यन्यत्रोपपन्ना अपि त्वयमपूर्वदर्शनः सत्त्वो ऽस्यानुभावेनास्माकं कारणाविशेषाः प्रतिप्रस्रब्धा इति। ते निर्मिते चित्तमभि(1)प्रसाद्य तन्नरकवेदनीयं कर्म (2)क्षपयित्वा देवमनुष्येषु प्रतिसन्धिं गृह्णन्ति यत्र सत्यानां भाजनभूता भवन्ति। या उपरिष्टाद्गच्छन्ति ताश्चातुर्महाराजिकांस्त्रयस्त्रिंशान्यामांस्तुषितान्निर्माणरतीन्परनिर्मितवशवर्तिनो ब्रह्मकायिकान्ब्रह्मपुरोहितान्महाब्रह्मणः (3)परीत्ताभानप्रमाणाभानाभास्वरान्परीत्तशुभानप्रमाणशुभाञ्छुभकृत्स्नाननभ्रकान्पुण्यप्रसवान्बृहत्फलानबृहानतपान्सुदृशान्सुदर्शनानकनिष्ठान्देवान्गत्वा अनित्यं दुःखं ‹शून्य›मनात्मेत्युद्घोषयन्ति गाथाद्वयं च भाषन्ते।

आरभध्वं निष्क्रामत युज्यध्वं बुद्धशासने।
धुनीत मृत्युनः सैन्यं (4)नडागारमिव कुञ्जरः॥
यो ह्यस्मिन्धर्मविनये अप्रमत्तश्चरिष्यति।
प्रहाय जातिसंसारं दुःखस्यान्तं करिष्यति॥

अथ ता अर्चिषस्त्रिसाहस्रमहासाहस्रं लोकधातुमन्वाहिण्ड्य भगवन्तमेव पृष्ठतः पृष्ठतः समनुगच्छन्ति। तद्यदि भगवानतीतं कर्म व्याकर्तुकामो भवति भगवतः पृष्ठतो ऽन्तर्धीयन्ते। अनागतं व्याकर्तुकामो भवति पुरस्तादन्तर्धीयन्ते। नरकोपपत्तिं व्याकर्तुकामो भवति [24b] पादतले ऽन्तर्धीयन्ते। तिर्यगुपपत्तिं व्याकर्तुकामो भवति पार्ष्ण्यामन्तर्धीयन्ते। प्रेतोपपत्तिं व्याकर्तुकामो भवति पादाङ्गुष्ठे ऽन्तर्धीयन्ते। मनु(5)ष्योपपत्तिं व्याकर्तुकामो भवति जानुनो‹र›न्तर्धीयन्ते। बलचक्रवर्तिराज्यं व्याकर्तुकामो भवति वामे करतले ऽन्तर्धीयन्ते। चक्रवर्तिराज्यं व्याकर्तुकामो भवति दक्षिणे करतले ऽन्तर्धीयन्ते। देवोपपत्तिं व्याकर्तुकामो भवति नाभ्यामन्तर्धीयन्ते। श्रावकबोधिं व्याकर्तुकामो भवति आस्ये ऽन्तर्धीयन्ते। प्रत्येकां

---

1) B चित्तमपिप्र°, P corr.
2) B क्षेप°, D corr.
3) B परीता°, D corr.
4) B मडागंरमि°, P corr.
5) B मनुषो°, D corr.

बोधिं व्याकर्तुकामो भवति ऊर्णायामन्तर्धीयन्ते[1]। अनुत्तरां सम्यक्संबोधिं व्याकर्तुकामो भवति उष्णीषे ऽन्तर्धीयन्ते ॥

अथ ता अर्चिषो भगवन्तं त्रिः प्रदक्षिणीकृत्य भगवत ऊर्णायामन्तर्हिताः[1]। अथायुष्मानानन्दः कृतकरपुटो भगवन्तं पप्रच्छ।

5 नानाविधो रङ्गसहस्रचित्रो वक्त्रान्तरान्निष्कसितः कलापः।
अवभासिता येन दिशः समन्ताद्दिवाकरेणोदयता यथैव ॥

गाथाश्च भाषते।

विगतोद्भवा दैन्यमदप्रहीणा बुद्धा जगत्युत्तमहेतुभूताः।
नाकारणं शङ्खमृणालगौरं स्मितमुपदर्शयन्ति जिना जितारयः ॥

10 तत्कालं स्वयमधिगम्य वीर बुद्ध्या
श्रोतॄणां श्रमण[2] जिनेन्द्र काङ्क्षितानां।
धीराभिर्मुनिवृष वाग्भिरुत्तमाभि-
रुत्पन्नं व्यपनय संशयं शुभाभिः[3] ॥
नाकस्माल्लवणजलाद्रिराजधैर्याः
15 संबुद्धाः स्मितमुपदर्शयन्ति नाथाः।
यस्यार्थे स्मितमुपदर्शयन्ति धीराः
तं श्रोतुं समभिलषन्ति ते जनौघा इति ॥

भगवानाह। एवमेतदानन्दैवमेतत्। नाहेत्वप्रत्ययमानन्द तथागता अर्हन्तः सम्यक्संबुद्धाः स्मितं प्राविष्कुर्वन्ति। पश्यस्यानन्दानेन श्रेष्ठिना ममैवंविधं सत्कारं कृतम् ॥ एवं[4] भदन्त ॥ एषानन्द श्रेष्ठी अनेन कुशलमूलेन चित्तोत्पादेन देयधर्मपरित्यागेन च सूक्ष्म-

1) MS उर्णा°.
2) MS श्रवन (CD °वण).
3) B संशयशु°, P corr.
4) B °वभद°, D corr.

त्वगिति[1] नाम प्रत्येकबुद्धो भविष्यति। अयमस्य देयधर्मो यो ममान्तिके चित्तप्रसाद इति। तस्मात्तर्हि भिक्षव एवं शिक्षितव्यं यद्बहुप्रत्येकबुद्धार्यश्रावकेषु कारान्करिष्याम इत्येवं वो भिक्षवः शिक्षितव्यम्॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो [2]<भगवतो> भाषितमभ्यनन्दन्॥

---

1) In the Tibetan version the name of this Pratyekabuddha signifies 'couleur douce', according to Feer, p. 105. Should the translator have used a Sanskrit text, which had the variant *sūkṣmatviḍ iti*? This name would suit much better than the other — cp. *Çītaprabha*, the name of the hero of the next avadāna, — *sūkṣmatviṭ* would signify 'one with fine and small light', a fit epithet for a star. The Tibetan equivalent is མདོག་ འཇམ་. Now, མདོག་ is rendered by skrt. *rasa* and *varṇa*, but also by *ojaḥ*, as M. Feer wrote me; this does not at all agree with such a name as *Sūkṣmatvak*, and is better explained by supposing the name the Tibetan translator had to render was *Sūkṣmatviṭ*.

2) The missing word added in D.

---

## शीतप्रभ इति २६ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्[1]धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो ‹महा›पुण्यो लाभी चीवरपिण्डपात[2]शयनासन-
5 ग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्डदस्यारामे ॥ श्रावस्त्यामन्यतमो गृहपतिराढ्यो महाधनो महाभोगो[3] विस्तीर्णविशालपरिग्रहो वैश्रवणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी । स च श्राद्धो भद्रः कल्याणाशय आत्महितपरहितप्रतिपन्नः कारुणिको महात्मा धर्मकामः ॥ तस्यैतदभवत् । इमे भोगा जलचन्द्रस्वभावा गजकर्णसदृशा अनित्या अध्रुवा अनाश्वासिका[4] विपरिणामधर्माणः पञ्च-
10 भिरुपद्रवैः साधारणाः । यन्न्वहमसारेभ्यो भोगेभ्यः सारमादद्यामिति ॥ तेन ग्रीष्मकाले वर्तमाने भगवान्सश्रावकसङ्घो भक्तेनोपनिमन्त्रितः । गृहं चापगतपाषाणशर्करकठल्लं व्यवस्थापितं चन्दनवारिपरिषिक्तं विचित्रगन्धघटिकासुरभिधूपधूपितं नानापुष्पाभिकीर्णं पुष्पासनानि प्रज्ञप्तानि । ततः शीतरसानि पानकानि भक्ष्यभोज्यानि च सज्जीकृत्य भगवतो दूतेन कालमारोचयति । समयो भदन्त सज्जं भक्तं यस्येदानीं भगवान्कालं मन्यत
15 इति ॥ ततो भगवान्पूर्वाह्णे निवास्य पात्रचीवरमादाय भिक्षुगणपरिवृतो भिक्षुसङ्घपुरस्कृतो येन तस्य गृहपतेर्निवेशनं तेनोपसंक्रान्तः । उपसङ्क्रम्य पुरस्ताद्भिक्षुसङ्घस्य प्रज्ञप्त एवासने निषण्णः । अथ स गृहपतिः सुखोपनिष[25 a]ण्णं बुद्धप्रमुखं भिक्षुसङ्घं विदित्वा शुचिना प्रणी-

---

1) B °मात्रैर्दनि°, P corr. D has here, as usual, राजमात्यैः धनिभिः.

2) MS पात्र.

3) B भोगी, D and P corr.

4) Cp. Divy. 207, 23 and *supra* p. 139, 9.

तेन खादनीयभोजनीयेन स्वहस्तं संतर्पयति संप्रवारयति। अनेकपर्यायेण शुचिना प्रणीतेन खादनीयभोजनीयेन स्वहस्तं संतर्प्य ‹सं›प्रवार्य भगवन्तं ‹भुक्तवन्तं› विदित्वा धौतहस्तमपनीतपात्रं नीचतरासनं गृहीत्वा भगवतः पुरस्तान्निषण्णो धर्मश्रवणाय। अथ भगवांस्तं गृहपतिं धर्म्यया कथया संदर्शयति समादापयति समुत्तेजयति संप्रहर्षयति। अनेकपर्यायेण धर्म्यया कथया संदर्श्य समादाप्य समुत्तेज्य संप्रहर्ष्य तूष्णींभूतः॥ अथ स गृहपति[1]र्लब्ध[2]प्रसादः पादयोर्निपत्य चेतनां पुष्णाति॥

ततो भगवता स्मितं विदर्शितम्। धर्मता खलु यस्मिन्समये बुद्धा भगवन्तः स्मितं प्राविष्कुर्वन्ति तस्मिन्समये नीलपीतलोहितावदाता अर्चिषो मुखान्निश्चार्य काश्चिदधस्ताद्गच्छन्ति काश्चिदुपरिष्टाद्गच्छन्ति। या अधस्ताद्गच्छन्ति ताः संजीवं कालसूत्रं संघातं रौरवं महारौरवं तपनं प्रतापनमवीचिमर्बुदं निरर्बुदमटटं हहवं हुहुवमुत्पलं पद्मं महापद्मं नरका[3]न्गत्वा ये उष्णनरकास्तेषु शीतीभूता निपतन्ति ये शीतनरकास्तेषूष्णीभूता निपतन्ति। तेन तेषां सत्त्वानां कारणाविशेषाः प्रतिप्रस्रभ्यन्ते। तेषामेवं भवति। किं नु वयं भवन्त इतश्च्युता आहो स्विदन्यत्रोपपन्ना इति। तेषां प्रसादसंजननार्थं भगवान्निर्मितं विसर्जयति। तेषां निर्मितं दृष्ट्वैवं भवति। न ह्येव[4] वयं भवन्त इतश्च्युता नाप्यन्यत्रोपपन्ना अपि त्वयमपूर्वदर्शनः सत्त्वो ऽस्यानुभावेनास्माकं कारणाविशेषाः प्रतिप्रस्रब्धा इति। ते निर्मिते चित्तमभिप्रसाद्य तन्नरकवेदनीयं कर्म क्षपयित्वा[5] देवमनुष्येषु प्रतिसन्धिं गृह्णन्ति यत्र सत्यानां भाजनभूता भवन्ति। या उपरिष्टाद्गच्छन्ति ताश्चातुर्महाराजिकांस्त्रयस्त्रिंशान्यामांस्तुषितान्निर्माणरतीन्परनिर्मितवशवर्तिनो ब्रह्मकायिकान्ब्रह्मपुरोहितान्महाब्रह्मणः[6] परीत्ताभानप्रमाणाभानाभास्वरान्परीत्तशुभानप्रमाणशुभाञ्छुभकृत्स्नाननभ्र-

1) MS पतिल°.

2) B लब्धःप्र, D corr.

3) MS नरकं.

4) MS न ह्वैव (D न ह्येव).

5) MS त्नेप°.

6) MS ब्रह्माणः.

कान्पुण्यप्रसवान्बृहत्फलानबृहानतपान्सुदृशान्सुदर्शनानकनिष्ठान्देवान्गत्वा ऽनित्यं दुःखं शून्यमनात्मेत्युद्घोषयन्ति गाथाद्वयं च भाषन्ते।

आरभध्वं निष्क्रामत युज्यध्वं बुद्धशासने।

धुनीत मृत्युनः सैन्यं नडागारमिव कुञ्जरः॥

5 यो ह्यस्मिन्धर्मविनये अप्रमत्तश्चरिष्यति।

प्रहाय जातिसंसारं दुःखस्यान्तं करिष्यति॥

अथ ता अर्चिषस्त्रिसाहस्रमहासाहस्रं लोकधातुमन्वाहिण्ड्य भगवन्तमेव पृष्ठतः ‹पृष्ठतः›[1] समनुगच्छन्ति। तद्यदि भगवानतीतं कर्म व्याकर्तुकामो भवति भगवतः पृष्ठतो ऽन्तर्धीयन्ते। अनागतं व्याकर्तुकामो भवति पुरस्तादन्तर्धीयन्ते। नरकोपपत्तिं व्याकर्तुका-

10 मो भवति पादतले ऽन्तर्धीयन्ते। तिर्यगुपपत्तिं व्याकर्तुकामो भवति पार्ष्ण्यामन्तर्धीयन्ते। प्रेतोपपत्तिं व्याकर्तुकामो भवति पादाङ्गुष्ठे ऽन्तर्धीयन्ते। मनुष्योपपत्तिं व्याकर्तुकामो भवति जानुनो‹र›न्तर्धीयन्ते। बलचक्रवर्तिराज्यं व्याकर्तुकामो भवति वामे करतले ऽन्तर्धीयन्ते। चक्रवर्तिराज्यं व्याकर्तुकामो भवति दक्षिणे करतले ऽन्तर्धीयन्ते। देवोपपत्तिं व्याकर्तुकामो भवति नाभ्यामन्तर्धीयन्ते। श्रावकबोधिं व्याकर्तुकामो भवति आस्ये ऽन्तर्धीयन्ते।

15 प्रत्येकां बोधिं व्याकर्तुकामो भवति ऊर्णायामन्तर्धीयन्ते। अनुत्तरां सम्यक्संबोधिं व्याकर्तुकामो भवति उष्णीषे ऽन्तर्धीयन्ते॥

अथ ता अर्चिषो भगवन्तं त्रिः[2] प्रदक्षिणीकृत्य भगवत ऊर्णायामन्तर्हिताः। अथायुष्मानानन्दः कृतकरपुटो भगवन्तं पप्रच्छ।

नानाविधो रङ्गसहस्रचित्रो वक्त्रान्तरान्निष्कसितः कलापः।

20 अवभासिता येन दिशः समन्ताद्दिवाकरेणोदयता यथैव॥

गाथाश्च भाषते[3]।

---

1) D adds the word omitted in B.

2) MS त्रिप्र.

3) B भाषन्ते, P corr.

विगतोद्भवा दैन्यमदप्रहीणा बुद्धा जगत्युत्तमहेतुभूताः।
नाकारणं शङ्खमृणालगौरं स्मितमुपदर्शयन्ति जिना जितारयः॥
तत्का[25b]लं स्वयमधिगम्य वीर बुद्ध्या
श्रोतृणां श्रमण[1] जिनेन्द्र काङ्क्षितानां।
धीराभिर्मुनिवृष वाग्भिरुत्तमाभि- 5
रुत्पन्नं व्यपनय संशयं शुभाभिः॥
नाकस्माल्लवणजलाद्रिराजधैर्याः
संबुद्धाः स्मितमुपदर्शयन्ति नाथाः।
यस्यार्थे स्मितमुपदर्शयन्ति धीराः
तं श्रोतुं समभिलषन्ति ते जनौघा इति॥ 10

भगवानाह। एवमेतदानन्दैवमेतत्। नाहेत्वप्रत्ययमानन्द तथागता अर्हन्तः सम्यक्संबुद्धाः स्मितं प्राविष्कुर्वन्ति। पश्यस्यानन्दानेन गृहपतिना ममैवंविधं सत्कारं कृतम्॥ एवं[2] भदन्त॥ एषा[3]नन्द गृहपतिरनेन कुशलमूलेन चित्तोत्पादेन देयधर्मपरित्यागेन च शीतप्रभो नाम प्रत्येकबुद्धो भविष्यति। अयमस्य देयधर्मो यो ममान्तिके चित्तप्रसाद इति। तस्मात्तर्हि भिक्षव एवं शिक्षितव्यं यद्बुद्धप्रत्येकबुद्धार्यश्रावकेषु कारान्करिष्याम इत्येवं 15 वो भिक्षवः शिक्षितव्यम्॥

इदमवोचद्भगवानात्तमनसस्ते च भिक्षवो भगवतो भाषितमभ्यनन्दन्॥

---

1) MS श्रवण.
2) B वभदन्त, D corr.
3) Cp. *supra* p. 62, 1.

## नाविका इति २७।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिस्सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ‹ज्ञातो›[1] महापुण्यो लाभी चीवरपिण्डपातशयनासन-
5 ग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घो मगधेषु जनपदचारिकां चरन्गङ्गातीरमनुप्राप्तः ॥ अथ भगवान्भिक्षुगणपरिवृतो भिक्षुसङ्घपुरस्कृतो येन नाविकास्तेनोपसंक्रान्तः। उपसंक्रम्य नाविकानिदमवोचत्। उत्तारयन्तु भवन्तो मामिमां नदीमिति ॥ नाविका ऊचुः। तरपण्यं प्रयच्छेति ॥ ततो भगवांस्तान्नाविकानिदमवोचत्। अहमपि भवन्तो नाविकः पूर्वमासं मया हि रागनदीपतितो नन्दस्तारितः द्वेषार्णवपतितो ऽङ्गुलिमालः माना-
10 र्णवपतितो मानस्तब्धो माणवः[2] मोहार्णवपतित उरुविल्वकाश्यपस्तारितः[3] न च मे तरपण्यं याचिता इति ॥ तथाप्युच्यमाना न प्रतिपाद्यन्ते तारयितुम् ॥

अन्यतमेन नाविकेन भगवतो ऽष्टाङ्गोपेतं स्वरं श्रुत्वा तां च रूपसंपदं दृष्ट्वा प्रसादजातेनोक्तम्। अहं भगवन्तं सश्रावकसङ्घमुत्तारयिष्यामीति ॥ ततो भिक्षवो नावमभिरूढा भगवानृद्ध्याग्रत एव तस्य नाविकस्यापारिमात्तीरात्पारिमे तीरे स्थितः ॥ ततः स नावि-
15 कस्तदृद्धिप्रातिहार्यं दृष्ट्वा आवर्जितमनाः पादयोर्निपतितः। तस्मै भगवता तादृशी चतुरार्यसत्यसंप्रतिवेधिकी धर्मदेशना कृता यां श्रुत्वा तेन नाविकेन विंशतिशिखरसमुद्गतं

---

1) P adds the missing word.

2) Ex conject.; MS मानवः. Cp. Feer p. 106, 1 «à un jeune brahmane Mānastabdha».

3) Ex conject.; MS उपरिविल्वाका°.

सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रोतआपत्तिफलं[1] प्राप्तम्। स दृष्टसत्यस्त्रिरुदानमुदानयति। इदमस्माकं भदन्त न मात्रा कृतं न पित्रा न राज्ञा न देवताभिर्नेष्टैन[2] स्वजनबन्धुवर्गेण न पूर्वप्रेतैर्न श्रमणब्राह्मणैर्यद्भगवतास्माकं कृतम्। उच्छोषिता रुधिराश्रुसमुद्रा लङ्घिता अस्थिपर्वताः पिहितान्यपायद्वाराणि विवृतानि स्वर्गमोक्षद्वाराणि प्रतिष्ठापिताः[3] स्मो देवमनुष्येषु। आह च। 5

तवानुभावात्पिहितः सुघोरो[4] ह्यपायमार्गो बहुदोषयुक्तः।
अपावृता स्वर्गगतिः सुपुण्या निर्वाणमार्गश्च मयोपलब्धः॥
त्वदाश्रयाच्चाप्तमपेतदोषं मयाद्य शुद्धं सुविशुद्ध चक्षुः।
प्राप्तं च शान्तं पदमार्यकान्तं तीर्णश्च दुःखार्णवपारमस्मि[5]॥
नरवरेन्द्र नरामरपूजित[6] विगतजन्मजरामरणामय। 10
भवसहस्रसुदुर्लभदर्शन सफलमद्य[7] मुने[8] तव दर्शनमिति॥

द्वितीयस्य नाविकस्य महान्विप्रतिसार[9] उत्पन्नः। तेन भगवतः पादयोर्निपत्यात्ययो देशितो भगवांश्च सश्रावकसङ्घः पिण्डकेन प्रतिपादितः॥

---

1) B श्रोत्रआ°, D श्रोता°. The usual orthography of this word in MS is श्रोत°.

2) MS have a superfluous न after नेष्टैन. The right reading has been restored according to other occurrences of this *udāna* in our text, e. g. avad. nr. **59**. Cp. Divy. 554, 23 which has this alteration: *neṣṭair na svajanabandhuvargaiḥ*.

3) Visarga wanting in MS.

4) B सुरोघो, D corr.

5) MS स्मिं.

6) MS वरामर. Cp. Divy. 555, 7.

7) MS °दर्शनं(D°दर्शन)समालब्धमद्य, a bad reading, which disturbs also the metre. Cp. Divy. 555, 8.

8) MS मुनेस्तव.

9) Ex conject.; MS महाविप्रतिसारमुत्पन्नः.

भगवता स्मितं विदर्शितम् । धर्मता खलु यस्मिन्समये बुद्धा भगवन्तः स्मितं प्राविष्कुर्वन्ति तस्मिन्समये नीलपीतलोहितावदाता अर्चिषो मुखान्निश्चार्य काश्चिद्-धस्ताद्गच्छन्ति [26a] काश्चिदुपरिष्टाद्गच्छन्ति । या अधस्ताद्गच्छन्ति ताः संजीवं कालसूत्रं संघातं रौरवं महारौरवं तपनं प्रतापनमवीचिमर्बुदं निरर्बुदमटटं हहवं हुहुवमुत्पलं
5 पद्मं महापद्मं नरकान्[1]गत्वा ये उष्णनरकास्तेषु शीतीभूत्वा निपतन्ति ये शीतनरका-स्तेषूष्णीभूत्वा निपतन्ति । तेन तेषां सत्वानां कारणाविशेषाः प्रतिप्रस्रभ्यन्ते । तेषामेवं भवति । किं नु वयं भवन्त इतश्च्युता आहो स्विदन्यत्रोपपन्ना इति । तेषां प्रसादसंजननार्थं भगवान्निर्मितं विसर्जयति । तेषां निर्मितं दृष्ट्वैवं भवति । न ह्येव[2] वयं भवन्त इतश्च्युता नाप्यन्यत्रोपपन्ना अपि त्वयमपूर्वदर्शनः सत्वो ऽस्या-
10 नुभावेनास्माकं कारणाविशेषाः प्रतिप्रस्रब्धा इति । ते निर्मिते चित्तमभिप्रसाद्य तन्नरक-वेदनीयं कर्म [3]तपयित्वा देवमनुष्येषु प्रतिसन्धिं गृह्णन्ति यत्र सत्यानां भाजनभूता भवन्ति[4]। या उपरिष्टाद्गच्छन्ति ताश्चातुर्महाराजिकांस्त्रयस्त्रिंशान्यामांस्तुषितान्निर्माणरतीन्परनि-र्मितवशवर्तिनो ब्रह्मकायिकान्ब्रह्मपुरोहितान्महाब्रह्मणः[5] [6]परीत्ताभानप्रमाणाभानाभा-स्वरान्परीत्तशुभानप्रमाणशुभाञ्छुभकृत्स्नाननभ्रकान्पुण्यप्रसवान्बृहत्फलानबृहानतपान्सु-
15 दृशान्सुदर्शनानकनिष्ठान्देवान्गत्वा अनित्यं दुःखं [7]शून्यमनात्मेत्युद्घोषयन्ति गाथाद्वयं च भाषन्ते ।

आरभध्वं निष्क्रामत युज्यध्वं बुद्धशासने ।
धुनीत मृत्युनः सैन्यं नडागारमिव कुञ्जरः ॥

1) MS नरकं.
2) MS न ह्येव (D °वं).
3) MS त्ने.
4) B भवति, DP corr.
5) MS ब्रह्माणः (C ब्राह्मणाः).
6) B परीता, D corr.
7) MS शुन्य.

यो ह्यस्मिन्धर्मविनये अप्रमत्तश्चरिष्यति।
प्रहाय जातिसंसारं दुःखस्यान्तं करिष्यति॥

अथ ता अर्चिषस्त्रिसाहस्रमहासाहस्रं लोकधातुमन्वाहिण्ड्य भगवन्तमेव पृष्ठतः <पृष्ठतः>[1] समनुगच्छन्ति। तद्यदि भगवानतीतं कर्म व्याकर्तुकामो भवति भगवतः पृष्ठतो ऽन्तर्धीयन्ते। अनागतं व्याकर्तुकामो भवति पुरस्तादन्तर्धीयन्ते। नरकोपपत्तिं व्याकर्तुकामो भवति पादतले ऽन्तर्धीयन्ते। तिर्यगुपपत्तिं व्याकर्तुकामो भवति पार्ष्ण्यामन्तर्धीयन्ते। प्रेतोपपत्तिं व्याकर्तुकामो भवति पादाङ्गुष्ठे ऽन्तर्धीयन्ते। मनुष्योपपत्तिं व्याकर्तुकामो भवति जानुनो<र्>न्तर्धीयन्ते। बलचक्रवर्तिराज्यं व्याकर्तुकामो भवति वामे करतले ऽन्तर्धीयन्ते। चक्रवर्तिराज्यं व्याकर्तुकामो भवति दक्षिणे करतले ऽन्तर्धीयन्ते। देवोपपत्तिं व्याकर्तुकामो भवति नाभ्यामन्तर्धीयन्ते। श्रावकबोधिं व्याकर्तुकामो भवति आस्ये ऽन्तर्धीयन्ते। प्रत्येकां बोधिं व्याकर्तुकामो भवति ऊर्णायामन्तर्धीयन्ते। अनुत्तरां सम्यक्संबोधिं व्याकर्तुकामो भवति उष्णीषे ऽन्तर्धीयन्ते॥

अथ ता अर्चिषो भगवन्तं त्रिः[2] प्रदक्षिणीकृत्य भगवत उष्णीषे ऽन्तर्हिताः। अथायुष्मानानन्दः कृतकरपुटो भगवन्तं पप्रच्छ।

नानाविधो रङ्गसहस्रचित्रो वक्त्रान्तरान्निष्क्रसितः कलापः।
अवभासिता येन दिशः समन्ताद्दिवाकरेणोदयता यथैव॥

गाथाश्च भाषते।

विगतोद्भवा दैन्यमदप्रहीणा बुद्धा जगत्युत्तमहेतुभूताः।
नाकारणं शङ्खमृणालगौरं स्मितमुपदर्शयन्ति जिना जितारयः॥
तत्कालं[3] स्वयमधिगम्य वीर बुद्ध्या
श्रोतॄणां श्रमण[4] जिनेन्द्र काङ्क्षितानां।

---

1) D has here पृष्ठतो पृष्ठतः.
2) MS त्रिप्र.
3) MS तत्कालस्व°, but D तत्कारंस्व°.
4) MS श्रवण.

धीराभिर्मुनिवृष वाग्भिरुत्तमाभि-
रुत्पन्नं[1] व्यपनय संशयं[2] शुभाभिः ॥
नाकस्माल्लवणजलाद्रिराजधैर्याः
संबुद्धाः स्मितमुपदर्शयन्ति नाथाः ।
5 यस्यार्थे स्मितमुपदर्शयन्ति धीराः
तं श्रोतुं समभिलषन्ति ते जनौघा इति ॥

भगवानाह । एवमेतदानन्दैवमेतत् । नाहेत्वप्रत्ययमानन्द तथागता अर्हन्तः सम्यक्संबुद्धाः स्मितं प्राविष्कुर्वन्ति । पश्यस्यानन्दानेन नाविकेन ममान्तिके चित्तं प्रसादितम् ॥ एवं[3] भदन्त ॥ एषानन्द[4] नाविको ऽनेन कुशलमूलेन चित्तोत्पादेन देयधर्मपरित्यागेन 10 चानागते ऽध्वनि संसारोत्तरणो नाम प्रत्येकबुद्धो भवि[26 b]ष्यति । अयमस्य देयधर्मो यो ममान्तिके चित्तप्रसाद इति । तस्मात्तर्हि भिक्षव एवं शिक्षितव्यं यद्बुद्धप्रत्येकबुद्धश्रावकेषु कारान्[5]करिष्याम इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

1) B त्पन्नव्य, D corr.
2) Anusvāra wanting in MS.
3) B एवभ, D corr.
4) Cp. *supra* p. 62, 1.
5) MS काराकरि° (D कराकरि°).

# गन्धमादन इति २८ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिस्सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपात[1]शयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घो राजगृहमुपनिश्रित्य विहरति वेणुवने क- 5
लन्दकनिवापे ॥ [2]आचरितमेतन्मध्यदेशे भूयसा मध्यदेशनिवासिनो [3]जानपदा विचित्रैरनुलेपनैर्गात्रमनुलिम्पन्ति ॥ यावदन्यतमो गृहपतिपुत्रः । तस्य दारिका ‹आढ्या› [4]भद्रा कल्याणाशया लोहितचन्दनं पिनष्टि भगवांश्च पूर्वाह्णे निवास्य पात्रचीवरमादाय भिक्षुगणपरिवृतो भिक्षुसङ्घपुरस्कृतो राजगृहं पिण्डाय प्राविक्षत् ॥ अद्राक्षीत्सा दारिका बुद्धं भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः समलङ्कृतमशीत्या चानुव्यञ्जनैर्विराजितगात्रं [5]व्यामप्रभा- 10
लङ्कृतं सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकं दृष्ट्वा च दारिकाया महा-

---

1) MS पात्र.

त ए
2) B आचरिततोमितन्मध्य°, the akṣaras ततोमित show probably the marks of being expunged. The copyists vary, that of D writes आचचारत । तता and leaves out the three following words, P आचरिततता एतन्म°, C the same, but मे instead of ए. There can exist no doubt as to the right reading.

3) Ex conject.; MS जनपद (D °दे). For the rest, जानपद is not seldom confounded with जनपद in manuscripts. Cp. my observation in W. Z. XVI, 106.

4) I borrow this indispensable supplement, which is an integral part of a standing formula, from the Tibetan version apud Feer 107 n. 3.

5) MS व्योम.

न्प्रसाद उत्पन्नः ॥ ततो लब्धप्रसादाया एतदभवत्। किं ममानेनैवंविधेन जीवितेन याह-मीदृशं क्षेत्रमासाद्य न शक्नोमि दारिद्र्यदोषाद्भगवतः[1] कारान्कर्तुमिति ॥

ततस्तया स्वजीवितमगणयित्वा उभौ पाणी लोहितचन्दनेन प्रलिप्य भगवतः पादयोरङ्गदे कृते[2] भगवता च ऋद्ध्या सकलं राजगृहनगरं चन्दनगन्धेनापूरितम् ॥ ततो
5 दारिका तत्प्रातिहार्यं दृष्ट्वा प्रसन्नचित्ता भगवतः पादयोर्निपत्य चेतनां पुष्णाति। अनेन कुशलमूलेन प्रत्येकां बोधिं साक्षात्कुर्यामिति ॥

ततो भगवता स्मितं विदर्शितम्। धर्मता खलु यस्मिन्समये बुद्धा भगवन्तः स्मितं प्राविष्कुर्वन्ति तस्मिन्समये नीलपीतलोहितावदाता अर्चिषो मुखान्निश्चार्य काश्चिदधस्ताद्गच्छन्ति काश्चिदुपरिष्टाद्गच्छन्ति । या अधस्ताद्गच्छन्ति ताः संजीवं
10 कालसूत्रं संघातं रौरवं महारौरवं तपनं प्रतापनमवीचिमर्बुदं निरर्बुदमटटं हहवं हुहुवमुत्पलं पद्मं महापद्मं नरकान्गत्वा[3] ये उष्णनरकास्तेषु शीतीभूत्वा निपतन्ति ये शीतनरकास्तेषूष्णीभूत्वा निपतन्ति । तेन तेषां सत्त्वानां कारणाविशेषाः प्रतिप्रस्रभ्यन्ते। तेषामेवं भवति। किं नु वयं भवन्त इतश्च्युता आहो स्विदन्यत्रोपपन्ना इति। तेषां प्रसादसंजननार्थं भगवान्निर्मितं विसर्जयति। तेषां निर्मितं दृष्ट्वैवं
15 भवति। न ह्येवं[4] वयं भवन्त इतश्च्युता नाप्यन्यत्रोपपन्ना[5] अपि त्वयमपूर्वदर्शनः सत्त्वो ऽस्या-

1) MS दोषाभ°.

2) It is not certain that this reading is genuine. In B there is an interlinear akṣara put above कृ, that may be read त्त or त्तु or न्यु and on the upper margin, with reference to this passage, is written दीयते. The copyists of P and C neglected those additions, that of D using them wrote plain nonsense पादेष्टाङ्गुदेद्यते. That *aṅgada* is said also of the foot-ornament, is plain from the compound *pādāṅgada*.

3) MS नरकं.

4) MS न हेवं (D न ह्यैवं).

5) added in D.

नुभावेनास्माकं कारणाविशेषाः प्रतिप्रस्रब्धा इति। ते निर्मिते चित्तमभिप्रसाद्य तन्नरक-वेदनीयं कर्म क्षपयित्वा देवमनुष्येषु प्रतिसन्धिं गृह्णन्ति यत्र सत्यानां भाजनभूता भवन्ति। या उपरिष्टाद्गच्छन्ति ताश्चातुर्महाराजिकांस्त्रयस्त्रिंशान्यामांस्तुषितान्निर्माणरतीन्परनिर्मितवशवर्तिनो ब्रह्मकायिकान्ब्रह्मपुरोहितान्महाब्रह्मणः[1] परीत्ताभानप्रमाणाभानाभास्वरान्परीत्तशुभानप्रमाणशुभाञ्छुभकृत्स्नाननभ्रकान्पुण्यप्रसवान्बृहत्फलानबृहानतपान्सुदृशान्सुदर्शनानकनिष्ठान्देवान्गत्वा अनित्यं दुःखं शून्यमनात्मेत्युद्घोषयन्ति[2] गाथाद्वयं च भाषन्ते।

आरभध्वं निष्क्रामत युज्यध्वं बुद्धशासने।
धुनीत मृत्युनः सैन्यं नडागारमिव कुञ्जरः॥
यो ह्यस्मिन्धर्मविनये अप्रमत्तश्चरिष्यति।
प्रहाय जातिसंसारं दुःखस्यान्तं करिष्यति॥

अथ ता अर्चिषस्त्रिसाहस्रमहासाहस्रं लोकधातुमन्वाहिण्ड्य भगवन्तमेव पृष्ठतः पृष्ठतः समनुगच्छन्ति। तद्यदि भगवानतीतं कर्म व्याकर्तुकामो भवति भगवतः पृष्ठतो ऽन्तर्धीयन्ते। अनागतं व्याकर्तुकामो भवति पुरस्तादन्तर्धीयन्ते। नरकोपपत्तिं [27a] व्याकर्तुकामो भवति पादतले ऽन्तर्धीयन्ते। तिर्यगुपपत्तिं व्याकर्तुकामो भवति पार्ष्ण्यामन्तर्धीयन्ते। प्रेतोपपत्तिं व्याकर्तुकामो भवति पादाङ्गुष्ठे ऽन्तर्धीयन्ते। मनुष्योपपत्तिं व्याकर्तुकामो भवति जानुनो(ः)ऽन्तर्धीयन्ते। बलचक्रवर्तिराज्यं व्याकर्तुकामो भवति वामे करतले ऽन्तर्धीयन्ते। चक्रवर्तिराज्यं व्याकर्तुकामो भवति दक्षिणे करतले ऽन्तर्धीयन्ते। देवोपपत्तिं व्याकर्तुकामो भवति नाभ्यामन्तर्धीयन्ते। श्रावकबोधिं व्याकर्तुकामो भवति आस्ये ऽन्त-

1) MS ब्रह्माणः.

2) B शुन्य°, D corr.

धीयन्ते । प्रत्येकां बोधिं व्याकर्तुकामो भवति ऊर्णायामन्तर्धीयन्ते । अनुत्तरां सम्यक्संबोधिं व्याकर्तुकामो भवति उष्णीषे ऽन्तर्धीयन्ते ॥

अथ ता अर्चिषो भगवन्तं त्रिः[(1)] प्रदक्षिणीकृत्य भगवत ऊर्णायामन्तर्हिताः । अथायुष्मानानन्दः कृतकरपुटो भगवन्तं पप्रच्छ ।

5 नानाविधो रङ्गसहस्रचित्रो वक्त्रान्तरान्निष्कसितः कलापः ।
अवभासिता येन दिशः समन्ताद्दिवाकरेणोदयता यथैव ॥

गाथाश्च भाषते ।

विगतोद्भवा दैन्यमदप्रहीणा बुद्धा जगत्युत्तमहेतुभूताः ।
नाकारणं शङ्खमृणालगौरं स्मितमुपदर्शयन्ति जिना जितारयः ॥

10 तत्कालं स्वयमधिगम्य वीर बुद्ध्या
[(2)]श्रोतॄणां [(3)]श्रमण जिनेन्द्र काङ्क्षितानां ।
धीराभिर्मुनिवृष वाग्भिरुत्तमाभि-
रुत्पन्नं व्यपनय संशयं शुभाभिः ॥
नाकस्माल्लवणजलाद्रिराजधैर्याः
15 संबुद्धाः स्मितमुपदर्शयन्ति नाथाः ।
यस्यार्थे स्मितमुपदर्शयन्ति धीराः
तं श्रोतुं समभिलषन्ति ते जनौघा इति ॥

भगवानाह । एवमेतदानन्दैवमेतत् । नाहेत्वप्रत्ययमानन्द तथागता अर्हन्तः सम्यक्संबुद्धाः स्मितं प्राविष्कुर्वन्ति । पश्यस्यानन्दानया दारिकया ममैवंविधं सत्कारं कृतम् ॥
20 एवं भदन्त ॥ एषानन्द दारिकानेन कुशलमूलेन चित्तोत्पादेन देयधर्मपरित्यागेन च गन्ध-

---

1) MS त्रिप्र.

2) MS श्रोतृ°.

3) MS श्रवण.

मादनो[1] नाम प्रत्येकबुद्धो भविष्यति । ग्रयमस्या देयधर्मो यो ममात्तिके चित्तप्रसादः । तस्मात्तर्ह्हि भित्तव एवं शित्तितव्यं यद्बुद्धप्रत्येकबुद्धार्यश्रावकेषु कारान्करिष्याम इत्येवं वो भित्तवः शित्तितव्यम् ॥

इदमवोचद्भगवानात्तमनसस्ते भित्तवो भगवतो भाषितमभ्यनन्दन् ॥

---

1) MS मादना.

## निर्मल इति २९।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देव[1]मनुष्यासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपात[2]शयनासनग्लान-
5 प्रत्ययभैषज्यपरिष्कारणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्डदस्यारामे ॥ श्रावस्त्यामन्यतम आरामिकः। स दन्तकाष्ठमादाय श्रावस्तीं प्रविशति नैमित्तिकश्च द्वारे ऽवस्थितः। स कथयति। य एतद्दन्तधावनं भक्ष[3]यिष्यति स शतरसं भोजनं भक्षयिष्यति ॥ तद्वचनमारामिकेण श्रुतं श्रुत्वा चैवं चिन्तयामास। [4]कस्मायेतद्दन्तधावनं दद्यां येन मे महान्संमानः स्यादिति ॥ तस्यैतदभवत्। अयं बुद्धो भगवान्सचराचरे लोके
10 जङ्गमं[5] पुण्यक्षेत्रमबन्ध्यमहाफलं च। यन्नूनमिदं बुद्धाय भगवते दद्यामिति ॥

अथ स आरामिको दन्तकाष्ठमादाय येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्ते ऽस्थात्। एकान्तस्थितः स आरामिको भगवन्तमिदमवोचत्। इदं भगवन्दन्तकाष्ठं प्रतिगृह्यतां ममान्तिकादनुकम्पामुपादायेति[6]॥ अथ भगवानारा-

---

1) B देद, DP corr. — In D this uncommon formula has been changed into the usitated one देवनागयक्षासुर°, perhaps rightly.

2) MS पात्र.

3) See Feer *Journal Asiatique*, Nouv. S., XIII, 363—69.

4) MS कस्मायेतद्द° (D कस्मानैवं द°).

5) Anusvāra wanting in MS.

6) MS °दायेत्यथ (D made thereof °दाय ॥ अथ).

मिकस्यानुग्रहार्थं गजभुजसदृशं सुवर्णवर्णा[1] बाहुमभिप्रसार्य गृहीतवान्गृहीत्वा ‹भक्षितवान्भक्षयित्वा›[2] चैनमारामिकस्याग्रतो विसर्जितवान् । विसर्ज्य तद्दन्तकाष्ठं[3] पृथिव्यां ‹निखातवान्›[4] । निखातमात्रमेव च तच्छाखापत्रपुष्पफलसमृद्धो महान्यग्रोधः परिमण्डलस्तत्रैव तृणो[5] निर्वृत्तो यस्य छायायां निषद्य भगवतानेकेषां देवमनुष्याणां[6] धर्मो देशितः ॥ ततो [27 b] ऽनाथपिण्डदेन गृहपतिना भगवान्शतरसेनाहारेण[7] प्रतिपादितः ॥ 5

अथ स आरामिको भगवदुपस्थानात्प्रातिहार्याच्चावर्जितमना मूलनिकृत्त[8] इव द्रुमः पादयोर्निपत्य प्रणिधानं कर्तुमारब्धः । अनेनाहं कुशलमूलेन प्रत्येकां बोधिं साक्षात्कुर्यामिति ॥

ततो भगवता स्मितं विदर्शितम् । धर्मता खलु यस्मिन्समये बुद्धा भगवन्तः स्मितं प्राविष्कुर्वन्ति तस्मिन्समये नीलपीतलोहितावदाता अर्चिषो मुखान्निश्चार्य काश्चिदधस्ताद्गच्छन्ति काश्चिदुपरिष्टाद्गच्छन्ति । या अधस्ताद्गच्छन्ति ताः संजीवं कालसूत्रं संघातं 10 रौरवं महारौरवं तपनं प्रतापनमवीचिमर्बुदं निरर्बुदमटटं हहवं हुहुवमुत्पलं पद्मं महापद्मं नरकान्गत्वा[9] ये उष्णनरकास्तेषु शीतीभूत्वा निपतन्ति ये शीतनरकास्तेषूष्णीभूत्वा निपतन्ति । तेन तेषां सत्त्वानां कारणाविशेषाः प्रतिप्रस्रभ्यन्ते । तेषामेवं भवति ।

---

1) B वर्णा, D corr.

2) According to Feer, l. l. p. 365, the Tibetan version inserts here གསོལ་ཏོ༑ ། གསོལ་ནས་, which corresponds to a lost Sanskrit भक्षितवान्भक्षयित्वा between गृहीत्वा and च. The ungrammatical *enam* instead of *enat* must be authentic, I suppose.

3) MS तंदन्त°.

4) I have inserted this participle, which is indispensable because it is impossible to construe *visarjya.....nirvṛttaḥ* so as to make up one sentence, and further *nikhātamātram eva ca* can only stand at the head of a new sentence.

5) Ex conject.; MS तृणोर्निवृत्तो (D तृणोः र्विवृत्तो!).

6) B मनुष्यां, D corr.

7) B °रसेना°, D corr.

8) MS निकृत्त.

9) MS नरकं.

किं नु वयं भवन्त इतश्च्युता आहो स्विदन्यत्रोपपन्ना इति । तेषां प्रसादसंजननार्थं भगवान्निर्मितं विसर्जयति । तेषां निर्मितं दृष्ट्वैवं भवति । न[1] ह्येव वयं भवन्त इतश्च्युता नाप्यन्यत्रोपपन्ना अपि[2] त्वयमपूर्वदर्शनः सत्त्वो ऽस्यानुभावेनास्माकं कारणाविशेषाः प्रतिप्रस्रब्धा इति । ते निर्मिते चित्तमभिप्रसाद्य तन्नरकवेदनीयं कर्म[3] क्षपयित्वा देवमनुष्येषु प्रतिसन्धिं
5 गृह्णन्ति यत्र सत्यानां भाजनभूता भवन्ति । या उपरिष्टाद्गच्छन्ति ताश्चातुर्महाराजिकांस्त्रयस्त्रिंशान्यामांस्तुषितान्निर्माणरतीन्परनिर्मितवशवर्तिनो ब्रह्मकायिकान्ब्रह्मपुरोहितान्महाब्रह्मणः[4] परीत्ताभानप्रमाणाभानाभास्वरान्परीत्तशुभानप्रमाणशुभाञ्छुभकृत्स्नाननभ्रकान्पुण्यप्रसवान्बृहत्फलानवृहानतपान्सुदृशान्सुदर्शनानकनिष्ठान्देवान्गत्वा अनित्यं दुःखं शून्यमनात्मेत्युद्घोषयन्ति[5] गाथाद्वयं च भाषन्ते ।

10 आरभध्वं निष्क्रामत युज्यध्वं बुद्धशासने ।
धुनीत मृत्युनः सैन्यं नडागारमिव कुञ्जरः ॥
यो ह्यस्मिन्धर्मविनये अप्रमत्तश्चरिष्यति ।
प्रहाय जातिसंसारं दुःखस्यान्तं करिष्यति ॥

अथ ता अर्चिषस्त्रिसाहस्रमहासाहस्रं लोकधातुमन्वाहिण्ड्य भगवन्तमेव पृष्ठतः
15 पृष्ठतः समनुगच्छन्ति । तद्यदि भगवानतीतं कर्म व्याकर्तुकामो भवति भगवतः पृष्ठतो ऽन्तर्धीयन्ते । अनागतं व्याकर्तुकामो भवति पुरस्तादन्तर्धीयन्ते । नरकोपपत्तिं व्याकर्तुकामो भवति पादतले ऽन्तर्धीयन्ते । तिर्यगुपपत्तिं व्याकर्तुकामो भवति पार्ष्ण्यामन्तर्धीयन्ते । प्रेतोपपत्तिं व्याकर्तुकामो भवति पादाङ्गुष्ठे ऽन्तर्धीयन्ते । मनुष्योपपत्तिं व्याकर्तुकामो भवति जानुनो(र)न्तर्धीयन्ते । बलचक्रवर्तिराज्यं व्याकर्तुकामो भवति वामे करतले ऽन्तर्धीयन्ते ।

---

1) MS न ह्येव (D न ह्येवं).
2) B अपि स्वय°, P corr.
3) MS क्षेप°.
4) MS °ह्माणाः.
5) MS शुन्य.

चक्रवर्तिराज्यं व्याकर्तुकामो भवति दक्षिणे करतले ऽन्तर्धीयन्ते। देवोपपत्तिं व्याकर्तुकामो भवति नाभ्यामन्तर्धीयन्ते। श्रावकबोधिं व्याकर्तुकामो भवति आस्ये ऽन्तर्धीयन्ते। प्रत्येकां बोधिं व्याकर्तुकामो भवति ऊर्णायामन्तर्धीयन्ते। अनुत्तरां सम्यक्संबोधिं व्याकर्तुकामो भवति उष्णीषे ऽन्तर्धीयन्ते॥

अथ ता अर्चिषो भगवन्तं त्रिः[1] प्रदक्षिणीकृत्य भगवत ऊर्णायामन्तर्हिताः। अथायुष्मानानन्दः कृतकरपुटो भगवन्तं पप्रच्छ। 5

नानाविधो[2] रङ्गसहस्रचित्रो वक्त्रान्तरान्निष्कसितः कलापः।
अवभासिता येन दिशः समन्ताद्दिवाकरेणोदयता यथैव॥

गाथाश्च भाषते[3]।

विगतोद्भवा दैन्यमदप्रहीणा बुद्धा जगत्युत्तमहेतुभूताः। 10
नाकारणं शङ्खमृणालगौरं स्मितमुपदर्शयन्ति जिना जितारयः॥
तत्कालं स्वयमधिगम्य वीर बुद्ध्या
श्रोतॄणां[4] श्रमण[5] जिनेन्द्र काङ्क्षितानां।
धीराभिर्मुनिवृष वाग्भिरुत्तमाभि-
रुत्पन्नं व्यपनय संशयं शुभाभिः॥ 15
नाकस्माल्लवणजलाद्रिराजधैर्याः
संबुद्धाः स्मितमुपदर्शयन्ति नाथाः।
यस्यार्थे स्मि[28a]तमुपदर्शयन्ति धीराः
तं श्रोतुं समभिलषन्ति ते जनौघा इति॥

---

1) MS त्रिप्र.
2) B विध्वा, it seems, DP corr.
3) MS भाषन्ते.
4) B श्रोतृ°, DP corr.
5) MS श्रवण.

भगवानाह । एवमेतदानन्दैवमेतत् । नाहेत्वप्रत्ययमानन्द तथागता अर्हन्तः सम्यक्संबुद्धाः स्मितं प्राविष्कुर्वन्ति । पश्यस्यानन्दानेनारामिकेण ममैवंविधं सत्कारं कृतम् ॥ एवं भदन्त ॥ एषानन्दारामिको ऽनेन कुशलमूलेन चित्तोत्पादेन देयधर्मपरित्यागेन च त्रयोदश कल्पान्विनिपातं न गमिष्यति पश्चिमे भवे पश्चिमे निकेते पश्चिमे समुच्छ्रये पश्चिमे 5 आत्मभावप्रतिलम्भे निर्मलो नाम प्रत्येकबुद्धो भविष्यति । अयमस्य देयधर्मो यो ममान्तिके चित्तप्रसाद इति । तस्मात्तर्हि भिक्षव एवं शिक्षितव्यं यच्छास्तारं सत्करिष्यामो गुरुकरिष्यामो मानयिष्यामः पूजयिष्यामः शास्तारं सत्कृत्य गुरुकृत्य मानयित्वा पूजयित्वोपनिश्रित्य विहरिष्याम इत्येवं वो भिक्षवः शिक्षितव्यम् ॥[1]

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

1) Cp. *supra* p. 62, 1. Another instance see Kathās. 33, 199.

## वल्गुस्वरा[1] इति ३० ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यत्तैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयत्तासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपात[2]शयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवनेऽनाथपिण्डदस्यारामे ॥ अथ भगवान्पूर्वाह्णे निवास्य पात्रचीवरमादाय श्रावस्तीं पिण्डाय प्राविक्षत् । सं[3]बहुलाश्च गोष्ठिका मद्यमदात्तिप्ता वीणामृदङ्गपणवैर्विविधै[4]र्वाद्यै‹र्वाद्य›मानैर्नृत्यन्तो गायन्त उत्पलपद्मपुण्डरीकवार्षिकादिभिरुदारपुष्पै[5]रासक्तकण्ठेगुणा[6] विशिष्टाम्बरवसना बहिः श्रावस्त्या निर्गच्छन्ति भगवांश्च श्रावस्त्यां पिण्डाय प्राविक्षत् ॥ ददृशुस्ते गोष्ठिका बुद्धं भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः समलङ्कृतमशीत्या चानुव्यञ्जनैर्विराजितगात्रं [7]व्यामप्रभालङ्कृतं सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकं सहदर्शनाच्च तेषां यो ऽसौ[8] मद्य‹मदः›[9] स प्रतिविगतः ॥ ततो विगतमद्यमदाः प्रसादावर्जितमनसो[10] नृत्यगीत-

1) Ex conject.; MS वल्गुस्वर.

2) MS पात्र.

3) B सवह्न, DP corr. Cp. *supra* p. 73, n. 1.

4) Cp. *supra* p. 122, 2. MS वाद्यैर्मानैर्नृ° (D leaves out मांनै).

5) Ex conject.; MS पुष्पावासक्त.

6) Cp. *supra* p. 102, 8.

7) MS व्योम (P ध्याम).

8) B यो सौ मेद्यः — or मेघः, DP योसौ मद्यः.

9) Query: स ‹सं›प्रति विगतः?

10) B र्जितमदांनसा, the mark ॥ signifying expunction; the copies have °मनसा.

वाद्यैर्भगवत उपस्थानं चक्रुर्नीलपद्मानि चोपरि भगवतो[1] ‹निचिक्षिपुः।› निक्षिप्तानि चोपरि भगवतो नीलकूटागारो नीलच्छत्त्रं[2] नीलमण्डप इवावस्थितानि तानि च भगवन्तं गच्छन्तमनुगच्छन्ति तिष्ठन्तमनुतिष्ठन्ति। भगवता च नीलप्रभा उत्सृष्टा यया श्रावस्ती इन्द्रनीलमणिसदृशप्रभावस्थिता ॥

अथ ते गोष्ठिका लब्धप्रसादा चेतनां पुष्णन्ति[3]। अनेन वयं कुशलमूलेन प्रत्येकां बोधिं साक्षात्कुर्यामेति[3] ॥

ततो भगवता स्मितं विदर्शितम्। धर्मता खलु यस्मिन्समये बुद्धा भगवन्तः स्मितं प्राविष्कुर्वन्ति तस्मिन्समये नीलपीतलोहितावदाता अर्चिषो मुखान्निश्चार्य काश्चिद्-धस्ताद्गच्छन्ति काश्चिदुपरिष्टाद्गच्छन्ति। या अधस्ताद्गच्छन्ति ताः संजीवं कालसूत्रं संघातं रौरवं महारौरवं तपनं प्रतापनमवीचिमर्बुदं निरर्बुदमटटं हहवं हुहुवमुत्पलं[4] पद्मं महापद्मं नरकान्गत्वा[5] ये उष्णनरकास्तेषु शीतीभूत्वा निपतन्ति ये शीतनरका-स्तेषूष्णीभूत्वा निपतन्ति। तेन तेषां सत्त्वानां कारणाविशेषाः प्रतिप्रस्रभ्यन्ते। तेषामेवं भवति। किं नु वयं भवन्त इतश्च्युता आहो स्विदन्यत्रोपपन्ना इति। तेषां प्रसादसंजननार्थं भगवान्निर्मितं विसर्जयति। तेषां निर्मितं दृष्ट्वैवं भवति। न ह्येव[6] वयं भवन्त इतश्च्युता नाप्यन्यत्रोपपन्ना अपि त्व‹य›मपूर्वदर्शनः[7] सत्त्वो ऽस्या-

1) With this supplement cp. *supra* p. 159, n. 4.

2) Anusvāra wanting in MS.

3) MS पुष्णाति and कुर्यामिति, owing to the copyist of the archetype mechanically writing down his formula.

4) B हुहुवं हहवमु°, C corr.

5) MS नरकं.

6) MS न ह्येवं (D न ह्येवं).

7) D, as usual, स्वयम°.

नुभावेनास्माकं कारणाविशेषाः प्रतिप्रस्रब्धा इति । ते निर्मिते[1] चित्तमभिप्रसाद्य तन्नरकवेदनीयं कर्म क्षपयित्वा देवमनुष्येषु प्रतिसन्धिं गृह्णन्ति यत्र सत्यानां भाजनभूता भवन्ति । या उपरिष्टाद्गच्छन्ति ताश्चातुर्महाराजिकांस्त्रयस्त्रिंशान्यामांस्तुषितान्निर्माणरतीन्परनिर्मितवशवर्तिनो ब्रह्मकायिकान्ब्रह्मपुरोहितान्महाब्रह्मणः[2] परीत्ताभानप्रमाणाभानाभास्वरान्प[28b]रीत्तशुभानप्रमाणशुभाञ्छुभकृत्स्नाननभ्रकान्पुण्यप्रसवान्बृहत्फलानबृहानतपान्सुदृशान्सुदर्शनानकनिष्ठान्देवान्गत्वा अनित्यं दुःखं शून्यमनात्मेत्युद्घोषयन्ति[3] गाथाद्वयं च भाषन्ते ।

आरभध्वं निष्क्रामत युज्यध्वं बुद्धशासने ।
धुनीत मृत्युनः सैन्यं नडागारमिव कुञ्जरः ॥
यो ह्यस्मिन्धर्मविनये अप्रमत्तश्चरिष्यति ।
प्रहाय जातिसंसारं दुःखस्यान्तं करिष्यति ॥

अथ ता अर्चिषस्त्रिसाहस्रमहासाहस्रं लोकधातुमन्वाहिण्ड्य भगवन्तमेव पृष्ठतः पृष्ठतः समनुगच्छन्ति । तद्यदि भगवानतीतं कर्म व्याकर्तुकामो भवति भगवतः पृष्ठतोऽन्तर्धीयन्ते । अनागतं व्याकर्तुकामो भवति पुरस्तादन्तर्धीयन्ते । नरकोपपत्तिं व्याकर्तुकामो भवति पादतलेऽन्तर्धीयन्ते । तिर्यगुपपत्तिं व्याकर्तुकामो भवति पार्ष्ण्यामन्तर्धीयन्ते । प्रेतोपपत्तिं व्याकर्तुकामो भवति पादाङ्गुष्ठेऽन्तर्धीयन्ते । मनुष्योपपत्तिं व्याकर्तुकामो भवति जानुनो<र>न्तर्धीयन्ते । बलचक्रवर्तिराज्यं व्याकर्तुकामो भवति वामे करतलेऽन्तर्धीयन्ते । चक्रवर्तिराज्यं व्याकर्तुकामो भवति दक्षिणे करतलेऽन्तर्धीयन्ते । देवोपपत्तिं व्याकर्तुकामो भवति नाभ्यामन्तर्धीयन्ते । श्रावकबोधिं व्याकर्तुकामो भवति आस्येऽन्तर्धीयन्ते । प्रत्येकां बोधिं व्याकर्तुकामो भवति ऊर्णायामन्तर्धीयन्ते । अनुत्तरां सम्यक्संबोधिं व्याकर्तुकामो भवति उष्णीषेऽन्तर्धीयन्ते ॥

---

1) In B the last akṣ. is uncertain, in P it is तें, in C त, D corr.

2) MS °ह्माणाः.

3) MS शुन्य.

अथ ता अर्चिषो भगवन्तं त्रिः[1] प्रदक्षिणीकृत्य भगवत ऊर्णायामन्तर्हिताः। अथायुष्मानानन्दः कृतकरपुटो भगवन्तं पप्रच्छ।

नानाविधो रङ्गसहस्रचित्रो वक्त्रान्तरान्निष्कसितः कलापः।
अवभासिता येन दिशः समन्ताद्दिवाकरेणोदयता यथैव॥

5 गाथाश्च भाषते।

विगतोद्भवा दैन्यमदप्रहीणा बुद्धा जगत्युत्तमहेतुभूताः।
नाकारणं शङ्खमृणालगौरं स्मितमुपदर्शयन्ति जिना जितारयः॥
तत्कालं स्वयमधिगम्य वीर बुद्ध्या
[2]श्रोतॄणां श्रमण जिनेन्द्र काङ्क्षितानां।
10 धीराभिर्मुनिवृष वाग्भिरुत्तमाभि-
रुत्पन्नं व्यपनय संशयं शुभाभिः॥
नाकस्माल्लवणजलाद्रिराजधैर्याः
‹संबुद्धाः› स्मितमुपदर्शयन्ति नाथाः।
यस्यार्थे स्मितमुपदर्शयन्ति धीराः
15 तं श्रोतुं समभिलषन्ति ते जनौघा इति॥

भगवानाह। एवमेतदानन्दैवमेतत्। नाहेत्वप्रत्ययमानन्द तथागता अर्हन्तः सम्यक्संबुद्धाः स्मितं प्राविष्कुर्वन्ति। पश्यस्यानन्द एभिर्गोष्ठिकैर्ममैवंविधं सत्कारं कृतम्॥ एवं[3] भदन्त॥ एते आनन्द गोष्ठिका अनेन कुशलमूलेन चित्तोत्पादेन देयधर्मपरित्यागेन च विंशत्यन्तर[4]कल्पान्विनिपातं न गमिष्यन्ति पश्चिमे भवे पश्चिमे निकेते पश्चिमे समु-

---

1) MS त्रिप्र.

2) B श्रोतृ°, D corr.

3) Anusvāra wanting in MS.

4) Here, as at the end of tale 24, the numeral *viṃçati* is treated as an indeclinable, cp. *supra* p. 138, 6.

च्छ्रये पश्चिमे आत्मभावप्रतिलम्भे वल्गुस्वरा नाम प्रत्येकबुद्धा भविष्यन्ति । अयमेषां देयधर्मो यो ममान्तिके चित्तप्रसाद इति । तस्मात्तर्हि भिक्षव एवं शिक्षितव्यं यद्बुद्धप्रत्येकबुद्धार्यश्रावकेषु कारान्करिष्याम इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

For some avadānas of the fourth decade and avad. nr. 41 the fragments found in Cambr. Add. 1680, II (manuscript of the XIV—XVth cent.) have been used, by means of a photographic reproduction of the palm-leaves containing them, which I owe to the skill of Dr. F. J. Allen, by the kind intercession of Prof. Bendall. This source is denoted by the letter F.

---

## चतुर्थो वर्गः ।

### [1] पद्मक इति ३१ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपात[2]शयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्डदस्यारामे ॥ शरत्कालसमये भिक्षवो रोगेण बाध्यन्ते पीतपाण्डुकाः कृशशरीरा दुर्बलाङ्गा भगवांस्त्वल्पाबाधो ऽल्पातङ्को ऽरोगो बलवान् । तद्दर्शनाद्भिक्षवो भगवन्तं पप्रच्छुः । पश्य भदन्त एते भिक्षवः शा[29 a]रदिकेन रोगेण बाध्यन्ते पीतपाण्डुकाः कृशशरीरा दुर्बलाङ्गा भगवांस्त्वल्पाबाधो ऽल्पातङ्को बलवानरोगजातीयः समपाकया च ग्रहण्या[3] समन्वागत इति ॥

भगवानाह । तथागतेनैवै[4]तानि भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि[5] । मयैतानि

---

1) Here precedes in MS this *uddāna* of the fourth varga उद्दानं पद्मकः कवडश्चैव धर्मपालः शिविस्तथा । सुरूपो मैत्रकण्यश्च [read: मैत्रकन्यश्च] शशो धर्मगविषिणा [read: °गवेषिणा] । अनाथपिण्डदः सुभद्रश्च वर्गो भवति समुद्दित<:>.

2) MS पात्र.

3) Ex conject.; MS ग्रहण्यां (C ण्यां or ण्या, P ण्यं).

4) B °नैवेतानि, P corr.

5) MS भागीनि.

कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति। न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ[1] न तेजोधातौ न वायुधातावपि तूपात्तेष्वेव[2] स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च।

न प्रणश्यन्ति कर्माणि ग्रपि कल्पशतैरपि[3]।

सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम्॥ 5

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि वाराणस्यां नगर्यां पद्मको नाम राजा राज्यं कारयति ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं चाकीर्णबहुजनमनुष्यं[4] च प्रशान्तकलिकलहडिम्बडमरं[5] तस्कररोगापगतं शालीक्षुगोमहिषीसंपन्नमखिलमकण्ठकमेकपुत्रमिव राज्यं कारयति। स च राजा श्राद्धो भद्रः कल्याणाशय ग्रात्महितपरहितप्रतिपन्नः कारुणिको महात्मा धर्मकामः प्रजावत्सलः सर्वप्रदः सर्वपरित्यागी निःसङ्गपरित्यागी च महति 10 त्यागे वर्तते॥ तस्मिंश्च समये वाराणस्यां कालवैषम्याद्धातुवैषम्याद्वा[6] व्याधिरुत्पन्नः। प्रायः सत्त्वानां पाण्डुरोगः संवृत्तः॥ ततो राज्ञा तान्दृष्ट्वा कारुण्यमुत्पादितं मया ह्येषां परित्राणं करणीयं[7] चिकित्सा चेति॥ ततः स राजा सर्वविषयनिवासिनो वैद्यान्संनिपात्य तेषां सत्त्वानां निदानमाशयानुशयं चोपलक्ष्य स्वयमारब्धश्चिकित्सां सर्वौषधसमुदा-[8]नयञ्च कर्तुम्॥ ततश्चिकित्स्यमानानां तेषां सत्त्वानां बहवः काला ग्रतिक्रान्ता न च श- 15

1) B ब्धाधौ, DP corr.

2) Cp. *supra* p. 74, n. 9.

3) Here even D has this corrupted form of the second pāda, cp. *supra* p. 74, n. 13.

4) B चावकी°, D corr. All MSS have °कीर्ण.

5) I have added the anusvāra, cp. *supra* p. 120, n. 5. In the sequel this addition will no more be mentioned.

6) Ex conject.; MS कालवैशम्यात् [CD म्यात] धातुवैशुन्यो व्याधि°. Cp. *infra* p. 170, 8.

7) Ex conject.; MS परित्राणः करणीया.

8) MS सर्वौषध (C सर्वाधध).

क्यते वैद्यद्रव्यौषध[1]परिचारक[2]संपन्ना अपि चिकित्सितुम्। ततो राज्ञा सर्ववैद्यानाहूयाद्-
राज्ञातेन पुनः पृष्टाः को ऽत्र हेतुर्येन मे दुश्चिकित्स्या इति ॥ वैद्या विचार्य गुणदोषानेक-
मतेनाहुः। देव कालवैषम्याद्धातुवैषम्याच्च लक्षयामहे अपि तु देवास्त्येकभैषज्यं रोहितो
नाम मत्स्यो यदि तस्य प्राप्तिः स्याच्छक्यते चिकित्सितुमिति ॥ ततो राज्ञा रोहितं
5 मत्स्यं समन्वेषितु[3]मारब्धः। स बहुभिरपि[4] चारपुरुषैर्मृग्यमाणो न लभ्यते। ततस्ते[5] राज्ञे
निवेदितवन्तः ॥

अथ राज्ञापरेण [6]समयेन बहिर्यानाय निर्गच्छति ते च व्याधिन एकसमूहेन स्थित्वा
राजानमूचुः। परित्रायस्व महाराज [7]अस्मा<नस्मा>द्व्याधेः प्रयच्छ जीवितमिति ॥ ततो
राज्ञा [8]करुणादीनविलम्बितैरक्षरैरुच्यमानस्तदातुरवचनं श्रुत्वा कारुण्यादाकम्पितहृदयः
10 साश्रुदुर्दिनवदनं चिन्तयामास। किं [9]ममानेनैवंविधेन जीवितेन राज्यैश्वर्याधिपत्येन वा
ईदृशेन यो ऽहं परेषां दुःखार्तानां न शक्तो ऽस्मि शान्तिं कर्तुमिति ॥ एवं विचिन्त्य राज्ञा
महान्तमर्थोत्सर्गं कृत्वा ज्येष्ठं कुमारं राज्यैश्वर्याधिपत्येषु प्रतिष्ठाप्य बन्धुजनं क्षमयित्वा पौ-
रामात्यांश्च क्षमयित्वा दीनान्समाश्वास्या[10]ऽष्टाङ्गसमन्वागतं व्रतं समादायोपरिप्रासादतलम-

---

1) MS व्योषध.

2) Ex conject. (cp. Kathās. 40, 57); B परिचारंक, unless the dot on र is a wiped out anusv. CP have रंक, D रिकं.

3) MS न्वेषतुमा°.

4) B बहुभिरभिपि, P corr.

5) B has ते or तै, its copies तै.

6) B समयेण, D corr.

7) I have made the insertion considering the personal pronoun to be indispensable here and on account of the parallel passage in tale 32 (*infra* p. 175, 5).

8) Ex conject., as is plain by many other instances of this formula, e. g. Divy. 449, 10. 564, 29 and *infra* tale 33 (B f. 30b) at the end; MS करुणादान°. Cp. W. Z. XVI, 106 my observation on Divy. 169, 12.

9) Ex conject.; MS मयानेनैवविधेन.

10) Sic MS.

भिरुह्य धूपपुष्पगन्धमाल्यविलेपनञ्च त्तिप्त्वा प्राङ्मुखः प्रणिधिं कर्तुं प्रारब्धः । येन सत्येन सत्यवचनेन महाव्यसनगतान्सत्त्वान्व्याधिपरिपीडितान्दृष्ट्वा स्वजीवितमिष्टं परित्यजाम्यनेन सत्येन सत्यवाक्येनास्यां वालुकायां[1] नद्यां महान्रोहितमत्स्यः प्रादुर्भवेयम्[2] । इत्युक्त्वा प्रासादतलादात्मानं मुमोच ॥

स पतितमात्रः कालगतो नद्यां वालुकायां[3] महान्रोहितमत्स्यः प्रादुर्भूतः । इति 5 देवताभिः सर्वविजिते शब्द उत्सृष्टः । एष दीर्घकालमहाव्याध्युत्पीडितानाममृतकल्पो नद्यां वालुकायां[3] महान्रोहितम[29b]त्स्यः प्रादुर्भूत इति । यतः सहस्रवणान्महाजनकायः शस्त्रव्यग्रकरः पिटकानादाय निर्गत्य विविधैस्तीक्ष्णैः शस्त्रैर्जीवित[4] एव मांसान्युत्कर्तितुमारब्धः । स च बोधिसत्त्वो विकर्त्यमानशरीरस्तान्सर्वान्मैत्र्या[5] स्फुरन्सबाष्पाश्रुवदनश्चिन्तयामास । लाभा मे सुलब्धा यन्नाम इमे सत्त्वा मदीयेन मांसरुधिरेण सुखिनो 10 भविष्यन्तीति ॥ तदनेनोपक्रमेण सत्त्वान्द्वादश[6] वर्षाणि स्वकेन[7] मांसरुधिरेण संतर्पयामास न चानुत्तरायाः सम्यकसंबोधेश्चित्तं निवर्तितवान् ॥

यदा तेषां सत्त्वानां स व्याधिरुपशान्तस्तदा तेन रोहितमत्स्येन शब्द उदीरितः । शृण्वन्तु भवन्तः[8] सत्त्वा अहं स राजा पद्मको मया युष्माकमर्थे स्वजीवितपरित्यागेनायमेवंविध आत्मभाव उपात्तो ममान्तिके चित्तं प्रसादयध्वं । यदाहमनुत्तरां सम्यकसंबोधिमभि- 15

---

1) B वारु; the sign ‿ denotes that a written *r* must be changed into *l*, or *ç* into *ṣ* or *n* into *ṇ* and the like. C वारु, DP वालु.

2) MS प्रादुर्भावे°.

3) B वालू, C वारु, DP वालु.

4) MS जीर्वित.

5) In B it is not clear whether स्फुरन् is written or स्फरन्. Of its copies, D has स्फारन and P स्फरन्. That स्फुरन् is right, appears from the comparison of parallel passages, e. g. *supra* p. 79, 14. As to *sphurati* and *sphuṭa* see Index.

6) Ex conject.; MS सत्वानां द्वा°.

7) MS स्वक्रेण.

8) BCP भदन्तः, D भवन्त.

संभोत्स्ये ऽहं[1] तदा युष्मानत्यन्तव्याधेः परिमोच्यात्यन्तनिष्ठे निर्वाणे प्रतिष्ठापयिष्यामीति । तच्छ्रवणात्स जनकायो लब्धप्रसादो राजामात्यपौराश्च पुष्पधूपमाल्यविलेपनैरभ्यर्च्य प्रणिधानं कर्तुमारब्धाः । अतिदुष्करकारक यदा त्वमनुत्तरां सम्यक्संबोधिमभिसंबुध्येथाः तदा ते वयं श्रावकाः[2] स्यामेति ॥

5 भगवानाह । किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन पद्मको नाम राजा बभूवाहं सः । [3]यदेवंविधाः परित्यागाः कृतास्तेन मे संसारे ऽनन्तसुखमनुभूतमिदानीमप्यनुत्तरां सम्यक्संबोधिमभिसंबुद्धः[4] समपाकया च प्रज्ञया[5] समन्वागतो येन मे अशितपीतखादितास्वादितं सम्यक्सुखेन परिणमति अल्पाबाधो रोगतातीतश्चास्मि[6] । तस्मात्तर्हि भिक्षव एवं शिक्षितव्यं यत्सर्वसत्त्वेषु दयां भावयिष्याम इत्येवं वो भिक्षवः शिक्षित-

10 व्यम् ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

1) Ex conject.; MS संभोत्स्येयं.

2) MS श्रावकाश्यामेति.

3) MS यदे.

4) B बुद्धाः, D corr.

5) MS प्रज्ञयां. Cp. *supra* p. 168, 10.

6) Sic B; its copies show various corruptions: D रागतंतीतश्चा, C रोगतोतीतश्चा, P रागतातीतश्चा. I believe B has the right reading. The compound *rogatātīta* consists out of *rogatā* + *atīta*. *Rogatā* with the meaning of *roga* may be compared with *dharmatā* = *dharma* and *muditā* = *mud* (see Index of Divy.) The avadāna litterature affords many more instances of this formation. I met with *karmatā* (R. f. 64 a 1), *vighnatā* (*ibid.* f. 97 a 4. 105 b 7), *çokatā* (*ibid.* f. 71 a 3), *jātitā* (K. f. 75 a 4), *bhedatā* (*ibid.* f. 73 b 9). Cp. also *krīḍābhiprāyatayā* = *krīḍābhiprāyeṇa* (Divy. p. 372, 18). As to the evolution of this derivative the old collective noun *janatā* (see PW *s. v.*) may be compared.

# कवड इति ३२ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिस्सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्डदस्यारामे ॥ तत्र भगवान्भिक्षूनामन्त्रयते स्म । सचेद्भिक्षवः सत्त्वा जानीयुर्दानस्य फलं दान<सं>विभागस्य च फलविपाकं यथाहं जानामि दानस्य फलं दानसंविभागस्य च फलविपापाकमपीदानीं[1] यो[2] ऽसावपश्चिमकः कवडश्चरम आलोपः ततो ऽपि नादत्त्वा ऽसंविभज्य परिभुञ्जीत सचेल्लभेत[3] दक्षिणीयं प्रतिग्राहकं न चैषामुत्पन्नं मात्सर्य[4] चित्तं पर्यादाय तिष्ठेत् । यस्मात्तर्हि सत्त्वा न जानन्ति दानस्य फलं दानसंविभागस्य च फलविपाकं यथाहं जानामि दानस्य फलं [5]दानसंविभागस्य च फलविपाकं तस्मात्ते अदत्त्वा ऽसंविभज्य परिभुञ्जते आगृहीतेन चेतसा उत्पन्नं चैषां मात्सर्यं चित्तं पर्यादाय तिष्ठति ॥

---

1) MS फलविपाकमवदानं. The correction is easily made with the help of the corresponding parallel in Divy. 290, 22 = 298, 5, where this same sermon is found with slight variations.

2) I have corrected these words according to the corresponding text of the Divy.—B पो मैव (interlinear म), the interlinear म represents a bad correction, methinks, not the tradition (DP योममैव, C योमव).

3) The Divy. parallel has here more correctly: *paribhuñjīran sacel labheran.*

4) Anusvāra wanting in MS. — B मान्सर्य.

5) Ex conject., cp. Divy. 291, 2 = 298, 10. B, owing to a copyist's oversight, दानफलविपाकस्य च फलविपाकं. Likewise P; in D and C several akṣaras have been omitted.

इदमवोचद्भगवानिदमुक्त्वा सुगतो ह्यथापरमेतदुवाच शास्ता[1]।

एवं हि सत्त्वा जानीयुर्यथा प्रोक्तं महर्षिणा।

विपाकः संविभागस्य यथा भवति[2] महार्थिकः॥ (१)

नादत्त्वा परिभुञ्जीरन्न स्युर्मत्सरिणास्तथा।

5 न चैषामाग्रहे चित्तमुत्पद्येत कदाचन॥ (२)

यस्मात्तु न प्रजानन्ति बाला मोहतमोवृताः[3]।

[4]तस्मात्तु भुञ्जते ‹सत्त्वा› आगृहीतेन चेतसा।

उत्पन्नं चैषां[5] मात्सर्यं चित्तं पर्यादाय तिष्ठति[6]॥ (३)

यदा भगवता एतत्सूत्रं भाषितं तदा भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भग-
10 वन्तं पप्रच्छुः। आश्चर्यं भदन्त यद्भगवान्दानस्य वर्णं भाषते[7] दानसंवि[30a]भागस्य च फल-
विपाकमिति॥ भगवानाह। किमत्र भिक्षव आश्चर्यं यत्तथागतो दानस्य वर्णं भाषते दान-
संविभागस्य च फलविपाकमिति। यन्मयातीते ऽध्वनि याचनकहेतोर्मुखद्वारगतः स्वकब-
डः परित्यक्तस्तच्छृणुत साधु च सुष्ठु च मनसि कुरु‹त› भाषिष्ये ऽहम्॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि ब्रह्मदत्तो नाम राजा राज्यं कारयति ऋद्धं च स्फीतं
15 च क्षेमं च सुभिक्षं चाकीर्णबहुजनमनुष्यं च प्रशान्तकलिकलहडिम्बडमरं तस्कररोगाप-
गतं[8] शालीक्षुगोमहिषीसंपन्नमखिलमकण्ठकमेकपुत्रमिव राज्यं कारयति। स राजा आढ्यो

---

1) This transition from the prose to the metrical paraphrase of the same content is a mutilated fragment of some **tri ṣ ṭ u b h**, it seems, itself.

2) Pronounce: *bhoti.*

3) Ex conject.; MS मोहात°.

4) B तस्मात्तु, the copyists have तस्मातद्भुञ्जते (P °तद्भुञ्जते).

5) Anusvāra wanting in MS.

6) The last pāda sins against the metre.

7) MS भाषन्ते। दान°.

8) MS °गतां.

भद्रः कल्याणाशय आत्महितपरहितप्रतिपन्नः कारुणिको महात्मा धर्मकामः प्रजावत्सलः सर्वप्रदः सर्वपरित्यागी निःसङ्गपरित्यागी च महति त्यागे वर्तते ॥ यावदपरेण समयेन महद्दुर्भिक्षं प्रादुर्भूतं दुर्भिक्षान्तरकल्पसदृशम्। ततस्ते जनकाया दुर्भिक्षाकालभयभीताः क्षुत्क्षामकण्ठकपोलाः प्रेताश्रयसदृशाः संगम्य[1] समागम्यैकसमूहेन राजानमुपसृत्य जयेनायुषा च वर्धयित्वोचुः। देव परित्रायस्व अस्मानस्माद्दुर्भिक्षभयात् प्रयच्छ जीवितमिति ॥ 5 ततो राजा कोष्ठागारिकं पुरुषमामन्त्रितवान्। अस्ति भो पुरुष कोष्ठागारे अन्नपानं यदस्माकं स्यादेषां च जनकायानाम्। इति श्रुत्वा कोष्ठागारिक आह। [2]परिगण्य देव सस्यान्याख्यास्यामीति ॥ ततो गणितकुशलैर्गणनां कृत्वा[3] सर्वेषां विषयनिवासिनां दिवसे दिवसे एककवडो राज्ञो द्वौ कवडावियत्तं कालं भविष्यतीति समाख्यातम्॥ ततो राजा जनकायानाह्वयोक्तवान्। तेन हि भवन्तो दिवसानुदिवसमागत्य राजकुले कवडमभ्यव- 10 हृत्य गच्छन्तेति ॥ ततस्ते प्रतिदिवसमागत्य प्रत्येकमेकैकं कवडमभ्यवहृत्य यथेष्टं गच्छन्ति ॥

अथान्यतमो ब्राह्मणास्तस्यां गणनायां नासीत्। परेभ्यश्च श्रुत्वा राजानमुवाच देव जनपदगतेन मे[4] श्रुता गणना दीयतां ममापि कवड इति ॥ ततो राजा स्वकात्कवडद्वयादेकं ब्राह्मणाय दत्तवानेकं कवडं जनसामान्यमभ्यवहर्तुं प्रवृत्तः ॥ 15

शक्रस्य देवेन्द्रस्याधस्ताज्ज्ञानदर्शनं प्रवर्तते। तस्यैतदभवत्। अतिदुष्करं बत वाराणसेयो राजा करोति यन्वहमेनं मीमांसियेति[5] ॥ अथ शक्रो देवेन्द्रो ब्राह्मणवे[6]षमात्मानमभिनिर्माय भोजनकाले राजानमुपसृतः जयेनायुषा च वर्धयित्वोवाच। बुभुक्षितो ऽहं कुरुष्व

---

1) B संगम्यससमागम्य, D corr.

2) Note the ungrammatical gerund.

3) Ex conject.; MS गणना कृता.

4) Here it is plain that *me* has the function of an instrumental, cp. *supra* p. 106, n. 1 and the Açoka-inscr. Dhauli, Middle Face, l. 22 (edict V) *tedasavasābhisitena me.*

5) Ex conject.; MS मीमान्सेदित्य°. Cp. *supra* p. 94, n. 4.

6) MS वेशमा°.

स्वकवडेनानुग्रहमिति । ततो राज्ञा स्वजीवितपरित्यागं व्यवसाय कारुण्यात्स्वकवडं ब्राह्मणाय दत्त्वानाहारतां प्रतिपन्नः । यावत्षड्[1]भक्तच्छेदा अनेनोपक्रमेण कृताः[2] । तं च महाजनकायं भुञ्जानं दृष्ट्वा परां प्रीतिमापेदे ॥ अथ शक्रो देवेन्द्रस्तं राज्ञो[3]ऽतिदुष्करं व्यवसायं दृष्ट्वा ब्राह्मणवेषम्[4]न्तर्धाप्य स्वेन रूपेण स्थित्वा राजानं संवर्धयामास । साधु साधु
5 महाराज आवर्जिता वयं भवतानेन दुष्करेण व्यवसायेन सनाथश्चायं जनकाय ईदृशेन प्रजापालकेन । न दुष्यतां[5] तव विजिते सर्वबीजानि वाप्यन्ताम्[6]हं सप्तमे दिवसे तथाविधं माहेन्द्रं[7] वर्षमुत्स्रक्ष्यामि येन सर्वसस्यानि निष्पत्स्यन्त[8] इति ॥ राज्ञा तथा कारितं शक्रेणापि तथाविधं माहेन्द्रं वर्षमुत्सृष्टं येन दुर्भिक्षं विनिवर्तितं सुभिक्षं प्रादुर्भूतम् ॥

भगवानाह । किं मन्यध्वे भिक्षवो योऽसौ तेन कालेन तेन समयेन ब्रह्मदत्तो नाम
10 राजा बभूवाहं सः । मया[9]*तान्येवंविधे[10] दुर्भिक्षे वर्तमाने स्वजीवितपरित्यागादेवंविधानि दानानि दत्तानि । तस्मात्तर्हि भिक्षव एवं शिक्षितव्यं यद्दानानि दास्यामः पुण्यानि करिष्याम इत्येवं वो भिक्षवः शिक्षितव्यम् ॥>[11]

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

1) The akṣara ड्भ is written readably and even put twice, for clearness' sake, in B. The copyists of D and P, as they failed to understand its purport, have omitted it. Cp. Feer 119, n. 1.

2) MS कृता.

3) Ex conject.; MS राज्ञाति°.

4) MS वेशम°.

5) Ex conject.; MS न दुष्यतां विवर्जिते.

6) Perhaps चोप्यन्ताम्.

7) Ex conject.; MS वर्षमुन्मुक्षामि.

8) MS त्स्यत.

9) The restoration is here very uncertain. One would expect *mayaivaivaṃvidhe* or something like this.

10) B विधेर्दुर्भि°, D and P corr.

11) D fills the gap.

## धर्मपाल इति[1] ३३ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् [30b] ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घो राजगृहे विहरति वेणुवने कलन्दकनिवापे ॥ यदा देवदत्तेन मोहपुरुषेण भगवतो वधार्थेन धणपालको[2] हस्तिनाग उत्सृष्ट ‹उदपानो›[3] विषचूर्णेन चावकीर्णो वधकपुरुषाश्चोत्सृष्टाः स भगवतो दीर्घरात्रं वधकः प्रत्यर्थिकः प्रत्यमित्रो भगवांश्चास्य मैत्रचित्तो[4] हितचित्तो ऽनुकम्पाचित्तेन च प्रत्युपस्थितः ॥ तदा भिक्षवो भगवन्तं पप्रच्छुः । पश्य भगवन्यावदयं देवदत्तो भगवतो वधायोद्यतो भगवांश्चास्य मैत्रचित्तो हितचित्तो ऽनुकम्पाचित्तेन प्रत्युपस्थित इति ॥

भगवानाह । किमत्र भिक्षव आश्चर्यं यदिदानीं तथागतो विगतरागो विगतद्वेषो विगतमोहः परिमुक्तो जातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासेभ्यः सर्वज्ञः

---

1) From here to धर्मपालस्य गलं (p. 180,1) I could avail myself of the manuscript F (f. 1b, 2a and 2b). Our tale begins thus in F: नमो बुद्धाय धर्मपाल इति बुद्धो भग° etc.

2) So B and F; D has धनपालको. In K., avad. nr. 23, the elephant's name is Dharmapāla (f. 211a), in the Tibetan life of Buddha, translated by Schiefner (p. 24) he is named Vasupāla.

3) Probably some word (e. g. उदपानो) has dropped out before विषचूर्णेन, denoting the subject of *avakīrṇaḥ* with the signification 3) in PW. In K it is stated that Devadatta threw the poison in the water-reservoir in the Buddha's vihāra. The missing word is wanting in both B and F.

4) So F, whose reading is preferable to that of B मैत्रचित्तेन हितचित्तेनानु°.

12

सर्वाकारज्ञः सर्वज्ञानज्ञेयवशिप्राप्तो[1] यत्तु[2] मयातीते ऽध्वनि सरागेण सद्वेषेण समोहेन दह्रकवयस्य[3]वस्थितेन वधाय पराक्रान्तस्यास्या[4]न्तिके नैवं चित्तं दूषितं तच्छृणुत साधु च सुष्ठु च मनसि कुरुत[5] भाषिष्ये ऽहम् ॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि वाराणस्यां नगर्यां ब्रह्मदत्तो नाम राजा राज्यं कार-
5 यति ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं चा[6]कीर्णबहुजनमनुष्यं च प्रशान्तकलिकलहडि-
म्बडमरं तस्कररोगापगतं[7] शाल्यिक्षुगोमहिषीसंपन्नमखिलमकण्ठकमेकपुत्र[8]मिव राज्यं पा-
लयति । स च राजा श्राद्धो भद्रः कल्याणाशय आत्महितपरहितप्रतिपन्नः कारुणिको
महात्मा धर्मकामः प्रजावत्सलः सर्वप्रदः स[9]र्वपरित्यागी निःसङ्गपरित्यागी च महति
त्यागे वर्तते । तस्य च राज्ञो दुर्मतिर्नाम देवी चण्डा रोषणी साहसिका एकपुत्रश्च धर्म-
10 पालो नाम्ना तस्या एव दुर्मत्याः सकाशाज्जातः । स[10] च धर्मपालो दयावान् श्राद्धो भद्रः
कल्याणाशय आत्महितपरहितप्रतिपन्नः कारुणिको महात्मा धर्मकामः प्रजावत्सलः

---

1) Note the elliptic form of expression, which is also found in the parallel passage of avad. nr. 34, and is somewhat strange, indeed. In K (f. 214b 9 sq.) the apodosis is expressed in full: यदिदानीम्....

प्रदुष्टे देवदत्ते ऽस्मिन्नघातरि मे वधोद्यते
मैत्रीमेव समाधाय क्षान्तिमेव करोमि वै.

2) So F; B यत्तु, cp. *supra* p. 3, n. 2.

3) B दह्रकवयमाव°, P °वयसाव°, F °वयःसाव°.

4) I have adopted this reading of F; B has पराक्रान्तस्यान्तिके.

5) F कुरु भाषिष्ये ॥ भूत°.

6) B चावको°, D corr. — F has the good reading.

7) Anusvāra wanting in B, is found in F.

8) F °पुत्रकमिव.

9) F somewhat shorter and with a small variation सर्वस्वपरित्यागी च महति त्यागे वर्तते ।

10) P सर्वधर्मपालो, a fault of the copyist. Cp. Feer p. 121 n. 2.

सर्वेषां च वाराणसेयानां ब्राह्मणगृहपतीनामिष्टः कान्तः प्रियो मनापो दर्शनेन[1]। स चो-[2] पाध्यायसकाशं गत्वा दारकैः सह लिपिं पठति ॥

यावदपरेण समयेन वसन्तकालसमये संपुष्पितेषु पादपेषु हंसक्रौञ्चमयूरशु-[3] कशारिकाकोकिलजीवञ्जीवकनिर्घोषिते वनषण्डे देव्या सहान्तःपुरपरिवृत उद्यान-भूमिं[4] निर्गतः। तत्र च राज्ञ उद्याने ऽन्तःपुरजनेन सह क्रीडत[5] ईर्ष्यारोषपरीता[6] दुर्म- 5 तिर्देवी कुपिता राज्ञा चास्या अर्धं पोतकं वर्जितम्[7]। तया कुपितया राज्ञः संदेशो वि-सर्जितः पुत्रस्याहं रुधिरं पिबेयं यद्यहं तवार्धं पीतकं पिबेयमिति ॥ कामान्खलु प्रति-सेव्यमानस्य नास्ति किंचित्पापकं कर्माकरणीयमिति[8] ॥ ततो राज्ञा ब्रह्मदत्तो धार्मिको ऽपि सन्कामरागपर्यवसानविगमादन्तःपुरजनेन[9] साल्व्यमानो[10] ऽपि क्रोधाग्निना प्रज्वलितः ॥

---

1) F वाराणासीयानां.

2) B दर्श, then an erased akṣ., I think नो, then ने, then a second erasure, then न.

3) B क्रोच or क्राञ्च, F क्रोञ्च.

4) Anusvāra wanting in B and its copies.

5) Ex conject. confirmed by F; MS क्रीडितः (D °ति).

6) MS °रोषपरीत्ता, F ईषारोषपरीत्ता.

7) The conciseness of the text in this portion of the tale will make here a comparison of its paraphrase in K desirable. At this point of that paraphrase the king, after dallying with his whole zenana, secludes himself in the company of one sapatnī, with whom राज्ञा मधुरसं पानं पीत्वा पीत्वा यथेच्छया। यथाकामं सुखं भुक्त्वा तणं विश्रान्तिमाश्रयत् (K f. 215b 4). A sakhī informs Durmati of the king's erotic extravagancy, whereupon she falls into a fit of anger. The king, in order to appease her, प्रेषिकां (sic) प्रैषयद्दूतं with the rest of the beverage, kept for her, with these words: तदिदं मधुपानं ते प्रीतये प्रभुनार्पितं.

8) The same phrase Divy. 258, 6. 565, 12. Cp. W.Z. XVI, 126.

9) F has here preserved the right reading «because there was not a cess of lust and passion»; B पर्यवसानाविगमाद° (D °विगतमार्ग°!).

10) MS साल्व(D सात्त)मानो. In F the whole akṣara ल्व्य is not clearly discernible, but that व्य is contained in it is certain.

ततस्तेन संप्रवृद्धक्रोधेनाज्ञा दत्ता गच्छत धर्मपालस्य गलं छित्त्वा रुधिरं पाययतैना-मिति ॥[1] [2]

ततो दारकशालावस्थितो धर्मपालः कुमारः श्रुत्वा रोदितुं[3] प्रवृत्त एवं चाह । धिक् सत्त्वसभागतां[4] संसारे यत्र नाम क्रोधवशादङ्गनिःसृतमपि सुतं परित्यजन्तीति ॥
5 ततो धर्मपालः सर्वालङ्कारविभूषितः पितुः पादयोर्निपत्य कथयति । साधु तात प्रसीद निरपराधं मा मां परित्याक्षीः[5] इष्टाश्च सर्वेषां पितॄणां पुत्रा इति ॥ राजा कथयति । पुत्रक यदि ते माता क्षमते अहमपि क्षमे इति ॥ ततो धर्मपालः प्ररुदन्मातुः सकाशमुपसंक्रान्तः पादयोर्निपत्य कृतकरपुट उवाच । अम्ब क्षमस्व मा मां जीविताद्व्यपरोपयेति ॥ सा एवं करुणादीनविलम्बितैरक्षरैरुच्यमाना न क्षमते ॥ ततो वध्यघातैस्तीक्ष्णेन[6] शस्त्रेण धर्म-
10 पालस्य कुमारस्य गलं छित्त्वा दुर्मतिर्देवी रुधिरं पायिता[7] न च दुर्मत्या विप्रतिसारो जातः । [31 a] धर्मपालो ऽपि कुमारो मातापितृवध्यघातेषु चित्तं प्रसाद्य कालगतः ॥

---

1) So F. In B and its copies संवृद्ध°.

2) Ex conject.; BP पायपैना°, C पापयैना°, D पापयेना°.

3) B रोदितुं, P corr.

4) MS सविसभागतां. Instead of this unmeaning tradition I think the author wrote what I have put into the text, सत्त्व implying also the abstract signification «existence (being in saṃsāra)». The Tibetan has, indeed, སེམས་ཅན་, the corresponding word for सत्त्व (private communication of the late M. Feer).

5) Ex conject.; MS परित्यक्तीः.

6) Ex conject.; B वध्यप्यातैस्तीक्ष्णेण, but the akṣ. प्याते are cancelled; instead of them there is put on the inferior margin a correction, which I cannot duly understand; nor did the copyists of DC and P. D has वध्यव्यात्ते° (the 2d akṣ. of the marginal correction seems, indeed, to be त्ते), C and P have left out प्या and written वध्यतै°. About the exactness of वध्यघातैस्तो° there can be no doubt, cp. *infra* l. 11 and (in avad. nr. 98) B f. 95 a, about the middle of the page.

7) Sic B pr. m., some corrector inserted प — he meant य — between पा and यि, hence C has पापयिता, P पाययिता; D corr. B's original reading is, of course, the right one. Cp. *supra* p. 122, n. 7.

भगवानाह। किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन धर्मपालो नाम कुमारो बभूवाहं सः सा दुर्मतिर्देवो एष देवदत्तः। तदापि मे[1] वधकहस्तगतेनास्य मैत्रं चित्तमुत्पादितमिदानीमप्यहमस्य वधायोद्यतस्य मैत्रचित्तो हितचित्तो ऽनुकम्पाचित्तः। तस्मात्तर्हि भिक्षव एवं शिक्षितव्यं यत्सर्वसत्त्वेषु मैत्रं चित्तं भावयिष्याम इत्येवं वो भिक्षवः शिक्षितव्यम्॥ 5

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्॥

---

1) Cp. *supra* p. 175, n. 4.

## शिबिरिति ३४ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो ‹बुद्धो›[1] भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपात[2]शयनासनग्लानप्रत्ययभैषज्य[3]परिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्डदस्या[4]रामे । तेन खलु समये‹न›[5] श्रावस्त्यां भिक्षूणां द्वौ संनिपातौ भवतः । एक आषाढ्यां वर्षोपनायिकायां द्वितीयः कार्त्तिक्यां पूर्णमास्याम्[6] । तत्र भिक्षवः पात्राणि पचन्ति[7] चीवराणि धावयन्ति [8]पांसुकूलानि च सीव्यन्ति ॥ यावदन्यतमो[9] भिक्षुश्चीवरं स्योतुकामः सूचीछिद्रं सूत्रकं न शक्नोति प्रतिपादयितुम् । स [10]करुणादीनविलम्बितैरक्षरैरुवाच को

---

1) D fills the gap.

2) MS पात्र.

3) From षज्य we get again the precious help of F, which contains the whole story of Çibi (f. 4 a 1 — f. 6 a 3).

4) F °श्यारामे.

5) B समयेश्रा°; D fills the gap. In F nothing is wanting.

6) I have adopted the reading of F; B कार्त्तिकपूर्णमास्यां.

7) Sic F. I have adopted this reading, which affords the proper meaning: «the monks are then baking their (new earthen) begging-pots». — B परंति (D धरन्ति, its copyist seems to have used a marginal note of B, where ध is written perhaps with reference to this परंति, CP have neglected that note). Feer p. 124 'les Bhixus reçurent leurs vases à aumônes'.

8) B पांशुकु°. The orthography पांशु is constant in B. — F चीवराणि धारयन्ति पांशुकू°.

9) F °न्यतेमो.

10) FB करुणादी°, cp. *supra* p. 170, n. 8.

लोके पुण्यकाम इति। भगवांश्चास्य नातिदूरे चङ्क्रमे चङ्क्रम्यते। ततो भगवान्गम्भीरमधुरविशदकलविङ्कमनोज्ञदुन्दुभिनिर्घोषो गजभुजसदृशबाहुमभिप्रसार्य कथयति। अहं भिक्षो लोके पुण्यकाम इति॥ ततो ऽसौ भिक्षुर्भगवतः पञ्चाङ्गोपेतं स्वरमुपश्रुत्य संभ्रान्तस्त्वरितत्वरितं भगवतः पाणिं गृहीत्वा स्वशिरसि स्थापयित्वाह। भगवन्ननेन ते [1]पाणिना त्रीणि कल्पासंख्येयानि दानशीलक्षान्तिवीर्यध्यानप्रज्ञा उपचिताः॥ अथ च पुन- 5
र्भगवानेनमाह[2]। [3]अतृप्तो ऽहं भिक्षो पुण्यैर्लब्धरसो[4] ऽहं भिक्षो पुण्यैरतो मे तृप्तिर्नास्तीति॥

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। आश्चर्यं भदन्त [5]यद्भगवान्पुण्यमयैः संस्कारैरतृप्त इति॥ भगवानाह। किमत्र भिक्षव आश्चर्यं यदिदानीं तथागतो विगतरागो विगतद्वेषो विगतमोहः परिमुक्तो जातिजराव्याधिमरणशोकपरिदेवदुःखदौ- 10
र्मनस्योपायासेभ्यः सर्वज्ञः सर्वाकारज्ञः सर्वज्ञानज्ञेयवशिप्राप्तो[6] [7]यन्वक्रमतीते ऽध्वनि सरागः सद्वेषः [8]समोहो ऽपरिमुक्तो जातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासेभ्यो ऽतृप्तः पुण्यमयैः संस्कारैः तच्छृणुत साधु च सुष्ठु च मनसि कुरुत भाषिष्ये॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि शिबिघोषायां राजधान्यां शिबिर्नाम राजा राज्यं कारयति ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं चाकीर्णबहुजनमनुष्यं च प्रशान्तकलिक- 15

---

1) B °प्राणिना, F भगवन्नतेन ते प्राणिना.

2) F °वानेवमाह.

3) B अतृप्ताहं, D corr. — FB भिक्षोः both times.

4) B °रमोहं.

5) FB यद्भगवतापुण्यमयैः.

6) The apodosis of this sentence is to be understood, cp. *supra*, p. 178, n. 1.

7) F यन्वयमतीते, B यन्वह्यमतीते, with expunction of the akṣ. ह्य. Hence CP यन्वयमतीते; D has यत्तह्म°.

8) F समोहरपरिमु°.

लहडिम्बडमरं[1] तस्कररोगापगतं[2] शालीक्षुगोमहिषीसंपन्नमखिलमकण्टकमेकपुत्रमिव[3] राज्यं पालयति । स च शिबी राजा आढ्यो भद्रः कल्याणाशय आत्महितपरहितप्रतिपन्नः कारुणिको महात्मा धर्मकामः प्रजावत्सलः सर्वप्रदः सर्वपरित्यागी निःसङ्गपरित्यागी च महति त्यागे वर्तते । स काल्यमेवोत्थाय[4] यज्ञवाटं प्रविश्यान्नमन्नार्थिभ्यः
5 प्रयच्छति वस्त्रं वस्त्रार्थिभ्यः[5] धनधान्यहिरण्यसुवर्णमणिमुक्तावैडूर्यशङ्खशिलाप्रवाडादीनां परित्यागं करोति । न चासौ पुण्यमयैः संस्कारैस्तृप्तिं गच्छति । सो ऽन्तःपुरं[6] प्रविश्यान्तःपुरजनस्य भक्ताच्छादनं प्रयच्छति कुमाराणाममात्यानां भटबलाग्रस्य नैगमजान[7]पदानाम् ॥

अथ राज्ञः शिबेरेतदभवत् । संतर्पिता अनेन मनुष्यभूताः क्षुद्रजन्तवो ऽवशिष्टाः केन
10 संतर्पयितव्या इति ॥ स परित्यक्तविभवसर्वस्व[8] एकशाटकनिवासितः स्वशरीरावशेषश्चिन्तामापेदे । तस्यैतदभवत् । क्षुद्रजन्तुभ्यः स्वशरीरमनुप्रयच्छामीति । स शस्त्रेण स्वश[9]रीरं तक्षयित्वा यत्र दंशमशका[10]स्तत्रोत्सृष्टका[31 b]यः प्रतिष्ठते प्रियमिवैकपुत्रकं रुधिरेण संतर्पयति ॥

---

1) F °डमरस्तस्कर°.

2) Anusvāra wanting in both B and F.

3) F °मेकपुत्रकमिव, cp. *supra* p. 178, n. 8.

4) D कल्यमे°.

5) Cp. the parallel passage in Jtkm. p. 7, 3. D inserts after अन्नार्थिभ्यः these words पानं पानार्थिकेभ्यः.

6) B न्तपुरं, D corr.

7) Ex conject.; B and F जनप°. Cp. Divy. 253, 9 *naigamajānapadaiḥ*. In the manuscripts *janapada* 'country' and *jānapada* 'country-people' are not seldom confounded. Cp. my observation in W.Z. XVI, 106.

8) B °क्तविभवसर्व एक°, F (f. 5a 4) क्तविभवसर्वस्वएक° (the fourth akṣ. is uncertain).

9) स्व is wanting in F.

10) B दंशमंशका°, DP corr.

शक्रस्य देवेन्द्रस्याधस्ताज्ज्ञान[1]दर्शनं प्रवर्तते । तस्यैतदभवत् । किमयं शिबी राजा सत्त्वानामर्थमेवं करोति *उत*[2] करुणया यन्नूक्रमेनं जिज्ञासयेति[3] ॥ ततो भिन्नाञ्जनमसि[4]-वर्णो गृध्रवेषमात्मानमभिनिर्माय राज्ञः शिबेः सकाशमुपसंक्रम्य मुखतुण्डकेनाक्ष्युत्पाटयितुं[5] प्रवृत्तः । न च राजा संत्रासमापद्यते किं तु मैत्रीविशालाभ्यां नयनाभ्यां तं गृध्रमालोक्य[6] कथयति । वत्स यन्मदीयाच्छरीरात्प्रयुज्यसे तेन प्रणयः क्रियतामिति ॥ तत[7] आवर्जितः 5 शक्रो देवेन्द्रो ब्राह्मणवेषमात्मानमभिनिर्माय राज्ञः शिबेः पुरस्तात्स्थित्वा कथयति । साधु पार्थिव दीयतामेतन्नयनद्वयमिति[8] ॥ राजोवाच । महाब्राह्मण गृह्यतां यदभिरुचितं न मेऽत्र विघ्नः कश्चिदस्तीति ॥ ततः शक्रो देवेन्द्रो भूयस्या मात्रयाभिप्रसन्नो ब्राह्मण-वेषमन्तर्धाप्य[9] स्वरूपेण स्थित्वा राजानमभ्युत्साहयन्नुवाच[10] । साधु साधु भोः पार्थिव सुनि-

---

1) B °स्ताज्ञा°, F °स्तात् ज्ञा°.

2) This is the reading of B, the genuineness of which is very doubtful, since in the double question beginning with *kim ayam*, the former member would not be expressed, the king being asked, whether he cares thus for the creatures *either .... or* out of compassion. Instead of उत, which for this reason does not afford a good meaning here, F has अतः. I surmise अतः to be a perverted अथो and would translate the question thus: «How does king Çibi thus take care of the creatures? Would he do so, indeed, out of compassion?»

3) Ex conject.; B जिज्ञासयेयमिति (D जिज्ञासयमिति), F जिज्ञासयेति.

4) B मणिवर्णो and ...वेशम°, F मणिवर्णा and ...गृद्धवेशम°.

5) B °केनानुत्पा°.

6) F गृद्ध्रमवलोक्य.

7) तत omitted in F, has been added at the top of the page (f. 5b).

8) I have adopted the reading of F; B दीयतां मे तन्नयद्वयमिति, in D this has been changed into °तामेते नयनद्वयेति, as is also found in Dvāv. f. 87b 4. As to *etan nayanadvayam* = 'istud oculorum par' see my *Ved. und Sanskrit Syntax* § 131, A. 1. There is here no possibility of the pronoun *ta*.

9) FD °शमन्त°.

10) F राजामभ्युत्साह्य°, B राजानमत्युत्साह्य° (D राजानमुत्सा°). Cp. *infra* p. 191, 10.

स्थिता ते बुद्धिरकम्प्यस्ते प्रणिधिरनुगता[1] ते सत्त्वेषु महाकरुणा यत्र नाम त्वं संत्रासकरेषु धर्मेषु विशारदो न चिरात्त्वमनेन[2] व्यवसायेनानुत्तरां सम्यक्संबोधिमभिसंभोत्स्यसे ॥

भगवानाह । किं[3] मन्यध्वे भिक्षवो योऽसौ तेन कालेन तेन समयेन शिबिर्नाम राजा बभूवाहं सः । तदानीमपि मे पुण्यमयैः संस्कारैस्तृप्तिर्नास्ति प्रागेवेदानीम् । तस्मा-
5 त्तर्हि भिक्षव एवं शिक्षितव्यं यद्दानानि दास्यामः पुण्यानि करिष्याम इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमनसस्ते[4] च भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

1) This means, of course 'your surpassing compassion has penetrated the creatures (for whom it was intended)', in other terms: has shown itself among the creatures. The Tibetan translation, kindly communicated to me by the late M. Feer, སེམས་ཅན་རྣམས་ལ་ཁྱོད་ཀྱི་སྙིང་རྗེ་ཆེན་པོ་རྒྱུན་འབབ་པར་གྱུར་ཏོ་ tends to confirm this acceptation.

2) FB चिरात्वम°.

3) Anusvāra wanting in F and B.

4) F °गवात्तमन°. After °भ्यनन्दन् ॥ F has ० ॥ शिबीअवदानंसमाप्तम् ॥ ० ॥.

# [1]सुरूप इति ३५ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयना[2]सनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्डदस्यारामे । यदा भगवान्प्रतिसंलयनाद्व्युत्थाय चतसृणां पर्षदां मधुरमधुरं धर्मं देशयति क्षौद्रं[3] मध्विवानेडक[4]मनेकशता ‹च› पर्षद्भगवतः सकाशान्मधुरमधुरं धर्मं शृणोत्यनिञ्जमानैरिन्द्रियैस्तदा भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं [5]पप्रच्छुः । पश्य भदन्त यावद्धर्मरत्नस्यामी भाजनभूताः सत्त्वा आदरेण श्रोतव्यं [6]मन्यन्त इति ॥ भगवानाह । यथा तथागतेन भिक्षव आदरजातेन [7]धर्मः श्रुतश्चोद्गृहीतश्च तच्छृणुत साधु च सुष्ठु च मनसि कुरुत भाषिष्ये ॥

---

1) B सुरूप out of स्वरूप, it seems; DP स्वरूप, C सुरूप. — F नमोबुद्धाय ॥ स्वरूप इति. F contains this whole avadāna of Surūpa (f. 6a 4 — f. 8b 6).

2) F °नाशन°, and further on °दस्यारामे.

3) Anusvāra wanting in both F and B.

4) FB °नेडकानेकशतापर्ष°.

5) B भगवन्तं बुद्धं पप्रच्छुः ।. F has बुद्धं भगवन्तं, as usual in this formula; likewise D.

6) FB मन्यत.

7) Ex conject.; FB धर्मश्रुताश्चोद्गृहीताश्च (D °श्रुताचो°, C °श्रुताश्चा°). Feer, who used also the Tibetan translation, has here (p. 128, 14) 'le Tathâgata a écouté avec respect et saisi la loi'.

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि वाराणस्यां[1] नगर्यां सुरूपो[2] नाम राजा राज्यं कारयति ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं[3] चाकीर्णबहुजनमनुष्यं च प्रशान्तकलिकलहडिम्बडमरं तस्कररोगापगतं[4] शालीक्षुगोमहिषीसंपन्नमखिलमकण्ठकमेकपुत्रकमिव राज्यं पालयति। स च राजा आढ्यो भद्रः कल्याणाशय आत्महितपरहितप्रतिपन्नः कारुणिको
5 महात्मा धर्मकामः[5] प्रजावत्सलः सर्वप्रदः सर्वपरित्यागी निःसङ्गपरित्यागी च महति त्यागे वर्तते। तस्य च राज्ञः सुन्दरिका नाम देवी अभिरूपा दर्शनीया प्रासादिका[6] सर्वाङ्गप्रत्यङ्गोपेता सुन्दरकश्च नाम्ना एकपुत्र इष्टः कान्तः[7] प्रियो मनापः क्षान्तो ऽप्रतिकूलः॥ अथापरेण समयेन राज्ञः सुरूपस्य[8] धर्मे ऽभिलाष उत्पन्नः। तेन सर्वे ऽमात्याः संनिपात्योक्ताः पर्येषत मे ग्रामण्यो धर्मान्धर्मो[9] मे रोचत इति। ततस्ते ऽमात्याः कृतकरपुटा
10 राजानं विज्ञापयन्ति। दुर्लभो महाराज धर्मः[10]। श्रूयते महाराज बुद्धानां लोके [32a] उत्पादाद्धर्मस्योत्पादो[11] भवतीति॥ ततो राज्ञा सुवर्णपिटकं[12] ध्वजाग्रे बद्ध्वा सर्वविजिते घण्टावघोषणं[13] कारितं यो मे धर्मं वक्ष्यति तस्येमं[14] सुवर्णपिटकं दास्यामि महता च

---

1) B वाराणास्यां नगर्यां, D corr.; F °स्यांमहानगर्यां.

2) F स्वरूपो.

3) The words स्फीतं च क्षेमं च are wanting in B, but extant in F. The copyist of D has added them of his own.

4) Anusvāra wanting in all MSS.

5) Visarga wanting in F.

6) Between प्रासादिका and सर्वा° both F and B have नाम, a dittography, it seems; it cannot be = 'certes', as it is rendered by Feer (p. 128, 20).

7) कान्तः is wanting in F.

8) F सूरूपस्य.

9) B and its copies धर्माधर्मो, but in B the second akṣara has been corrected in margine into र्मा. F has धर्म्मार्धर्मो, or rather, it seems, धर्म्मर्यधर्मो. I think, the right reading is धर्म धर्मो etc.

10) Visarga wanting in B and F.

11) F °त्पादाधर्मस्यो°.

12) I have followed F, B °पिट(CD त)कां.

13) B °षणां (D °षणा). F has the correct form of the word.

14) F तस्येमे.

सत्कारेण सत्करिष्यामीति ॥ ततो बहवः काला अतिक्रान्ता न च कश्चिद्धर्मदेशक उपलभ्यते । ततः स राजा धर्महेतोरुत्कण्ठति [1] परितप्यति ॥

शक्रस्य च देवानामिन्द्रस्याधस्ताज्ज्ञान[2]दर्शनं प्रवर्तते । स पश्यति राजानं धर्महेतोर्विहन्यमानम् । तस्यैत[3]दभवत् । यन्न्वहं सुद्रूपं राजानं [4]मीमांसयेयेति ॥ ततो यक्षरूपमात्मानमभिनिर्माय विकृतकरचरणनयनो ऽनेकपरिषन्मध्यगतं [5] राजानमेतदवोचत् । ननु धर्माभिलाषी भवानहं ते धर्मं वक्ष्यामीति ॥ ततो धर्मश्रवणात्प्रीतिप्रामोद्यजातो राजा यक्षमेतदुवाच । ब्रूहि गुह्यक धर्मान्श्रोष्यामीति ॥ [6] गुह्यक उवाच । सुखितस्य [7] बत महाराज धर्मा अभिलसन्ति [8] बुभुक्षितो ऽस्मि भोजनं तावन्मे[9] प्रयच्छेति ॥ [10] तच्छ्रुत्वा राजा पौरुषेयानामन्त्रयामास । आनीय[11]तामस्य भक्ष्यभोज्यप्रकारा इति ॥ यक्ष आह । सद्योहतरुधिरमांसभक्ष्यो ऽहमेतं[12] मे सुन्दरमेकपुत्रकं[12] प्रयच्छेति ॥ श्रुत्वा राजा परं विषादमापन्नः

---

1) Ex conject.; FB °तस्यति (D °तस्येति). Cp. *supra* p. 81, n. 8.

2) B °स्ताज्ञान°, P corr. — F has the good reading.

3) B °दभवतः ।, D and P corr.

4) Ex conject., cp. *supra* p. 175, n. 5; all MSS (F included) मीमांसयेयमिति. Here F has सुद्रूपं.

5) I have followed F; B °परिषन्मध्ये गतं.

6) F गुह्यकोवाच.

7) F तव instead of बत.

8) Ex conject. «it is only when one feels one's self at ease that the *dharmās* will make their appearance»; F and B अभिलषन्ति 'are desirous of', out of place here and certainly not read by the Tibetan translator, see Feer, p. 129 n. 1. His Latin rendering of the Tibetan text should be corrected as follows: 'bonum et quies (or: soliditas) quidem legem dicentis' (private communication of the late M. Feer).

9) B and its copies तान्मे, F has the missing akṣara.

10) Ex conject.; FB ततः श्रुत्वा.

11) F °यतामस्य.

12) Anusvāra wanting in F.

कदाचित्कर्हिचिन्मे[1] ऽद्य धर्मशब्द आसादितः[2] सो ऽप्यनर्घेण मूल्येनेति ॥ ततः सुन्दरः कुमारस्तदुपसृत्य[3] पितुः पादयोर्निपत्य राजानं विज्ञापयामास । मर्षय देव[4] पूर्यतां देवस्याभिप्रायं[5] प्रयच्छ मां गुह्यकायाहारार्थमिति ॥ ततो राजा तमेकपुत्रकमिष्टं[6] कान्तं प्रियं[7] मनापं ज्ञात्वमप्रतिकूलं धर्मस्यार्थे यक्षाय दत्तवान् ॥

5 ततो यक्षेणार्द्धिबलाधानाद्राज्ञः पर्षदश्च तथा[8] दर्शितो यथाङ्गप्रत्यङ्गानि पृथग्विकृत्य विकृत्य भक्षितानि रुधिरं च पीयमानं***दृष्ट्वा राजा धर्माभिलाषी न[9] विषादमापन्नः ॥ स गुह्यको राजानमुवाच । अतृप्तो ऽस्मि भोः पार्थिव भूयो मे प्रयच्छेति ॥ ततो राजा तस्मै[10] दयितां भार्यां दत्तवान् । सापि तेनैवाकारेण दर्शिता ॥ ततो[11] भूयो राजानमुवाच । भोः पार्थिवाद्यापि तृप्तिर्न लभ्यत[12] इति ॥ ततो राजा यक्षमुवाच । वत्स दत्तो मे एकपुत्रको

10 भार्या च दयिता किं भूयः प्रार्थयस इति ॥ गुह्यक उवाच । स्वशरीरं मे प्रयच्छानेन

---

1) B कदाचित्कर्हिचि°, its copies °चित्कर्ह°. F °त्कर्हचित्मे.

2) Visarga wanting in F.

3) Ex conject.; FB तमुपसृत्य.

4) B and its copies देवः, F has the good reading देव. Cp. Feer p. 129 n. 2.

5) Neuter instead of masc., cp. *supra* p. 29, ९.

6) The akṣara मि is omitted in F.

7) Anusvāra wanting in FB. — F प्रियमंनापत्ता°.

8) FB यथा दर्शितं, obviously corrupted. I have corrected the tradition on account of the words in l. 8 सापि.....दर्शिता. Yet the original reading must have been a little different. In the Tibetan the words ཡན་ལག་དང་ཉིང་ལག་ (= *aṅgapratyaṅga*) are preceded by ཕྲུ་ 'child', which is wanting in the Sanskrit.

9) The copyist of D left out न, which proves the incapacity of his mind to understand the full grandeur of a Bodhisattva's heroic unselfishness.

10) तस्मै is wanting in F.

11) B तत, D corr. — F ततो.

12) Ex conject.; F तृप्तिन्नलभत, B तृप्तिन लभत, C तृप्तिन°, P तृप्ति न लभत्, D तृप्तो न लभतेति.

तृप्तिमुपयास्यामीति ॥ राजोवाच । यदि स्वशरीरं ते प्रदास्यामि कथं पुनर्धर्मं [1]श्रोष्यामि किं [2]नु पूर्वं मे धर्मं वद पश्चाद्गृहीतधर्मा शरीरं परित्यक्ष्यामीति ॥ ततो गुह्यकेन राजानं प्रतिज्ञायां प्रतिष्ठाप्यानेकशतायाः परिषदः पुरस्ताद्धर्मो देशितः ।

प्रियेभ्यो जायते शोकः प्रियेभ्यो जायते भयम् ।
प्रियेभ्यो विप्रमुक्तानां नास्ति शोकः कुतो भयमिति ॥ 5

ततो राजा [3]ग्रस्या गाथायाः सकृच्छ्रवणात्प्रह्लादितमनाः प्रीतिसौमनस्येन्द्रियजातो यत्तमुवाच । इदं गुह्यक शरीरं यथेष्टं क्रियतामिति ॥

ततः शक्रो देवेन्द्रो राजानं मेरुवदकम्प्यमनुत्तरायां सम्यक्संबोधौ विदित्वा यत्तरूपमन्तर्धाप्य स्वरूपेण स्थित्वा प्रसादविकसिताभ्यां नयनाभ्यामेकेन पाणिना पुत्रं गृहीत्वा द्वितीयेन च भार्यां राजानमभ्युत्साहयन्नुवाच । साधु साधु सत्पुरुष दृढसंनाहस्त्वं 10 नचिरादनेन व्यवसायेन ग्रनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यसे ग्रयं च ते इष्टजनसमागम इति ॥ ततो राजा शक्रं देवेन्द्रमिदमवोचत् । साधु साधु कौशिक कृतो ऽस्माकं धर्माभिप्रायः[4] पूरितश्चेति ॥

भगवानाह । किं[5] मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन सुरूपो नाम राजा बभूवाहं सः । सुन्दरः कुमार ग्रानन्दः । सुन्दरिका एषा एव यशोधरा । तदापि मे 15 भिक्षवो धर्महेतोरिष्टब[6]न्धुपरित्यागः स्वजीवितपरित्या[32b]गश्च कृतः प्रागेवेदानीम् ।

---

1) I have followed F; B धर्मान्श्रोष्यामि.

2) I have not ventured to change किं नु, found in both F and B into किं तु. Yet, its being construed here with 2 p. imperative is strange, but *infra*, in avad. nr. 37, किं नु with imperat. occurs similarly. One might compare Engl. *why then* in exhortations.

3) F ग्रास्याः गाथायाः.

4) Visarga wanting in FB.

5) Anusvāra wanting in F.

6) F वधु.

तस्मात्तर्हि भिक्षव एवं शिक्षितव्यं यद्धर्मं सत्करिष्यामो गुरुकरिष्यामो मानयिष्यामः पूजयिष्यामो धर्मं सत्कृत्य गुरुकृत्य मानयित्वा पूजयित्वोपनिश्रित्य विहरिष्याम इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्[1] ॥

---

1) In F is added सूत्रपात्रदानं समाप्तम् ॥ ० ॥ ये धर्मेत्यादि ॥ and some more akṣaras which have become illegible by dint of time and ants. Here (f. 8b 6) ends he fragment, that commenced (f. 4a 1) in the beginning of avad. nr. 34 (*supra* p. 182, 5).

# मैत्रकन्यक इति ३६ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्डदस्यारामे । तत्र भगवान्भिक्षूनामन्त्रयते स्म । सब्रह्मकाणि भिक्षवस्तानि कुलानि येषु कुलेषु मातापितरौ सम्यङ्मान्येते सम्यक्पूज्येते[1] सम्यक्सुखेन [2]परिह्रियेते । तत्कस्य हेतोः । ब्रह्मभूतौ हि कुलपुत्रस्य मातापितरौ सह धर्मेण । साचार्यकाणि तानि कुलानि येषु कुलेषु मातापितरौ सम्यङ्मान्येते सम्यक्पूज्येते सम्यक्सुखेन [3]परिह्रियेते । तत्कस्य हेतोः । आचार्यभूतौ हि कुलपुत्रस्य मातापितरौ सह धर्मेण । आह्वनीयानि तानि कुलानि येषु कुलेषु मातापितरौ सम्यङ्मान्येते सम्यक् पूज्येते सम्यक्सुखेन [4]परिह्रियेते । तत्कस्य हेतोः । आह्वनीयौ हि कुलपुत्रस्य मातापितरौ सह धर्मेण । साग्निकानि तानि कुलानि येषु कुलेषु मातापितरौ सम्यङ्मान्येते सम्यक्पूज्येते सम्यक्सुखेन [5]परिह्रियेते । तत्कस्य हेतोः । अग्निभूतौ हि कुलपुत्रस्य मातापितरौ सह धर्मेण । सदेवकानि तानि कुलानि येषु कुलेषु मातापितरौ सम्यक् मान्येते सम्यक् पूज्येते सम्य-

1) MS ज्यते.

2) Ex conject.; MS परिह्रयेते (DC °ह्रुपते, P °ह्रुयेते).

3) MS परिह्रयते.

4) BC परिह्रयेते, DP °ह्रयते.

5) MS परिह्रयेते (D °ह्रुपते).

कसुखेन परिह्रियेते[1] । तत्कस्य हेतोः । देवभूतौ हि कुलपुत्रस्य मातापितरौ सह धर्मेण ॥ इदमवोचद्भगवानिदमुक्त्वा सुगतो ह्यथापरमेतदुवाच शास्ता[2] ।

ब्रह्मा हि मातापितरौ पूर्वाचार्यौ तथैव च ।
आह्वनीयौ पुत्रस्य अग्निः[3] स्याद्देवतानि च ॥ १

5 तस्मादेतौ[4] नमस्येत[5] सत्कुर्याच्चैव पण्डितः[6] ।
उद्वर्तनेन स्नानेन[7] पादानां धावनेन च ।
अथवा अन्नपानेन वस्त्रशय्यासनेन च ॥ २
तया स परिचर्यया[8] मातापितृषु पण्डितः ।
इह चानिन्दितो भवति प्रेत्य स्वर्गे च मोदते ॥ ३

10 यदा भगवता एतत्सूत्रं भाषितं तदा भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः । आश्चर्यं भदन्त यद्भगवान्मातापितृगुरुशुश्रूषावर्णवादीति ॥ भगवानाह । किमत्र भिक्षव आश्चर्यं यदिदानीं तथागतो विगतरागो विगतद्वेषो विगतमोहः परिमुक्तो जातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासैः सर्वज्ञः सर्वाकारज्ञः सर्वज्ञानज्ञेयवशिप्राप्तो मातापितृगुरुशुश्रूषाया वर्णवादी । यत्तु[9] मयातीते ऽध्वनि सरागेण सद्वेषेण

---

1) BD परिह्रूयते, CP °ङ्कयते.

2) Cp. *supra* p. 174, 1.

3) MS पुत्रस्याग्निस्याद्देवतानि.

4) I surmise, we must read तस्मादेनौ, as there is here no reason for *eṣa*, but a want of an anaphoric pronoun. They are confused not unfrequently.

5) Ex conject.; MS नमस्येते (DC °स्यते).

6) DCP मण्डितः, in B the first akṣara may perhaps be read as प, but it is not clearly written.

7) Ex conject; MS स्थानेन.

8) The blunder against the metre disappears, as soon as *paricaryayā* is restored to its Prākrit form. In pāda *c* pronounce *bhoti.*

9) MS यत्तु.

समोहेनापरिमुक्तेन ज्ञातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासैर्मातुः स्वल्प-
मपकारं कृत्वा (1)महद्दुःखमनुभूतं तच्छृणुत साधु च सुष्ठु च मनसि कुरुत भाषिष्ये ॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि वाराणस्यां नगर्यां मित्रो नाम सार्थवाहो बभूव
आढ्यो महाधनो महाभोगो विस्तीर्णविशालपरिग्रहो वैश्रवणधनसमुदितो वैश्रवणधन-
प्रतिस्पर्धी । तेन सदृशात्कुलात्कलत्रम्(2)आनीतम् । स तया सार्धं क्रीडति रमते परिचा- 5
रयति । तस्य क्रीडतो रममाणस्य परिचारयतः पुत्रा (3)जायन्ते म्रियन्ते च ॥ स करे
कपोलं दत्त्वा चिन्तापरो व्यवस्थितः । अनेकधनसमुदितं मे गृहं न मे पुत्रो न दुहिता ।
ममात्ययात्सर्वस्वापतेयम(4)पुत्रकमिति कृत्वा राज्ञो विधेयं भविष्यतीति । तस्य वयस्यकेनो-
पदि[33 a]ष्टं यदि ते पुत्रो जायते तस्य दारिकानाम स्थापयितव्यमेवमसौ चिरजीवी भवि-
ष्यतीति ॥ सो ऽपुत्रः पुत्राभिनन्दी शिववरुणकुबेरशक्रब्रह्मादीनन्यांश्च देवताविशेषाना- 10
याचते । तद्यथारामदेवता वनदेवताश्चत्वरदेवताः शृङ्गाटकदेवता बलिप्रतिग्राहिका देवताः
सहजाः सहधार्मिका नित्यानुबद्धा अपि देवता आयाचते । अस्ति चैष लोके प्रवादो

---

1) B महत्सुखम° (with दुः written above), all the copies have महत्सुखम°, neglecting the necessary interlinear correction. The interpolated reading सुखम् had its origin, to be sure, in the awkward dread of combining the predicate of self-occasioned sorrow with the subject of the Holy Master.

2) B कुलात्तत्र°, D and P corr.

3) That there must here be a gap in the context is easily inferred, not only because in B there is, at the word पुत्र, a reference to a marginal correction which, however, has not been written on the margin, but chiefly from this. It is plain that Mitra did not complain of the sterility of his wife, but of the death of his children after birth. Moreover, the paraphrased imitation of our avadāna in Divy. XXXVIII makes this clear, see Divy. 587, 9 foll. and 28: *yadā naiva kadācit kāle 'sya putrā jīvino babhūvuḥ*. For this reason I have filled the gap in the context by conjecture. The Tibetan, which has here བུ་དག་བྱུང་ཡང་ཤི་བར་གྱུར་ཏེ་ «though they did just come into life [yet immediately after] they died», wholly confirms this correction. Of a similar misfortune speaks Divy. 483, 23 *tasyāpatyaṃ jātaṃ jātaṃ kālaṃ karoti*.

4) MS °यमापुत्र°.

यदायाचनहेतोः पुत्रा जायन्ते दुहितरश्चेति । तच्च नैवम्[1] । यद्येवमभविष्यदेकैकस्य पुत्र-
सहस्रमभविष्यत्तद्यथा राज्ञश्चक्रवर्तिनः । अपि तु त्रयाणां स्थानानां संमुखीभावात्पुत्रा
जायन्ते दुहितरश्चेति । कतमेषां त्रयाणां स्थानानाम् । मातापितरौ रक्तौ भवतः संनिपतितौ
माता कल्या भवति ऋतुमती गन्धर्वश्च प्रत्युपस्थितो[2] भवत्येषां त्रयाणां स्थानानां [3]संमु-
5 खीभावात्पुत्रा जायन्ते [4]दुहितरश्च ॥ स चायाचनपरस्तिष्ठति अन्यतमश्च सत्त्वो ऽन्यतम-
[5]स्मात्सत्त्वनिकायाच्च्युतस्तस्य प्रजापत्याः कुक्षिमवक्रान्तः । पञ्चावेणिका धर्मा एकत्ये
पण्डितजातीये मातृग्रामे । कतमे पञ्च । रक्तं पुरुषं जानाति विरक्तं जानाति । कालं
जानाति ऋतुं जानाति । गर्भमवक्रान्तं जानाति । यस्य सकाशाद्गर्भो[6] ऽवक्रामति तं जा-
नाति । दारकं जानाति दारिकां जानाति । सचेद्दारको भवति दक्षिणं कुक्षिं निश्रित्य
10 तिष्ठति सचेद्दारिका भवति वामं कुक्षिं निश्रित्य तिष्ठति । सात्तमनात्तमनाः स्वामिन[7]
आरोचयति । [8]दिष्ट्यार्यपुत्र वर्धसे आपन्नसत्त्वास्मि[9] संवृत्ता यथा च मे दक्षिणं कुक्षिं नि-
श्रित्य तिष्ठति नियतं दारको भविष्यतीति । [10]सो ऽप्यात्तमनात्तमनाः पूर्वकायमभ्युन्नमय्य
दक्षिणं बाहुमभिप्रसार्य [11]उदानमुदानयत्यप्येवाहं चिरकालाभिलषितं पुत्रमुखं पश्येयं

---

1) MS, in consequence of an excusable lapsus mentalis, तद्यथानैवं. Cp. *supra* p. 13, 12. I have put °भविष्यत्तद्यथा instead of the reading of MS °त्तद्यथा, cp. *supra* p. 120, n. 8.

2) MS स्थिता.

3) B समु°, D corr.

4) B दुहितरश्चे यथैवमायाचन°, D corr.

5) MS न्यतमस्यास्सत्वनिकायाश्च्यु°.

6) MS °शाद्गर्भाव°.

7) MS स्वामिनो.

8) MS दृष्ट्वार्य; cp. my observation in W. Z. XVI, 361. In Kathās. 46, 28 the same fault — दृष्ट्वा for दिष्ट्या — has been overlooked by Brockhaus, but Durgaprasād has adopted the right reading.

9) B °सन्नास्मि, CP corr.

10) MS सात्त (or °न्त) मनात्त (or °न्त)°; cp. *supra* p. 14, 13.

11) MS उदारमु°.

ज्ञातो मे स्यान्नावज्ञातः कृत्यानि मे कुर्वीत भृतः प्रतिबिभृयाद्दायाद्यं[1] प्रतिपद्येत कुलवंशो मे चिरस्थितिकः स्यादस्माकं [2]चाप्यतीतकालगतानामल्पं वा प्रभूतं वा दानानि दत्त्वा पुण्यानि कृत्वास्माकं नाम्ना दक्षिणामादेक्ष्यत इति । [3]इदं तयोर्यत्रतत्रोपपन्नयोर्गच्छतोरनुगच्छत्विति । आपन्नसत्त्वां चैनां विदित्वोपरिप्रासादतलगतामयन्त्रितां धारयति शीते शीतोपकरणैः उष्णे उष्णोपकरणैर्वैद्यप्रज्ञप्तैराहारैर्नातितिक्तैर्ना(त्य)[4]म्लैर्नातिलवणैर्नातिमधुरैर्नातिकटुकैर्नातिकषायैस्तिक्ताम्ललवणमधुरकटुककषायविवर्जितैराहारैर्हारार्धहारविभूषितगात्रीमप्सरसमिव नन्दनवनविचारिणीं[5] मञ्चान्मञ्चं पीठात्पीठमनवतरन्तीमधरां भूमिम्[6] । न चास्याः किंचिदमनोज्ञशब्दश्रवणं यावदेव गर्भस्य परिपाकाय ॥ साष्टानां वा नवानां वा मासानामत्ययात्प्रसूता । दारको जातो[7] ऽभिरूपो दर्शनीयः प्रासादिको गौरः कनकवर्णश्छत्राकारशिराः[8] प्रलम्बबाहुर्विस्तीर्णललाट उच्चघोषः[9] संगतभ्रूस्तुङ्गनासः सर्वाङ्गप्रत्यङ्गोपेतः । तस्य ज्ञातयो ज्ञातिमहं कृत्वा नामधेयं व्यवस्थाप्यते किं भवतु[10] दारकस्य नामेति । ज्ञातय ऊचुः । अयं दारको मित्रस्य पुत्रः कन्या च तस्माद्भवतु[11] दारकस्य मैत्रकन्यको नामेति ॥

---

1) MS °पादायाद्यं.

2) B चाभ्यती, P corr.

3) B इमयोर्यत्रतत्रो°, but म is not written on the line but above it as a correction of another erased akṣara, in CDP various new corruptions.

4) D fills up the gap.

5) B विचारणीं, P corr.

6) MS भूमीं.

7) MS जात अभि°, and so often in this commonplace. *Infra* p. 198, 1 MS दारकः अष्टा°.

8) Visarga wanting in MS.

9) B घोणाः or घोशः, P copied °णाः, C made घोषणाः out of it, D घ्राणाः, probably by conjecture. Cp. *supra* p. 121, n. 2.

10) B भवन्त, D corr.

11) MS तस्माद्भवन्त.

मैत्रकन्यको दारको ऽष्टाभ्यो धात्रीभ्यो दत्तो (1)द्वाभ्यामंसधात्रीभ्यां द्वाभ्यां क्षीर-
धात्रीभ्यां द्वाभ्यां मलधात्रीभ्यां द्वाभ्यां क्रीडनिकाभ्यां धात्रीभ्याम्। सो ऽष्टाभिर्धात्री-
भिरुन्नीयते वर्ध्यते(2) क्षीरेण दध्ना नवनीतेन सर्पिषा (3)सर्पिमण्डेनान्यैश्चोत्तप्तोत्तप्तैरुपक-
रणविशेषैराशु (4)वर्धते ह्रदस्थमिव पङ्कजम्। पिता चास्य महासमुद्रमवतीर्णस्तत्रैव च
5 निधनमुपयातः ॥ यदा मैत्रकन्यको महान्संवृत्तस्तदा मातरमुवाच। अम्ब पितास्माकं
किंकर्मफलोपजीवी आसीत्ततः पश्चादहं पि(5) तथा करिष्यामीति ॥ माता कथयति।
पुत्रक पिता ते (6)ओक्करिक आसीदाकाङ्क्षमाणस्त्वमोक्करि[33b]कत्वं कुरु। सा चिन्तयति।
यद्यहमस्मै वदयामि महासमुद्रवणिगासीदित्येषो ऽपि कदाचिन्महासमुद्रमवतीर्णस्तत्रैव
निधनमुपगच्छेदिति ॥

10 तेनौक्करिकापणो व्यवस्थापितः। ततः प्रथमे दिवसे चत्वारः कार्षापणाः संपन्नाः।
ते ऽपि तेन मातुर्निर्यातिता एभिरम्ब श्रमणब्राह्मणकृपणवनीपकान्प्रतिपादयस्वेति ॥
यावदपरेणोच्यते पिता ते गान्धिकापणिक आसीदिति। तेनौक्करिकत्वं त्यक्त्वा गान्धि-
कापणो व्यवस्थापितः। अष्टौ कार्षापणाः(7) संपन्नाः। ते ऽपि तेन मातुर्निर्यातिताः ॥ याव-

---

1) MS द्वाभ्यांमत्स (P °मेत्स).

2) Ex conject.; MS वर्धते.

3) B सर्पिमण्डैर्ना, D corr.

4) वर्ध्यते, D corr.

5) I have not ventured to change the tradition of manuscripts; the prākritic *pi* instead of *api* may perhaps be imputed to inadvertence of the author of our collection.

6) B ओक्क° made out of ज्ञोक्क°, which is written in C. Here, too, we have the prākritic form instead of Skrt. *autkarika*. In the corresponding passage of Divy. p. 590 the word has been depraved into *aukarika*; elsewhere in Divy. (p. 227, 26 and 228, 5) we meet with *otkarika*. Cp. the Index to Divy.

7) MS °पणा:.

दपेरणोच्यते पिता ते हैरण्यिक[1] आसीदिति । तेन तमापणं त्यक्त्वा हैरण्यिकापणो[1] व्यवस्थापितः । ततः प्रथमे दिवसे षोडश कार्षापणाः संपन्नाः । ते ऽपि तेन मातुर्निर्यातिताः । द्वितीये दिवसे द्वात्रिंशत्कार्षापणाः संपन्नाः । ते ऽपि तेन मातुर्निर्यातिताः ॥ यावद्धैरण्यिकै[1]रीर्ष्याप्रकृतिः[2] सर्वानधिष्ठानव्यवहारान्विदित्वोक्तः । मैत्रकन्यक किं तवानया अधर्मजीविकया पिता ते महासमुद्रवणिगासीत्केन त्वं कुसंव्यवहारे नियुक्त इति ॥ 5
स हैरण्यिकवचनसंचोदितो मातुर्गत्वा कथयत्यम्ब एवमनुश्रूयते पितास्माकं महासमुद्रवणिगासीदिति तदनुजानीहि अहमपि महासमुद्रमवतरिष्यामीति । माता कथयत्येवमेतत्पुत्रक किं तु त्वं बाल एकपुत्रकश्च मा मां परित्यज्य महासमुद्रमवतरिष्यसीति ॥ स ईर्ष्याप्रकृतिभिरकल्याणमित्रैर्विप्रलब्धो न निवर्तते । ततस्तेन मातुर्वचनमवचनं कृत्वा वाराणस्यां नगर्यां घण्टावघोषणं[3] कारितम् । शृण्वन्तु भवन्तो वाराणसीनिवासिनो 10
वणिजः मैत्रकन्यकः सार्थवाहो महासमुद्रमवतरिष्यति ये[4] युष्माकमुत्सहन्ते मैत्रकन्यकेन सार्थवाहेन सार्धम[5]शुल्केनागुल्मेनातरपण्येन महासमुद्रमवतर्तुं ते महासमुद्रगमनीयं पण्यं समुदानयन्त्विति[6] ॥ स कृतकुतूहलमङ्गलस्वस्त्ययनः पञ्चवणिक्शतपरिवारः शकटैर्भारैर्मूटैः पिटकैरुष्ट्रैर्गोभिर्गर्दभैर्महासमुद्रगमनीयं पण्यं समुदानीय संप्रस्थितो माता चास्य स्नेहव्याकुलहृदया साश्रुदुर्दिनवदना पादयोर्लग्ना पुत्रक मा मां परित्यज्य महासमुद्रम- 15

---

1) In B it is not clear, whether the third akṣara was ण्य or ण्ड, it has been changed into णि, and so is the reading of the copies, only D has twice ण्ड. The word is of course हैरण्यिक, as it is written in MS at l. 6, and in Divy. p. 501, 590 and 591, where it is also certified by the metre (590, 2).

2) B °रीष्या (or प्या)प्रकृतैः, D corr. One would rather expect °प्रकृतिभिः, as is said *infra*, l. 9.

3) B °षणां, P corr.

4) Ex conject.; MS सोयु° (CP सायु°, the vowel of the first akṣ. being somewhat indistinct in B).

5) B मा°, DCP corr.

6) The same formula occurs in Divy. 4, 11. 34, 12. 501, 22.

वतरेति ॥ [1]अथ स एवं [2]करुणादीनविलम्बितैरप्यनैरुच्यमानः कृतव्यवसायो मातरं पादेन शिरस्यभिहत्य [3]सार्थसहायः संप्रस्थितो मात्रा चोक्तो मा मे पुत्रकास्य कर्मणो विपाकमनुभवेथा इति ॥

यावदसौ ग्रामनिगम[4]राष्ट्रराजधानीपट्टनान्यवलोकयन्समुद्रतीरमनुप्राप्तः । स पञ्चभिः
5 पुराणशतैर्वहनं भृत्वा पञ्च पौरुषेयान्गृहीत्वा [5]ऽहारं नाविकं कैवर्तं कर्णधारं च [6]त्रिरपि घोषणावघोषणां कृत्वा महासमुद्रमवतीर्णः ॥ यावद्वहनं मकरेण मत्स्यजातेनानयाव्यसनमापादित[7]म् । ततो मैत्रकन्यकः फलकमासाद्य स्थलमनुप्राप्तः ॥ ततः स्थले चङ्क्रम्यमाणो न [8]दूरान्नगरं रमणकं नाम्ना [9]दृष्ट‹वा›न् । स तदुपजगाम । यावत्ततश्चतस्रो ऽप्सरसो निर्गता

---

1) So B, in the copies अथ is left out, did the copyists mean it was erased? The condition of the text, as written in B, implies correction rather than expunction.

2) MS करुणा, the same blunder in Divy. 169, 12. 174, 9. Cp. also *supra* p. 170, n. 8.

3) Ex conject.; MS सार्थमहोयः. Feer, p. 134, 7 «suivi des marchands».

4) MS °राजराष्ट्रधानीषुपट्टनान्य°, an obvious blunder. D corr., but extends the list of places: ग्रामनगरनिगमजनपदराष्ट्रराजधानीपट्टनान्य°.

5) Sic MS.

6) Ex conject.; MS कैवर्त्तकर्णधारंवर्त्तिरपि. There remains the inconsistency of *four* categories of the crew being named, though it has been said there were *five*. And I do not well understand *ghoṣāvaghoṣaṇam*; query घण्टावघोषणं?

M. Feer names indeed five categories of the crew in his translation, where he writes (p. 134, 12) 'un équipage quintuple, consistant en pompiers, rameurs, pêcheurs, vigie, pilote'. If this translation, which rests also on the Tibetan version, is to be relied on, the Sanskrit term corresponding to 'vigie' seems to have been lost. Yet, from a private communication of the late M. Feer, I have got the information that the meaning of the Tibetan terms is rather uncertain; instead of 'vigie' he rather translates: 'celui qui bouche les trous'.

7) MS पादितः.

8) Ex conject., MS दूरं नगरं.

9) MS दृष्टं स तदु°.

अभिरूपा दर्शनीयाः प्रासादिकास्ताः कथयन्ति । एहि मैत्रकन्यक स्वागतं ते इदमस्मा-
कमन्नगृहं पानगृहं [1] वस्त्रगृहं शय्यागृहं मणिमुक्तावैडूर्यशङ्खशिलाप्रवाडविविधजातरूप-
रजतसंपूर्णमागच्छ रंस्यामहेति [2] ॥ स ताभिः सहानेकानि वर्षाणि रतिमनुभूतवान्यथा-
पि तत्कृतपुण्यः सत्त्वः कृतकुशलः । दक्षिणापद्धतिगमनाच्चैनं वारयन्ति । स यतो दक्षि-
णायाः पद्धतेर्निवार्यते ततः सुष्ठुतरमुत्कण्ठितो गन्तुम् ॥ यावत्पुनरपि दक्षिणेन पथा 5
गच्छन्पश्यति [3] सदामत्तं नाम नगरम् । स तत्र द्वारीभूतो यावत्तस्मादप्यष्टावप्सरसो निर्गता
अभिरूपतरा दर्शनीयतराः प्रासादिकतरास्ताः कथयन्ति । एहि मैत्रकन्यक स्वागतं ते
इदमस्माकमन्नगृहं [4] पानगृहं वस्त्रगृहं शय्यागृहं मणिमुक्तावैडूर्यशङ्खशिलाप्रवाडविविध-
जातरूपरजतसंपूर्णमागच्छ रंस्यामहेति । स ताभिः सहानेकानि वर्षाणि रतिमनुभूतवा-
न्यथापि तत्कृतपुण्यः सत्त्वः [34 a]कृतकुशलः । ता अप्यस्य दक्षिणां पद्धतिं वारयन्ति । 10
स यतो दक्षिणायाः पद्धतेर्निवार्यते ततः सुष्ठुतरमु[5]त्कण्ठितो गन्तुम् ॥ यावत्पुनरपि
दक्षिणेन पथा [6] गच्छन्पश्यति नन्दनं नाम नगरम् । स तत्र द्वारीभूतो यावत्तस्मादपि
षोडशाप्सरसो निर्गता अभिरूपतरा दर्शनीयतराः प्रासादिकतरास्ताः कथयन्ति । एहि
मैत्रकन्यक स्वागतं ते इदमस्माकमन्नगृहं पानगृहं वस्त्रगृहं शय्यागृहं मणिमुक्तावैडूर्य-
शङ्खशिलाप्रवाडविविधजातरूपरजतसंपूर्णमागच्छ रंस्यामह इति । स ताभिस्सहानेकानि 15
वर्षाणि रतिमनुभूतवान्यथापि तत्कृतपुण्यः सत्त्वः कृतकुशलः । ता अप्यस्य दक्षिणां

---

1) B वस्त्रं गृहं, DP corr.

2) Here and l. 9 °महे इति is contracted in the MS by irregular sandhi, but not so in the repetitions concerning the third and fourth staying-place.

3) MS सदार्यत्तं. The right form of this name is plain from its Tibetan translation, see Feer, p. 134 n. and the parallels in the Pāli Jātaka (III, 207, 2 and I, 363, vs. 81).

4) B °न्नगृह (out of ह्न) पानंगृहं, D °न्नपानगृहं.

5) B सुत्कण्ठितो, DP corr.

6) B गच्छन्रूप°, D corr.

पद्धतिं वारयन्ति । स यतो दक्षिणायाः पद्धतेर्निवार्यते ततः सुष्टुतरमुत्कण्ठितो गन्तुम् ॥ यावत्पुनरपि दक्षिणेन पथा गच्छन्पश्यति ब्रह्मोत्तरं नाम प्रासादम् । स तत्र द्वारीभूतो यावत्तस्मादपि द्वात्रिंशदप्सरसो निर्गता अभिरूपतरा दर्शनीयतराः प्रासादिकतरास्ताः कथयन्ति । एहि मैत्रकन्यक स्वागतं त इदमस्माकमन्नगृहं पानगृहं वस्त्रगृहं शय्यागृहं 5 मणिमुक्ता[1]वैडूर्यशङ्खशिलाप्रवाडविविधजातरूपरजतसंपूर्णमागच्छ रंस्यामह इति । स ताभिस्सहानेकानि वर्षाणि रतिमनुभूतवान्यथापि तत्कृतपुण्यः सत्त्वः कृतकुशलः । ता अप्यस्य दक्षिणां पद्धतिं वारयन्ति । स यतो दक्षिणायाः पद्धतेर्निवार्यते ततः सुष्टुतरमुत्कण्ठितो गन्तुम् ॥

यथा दक्षिणां पद्धतिं गच्छति तथास्येच्छा वर्धते । यावत्पुनरपि दक्षिणेन पथा 10 गच्छन्पश्यत्ययोमयं नगरम् । स तत्र प्रविष्टः प्रविष्टमात्रस्य चास्य द्वारं पिहितम् । ततो ऽभ्यन्तरं प्रविष्टः । तत्रास्य [2]द्वारं पिहितम् । ततो ऽभ्यन्तरं प्रविष्टो यावत्पुरुषं पश्यति महाप्रमाणं मूर्ध्नि चास्यायोमयं चक्रं भ्रमत्यादीप्तं प्रदीप्तं संप्रज्वलितमेकज्वालीभूतं । तस्य शिरसो यत्पूयशोणितं प्रघरति सो ऽस्याहारः । ततो मैत्रकन्यकस्तं पुरुषं पृष्टवान्भो [3]पुरुष कस्त्वमिति । स कथयत्यहं मातुरपकारीति । उदाहृतमात्रे च तेन पुरु- 15 षेण मैत्रकन्यकस्य तत्कर्माभिमुखीभूतम् । अहमपि मातुरपकारीति मन्ये तेनैवाहं कर्मणा इहाकृष्ट इति ॥ अथ तस्मिन्नन्तरे आकाशाच्छब्दो निर्गतः ये बद्धास्ते मुक्ता ये मुक्तास्ते बद्धाः । इत्युक्तमात्रे तस्य पुरुषस्य मूर्ध्नि चक्रमन्तर्हितं मैत्रकन्यकस्य मूर्ध्नि प्रादुर्भूतम् ॥ ततो दुःखार्तो[4] मैत्रकन्यकमवेद्य स पुरुषो गाथया प्रत्यभाषत ।

1) MS has a superfluous प्रवाड between मुक्ता and वैडूर्य; in D प्रवाड occurs once, but in the wrong place.

2) B द्वार, P corr.

3) B पुरुषः, D corr.

4) Ex conject.; MS दुःखात्तं. The paraphrase of this passage in the Maitrakanyakāvadāna of the Divy. confirms the correction. Divy. 606, 8 *tataḥ sa puruṣo hā heti mūrdhnā* [I conjecture *mūrdhnaḥ*] *pravidāhajena tīvreṇa duḥkhena samākramyamāṇaçarīrakaṃ Maitrakanyakaṃ bodhisattvam āha.* The spaced words are the embellishment of the simple *duḥkhārtam* of our text.

अतिक्रम्य रमणकं सदामत्तं[1] च <न>न्दनम्[2] ।
ब्रह्मोत्तरं च प्रासादं केन त्वमिहागतः[3] ॥

मैत्रकन्यकः प्राह ।

अतिक्रम्य रमणकं सदामत्तं[1] च नन्दनम्[4] ।
ब्रह्मोत्तरं च प्रासादमिच्छयाहमिहागतः ॥ 5
दूरं हि कर्षते कर्म दूरात्कर्म प्रवर्तते ।
तत्र प्रकर्षते कर्म यत्र कर्म विपच्यते[5] ॥
तेन कर्मविपाकेन चक्रं वहति मस्तके ।
आदीप्तं संप्रज्वलितं मम प्राणोपरोधकमिति ॥

पुरुषः प्राह । 10

त्वया प्रदुष्टचित्तेन माता दुष्करकारिका ।
पादेनाभ्याहता मूर्ध्नि तस्य ते कर्मणः फलमिति ॥

मैत्रकन्यकः प्राह ।

कति वर्षसहस्राणि चक्रं वत्स्यति[6] मस्तके ।
आदीप्तं संप्रज्वलितं मम प्राणोपरोधकम् ॥ 15

पुरुषः प्राह ।

---

1) B सदामत्तं (यन्ने written above) in the çloka spoken by the puruṣa; in that uttered by Maitr. it had at first सद्दामत्तं, but द्दा has been changed into दा and प has been added as an interlinear correction of म. Cp. Jāt. I, 363, vs. 81; III, 207, vs. 96.

2) MS चन्दनब्रह्मो°.

3) Pronounce, without sandhi, *iha āgataḥ*.

4) MS चचन्दनं (P चवन्दनं).

5) The same çloka, with one variation, see Divy. 566, 6.

6) Ex conject.; MS वत्स्यति, D भस्यति, a conjectural alteration, it seems, on account of the following çloka.

षष्टि[1] वर्षसहस्राणि षष्टि वर्षशतानि च ।

आदीप्तमायसं चक्रं तव मूर्ध्नि भ्रमिष्यतीति ॥

मैत्रकन्यक आह । भोः पुरुष अस्ति कश्चिदन्यो[34 b] ऽपीहागमिष्यतीति ॥ पुरुषः प्राह । य एवंविधकर्मकारी भविष्यतीति ॥

5 ततो मैत्रकन्यको दुःखवेदनाभिभूतः सत्त्वानामन्तिके कारुण्यं जनयित्वा तं पुरुषमाह । इच्छाम्यहं भोः[2] पुरुष सर्वसत्त्वानामर्थे इदं चक्रमुपरि शिरसा धारयितुं मा कश्चिदन्यो ऽप्येवंविधकर्मकारी इहागच्छत्विति । इत्युक्तमात्रे मैत्रकन्यकस्य बोधिसत्त्वस्य तच्चक्रं सप्ततालमात्रं मूर्ध्नि उद्गम्याकाशे स्थितम् । स च कालं कृत्वा तुषिते देवनिकाये उपपन्नः ॥

10 भगवानाह । किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन मैत्रकन्यक आसीदहं सः । यन्मया संव्यवहरता[3] माता कार्षापणैः प्रतिपादिता तस्य मे कर्मणो विपाकेन चतुर्षु महानगरेषु महत्सुखमनुभूतं यतश्च मे मातुः परीत्तो[4] ऽपकारः कृतस्तस्य मे कर्मणः फलविपाकेनैवंविधं दुःखमनुभूतम् । तस्मात्तर्हि भिक्षव एवं शिक्षितव्यं यन्मातापितृषु कारान्करिष्यामो नापकारांस्तदेते[5] दोषा न भविष्यन्ति ये मैत्रकन्यकस्य पृथग्जनस्य एष एव गुणगणो भविष्यति यस्तस्यैव देवपुत्रभूतस्येत्येवं वो भिक्षवः शिक्षितव्यम् । तत्कस्य हेतोः । दुष्करकारकौ[6] हि भिक्षवः पुत्रस्य मातापितरावाप्यायकौ[7]

1) One would expect षष्टिं, but cp. *supra* p. 135, 5. In the Lalitavistara, too, I have met with many instances of the indeclinability of cardinals, e. g. ed. Lefm. p. 18, 5 (*sapta ratnaiḥ* for *saptabhī r.*), 76, 13 (*viṃçati ca* for °*tiç ca*), 146, 18 (*viṃçaty api* for °*tir api*), 278, 13 (where the nom. *açītiḥ* is used as indeclinable). Cp. Çikṣāsamuccaya p. 56, 11 with Bendall's note.

2) Visarga wanting in MS. 3) Anusvāra wanting in MS.

4) Ex conject.; MS परीत्ये(C °भ्ये)पकारः. Cp. स्वल्पमपकारं कृत्वा *supra* p. 195, 1.

5) Ex conject.; B कारस्तु एते. The copyists of C and P have changed this into कारस्त एते, D into कारस्तं एते. For the rest cp. W. Z., XVI, 351.

6) This sermon is also found Divy. 51, 20 foll., with some slight variations. Cp. W.Z., XVI, 109.

7) MS मातापितरौवा(D चो)पायकौ.

पोषकौ[1] संवर्धकौ स्तन्यस्य दातारौ चित्रस्य[2] जम्बूद्वीपस्य दर्शयितारौ[3]। य एकेनांसेन पुत्रो मातरं द्वितीयेन पितरं पूर्णं[4] वर्षशतं परिहरेद्यद्वा ऽस्यां महापृथिव्यां मणयो मुक्ता वैडूर्यशङ्खशिलाप्रवाडरजतजातरूपमश्मगर्भा[5] मुसारगल्वो ‹लो›हितिका दक्षिणावर्त इत्येवंरूपे वा ऐश्वर्याधिपत्ये प्रतिष्ठापयेन्न[6] इयता पुत्रेण मातापित्रोः कृतं वा स्यादुपकृतं वा। यस्त्वसावश्राद्धं मातापितरं[7] श्रद्धासंपदि समादापयति विनयति निवेशयति प्रति- 5 ष्ठापयति दुःशीलं शीलसंपदि मत्सरिणं त्यागसंपदि दुष्प्रज्ञं[8] प्रज्ञासंपदि समादापयति विनयति निवेशयति प्रतिष्ठापयति इयता पुत्रेण मातापित्रोः कृतं वा स्यादुपकृतं वा॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्॥

---

1) B पोषकौ, CP corr.

2) B चित्त्रस्य, but the copyists read it चित्तस्य (so CP; D चितस्य).

3) Ex conject.; B दर्शयितारकिकेनांस्येत, proceeding, I think, from दर्शयितारीयेकेनांसेन, in which case ये would be the product of a false sandhi of *ya e°*.

4) Ex conject.; MS पूर्णा.

5) MS °स्मगर्भा.

6) B प्रतिष्ठाप्ययेयत्नइयता, the interlinear त (which has been copied in D and P, not in C) must proceed from a clumsy endeavour to amend the corrupt words, but there is no use of the word यत्नतः here. In त्न is hidden न्न = the final consonant of *pratiṣṭhāpayen* + *na*.

7) This singular is also found in Divy. 51, 27.

8) Restored from Divy. In B दुष्प्रज्ञं is immediately followed by संपदि, but in the lower margin a correction सुःप्रज्ञ, referring to this passage of the text, is subjoined; the copyists of D and P put सुप्रज्ञः into the text, that of C left it out.

## शश इति ३७ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासन-
5 ग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्डदस्यारामे । श्रावस्त्यामन्यतमः श्रेष्ठी आढ्यो महाधनो महाभोगो विस्तीर्णविशालपरिग्रहो वैश्रवणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी । तेन सदृशात्कुलात्कलत्रमानीतम् । स तया सार्धं क्रीडति रमते परिचारयति । तस्य क्रीडतो रममाणस्य परिचारयतः कालान्तरेण पत्नी आपन्नसत्त्वा संवृत्ता[1] । साष्टानां वा नवानां वा मासानामत्ययात्प्रसूता ।
10 दारको जातः । स उन्नीतो वर्धितो महान्संवृत्तः[2] । पिता चास्य धनक्षयमनुप्राप्तो भोगक्षयमनुप्राप्तः । स च विस्तीर्णसुहृत्संबन्धिबान्धवस्तं पुत्रं कालानुकालं ज्ञातिसकाशं[3] प्रेषयति । स तैर्ज्ञातिभिस्तथा लाडितो यथा तेषु प्रवृद्धस्नेहः संवृत्तः ॥

यावदपरेण समयेन जेतवनं निर्गतः । अथासौ ददर्श बुद्धं भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः समलङ्कृतमशीत्यानुव्यञ्जनैर्विराजितगात्रं[4] व्यामप्रभालङ्कृतं[5] सूर्यसहस्रातिरेकप्रभं
15 [35 a] जङ्गममिव रत्नपर्वतं समन्ततो भद्रकम् । स प्रसादजातश्च भगवतः पादाभिवन्दनं कृत्वा पुरस्तान्निषण्णो धर्मश्रवणाय । तस्मै भगवता संसारवैराग्यिकी धर्मदेशना

1) MS संवृता.
2) MS महान्सवृ°.
3) MS संकाशं.
4) B व्यञ्जनैवि, D corr.
5) MS व्योम.

कृत्वा यां श्रुत्वा संसारे दोषदर्शी निर्वाणे गुणदर्शी भूत्वा मातापितरावनुज्ञाप्य भगवच्छासने प्रव्रजितः ॥ स एवं प्रव्रजितः सन् ज्ञातिभिः सह संसृष्टो विहरति । ततो भगवांस्तं गृहिसंसर्गान्निवार्यारण्ये नियोजयते[1] । स तत्र नाभिरमते । यावद्भगवांस्तं त्रिरपि गृहिसंसर्गान्निवारयति । वत्सानेकदोषदुष्टो ऽयं गृहिसंसर्गः सन्ति चक्षुर्विज्ञेयानि रूपाणि इष्टानि कान्तानि प्रियाणि मनापानि कामोपसंहितानि रञ्जनीयानि श्रोत्रविज्ञेयाः शब्दा घ्राणविज्ञेया गन्धा जिह्वाविज्ञेया रसाः कायविज्ञेयानि स्प्रष्टव्यानि मनोविज्ञेया धर्मा इष्टाः कान्ताः प्रिया मनापाः[2] कामोपसंहिता रञ्जनीयाः कण्टकभूताः । अनेकपर्यायेण चारण्यगुणाः संवर्णिता यत्र स्थितस्य कुशलानां धर्माणां वृद्धिर्भवति ॥ यावत्तेन कुलपुत्रेण भगवन्तं कल्याणमित्रमागम्यारण्यवासेन वसता[3] युज्यमानेन घटमानेन व्यायच्छमानेनेदमेव पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः शतनपतनविकिरणविध्वंसनधर्मतया पराहत्य सर्वक्लेशप्रहाणादर्हत्वं साक्षात्कृतम् । अर्हन्संवृत्तस्त्रैधातुकवीतरागः समलोष्टकाञ्चन आकाशपाणितलसमचित्तो वासीचन्दनकल्पो विद्याविदारिताण्डकोशो विद्याभिज्ञाप्रतिसंवित्प्राप्तो भवलाभलोभसत्कारपराङ्मुखः सेन्द्रोपेन्द्राणां देवानां पूज्यो मान्यो ऽभिवाद्यश्च संवृत्तः ॥

स पूर्वनिवासमनुस्मृत्य भगवतो ऽस्यातिदुष्कराणि दृष्ट्वा[4] भगवन्तमुपसंक्रम्य सगौरवः स्तौति[5] मानयति च ॥ भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः । पश्य भदन्त यावदयं कुलपुत्रो भगवता यावत्त्रिरपि ग्रामान्तान्निवार्यारण्ये[6] नियोजितो[7]

---

1) I cannot account for the use of the ātmanepada.

2) MS मनापकामो°.

3) Ex conject.; MS वसना. Perhaps °वासेन is to be corrected into °वासं.

4) This means, I think, «considering how the Lord had done things difficult to be done, for *his* sake», viz. to make him leave his former mode of living in the world.

5) Ex conject.; MS सोति (C साति). The Tibetan has སྟོད་ཅིང་རི་མོ་བྱས་སོ་ 'laus et honos factus est' (from a private letter of Feer). Cp. his translation p. 139, 18.

6) MS ग्रामात्तं नि°.

7) Ex conject.; MS भियोजितो.

यावदर्हत्त्वे प्रतिष्ठापित इति ॥ भगवानाह । किमत्र भिक्षव आश्चर्यं यदिदानीं मया विगतरागेण विगतद्वेषेण विगतमोहेन परिमुक्तेन जातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासैः सर्वज्ञेन सर्वाकारज्ञेन सर्वज्ञानज्ञेयवशिप्राप्तेनायं कुलपुत्रो यावच्चिरपि ग्रामान्ताभिवार्यारण्ये नियोजितो यावदर्हत्त्वे प्रतिष्ठापितो यत्तु[1] मयातीते ऽध्वनि सरागेण
5 सद्वेषेण समोहेनापरिमुक्तेन जातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासैरयं कुलपुत्रः स्वजीवितपरित्यागेन ग्रामान्ता[2]भिवार्यारण्यवासे नियुक्तस्तच्छृणुत साधु च सुष्ठु च मनसि कुरुत भाषिष्ये ॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि अन्यतरस्मिन्गिरिकन्दरे[3] प्रस्रवणपुष्पफलकन्दसंपन्ने ऋषिः प्रतिवसति कष्टतपाः फलमूलाम्बुभक्षो ऽजिनवल्कलवासी अग्निहोत्रिकः ।
10 तस्य च ऋषेः शशो वयस्यो[4] मानुषप्रलापी । स दिवसानुदिवसं त्रिः[5] ऋषिसमीपमुपसंक्रामति उपसंक्रम्याभिवादनं[6] कृत्वा विविधाभिः कथाभिः संमोदते । तावेवं प्रवृद्धस्नेहौ पितापुत्रवदवस्थितौ ॥ यावत्कालान्तरेण महत्यनावृष्टिः प्रादुर्भूता यया नद्युदपानान्यल्पसलिलानि[7] संवृत्तानि पुष्पफलवियुक्ताश्च पादपाः ॥ ततः स ऋषिस्तत्राश्रमपदे उप[8]भोगविरहान्नाभिरमते । सो ऽजिनचीरवल्कलान्यभिसंक्षेप्तुमारब्धः[9] ॥

---

1) MS यंतु.

2) MS ग्रामन्ता°.

3) B कन्दर, D corr.

4) B वायस्यो, DP °स्या, C °स्य.

5) Sic MS.

6) Ex conject.; MS क्रम्याविवादनं.

7) MS °ल्पशलि°.

8) The false reading, which caused trouble to M. Feer (p. 140 n. 2) is only found in P तत्राश्रमपदेन्द्रपभोग°, where न्द्र represents a wrongly read Nepalese उ. In B the writing is here somewhat indistinct, indeed, but the copyists of D and C read it rightly.

9) MS °मालब्धः. Putting ल for र or inversely is very common in Nepalese mss., as is well known. — I do not believe, however, *ālabdha* is from the author's hand, since *ārabdha* is the constant orthography in our text. Cp. e. g. Divy. 182, 23 *Çuçumālagiriḥ* and *supra* p. 79 n. 5; p. 53 n. 3.

अथ शशस्तं तथा प्रवृत्तं दृष्ट्वा पृष्टवान्महर्षे क्व गमिष्यसीति ॥ ऋषिराह । ग्रामा-
न्तमवगमिष्यामि[1] तत्र पक्वभैक्षेण यापयिष्यामीति ॥ ततः स ऋषिवचनमुपश्रुत्य ज्ञातसं-
तापो मातापितृवियोगमिव मन्यमानः पादयो[35 b]र्निपत्य तमृषिमुवाच । मा मां परि-
त्यज अपि चानेकदोषसंकुलो गृहवासो ऽनेकगुणसंपन्नश्चारण्यवास इति ॥ स बह्वप्युच्य-
मानो न निवर्तते । ततः स शशेनोच्यते । यद्यवश्यं गन्तव्यं किं[2] नुह्येह तावत्प्रतीक्षस्व 5
श्वो यथाभिप्रेतं यास्यसीति ॥ ततस्तस्य ऋषेरेतदभवत् । नियतमयं मा[3]माहारज्ञातेनोपनि-
मन्त्रयितुकामो यस्मादिमे तिर्यग्योनिगताः प्राणिनः संचयपरा इति । तेन तस्य प्रति-
ज्ञातम् ॥

[4]अथ कृताह्निकमाहारकाले शश उपसंक्रम्य तमृषिं प्रदक्षिणीकृत्य क्षमयितुमा-
रब्धः । क्षमस्व मम महर्षे यन्मया ऊहापोहविरहितेन तिर्यग्योनावुपपन्नेन तव कि- 10
ञ्चिदपकृतं स्यादित्युक्त्वा सहसोत्प्लुत्याग्नौ प्रपतितः ॥ ततः स [5]रिषिर्ज्ञातसंवेगो बाष्प-
दुर्दिनमुखः प्रियैकपुत्रकमिवोपगृ[6]ह्योवाच । वत्स किमिदमारब्धमिति ॥ शश उवाच ।
महर्षे ऽरण्यप्रियतया मदीयेन मांसेनाहोरात्रं यापयिष्यसि । किं च

---

1) If the reading is genuine, *ava* + *gam* has here an old Vedic acceptation, which seems antiquated in classical Sanskrit. D, probably by conjecture, ग्रामान्तमेव गमिष्यामि. In the parallel passage *infra* p. 210, 4 the ṛṣi says *avatariṣyāmi*.

2) We have here another instance of *kiṃ nu* with imperative. Cp. *supra* p. 191 n. 2.

3) Ex conject.; MS ममाहारज्ञाते°.

4) MS अथा.

5) Sic MS. Cp. Divy. 321, 5. 338, 11. 350, 4. 638, 6. For a similar orthography *riddhi* vide *ibid.* 134, 17. 160, 25 and passim in avad. XII.

6) The extreme conciseness of our text here makes me uncertain about the exactness of the reading of MS; perhaps *upaguhya* is meant, not *upagṛhya*. In Jtkm. VI and Jāt. nr. 316 the hare jumps into the fire, but this does not do him any harm at all. The author of our text overlooks this essential trait of the tale.

[1] न सन्ति मुद्गा न तिला न तण्डुला वने विवृद्धस्य शशस्य केचन[2] ।
शरीरमेतत्त्व[3]नलाभिसंस्कृतं ममोपयोज्याद्य तपोवने वसेति ॥

ततः स ऋषिः शशवचनमुपश्रुत्य जातसंवेग उवाच । [4]यद्येवं तव प्रियतया काममिहैव जीवितं परित्यक्ष्यामि न च ग्रामान्तमवतरिष्यामीति । श्रुत्वैतद्वचनं शशः प्रीतमनाः[5] संवृत्त
5 [6]ऊर्ध्वमुखश्च गगनतलमभिवीक्ष्य याचितुं प्रवृत्त आह च ।

अरण्ये मे समागम्य विवेके रमते मनः ।
अनेन सत्यवाक्येन माहेन्द्रं[7] देव वर्ष नु ॥

इत्युक्तमात्रे बोधिसत्त्वानुभावेन माहेन्द्रभवनमाकम्पितम्[8] । देवतानां चाधस्ताज्ज्ञानदर्शनं प्रवर्तते । किं कृतमिति । पश्यन्ति बोधिसत्त्वानुभावादिति । यावच्छक्रेण देवेन्द्रेण मा-
10 हेन्द्रवर्षं वृष्टं येन तदाश्रमपदं पुनरपि तृणगुल्मौषधिपुष्पफलसमृद्धं संवृत्तम् ॥

ततस्तेन ऋषिणा शशं[9] कल्याणमित्रमागम्य तत्र वसता पञ्चाभिज्ञाः साक्षात्कृताः ॥ ततः स ऋषिः शशमुवाच । भोः शश तेन दुष्करेण व्यवसायेन कारुण्यभावाच्च किं प्रार्थयसे इति । तेनोक्तम् । अन्धे <लोके अनायके> अपरिणायके बुद्धो भूयासमतीर्णानां सत्त्वानां तारयिता अमुक्तानां मोचयिता अनाश्वस्तानामाश्वासयिता अपरिनिर्वृतानां[10] परि-

---

1) The same strophe in the vaṃçastha metre is Jtkm. VI, 29, with but one variant उपयुज्य. Cp. its Pali prototype Jāt. III, 55, 4.

2) MS केचनः, the visarga proceeds, I suppose, from a misread daṇḍa in A.

3) MS रीरमेतंत्वन°.

4) Ex conject.; MS यद्येव (D अद्येवं).

5) B प्रीतमना, P corr.

6) B ऊद्धमु°, P corr.

7) Ex conject.; MS माहेन्द्रो देव वर्षतु. The nom. देवः would disturb the metre. As to *māhendro varṣaḥ* cp. *supra* p. 176, 7.

8) MS °कम्पितदेवता°.

9) Anusvāra wanting in MS.

10) B निवृत्तानां, D corr.

निर्वापयितेति ॥ ततः स ऋषिरिदं वचनमुपश्रुत्य शशमब्रवीत् । यदा त्वं बुद्धो [1]भवेथा-स्माकमपि समन्वाहरेथा इति ॥ शश उवाचैवमस्त्विति ॥

भगवानाह । किं [2]मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन शश आसीदहं सः । [3]ऋषिरेष एव कुलपुत्रः । तस्मात्तर्हि भिक्षव एवं शिक्षितव्यं यत्कल्याणमित्रा विहरिष्यामः कल्याणसहायाः कल्याणसंपर्का न पापमित्रा न पापसहाया न पापसंपर्का [4]इत्येवं वो भिक्षवः शिक्षितव्यम् ॥ 5

अथायुष्मानानन्दो भगवन्तमिदमवोचत् । इह मम भदन्त एकाकिनो रहोगतस्य प्रतिसंलीनस्यैवं चेतसि चेतःपरिवितर्क उदपादि । उपार्धमिदं ब्रह्मचर्यस्य यदुत कल्याणमित्रता कल्याणसहायता कल्याणसंपर्को[5] न पापमित्रता न पापसहायता न पापसंपर्का इति ॥ भगवानाह । मा त्वमानन्दैवं वोच उपार्धमिदं ब्रह्मचर्यस्य यदुत 10 कल्याणमित्रता कल्याणसहायता कल्याणसंपर्का न पापमित्रता न पापसहायता न पापसंपर्का इति । सकलमिदमानन्द केवलं परिपूर्णं परिशुद्धं पर्यवदातं ब्रह्मचर्यं यदुत कल्याणमित्रता कल्याणसहायता कल्याणसंपर्को न पापमित्रता न पापसहायता न पापसंपर्काः । [36a] तत्कस्य हेतोः । मां ह्यानन्द कल्याणमित्रमागम्य जातिधर्माणः सत्त्वा जातिधर्मतायाः [6]परिमुच्यन्ते जराव्याधिशोकमरणपरिदेवदुःखदौर्मनस्योपायासध- 15

---

1) Ex conject.; MS भवेतास्माक°. The correction implies irregular sandhi instead of hiatus — *bhavethā + asmākam* —, but this is not anything uncommon in our text, any more than in Divyāvadāna (cp. e. g. 30, 23. 164, 1). As to the genit. with *samanvāharati*, cp. Divy. 578, 10. — *Supra* p. 172, 4 is a parallel passage यदा .... अभिसंबुध्येथाः तदा .... स्याम.

2) Anusvāra wanting in MS.

3) MS ऋषि एष.

4) B संपक्का, D corr.

5) So B, it seems. D has °पर्का, likewise *infra* l. 13. In almost all instances of the same formula the plural number is found in MS.

6) MS परिपच्यन्ते.

र्माणः सत्त्वा उपायाससधर्मतायाः परिमुच्यन्ते । तदनेनैव ते आनन्द पर्यायेण वेदितव्यं यत्सकलमिदं केवलं परिपूर्णं परिशुद्धं पर्यवदातं ब्रह्मचर्यं यदुत कल्याणमित्रता कल्याणसहायता कल्याणसंपर्का न पापमित्रता न पापसहायता न पापसंपर्का इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

5 इदमवोचद्भगवानात्तमनसस्ते आयुष्मानानन्दो ऽन्ये च भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

## धर्मगवेषोत ३८ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिस्सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्डदस्यारामे ॥ आचरितमेतदना<थ>पिण्डदस्य[1] गृहपतेः कल्यमेवोत्थाय भगवतो दर्शनायोपसंक्रम्य जेतवनं स्वयं[2] संमार्ष्टुम् ॥ अथान्यतमेन कालेनानाथपिण्डदस्य गृहपतेः कश्चिद्व्याक्षेपः[3] समुत्पन्नः । ततो भगवान्पुण्यकामानां सत्त्वानां पुण्यतीर्थोपदर्शनार्थं स्वयमेव संमार्जनीं गृहीत्वा जेतवनं संमार्ष्टुं प्रवृत्तः । भगवन्तं दृष्ट्वा महाश्रावका अपि शारद्वतीपुत्र-[4]मौद्गल्यायनकाश्यपनन्दरेवतप्रभृतयः संमार्ष्टुं प्रवृत्ताः ॥ ततो जेतवनं सह श्रावकैः संमृज्य उपस्थानशालां प्रविश्य पुरस्ताद्भिक्षुसङ्घस्य प्रज्ञप्त एवासने निषण्णः । निषद्य भगवान्भिक्षूनामन्त्रयते स्म । पञ्चेमे भिक्षव आनुशंसाः[5] संमार्जने । कतमे पञ्च । आत्मनश्चित्तं

---

1) D adds the missing akṣara.

2) MS संमा°.

3) Ex conject.; MS व्यापेक्षः. Cp. Divy. 357, 4 and Feer p. 142, n. 1.

4) B शार्द्वती°, D corr.

5) MS आनुसंशा सन्मार्जने. The inverted orthography *ānusaṃça* for *ānuçaṃsa* is found here throughout. For the technical term *ānuçaṃsa* see de la Vallée p. 117, n. 2 of his edition of the Bodhicaryāvatāra. Cp. *anuçaṃsa* in the Index to the Divy.

प्रसीदति । परस्य चित्तं प्रसीदति । देवतानां[1] मनसो भवति प्रासादिकम् । [2]संवर्तनीयं कुशलमूलमुपचिनोति । कायस्य च भेदात्सुगतौ स्वर्गलोके देवेषूपपद्यते । इति [3]पञ्चानुशंसाः संमार्जने ॥

ततश्चतस्रः पर्षदो भगवतः सकाशात्संमार्जनस्येति पञ्चानुशंसानुपश्रुत्य प्रसाद-
5 जाताः प्रीतिसौमनस्यप्रसन्नचित्ताः स्वस्वासनादुत्थाय येन भगवांस्तेनाञ्जलिं प्रगृह्य भगवन्तमेतदूचुः[4] । वयं भगवन्भगवत उपस्थायकाः[5] सर्वं जेतवनं सदा [6]संमार्ष्टुमिच्छामो ऽस्माकमनुग्रहं कुरु[7] । ततो भगवांस्तासां तूष्णीभावेनाधिवासयति ॥ ततस्ताश्चतस्रः पर्षदो भगवतो ऽधिवासनां विदित्वा [8]संमार्जनीर्गृहीत्वा सर्वं जेतवनं [9]संमार्ष्टुं प्रवृत्ताः । सर्वं जेतवनं चारामम्मार्गपर्यन्तं[10] संमार्ज्य भगवतो धर्मदेशनां श्रोतुमेकान्ते निषण्णा आदरयु-
10 क्ताः ॥

---

1) Ex conject.; MS देवताग्रात्मनसा भगवति प्रसादिकं (the scribe of D corrected भवति, but corrupted the preceding group of akṣ. still worse). The Tibetan version proved here a valuable help for finding out the right reading. Cp. Feer, p. 143, 2.

2) The phrases containing the 4th and 5th advantage of sweeping are preceded in MS by the rubric इति पञ्चानुशंसाः संमार्जने, which I have transposed. Their wrong collocation was occasioned by their having been left out in B at first and their being inserted afterwards by a marginal addition which, by mistake, refers to a wrong place in the text. Or this whole rubric may be an interpolation.

3) B पंचानुशंसनो सन्मार्जने, the akṣ. नो has been deleted, it seems. C made out of this पंचानुशासन्मा°, D पंचमुशासनेमा°, P पंचानुशासनीसन्मा°. This whole sentence is placed in MSS before the word संवर्तनीयं. After देवेषूपपद्यते there follows इति । ततश्चतस्रः etc.

4) B °तडुचूः, D corr.

5) Visarga wanting in MS.

6) B समांष्टु°, which became समांष्टुं° in D and समोष्ट° in C.

7) MS कुरुस्ततो. Cp. my observation in W.Z., XVI, 123 n. 1.

8) Ex conject.; MS सन्मार्जनीं गृ°.

9) MS संमाष्टुं or °ष्टं (D समादेष्टुं!)

10) In B मार्ग being written with small characters above राम, the copyists wholly overlooked that interlinear insertion.

अनाथपिण्डदो गृहपतिरपि [1] तं प्रदेशमनुप्राप्तः। तेन श्रुतं यथा भगवता महाश्रावकसहायेन स्वयमेव जेतवनं संमृष्टमिति[2]। भगवता देशितान्संमार्जने[3] पञ्चानुशंसानुपश्रुत्य विप्रतिसारीभूत इति चिन्तितवान्। किमर्थं[4] मया भगवतो विहारे तस्मिन्पुण्यक्षेत्रे। यत्राल्पैवारोपितं बीजमल्पैव [5] फलं संपद्यते स्वल्पस्यानन्तं फलं निष्पद्यते। तथागतसंमुखीभूते सर्वश्रावकसंवासिते ऽतीवमनोरमभूमौ सर्वदेवासुरमनुष्यगन्धर्वगरुड- 5
किन्नरमहोरगाणां मनोहर्षास्पदीभूते[6] सर्वभूतप्रेतपिशाचयक्ष[7]राक्षसनारकद्रोहिणामनवकाशे सर्वमारमारकायिकानां देवानां मनुष्याणां चानवकाशभुवने भग्नाभिभवजाते रागद्वेषमोहमात्सर्येर्ष्यामान[8]दुष्टसत्त्वानामविदि<त>प्रभावे[9] पापाचारा[36 b]णामलब्धागमने[10] पापमित्रहस्तगतानाममनापजाते श्रद्धाविगतानां त्यागधर्मरहितानामदृष्टाचिन्तितभवने दुःशीलानां कुवृत्तिनाममनोगमने दयाभावविरहितानां क्रोधिनां परुषभाषिणामलब्ध- 10

---

1) The portion from तं प्रदेशम° to भगवता (on l. 2) has been subjoined in B at the bottom of the page. Between महाश्राव and कसहायेन sixteen akṣaras in a large handwriting have been erased. The first of them may be वा or ता, I read the rest thus: भूतिगृहशुद्धत्वाल्लक्ष्मीः प्रसन्ना भवति, which seems to be a marginal gloss. Below लक्ष्मीः two smaller akṣaras are found, which I guess to mean त्पष्ठीः, perhaps they have to represent पुष्टिः, intended as an interpretation of लक्ष्मीः, if not rather षष्ठी, that dreaded form of Durgā.

2) B संमृष्ट इति, D corr.

3) B समार्जने, D corr.

4) So BC. The corrupt reading, mentioned by Feer (p. 143 n. 3) is only found in P, D has ममभगवतो.

5) Anusvāra wanting in MS.

6) D °स्पदभूते, perhaps the better reading.

7) MS राक्षसाना°.

8) MS मानिदुष्ट.

9) D adds the akṣara that is wanting in B.

10) Ex conject., cp. *infra* p. 216, 4; MS °लब्धगमने.

शरणे वीर्यहीनकुसीदवृत्तिनां त्यक्तारम्भाशमिनां[1] सुदूरीभूते ध्यानच्युतमुषितस्मृतीनां कुदृष्टिचारिणां कुमार्गप्रस्थितानामन्धकारीभूते दुःप्रज्ञानां कुबुद्धिलब्धज्ञानान्तराणाम-प्राप्तागमनभावे दातॄणामतीवमनोरथकृते सुशीलयुक्तानां मनोरमवासे क्षमाचारिणामाद-रागमनलब्धे वीर्यारब्धानां[3] नित्यानुगमनप्राप्ते ध्यानरतानामालीनभुवने प्रज्ञाधारिणां[4]
5 प्रबोधप्रकाशापरित्यक्तनेत्रे एतादृशे बुद्धविक्रीडिते विहारे संमार्ष्टुं चित्ताक्षेपः कृतः। न पुनः कदापि मया तथा क्षमं[5] कर्तुम्। इति निश्चित्य [6]पुनस्तस्यैतदभवत्। यत्र भगवता महाश्रावकसहायेन स्वयं संमार्जनं कृतं कथमहमस्योपरि यास्यामि ॥

ततो ऽनाथपिण्डदो ऽपत्रपमाणाद्रूपो लज्जापरिगतहृदयस्तत्रावस्थाने स्थितः ॥ [7]ज्ञानकाः पृच्छका बुद्धा भगवन्तः। तेन भिक्षवः पृष्टाः क एष इति ॥ भिक्षव ऊचुः।
10 अनाथपिण्डदो भदन्त भगवतो लज्जायमानद्रूपो ऽपत्राप्यपरिगतहृदयो नेच्छति भगवतः

---

1) MS त्यक्तालम्भ (D रम्भ) गमने. In the place of this manifestly corrupted word we have to expect a genitive coordinate with the preceding word, not a locative. My correction supplies this meaning: 'of those deficient in energy and not possessing placidity of mind'.

2) B च्यूत or व्यूत, D and P corr.

3) Ex conject.; MS वीर्य्यलब्धानां. Cp. *supra* p. 208, n. 9.

4) MS धारिणां (D °नां).

5) Ex conject.; in B क्षेपं added between the lines. The copyists of B neglected that addition; hence क्षेपं is not found in DCP. I first regarded this as a reader's gloss, but afterwards I have seen, it cannot be but a corruption of क्षमं. For the sentence is abrupt, and a word like युक्तम् is wanting. As to क्षमं cp. Jtkm. p. 166, 12, Buddhac. IV, 95.

6) Page 36b of B is in a very disturbed condition. It is full of various kinds of errors and of omissions, made good by references to the margins which contain the parts left out at first. The intricate form of the manuscript here has misled the copyists of B, so that C, D and P present a text depraved by false collocations and omissions.

The passage which begins with पुनस्तस्यै° and ends with °गीतेन गायन् is written in B on the margin, and, by mistake, the sign referring to the insertion is put twice, once correctly after निश्चित्य, and once after अत्रणाय (*infra* p. 217, 5).

7) Ex conject., cp. Divy. 184, 26. 299, 15. B is here utterly corrupted. It has ज्ञातवान (or र) अत्रपृच्छकार (?) वुद्धंभगवन्तः, where I have put dots, the characters are expunged.

सकाशमत्रोपरिष्टात्पादन्यासेनोपसंक्रमितुं यत्र नाम भगवता महाश्रावकसहायेन स्वयं जेतवनं संमृष्टमिति[1] ॥ ततस्तं भगवानाह । गृहपते बुद्धवचनं*****प्रवेष्टव्यं[2] । [3]कस्मात् । सद्धर्मगौरवा हि बुद्धा भगवन्तो धर्मो ह्यर्हतां गुरुरिति ॥ ततो ऽनाथपिण्डदो गाथाभिगीतेन गायन्येन भगवांस्तेनोपसंक्रान्तः । उपसंक्रम्य भगवतः पादाभिवन्दनं कृत्वा पुरस्तादेकान्ते निषण्णो धर्मकथाश्रवणाय[4] ॥ [5]ततो भगवता [6]धर्म्यया कथया संदर्शितः समा- 5 दापितः समुत्तेजितः संप्रहर्षितः । [7]सो ऽनेकपर्यायेण भगवता धर्म्यया कथया संदर्शितः समादापितः समुत्तेजितः संप्रहर्षितः संप्रक्रान्तः ॥

तदा भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं ‹बुद्धं›[8] भगवन्तं पप्रच्छुः । आश्चर्यं भदन्त यद्भगवान्धर्मे [9]सादरजातः सगौरवजातो धर्मस्यैव [10]वर्णं भाषत इति । पश्य भदन्त यावद्धर्मरत्नस्यामी भाजनभूताः सत्त्वा [11]आदरेण सर्वं जेतवनं संमार्ष्टुं प्रवृत्ता धर्मं च श्रोतव्यं [12]मन्यन्त 10

---

1) MS संमृष्ट (C संपृष्ट) इति.

2) B बुद्धवचनं स्वागतप्रवेष्टव्यं. The akṣaras I read स्वागत are so indistinct that each of the copyists understood them differently: D श्रूयतां, C स्वायता, P स्वापतो. I regard them as corrupt and surmise a gap of two akṣaras. I think we are not far from truth if we read ‹यत्र› or ‹यदा› श्रूयते. Feer (p. 145, n. 1) quotes the Tibetan parallel of this passage, which gives, however, no help for finding out the right word.

3) Ex conject.; MS यस्मा°.

4) MS धर्मकथांश्र°.

5) The passage ततो.....संप्रक्रान्तः, being added in B on the lower margin, has been omitted in C and P. Of course, Feer did not find it in his manuscript, cp. his p. 145, n. 2. In D it appears partly, for the phrase सो ऽनेक etc. is wanting.

6) MS धर्मया.

7) B सेनेक°.

8) D and P fill the gap.

9) Ex conject., cp. *infra* p. 218, 2; MS श्राद°.

10) MS भाषित.

11) B श्रादारेण, DP corr.

12) MS मन्यत इति (D मन्यइति).

इति ॥ भगवानाह । किमत्र भिक्षव आश्चर्यं यदिदानीं तथागतो विगतरागद्वेषमोहो ऽथ परिमुक्तो जातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासैर्धर्मे[1] सादरजातः सगौरवजातो धर्मस्यैव वर्णं भाषते । यत्तु मयातीते ऽध्वनि सरागेण सद्वेषेण समोहेनापरिमुक्तेन जातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासैर्धर्महेतोः[2] स्वजीवितस्यापि[3]

5 परित्यागः कृतः तच्छृणुत[4] साधु च ‹सुष्ठु च›[5] मनसि कुरु‹त› भाषिष्ये ॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि वाराणस्यां नगर्यां ब्रह्मदत्तो नाम राजा राज्यं कारयति ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं चाकीर्णबहुजनमनुष्यं च प्रशान्तकलिकलहडिम्बडमरं तस्कररोगापगतं शाल्येक्षुगोमहिषीसंपन्नमखिलमकण्टकमेकपुत्रमिव राज्यं पालयति । स च राजा श्राद्धो भद्रः कल्याणाशय आत्महितपरहितप्रतिपन्नः कारुणिको

10 महात्मा धर्मकामः प्रजावत्सलः सर्वप्रदः सर्वपरित्यागी निःसङ्गपरित्यागी च महति त्यागे वर्तते ॥ सो ऽपरेण समयेन देव्या सार्धं क्रीडति रमते परिचारयति । तस्य क्रीडतो रममाणस्य परिचारयतः कालान्तरेण सा देवी सत्त्ववती संवृत्ता दोहदश्चास्याः[6] समुत्पन्नः

---

1) MS वादरजा°.

2) MS °स्योपायैः । धर्म°.

3) MS °वितमपि.

4) Before these words MS has this: तथागतेनहि भिक्षवः आदरजातेनधर्मश्रुताश्चोद्गृहीताश्च, an obvious interpolation which is, in fact, not found in the Tibetan version (see Feer, p. 145, n. 3). For the rest, the whole portion from किमत्र भिक्षवः (l. 1) to परित्यागः कृतः (l. 5) is added in B on the lower margin. Probably it was wanting in the manuscript from which B was copied, and the interpolated phrase, taken up from avad. nr. 35 (cp. *supra* p. 187, n. 7), has been added to fill up the obvious gap in the context. Afterwards the scribe who wrote B supplied from some better copy the portions wanting, but did not realize that he had to cancel the interpolation.

5) D fills the gap.

6) MS स्यासमु°.

सुभाषितं शृणुयामिति । तया राज्ञे निवेदितम् । राज्ञा नैमित्तिकानाहूय[1] पृष्टास्त ऊचुर्देवास्य सत्त्वस्यानुभाव इति ॥ ततस्तेन राज्ञा सैभाषणिकस्यार्थे सुवर्णपिटको ग्रामनगरनिगमराष्ट्रराजधानीषु पर्यटितो न च तत्सुभाषितमुपलभ्यते ॥ यावत्परिपूर्णैर्नवभिर्मासैः सा देवी प्रसूता । दारको जातो ऽभिरूपो दर्शनीयः प्रासादिको गौरः कनकवर्णश्छत्राकारशिराः प्रलम्बबाहुर्विस्तीर्णललाट उच्चघोषः[2] संगतभ्रूस्तुङ्गनासः सर्वाङ्गप्रत्यङ्गोपेतः। 5
तस्य ज्ञातौ ज्ञातिमहं कृत्वा नामधेयं व्यवस्थाप्यते किं भवत्वस्य दारकस्य नामेति । अमात्या ऊचुः । यस्मादयं दारको[3] ऽजात एव सुभाषितं गवेषते तस्माद्भवतु[4] दारकस्य सुभाषितगवेषी नामेति । तस्य सुभाषितगवेषीति[5] नाम कृतम्[6] ॥ सुभाषितगवेषी दारको ऽष्टाभ्यो धात्रीभ्यो दत्तो द्वाभ्यामंसधात्रीभ्यां[7] द्वाभ्यां क्षीरधात्रीभ्यां द्वाभ्यां क्रीडनिकाभ्यां द्वाभ्यां मलधात्रीभ्याम् । सो ऽष्टाभिर्धात्रीभिरुन्नीयते[8] वर्ध्यते[9] क्षीरेण दध्ना 10
नवनीतेन सर्पिषा सर्पिमण्डेनान्यैश्चोत्तप्तोत्तप्तैरुपकरणविशेषैराशु[10] वर्धते[11] ह्रदस्थमिव पङ्कजम् । यदा क्रमेण महान्संवृत्तस्तदापि सुभाषितं गवेषते न च लभते[12] ॥

---

1) MS नैमित्तिकां आहूय (or हुय). A similar transition from accus. to nomin. occurs *infra*, p. 222, 6.

2) B घोशः, P corr. C copied घोणः, D made घ्राणः out of it (cp. *supra* p. 121, n. 2).

3) MS दारक अज्ञात.

4) D तस्माद्भतु दा°.

5) MS गवेषेति.

6) MS कृतः.

7) B द्वाभ्यांमत्स, P °मन्स.

8) B °रुल्लापते, D corr.

9) MS वर्द्धते, cp. *supra* p. 15, 13. 28, 15.

10) B °नान्यैर्वात्त°, D corr.

11) MS वध्यते (D वर्द्धत्ते).

12) Ex conject.; MS लभ्यते.

स पितुरत्ययाद्राज्ये प्रतिष्ठितः अमात्यानाज्ञापयति । सुभाषितेन मे ग्रामण्यः प्रयोजनं गवेषत मे सुभाषितमिति ॥ ततस्तैरमात्यैः सकले जम्बू[37a]द्वीपे हिरण्यपिटकाः सुभाषितहेतोः संदर्शिता न च सुभाषितमासादितम् । ततस्ते राज्ञे[1] निवेदितवन्तः ॥ ततः स राजा सुभाषितश्रवणहेतोरुत्कण्ठति परितप्यति[2] ॥

5 शक्रस्य देवानामिन्द्रस्याधस्ताज्ज्ञानदर्शनं[3] प्रवर्तते । स पश्यति राजानं सुभाषितश्रवणहेतोर्विहन्यमानम् । तस्यैतदभवत् । यन्न्वहं राजानं मीमांसेयेति[4] ॥ अथ शक्रो देवानामिन्द्रो गुह्यकरूपधारी भूत्वा विकृतकरचरणनयनो राज्ञः पुरस्ताद्गाथां[5] भाषते ।

धर्मं चरेत्सुचरितं नैनं दुश्चरितं चरेत् ।
धर्मचारी सुखं शेते अस्मिँल्लोके[6] परत्र चेति ॥

10 ततो राजा विस्मयोत्फुल्लदृष्टिस्तं गुह्यकमुवाच । ब्रूहि ब्रूहि गुह्यक तावन्मे एतां गाथां श्रोष्यामीति ॥ ततो गुह्यको राजानमुवाच । यदि यद्ब्रवीमि तन्मे करिष्यसि एवमहमपि यदाज्ञापयिष्यसि तत्करिष्यामीति ॥ राजोवाच । किमाज्ञापयिष्यसीति ॥ गुह्यक उवाच । सप्ताहोरात्राणि खदिरकाष्ठैरग्निखदां तापयित्वा तत्र यद्यात्मानमुत्सृजसि ततस्ते ऽहं पुनर्गाथां वक्ष्यामीति ॥ तच्छ्रवणाच्च राजा प्रीतमनास्तं[7] गुह्यकमुवाच । एवमस्त्विति ॥

15 ततो राज्ञा गुह्यकं प्रतिज्ञायां प्रतिष्ठाप्य सर्वविजिते घण्टावघोषणं कारितम् । सप्तमे

---

1) Between ते and रा MS inserts ना, a dittography, I suppose.

2) Ex conject.; MS परितस्यति (D °तस्येति).

3) MS °धस्ताज्ञान°, as usual.

4) Ex conject.; MS मीमांसये°. Cp. *supra* p. 94, n. 4; 175, n. 5; 189, n. 4. Also Lalitav. (ed. Lefmann) 100, 20 and 321, 10 may be compared.

5) Anusvāra wanting in MS.

6) MS अस्मिं लोके.

7) B प्रीतिमनाः, D corr. The same error appears elsewhere, cp. W. Z., XVI, 344.

दिवसे राजा सुभाषितश्रवणहेतोरग्नि‹ख›दा[1]‹या›मात्मानमुत्स्रक्ष्यति ये ऽद्भुतानि द्रष्टुकामा आगच्छन्त्विति ॥

ततो ऽनेकेषु प्राणिशतसहस्रेषु संनिपतितेषु गगनतले चानेकेषु देवताशतसहस्रेषु संनिपतितेषु बोधिसत्त्वस्याध्याशयशुद्धिता[2]मवगम्याद्भुत[3]भावं च द्रष्टुमिहावतस्थुः*[4] ॥ अथ स गुह्यक आकाशमुत्पत्य[5] बोधिसत्त्वमुवाच । क्रियतां महाराज यथाप्रतिज्ञातमिति ॥ ततो राजा ज्येष्ठं कुमारं राज्ये ऽभिषिच्यामात्यान्नैगम[6]जानपदांश्च क्षमयित्वा जनकायं चाश्वास्याग्निखदा[7]समीपमुपगम्य इमां गाथां भाषते ।

एषाङ्गारखदा महाभयकरी ज्वालार्करक्तोपमा[8]
धर्मार्थे प्रपतामि निश्चितमना निस्साध्वसो जीविते ।
एषा चाग्निखदा भविष्यति शुभा पुण्यानुभावान्मम[9]
शीता चन्दनपङ्कवासितजला पद्माकुला[10] पद्मिनी[11] ॥

---

1) D fills the gap partly: it has °ग्निष(sic)दामात्मा°.

2) Query °शुद्धताम्? But cp. *supra* p. 172, n. 6.

3) MS °गम्याभूतभावं (D °गम्याद्भूत°).

4) The perplexed structure of this period betrays its corrupt state. It is quite inconsistent that the subject of *avatasthuḥ* should be the same as that of the locative absolute which precedes, but the meaning is clearly this that the *saṃnipatitāḥ prāṇino devatāç ca* stood in expectation of the miracle to come. In the Tibetan version, as the late M. Feer informed me, the clause *Bodhisattvasya.....adbhutabhāvaṃ ca* heads the sentence, then follows what answers to our locative absolute, but to the effect that *saṃnipatiteṣu* must have been considered the main verb. Accordingly, the words *ihāvatasthuḥ* cannot be correct. The Tibetan expression which corresponds to them is འཐོད་པའི་ནང་དུ་ = 'planitiem intra' (Feer). For the rest cp. *supra* p. 48, 4.

5) B °काशसुत्पत्य, DP corr.

6) MS °त्यानैगम.

7) B खदसमी°, D corr.

8) MS °पमां.

9) MS °वात्मम.

10) B पद्मकुला, D corr.

11) Metre çārdūlavikrīḍita.

इत्युक्त्वा बोधिसत्त्वस्तस्यामग्निखदायां[1] पतितः पतितमात्रस्य चास्याग्निखदा पद्मिनी प्रादुर्भूता ॥ ततः शक्रो देवानामिन्द्रस्तदत्यद्भुतं देवमनुष्यावर्जनकरं प्रातिहार्यं दृष्ट्वा यक्षरूपमन्तर्धाप्य स्वरूपेण स्थित्वा गाथां भाषते ।

धर्मं चरेत्सुचरितं[2] नैनं दुश्चरितं चरेत् ।
5 धर्मचारी सुखं शेते लोके ऽस्मिंश्च परत्र चेति ॥

अथ बोधिसत्त्वेन तां गाथामुद्गृह्य[3] सुवर्णपत्त्रेषभिलिख्य कृत्स्ने जम्बुद्वीपे ग्रामनगरनिगमराष्ट्रराजधानीषु पर्यटिता[4] ॥

भगवानाह । किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन राजा बभूवाहं सः । तदापि मे सुभाषितश्रवणहेतोः[5] स्वजीवितं परित्यक्तं प्रागेवेदानीम् । तस्मात्तर्हि
10 भिक्षव एवं शिक्षितव्यं यद्धर्मं[6] सत्करिष्यामो गुरुकरिष्यामो मानयिष्यामः पूजयिष्यामो धर्मं सत्कृत्य गुरुकृत्य मानयित्वा पूजयित्वोपनिश्रित्य विहरिष्याम इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

1) Ex conject.; MS °स्तामग्निखदायां.

2) B चरेसुच°, D corr.

3) Ex conject.; MS °ह्णीता.

4) As *supra* p. 219, 1, the subject of the main sentence is not expressed, but it is implied in the object of an absolutive preceding. This is somewhat strange, but it may be accounted for by the passive turn of the phrase, the acting person (*bodhisattvena*) standing in the same relation to *udgṛhītvā* as to *paryaṭitā*.

5) B श्रमणहेतोः, D corr.

6) Ex conject., cp. *supra* p. 192, 1. MS शिक्षितव्यं ॥ समधर्मं.

# अनाथपिण्डद इति ३९ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिस्सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्डदस्यारामे । अथ भगवान्पूर्वाह्णे निवास्य पात्रचीवरमादाय श्रावस्त्यां पिण्डाय प्राविक्षत् । यावदनुपूर्व्येण चङ्क्रम्यमाणो राजमार्गमवतीर्णः । तत्र च राजमार्गे ऽन्यतमो ब्राह्मणो ऽभ्यागतः । अथासौ ददर्श बुद्धं भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः समलङ्कृतमशीत्यानुव्यञ्जनैर्वि[37 b]राजितगात्रं व्यामप्रभालङ्कृतं[(1)] सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकम् । दृष्ट्वा च पुनः सुचिरं निरीक्ष्य पृथिव्यां लेखां निकृष्य[(2)] भगवन्तमुवाच । भो गौतम न तावद्[(3)]त्वत्ते लेखा लङ्घयितव्या यावन्मे पञ्च पुराणशतानि नानुप्रयच्छसीति ॥ ततो भगवान्कर्मणामविप्रणाशसंदर्शनार्थमदत्तादानवैरमण्यार्थं च इन्द्रकील इव तस्मिन्प्रदेशे स्थितः ॥

एष च शब्दः श्रावस्त्यां समन्ततो विसृतः यथा किल भगवान्राजमार्गे ऽन्यतमेन ब्राह्मणेन पञ्चानां पुराणशतानामर्थे विधारित इति । ततो राजा प्रसेनजित्कौशलः[(4)] सह-

---

1) MS व्योम.

2) MS निकृश्य.

3) We have here an interesting instance of a prefix severed from its verb in post-Vedic literature. Cp. my *Sanskrit Syntax* § 313.

4) MS कोशलः. In P the whole portion between भग]वान्क° (l. 14) to जित[कोश° (l. 15) has been left out. Cp. my Introduction p. VII.

श्रवणादेवामात्यगणपरिवृतो[1] येन भगवांस्तेनोपसंक्रान्तः । उपसंक्रम्य भगवन्तमिदमवोचत् । गच्छतु भगवानहं प्रदास्यामीति ॥ भगवानाह । न महाराज त्वयैतानि दातव्यान्यपि त्वन्येनैतानि दातव्यानीति ॥ तथा विशाखा मृगारमाता [2] रिषिदत्तपुराणौ स्थपती शक्रब्रह्मादयो देवा वैश्रवणप्रभृतयश्चत्वारो लोकपाला हिरण्यसुवर्णमुपादाय भगवन्तमुपसृप्ताः[3] । तानपि भगवानुवाच न भवद्भिरेतानि दातव्यानीति ॥ यावदनाथपिण्डदेन गृहपतिना श्रुतम् । स हिरण्यसुवर्णस्य हेलां पूरयित्वा उपरि पञ्च पुराणशतानि दत्त्वा भगवन्तमुपगतो भगवन्निदं प्रतिगृह्णातामिति[4] ॥ भगवानाह । गृहपते त्वया एतानि दातव्यानि दीयतां ब्राह्मणायेति ॥ ततो ऽनाथपिण्डदेन गृहपतिना सा सुवर्णहेला ब्राह्मणाय दत्ता[5] ॥

भिक्षवः संशयजाताः सराजिका च पर्षत्सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः । पश्य[6] भगवन्यावदनेन ब्राह्मणेन भगवान्विधारितो ऽनाथपिण्डदेन च कार्षापणा दत्ताः कुतश्च प्रभृति भगवानस्मै[7] धारयत इति ॥ भगवानाह । इच्छथ यूयं भिक्षवः श्रोतुम् ॥ एवं भदन्त ॥ तेन हि भिक्षवः शृणुत साधु च सुष्ठु च मनसि कुरुत भाषिष्ये । [8] [तथागते-

---

1) B परिवृत्तो, D corr.

2) Sic B, cp. *supra* p. 209, n. 5 and Divy. 77, 27, where we find the same persons: Riṣidatta and Purāṇa, the *sthapatī*. Theragāthā nr. 120 is attributed to the thera Isidatto.

3) Ex conject.; MS °सृष्टाः. I thought also of उपसृताः, but what I have put into the text makes the corruption easier to account for, and is in itself preferable.

4) From here we have again the help of F. It begins (f. 18, a, 1): मिति । भगवानाह । and runs to the close of the avadāna (f. 18, b 4).

5) FB दत्ताःभिक्षवः

6) Ex conject.; F कस्य, in B the word before भगवन् is wanting.

7) So F; B °वनस्मै.

8) The commonplace on the bearer of the fruit of Karma, which begins with तथागतेने, is wanting in F, which immediately connects भूतपूर्व (p. 225, 6) with भाषिष्ये.

नैतानि भिक्षवः पूर्वमन्यासु ज्ञातिषु अवश्यंभावीनि[1] कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति। न भिक्षवः बाह्ये पृथिवीधातौ नाब्धातौ न तेजोधातौ न वायुधातौ अपि तूपात्तेष्वेव[2] स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम्॥[3] ] 5

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि वाराणस्यां नगर्यां ब्रह्मदत्तो नाम राजा राज्यं कारयति। ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं चाकीर्णबहुजनमनुष्यं च प्रशान्तकलिकलहडिम्बडमरं तस्कररोगापगतं शालीक्षुगोमहिषीसंपन्नमखिलमकण्टकमेकपुत्रकमिव राज्यं पालयति॥ तस्य ज्येष्ठः कुमारो युवराजः। सो ऽपरेण समयेन वसन्तकालसमये संपुष्पितेषु पादपेषु हंसक्रौञ्च[4]मयूरशूकशारिकाकोकिलजीवञ्जीविकनिर्घोषिते वनषण्डे[5] ऽमात्यपुत्र- 10 परिवृतः क्रीडति रमते। *वयस्यो ऽमात्यपुत्रः वयस्यः[6]*। सो ऽपरेण पुरुषेण सार्धमक्षैः क्रीडितवान्। ततो ऽमात्यपुत्रस्तेन पुरुषेण पञ्च पुराणशतानि निर्जितः[7]। राजपुत्रश्चास्य प्रतिभूरवस्थितः। *******[8]

---

1) B अवश्यभागोनि, P adds the anusv. on श्य, C has °गिनि, D °स्यभाविनी.

2) MS तूपात्ते, cp. *supra* p. 74, n. 9.

3) This commonplace is here much shorter than it is ordinarily. It is also put in the wrong place. For this reason, and because F omits it, I have bracketed it. The perverted form of the second pāda of the çloka (cp. *supra* p. 74 n. 13 and 80 n. 12) is found here in all MSS, even in D.

4) B क्रोञ्च, cp. *supra* p. 179, n. 3; F हन्सक्रौञ्च.

5) FB षण्डे, D खण्डे.

6) So in both F and B. The text is here obviously corrupt. The right reading must have been something like तस्यैको ऽमात्यपुत्रो वयस्यः.

7) So F. In B the last two akṣaras are hidden under a blot and cannot be read. The copyist of D found out the right word by conjecture.

8) The tale ends here abruptly. In fact, there is here a considerable gap, by which the conclusion of the tale, the identification and a part of the application have been lost. The Tibetan version adds a phrase to this effect: 'he was

**** तेन मे संसारे ऽनन्तं भोगव्यसनमनुभूतमिदानीमप्यभिसंबुद्धबोधिरनेन बाधितः[(1)] । इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो[(2)] विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रस्तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीयो ऽदत्तदानस्य च
5 प्रहाणाय [(3)]व्यापत्तव्यं यथा एवंविधा दोषास्तस्य[(4)] । एवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

solvent, but feeling himself a king's son, he did not pay a farthing', see Feer, p. 150, n. 2. Prof. de Groot tells me that a phrase of the same meaning is also found here in the Chinese redaction.

In both F and B the words प्रतिभूरवस्थितः are immediately followed by तेन मे संसारे ऽनन्तं (l. 14). In B the word अदत्तादानेन is inserted in a marginal note, referring to तेन; but the sign of reference being written just above it, the copyists of CDP inserted it partly before तेन, partly, thinking it a correction not an insertion, took it up instead of तेन. In F अदत्तादानेन is wanting. In fact, it seems to be a later addition to the defective text, in order to explain तेन etc., whose protasis (some sentence like *yan mayā tadānīm ṛṇaṃ na dattaṃ*) lies in the gap.

1) F वाधित. — Between बाधित and इति, B — not F — has this:
इति । किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन ज्येष्ठकुमारो युवराजो बभूवाहं[(a)] ॥ योसौ अमात्यपुत्र स अनाथपिण्डदो गृहपति यो सौ पुरुषः स ब्राह्मण इति ।

(a) D adds सः.

This identification must be an interpolation, the genuine identification being lost.

2) So F. B कृष्ण एकान्त°, leaving out विपाक.

3) Ex conject.; FB व्यापत्तव्यं.

4) F दोषातन्य, B दोषातस्य.

---

# सुभद्र इति ४०[1]।

बुद्धो भगवान्सत्कृतो ‹गुरुकृतो›[2] मानितः पूजितो राजभी [38 a] राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः कुशिनगर्यां विहरति स्म मल्लानामुपवर्तने[3] यमकशालवने ॥ अथ भगवांस्तदेव[4] परिनिर्वाणकालसमये आयुष्मन्तमानन्दमामन्त्रयते स्म । प्रज्ञापयानन्द तथागतस्यान्तरेण यमकशालयोरुत्तराशिरसं मञ्चमद्य तथागतस्य राञ्या मध्यमे ‹यामे› निरुपधिशेषे निर्वाणधातौ परिनिर्वाणं भविष्यतीति । एवं भदन्तेत्यायुष्मानानन्दो भगवतः प्रतिश्रुत्यान्तरेण यमकशालयोरुत्तराशिरसं मञ्चं प्रज्ञाप्य येन भगवांस्तेनोपसंक्रान्तः । उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्ते ऽस्थात् । एकान्तस्थित आयुष्मानानन्दो भगवन्तमिदमवोचत् । प्रज्ञप्तो भदन्त तथागतस्यान्तरेण यमकशालयोरुत्तराशिरा[5] मञ्चः ॥ अथ भगवान्येन मञ्चस्तेनोपसंक्रान्तः । उपसंक्रम्य दक्षिणेन

1) The whole long preamble of this avadāna, which contains *the story of the present*, consists of patches borrowed from a Sanskrit redaction of the 5th *bhāṇavāra* of Mahāparinibbānasutta. From this we may conclude that the Prakrit or Pali prototype of the Sanskrit redaction sometimes closely agreed with that of the Pali Canon, sometimes exhibited sundry essential discrepancies. Upon the whole I believe, our redaction is the younger of the two.

2) D fills the gap.

3) Ex conject., cp. Mahāparinibbānasutta (V) p. 238 of Childers's ed. in JRAS, VIII N. S. = Dīghanikāya sutta XVI (ed. P. T. S. vol. II, 137); MS °पवर्त्तते.

4) I have not put into the text the reading of D तदेव, because तदेव with temporal meaning has the appearance of an archaism, used purposely.

5) Ex conject.; B °रुत्तराशिरसं (made out of a former मं)चोव°. D and P have संचा instead of संचो, C मंचा.

पार्श्वेन शय्यां कल्पयति पादे पादमाधाया[1]लोकसंज्ञी स्मृतः संप्रजानन्निर्वाणसंज्ञामेव मनसि कुर्वन्[2]॥

तेन खलु समयेन कुशिनगर्यां सुभद्रः परिव्राजकः प्रतिवसति जीर्णो वृद्धो महल्लकः । स विंशतिशतवयस्कः[3] [4]कौशिनागराणां मल्लानां सत्कृतो गुरुकृतो मानितः 5 पूजितो ऽर्हन्संमतः[5] । [6]अश्रौषीत्सुभद्रः परिव्राजको ऽत्र[7] श्रमणस्य गौतमस्य रात्र्या मध्यमे यामे अनुपधिशेषे निर्वाणधातौ परिनिर्वाणं भविष्यत्यस्ति च धर्मेषु [8]काङ्क्षायितत्वमाशा च मे संतिष्ठते प्रतिबलश्च मे स भगवान्गौतमः तत्काङ्क्षायितत्वं प्रतिविनोदयितुम् । श्रुत्वा च पुनः कुशिनगर्या[9] निष्क्रम्य येन यमकशालवनं तेनोपसंक्रान्तः ॥

तेन खलु समयेनायुष्मानानन्दो बहिर्विहारस्या[10]ऽभ्यवकाशे चङ्क्रमे[11] चङ्क्रम्यते ।

---

1) I doubt the integrity of the tradition, and surmise the right reading may be पादे पादमाधाय लोकसंज्ञी = 'having consciousness of the world (around him)'. *Ālokasaṃjñī* will scarcely admit of plausible interpretation.

2) In MSS there is no interpunction. They have कुर्वंस्तेन etc.

3) Ex conject.; B विंशतिशंक्रोभात्या (interlinear: वयस्य); the interlinear correction वयस्य has been wholly neglected in DCP. That Subhadra reached the age of 120 years, is stated elsewhere, cp. Klaproth quoted by Burnouf *Introduction* p. 79. Moreover it is explicitly said in the Tibetan version of this very passage (Feer p. 152 n. 1). On this account I have corrected the text. As to *viṃçatiçata°* cp. Whitney *Sanskrit Grammar* § 478.

4) MS कोशी°.

5) MS समतः.

6) MS अश्रो°, cp. *supra* p. 69, n. 3.

7) The Mahāparin. (p. 246 l. l.) has here *ajjeva*, which is a better reading. Further on our text repeating the phrase (vide *infra* p. 230, 6) has, indeed, अद्य.

8) MS °तत्वं. The terms धर्मेषु काङ्क्षायितत्वम् correspond with *kaṅkhādhammo* in the Mahāparinibbānasutta, which Rhys Davids (SBE XI, 104) translates 'a certain feeling of uncertainty'.

9) B नगर्य्यां, CP corr.

10) So B.

11) B चक्रमे, D corr.

अद्राक्षीत्सुभद्रः परिव्राजक आयुष्मन्तमानन्दं दूरादेव दृष्ट्वा च पुनर्येनायुष्मानानन्दस्तेनो-पसंक्रान्तः । उपसंक्रम्यायुष्मतानन्देन सार्धं संमुखं संमोदनीं[1] संरञ्जनीं विविधां कथां व्यतिसार्यैकान्ते ऽस्थात् । एकान्तस्थितः सुभद्रः परिव्राजक आयुष्मन्तमानन्दमिदमवोचत् । श्रुतं मे भो आनन्दाद्य श्रमणस्य गौतमस्य रात्र्या मध्यमे यामे निरुपधिशेषे निर्वाणधातौ परिनिर्वाणं भविष्यत्यस्ति च मे धर्मेषु काङ्क्षायितत्वमाशा च मे संतिष्ठते प्रतिबलश्च मे 5 स भगवान्गौतमस्तत्काङ्क्षायितत्वं प्रतिविनोदयितुम् । सचेद्भ‹ग›वत[2] आनन्दास्त्यगुरु[3] प्रवि-शेम पृच्छेम कच्चिदेव प्रदेशं सचेदवकाशं[4] कुर्यात्प्रश्नव्याकरणाय ॥ [5]आनन्दाह । अलं सुभद्र मा भगवन्तं विहेठय आन्तकायो भगवान्क्लान्तकायः[6] सुगतः ॥ द्विरपि त्रिरपि सुभद्रः परिव्राजक आयुष्मन्तमानन्दमिदमवोचत् । श्रुतं भो आनन्दाद्य[7] श्रमणस्य गौतमस्य रात्र्या मध्यमे यामे अनुपधिशेषे निर्वाणधातौ परिनिर्वाणं भविष्यत्यस्ति च मे धर्मेषु काङ्क्षा- 10 यितत्वमाशा च मे संतिष्ठते प्रतिबलश्च मे ‹स› भगवान्गौतमस्तत्काङ्क्षायितत्वं प्रतिवि-

---

1) Anusvāra wanting in MS.

2) Ex conject.; MS here and *infra* (p. 230, 1 and 9) सचेद्भवत आनन्दस्यागुरु. Of course Subhadra asks whether he may be welcome to Bhagavān; the reading of MS, which ought to express this meaning, is obviously corrupt. Nor can Ānanda's name here stand in the genitive; it must be a vocative. As to अगुरु cp. *supra* p. 94, 3.

3) In B the original and good reading प्रविशेम has been changed by marginal addition of ति into प्रतिविशेम, which has been copied in DCP. Cp. *infra* p. 230, 1; 9; 14.

4) B कुर्याः प्रश्न°, D कुर्यात्प्रश्न°. I adopt the correction of D, because it is congruent with the form of this phrase in the repetitions, and it suits better to have Gautama, not Ānanda, for the subject of *avakāçaṃ kṛ*. Cp. Mahāparinibb. l. l. p. 248, 7 *gacch' āvuso Subhadda karoti te Bhagavā okāsan ti.*

5) Cp. *supra* p. 20, n. 6.

6) B क्लान्तकाय:, D corr.

7) Ex conject.; MS आनन्दसश्रमनस्य (D °वणस्य).

नोदयितुम् । [1] सचेद्भ‹ग›वत आनन्दास्त्यगुरु प्रविशेम पृच्छेम कञ्चिदेव ‹प्रदेशं› [2] सचेदवकाशं कुर्यात्प्रश्नस्य व्याकरणाय ॥ द्विरपि त्रिरपि आयुष्मानानन्दः सुभद्रं परिव्राजकमिदमवोचत् । अलं सुभद्र मा तथागतं विहेठय आन्तकायो भगवान्क्लान्तकायः सुगतः ॥ पुनरपि सुभद्रः परिव्राजक आयुष्मन्तमानन्दमिदमवोचत् । श्रुतं भो आनन्द पुराणानां परिव्राज-
5 कानामन्तिकाज्जीर्णानां वृद्धानां महतां चरणाचार्याणां कदाचित्कर्हिचित्तथागता अर्हन्तः सम्यक्संबुद्धा लोके उत्पद्यन्ते तद्यथा उडुम्बरं पुष्पं तस्य चाद्य भगवतो गौतमस्य रात्र्या मध्यमे यामे अनु[38 b]पधिशेषे निर्वाणधातौ परिनिर्वाणं भविष्यति अस्ति च मे धर्मेषु काङ्क्षायितत्वमाशा च मे संतिष्ठते प्रतिबलश्च मे स भगवान्गौतमस्तत्काङ्क्षायितत्वं प्रतिविनोदयितुम् । सचेद्भ‹ग›वत आनन्दास्त्यगुरु [3] प्रविशेम पृच्छेम कञ्चिदेव प्रदेशं सचेद-
10 वकाशं कुर्यात्प्रश्नव्याकरणाय ॥ पुनरप्यायुष्मानानन्दः सुभद्रं परिव्राजकमिदमवोचत् । अलं सुभद्र मा तथागतं विहेठय आन्तकायो भगवान्क्लान्तकायः सुगतः ॥

इमां च पुनरायुष्मत आनन्दस्य सुभद्रेण परिव्राजकेन सार्धमन्तराकथां [4] विप्रकृतामश्रौषीद्भगवान्दिव्येन श्रोत्रेण विशुद्धेनातिक्रान्तमानुषेण श्रुत्वा च पुनरायुष्मन्तमानन्दमिदमवोचत् । अलमानन्द मा सुभद्रं परिव्राजकं वारय प्रविशतु पृच्छतु यद्यदेवाकाङ्क्षति ।
15 अयं मे पश्चिमो भविष्यति अन्यतीर्थिकपरिव्राजकैः सार्धमन्तराकथासमुदाहारः अयञ्च मे चरमो भविष्यति साक्षाच्छ्रावकाणामेहिभिक्षुकया प्रव्रजितानां यदुत सुभद्रः परिव्राजकः ॥ अथ सुभद्रः परिव्राजको भगवता कृतावकाशो हृष्टतुष्टप्रमुदित उदग्रप्रीतिसौ-

---

1) Instead of सचेद्भवतः, which is indispensable here, MS has श्रुत्वा च पुनः, owing to an excusable *aberratio mentis* of him who copied these repetitions in A or B.

2) MS कंचिदेवासचेदव°.

3) MS प्रतिविशेम.

4) Ex conject.; MS कथा विप्रकृता अश्रौ (sic)°. Cp. Mahāparinibb. p. 247 l. 1. *assosi kho bhagavā āyasmato Ānandassa Subhaddena paribbājakena saddhiṁ imaṁ kathāsallāpaṁ.* The canonical Pali redaction is here, as often, simpler and shorter than that which underlies our text.

मनस्यनुज्ञातो येन भगवांस्तेनोपसंक्रान्तः । उपसंक्रम्य भगवता सार्धं[1] संमुखं संमोदनीं संरञ्जनीं विविधां कथां व्यतिसार्यैकान्ते निषण्णः । ‹एकान्तनिषण्णः›[2] सुभद्रः परिव्राजको भगवन्तमिदमवोचत् । यानीमानि भो गौतम पृथग्लोके तीर्थ्यायतनानि तद्यथा पूरणः[3] काश्यपो[4] मास्करी गोशालीपुत्रः सञ्जयी वैरूटीपुत्रो ऽजितः केशकम्बलः[5] ककुदः कात्यायनो[6] निर्ग्रन्थो ज्ञातपुत्रः प्रत्यज्ञासिषुर्मे[7] स्वां स्वां प्रतिज्ञां * * * * * *[8] 5

अथ भगवांस्तस्यां वेलायां गाथां भाषते ।

[9]एकान्नत्रिंशत्को वयसा सुभद्र यत्प्राव्रजं किं कुशलं गवेषी ।

पञ्चाशद्वर्षाणि समाधिकानि यस्मा‹द›हं प्रव्रजितः सुभद्र[10] ॥

---

1) Ex conject.; MS सुमुखं (C समु°). Cp. *supra* p. 229, 2.

2) Cp. Mahāparin. ll. p. 248, 11.

3) MS पूरणाः.

4) B काश्यको, D corr. The form मास्करी is probably a clerical error.

5) MS केस°. In the preceding name P has altered वैरूटीपुत्रो of B into वैर-टी°, cp. Feer p. 154, 17.

6) B निग्र°, D corr.

7) Ex conject.; MS प्रत्यज्ञासिषमे.

8) From the very contents it is plain that after प्रतिज्ञां some lines of the archetype must have been lost. Feer's translation of this passage is fanciful. In the corresponding portion of Mahāparin. (ll. p. 248, 17–24) the question put by Subhadra is formulated differently, and it is answered by Bhagavān; but in our text a good part of the question and the whole answer disappear in a gap.

9) In these gāthās the faults against the metre and the grammar do not leave any doubt about their having been translated from good Prākrit (or Pāli) into bad Sanskrit. Instead of एकान्नत्रिंशत्को we might expect एकान्नत्रिंशो, which would suit the metre a little better. In B कोन is written above कान्न, which correction, if correction it is, has been adopted by the copyists (DCP).

10) Ex conject.; MS समाधिकानितस्या (or स्मा)र्हं प्रव्रजितः सुभद्र.

शीलं[1] समाधिश्चरणं च विद्या चैकाग्रता[2] चेतसो भाविता मे।
ग्रार्यस्य धर्मस्य प्रदेशवक्ता इतो[3] बहिर्वै श्रमणो ऽस्ति नान्यः[4][5]॥

यस्य सुभद्र धर्मविनये[6] ग्रार्याष्टाङ्गो मार्गो नोपलभ्यते प्रथमः श्रमणास्तत्र नोपलभ्यते द्वि-
तीयस्तृतीयश्चतुर्थः[7] श्रमणस्तत्र नोपलभ्यते। यस्मिंस्तु[8] सुभद्र धर्मविनये ग्रार्याष्टाङ्गो मार्ग
5 उपलभ्यते प्रथमः श्रमणास्तत्रोपलभ्यते द्वितीयस्तृतीयश्चतुर्थः श्रमणास्तत्रोपलभ्यते।

---

1) Ex conject.; MS समाधिंचरणं (C °धोंच°).

2) In B चै is hidden under a blot, and therefore rather indistinct, D एकाग°.

3) After प्रदेशवक्ता B has a blackened spot, where formerly stood two akṣaras which I suppose to have been ग्रतो. A marginal correction on the top of the page इतो, though not referred to by any sign, cannot but belong to this passage. I have put it into the text. The copyists of DCP wholly neglected it, in these copies, therefore, बहिर्वै is immediately connected with °वक्ता.

4) B ग्रवणोस्तर्के (made out of कें)नान्यः. The interlinear म, of course, represents a म to correct the usual blunder ग्रवण; ऽक may be a corrupted स्ति, intended as a correction of स्त. If I interpret them right, both interlinear additions have not been supplied by the monk who wrote B, but must have been added from another manuscript. I have corrected the last pāda according to the Pali redaction.

5) For the sake of clearness I subjoin here the entire text of the gāthā in the Pali redaction from Mahāparin. II. p. 249:

*Ekūnatiṁso vayasā Subhadda*
*Yaṁ pabbajiṁ kiṁkusalānuesī.*
*Vassāni paññāsa samādhikāni* *)
*Yato ahaṁ pabbajito Subhadda,*
*Ñāyassa dhammassa padesavattā.*
*Ito bahiddhā samaṇo pi n'atthi.*

*) Cp. Rhys Davids, S. B. E., XI, 108, n. 1.

6) Ex conject.; MS धर्मेविनये. A sign put in B on the akṣ. ष्टा of ग्रार्याष्टाङ्गो refers to this marginal gloss: सम्यक्दृष्टिः संम्यक्संकल्पः। सम्यक्वाक्। संम्यक्कर्म्मान्तः। संम्यगाजीवः। संम्यग्व्यायामः। संम्यक्स्मृतिः। संम्यक्समाधिश्चेति ग्रार्य्याष्टांगमार्गः॥. This gloss C has taken up into the text; it is wanting in D and P.

7) MS द्वितीयत्°.

8) MS यस्मिंत्तु (D यस्मिंतु).

[1]अस्मिंस्तु सुभद्र धर्मविनये आर्याष्टाङ्गो मार्ग उपलभ्यते । इह प्रथमः श्रमण उपलभ्यते इह द्वितीय इह तृतीय इह चतुर्थो[2] न सन्तीतो बहिः [3]श्रमणा वा ब्राह्मणा <वा> । [4]शून्याः परप्रवादाः [5]श्रमणै<र्वा> ब्राह्मणैर्वा । एवमत्र पर्षदि सम्यक्सिंहनादं नदामि ॥

अस्मिन्खलु धर्मपर्याये भाष्यमाणे सुभद्रस्य परिव्राजकस्य विरजो विगतमलं धर्मेषु धर्मचक्षुरुत्पन्नम् ॥ अथ सुभद्रः परिव्राजको दृष्टधर्मा प्राप्तधर्मा पर्यवगाढधर्मा तीर्णकाङ्क्षस्तीर्णविचिकित्सो ऽपरप्रत्ययो ऽनन्यनेयः शास्तुः शास<न>धर्मेषु वैशारद्यप्राप्त उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा येनायुष्मानानन्दस्तेनाञ्जलिं प्रणाम्यायुष्मन्त<मानन्द>मिदमवोचत् । लाभा भदन्तानन्देन सुलब्धा यद्भगवतानन्दो महाचार्येण महाचार्यान्तेवासिकाभिषेकेणाभिषिक्तः । अपि त्वस्माकमपि स्युर्लाभाः[6] सुलब्धा यद्वयं लभेमहि स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावम् ॥ अथायुष्मानानन्दो भगवन्तमिदमवोचत् । अयं भदन्त सुभद्रः परिव्राजक आकाङ्क्षते स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावम् ॥ तत्र भगवान्सुभद्रं परिव्राजकमामन्त्रयते । एहि भिक्षो चर ब्रह्मचर्यम् ॥ सैव तस्यायुष्मतः प्रव्रज्याभूत्सोपसम्पत्स भिक्षुभावः ॥

एवं प्रव्रजितः स आयुष्मानेको व्यपकृष्टो ऽप्रमत्त [7]आतापी प्रहितात्मा व्यहार्षीत् । [8]एको व्यपकृष्टो ऽप्रमत्त [39a] आतापी प्रहितात्मा विहरन्यदर्थं कुलपुत्राः

---

1) Ex conject.; MS यस्मिंतु.

2) MS चतुर्ध्या न (D चतुर्थध्यान!).

3) MS श्रवणा.

4) MS शुन्याः. Cp. Mahāparin. ll. p. 248 in fine *suññā parappavādā samanebhi aññehi.*

5) MS श्रम(D व)णै ब्राह्म°.

6) MS लाभासुल° (C लभिसुल°).

7) MS अतापी.

8) Cp. the parallel passage Divy. 618, 3 foll. with a few slight discrepancies, *anagārikāṃ* (not *anā°*) and *vedayate sma* for *pravedayate* of our text.

केशश्मश्रु[1] अवतार्य काषायाणि वस्त्राण्याच्छाद्य सम्यगेव श्रद्धया अगारादनागारिकां प्रव्रजन्ति तदनुत्तरं ब्रह्मचर्यपर्यवसानं दृष्ट एव धर्मे स्वयमभिज्ञया साक्षात्कृत्योपसंपद्य[2] प्रवेदयते[3]। क्षीणा मे जातिरुषितं ब्रह्मचर्यं कृतं करणीयं [4]नान्यमस्माद्भवं प्रजानामि। आज्ञातवानायुष्मानर्हन्बभूव सुविमुक्तः॥ अथायुष्मतः सुभद्रस्यार्हत्वप्राप्तस्य विमुक्तिसुखं[5]

5 प्रतिसंवेदयत एतदभवत्। न मम प्रतिरूपं स्याद्यदहं शास्तारं परिनिर्वापयन्तं पश्येयं यन्न्वहं तत्प्रथमतरं परिनिर्वापयेयमिति॥ तत्रायुष्मान्सुभद्रः प्रथमतरं परिनिर्वृतः ततः पश्चाद्भगवान्[6]॥

यदा भगवता पश्चिमशयनोपगतेन धर्मोपरोधिकायां[5] वेदनायां वर्तमानायां छिद्यमानेषु[7] धर्मेषु मुच्यमानेषु संधिषु सुभद्रो ऽर्हत्वे प्रतिष्ठापितो बहवश्च कौशीनागरा मल्ला

10 धर्मे नियुक्ता तदा भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। आश्चर्यं भदन्त यदयं सुभद्रः परिव्राजको भगवता छिद्यमानेषु धर्मेषु मुच्यमानासु[8] संधिषु संसारवागुराया मोचयित्वा यावदत्यन्तनिष्ठे निर्वाणे प्रतिष्ठापित इति॥ भगवानाह। किमत्र भिक्षव आश्चर्यं यदिदानीं मया विगतरागेण विगतद्वेषेण विगतमोहेन परिमुक्तेन जाति-

---

1) In B perhaps °श्मश्रू.

2) Ex conject.; MS स्वयमभिज्ञया साक्षात्कृतोप°. Cp. Mahāparin. ll. p. 250, 8 *sayaṁ abhiññā sacchikatvā* and Divy. 618, 7.

3) Ex conject.; MS प्रवेदयन्ते (C °यन्ते). Cp. Divy. 618, 8; Mahāparin. p. 250, 9 has here *vihāsi.*

4) Ex conject.; MS नायम°, Mahāparin. ll. *nāparaṁ.*

5) Anusvāra wanting in MS.

6) B गवान, DP corr.

7) I have kept here and l. 11, the reading of MS धर्मेषु, though the Tibetan has in both places གནད་ = मर्म(सु) (Feer p. 156, n. 2). By the term *dharmās* are meant the qualities and properties of mind, senses etc., inherent to life and existence of a sentient being. The Tibetan translator must have had before him an altered reading (cp. *infra,* p. 236, 7), not the original one.

8) Note the change of gender.

जराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासैः सुभद्रः परिव्राजकः संसारवागुराया मोचयित्वा यावदत्यन्तनिष्ठे निर्वाणे प्रतिष्ठापितो यत्तु[1] मयातीते ऽध्वनि सरागेण सद्वेषेण समोहेनापरिमुक्तेन जातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासै[2]रूहापोहविरहिते<न> तिर्यग्योनावुपपन्नेन स्वजीवितपरित्यागेन सुभद्रः परित्रातः कौशीनागराश्च मल्लास्तच्छृणुत साधु च सुष्ठु च मनसि कुरुत भाषिष्ये ॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि अन्यतरस्यां पर्वतदर्यां मृगयूथ<प>ः प्रतिवसति अनेकमृगसहस्रपरिवारः पण्डितो व्यक्तो मेधावी तच्च[3] मृगयूथं लुब्धकेन विचार्य राज्ञे निवेदितम् ॥ ततो राज्ञा चतुरङ्गेण बलकायेन निर्गत्य तन्मृगयूथं सर्वं[4] <सं>कटीकृतम् ॥ ततो यूथपतेरेतदभवत् । यद्यहमिदानीमिमान्न रक्षिष्यामि अद्यैव ते सर्वे न भविष्यन्तीति ॥ ततो यूथपतिः समन्ततो व्यवलोकयितुमारब्धः कतमेन प्रदेशेनास्य मृगकुलस्य निस्सरणं[5] स्यादिति । स पश्यति तस्यां पर्वतदर्यां नदीं[6] वहमानां । सा[7] च नदी अहार्यहा-

---

1) Ex conject.; MS यत्र.

2) MS °पायासरूहा° (D °पायासैः उताहो°!). For *ūhāpohavirahita* cp. *supra* p. 209, 10.

3) Ex conject.; MS तंच.

4) Ex conject.; *saṃkaṭīkṛ* is as legitimate a form as *prakaṭīkṛ*, it signifies ‚to press on, to surround', *saṃkaṭa* is a familiar word with Buddhists. The Tibetan renders this word by ཁོངས་སུ་བཅུག་གོ་ = 'in medio posuit' (Feer). The manuscripts are here very corrupt. PC सर्वकलक्ष्मीटीकृतं (cp. Feer p. 157 n. 1), D सर्वलक्ष्मीतीकृतं. In B we find the origin of the meaningless complex. There stood at first सर्वंकटीकृतं, afterwards टी was cancelled, and above क the sign ͝ was written referring to the margin, where लक्षी was added. The corrector of B was on the wrong track. The original error consisted simply in the omission of सं.

5) MS निस्मरणं.

6) Anusvāra wanting in MS.

7) B सो, it seems, P corr.

रिणो शीघ्रस्रोतास्ते च मृगा दुर्बलाः ॥ ततो यूथपतिः सहसा तां नदीमवतीर्य मध्ये
स्थित्वा शब्दमुदीरयति । आगच्छन्तु भवन्त एतस्मात्कूलादुत्प्लुत्य[1] मम पृष्ठे पादान्स्था-[2]
पयित्वा परत्र कूले प्रतितिष्ठत । अनेनोपायेन जीवितं वः पश्याम्यतो ऽन्यथा मरण-
मिति ॥ ततस्तैर्मृगैस्तथैव कृतम् ॥ अथ तस्य पृष्ठे खुरनिपातात्त्वक्[3] छिन्ना[4] मांसरुधिरा-
5 स्थि<राशि>[5]र्व्यवस्थितो न चास्य व्यवसायो निवृत्तः[6] तद्गतकारुण्यो[7] मृगाणामन्तिके ॥ ततः
सर्वेषु लङ्घितेषु पृष्ठतो ऽवलोकयितुं प्रवृत्तः मा कश्चिदत्रालङ्घितो[8] भविष्यतीति । स
पश्यति मृगशावकमेकमलङ्घि<तम्> । ततो[9] यूथपतिश्छिद्यमानेषु मर्मसु मुच्यमानासु[10] संधिषु
इष्टजीवितमगणयित्वा कूलमुत्तीर्य मृगशावकं पृष्ठमधिरोह्य नदीमुत्तार्य कूले स्थापयित्वा
तं मृगगणमुत्तीर्णं दृष्ट्वा मरणकाले प्रणिधिं कर्तुमारब्धः । यथा मे इमे मृगा अयं च मृग-
10 शावक इष्टेन जीवितेनाच्छादिता व्यसनात्परि[39 b]त्राता एवमप्यहमनागते ऽध्वनि
अनुत्तरां सम्यक्संबोधिमभिसंबुध्यैतान्संसारवागुराया मोचयेयमिति ॥

---

1) MS कुलादु°. Likewise in the sequel (l. 8) everywhere कुल° instead of कूल°.

2) B पादा (with a visarga afterwards added) स्था°, P पादाः°, DC पादास्था°.

3) MS निपातांत्व°.

4) Ex conject.; MS त्वकिछत्वा.

5) Ex conject. In the Tibetan version the missing word is represented by ལྷག་མ་ 'remainder'. In B a marginal note referring to व्यवस्थितः is added, viz. the word शिरा. Should we correct मांससिरारुधिरास्थिशेषः? Cp. Kathāsarits. 68, 50 *asthiçeṣa*, 72, 136 *asthiçeṣatāṃ nītaḥ*.

6) MS निर्वृत्तः (D° तः).

7) One would rather expect the gen. *tadgatakāruṇyasya*.

8) Ex conject.; MS कश्चिदत्रलंवितो.

9) B °कमलंघितंतोयूथ° (with अ written above), and on the lower margin म, referring manifestly to this place, so that the correction made in B aimed at reading °घितम् । अतो. But I rather think तं was omitted by the *prima manus*.

10) Cp. *supra* p. 234, 11. Here मर्मसु affords a fit sense.

भगवानाह । किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन मृगपतिरासीदहं सः । मृगा इमे कौशीनागरा मल्ला मृगशावको ऽयमेव सुभद्रः ॥

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः । कानि भदन्त सुभद्रेण कर्माणि कृतानि येन पश्चिमः साक्षाच्छ्रावकाणामिति ॥ भगवानाह । सुभद्रेणैव भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि न बाह्ये[1] पृथिवीधातौ विपच्यन्ते नाब्धातौ न तेजोधातौ न वायुधातावपि तूपात्तेष्वेव[2] स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च ।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि[3] ।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि अस्मिन्नेव भद्रके कल्पे विंशतिसहस्रायुषि प्रजायां काश्यपो नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च[4] मनुष्याणां ‹च›[5] बुद्धो भगवान् । स वाराणसीं[6] नगरीमुपनिश्रित्य विहरति ऋषिपतने मृगदावे ॥ अथ भगवतः काश्यपस्य सम्यक्संबुद्धस्य भागिनेयो ऽशोको नाम्ना । स भगवत्सकाशे मोक्षार्थी प्रव्रजितः । स स्वाधीनं मोक्षं मन्य-

---

1) It is plain that this stereotyped formula has been mutilated here, apparently in consequence of a copyist's fault, who after the first उपचितानि instead of लब्धसंभाराणि put बाह्ये etc., which had to be written after the third उपचितानि, omitting thereby a great portion. The negation was added afterwards in order to keep intact the meaning of the whole.

2) Cp. *supra* p. 74, n. 9.

3) All MSS, even D, have here अपि कल्पशतैरपि. Cp. *supra* p. 80, n. 12.

4) B व, CDP corr. — Elsewhere this variant often occurs in D, while BCP have usually देवमनुष्याणां.

5) च only in D.

6) Anusvāra either wanting in MS, or not discernible.

मानो न व्यापद्यते ॥ यावद्दीर्घकाल[1]प्रकर्षेणाशोको जनपदे वर्षोषितः । भगवांश्च काश्यपः
सम्यक्संबुद्धः सकलं बुद्धकार्यं कृत्वा इन्धनक्षयादिवाग्निः पश्चिमशयनोपगतः अशोकश्च
भिक्षुरशोकस्याधस्तात्प्रतिसंलीनो बभूव[2] ॥ अथ या देवता तस्मिन्नशोकवृक्षे व्युषिता सा
भगवतः काश्यपस्य सम्यक्संबुद्धस्य परिनिर्वाणं श्रुत्वा रोदितुं प्रवृत्ता । [3]तस्या रुदन्त्या
5 [4]ऽश्रुबिन्दवो ऽशोकस्य काये निपतितुं प्रवृत्ताः ॥ अथाशोक ऊर्ध्वमुखस्तां देवतां रुदन्ती-
माह । किमर्थं देवते रुद्यत इति ॥ देवतोवाच । अद्य रात्र्या मध्यमे यामे भगवतः काश्य-
पस्य सम्यक्संबुद्धस्य परिनिर्वाणं भविष्यतीति ॥ अथाशोको देवतावचनमुपश्रुत्य मर्म-
विद्ध इव प्रचलितवान् । सो ऽपि करुणाकरुणं रोदितुं प्रवृत्तः ॥ ततो देवतया पृष्टः किमर्थं
रोदिषीति ॥ अशोक उवाच । [5]‹गुरुवियोगा›ऽज्ञातिवियोगाच्च । काश्यपो मे सम्यक्संबुद्धो
10 मातुलः । सो ऽहं विस्रब्धविहारी न [6]व्यापतवान् दूरे चासावहं च पृथग्जनः । अपकृ-
ष्टत्वादध्वनो[7] न शक्यामि विशेषमधिगन्तुमिति ॥ देवतोवाच । यदि पुनरहं भवन्तं भग-
वत्सकाशमुपनयेयं[8] किं शक्यमिति[9] ॥ अशोक उवाच । तथा हि मे बुद्धिः परिपक्वा

---

1) B यावद्दो°, D corr.

2) MS बभूवः.

3) B तस्मा, P corr.

4) Irregular sandhi = *rudantyā açru°*, cp. *supra* p. 20, n. 6.

5) The suppletion of the gap is almost certain. Feer p. 158 n. 3 '«séparé d'un précepteur» ajoute le Kandjour'.

6) B व्यापतवान्, the interlinear would-be correction is a corruption of the sound tradition.

7) Ex conject.; B अपकृष्टत्वादधना, the akṣaras अप being very indistinct. The copyist of C read them as I do, DP have पृथग्जनः प्रकृष्ट°. Cp. Feer p. 159, n. 1.

8) In B uncertain whether °नयेयं or °नयेये, as is in DCP.

9) MS किं शक्यमिति विशेषमधिगन्तुमिति. Feer observes that the words *viçeṣam* etc. are not rendered in the Tibetan (p. 159, n. 3). This and the impossibility to account for *iti* after *çakyam*, if they are genuine, prove their being a gloss. For this reason I have left them out.

यथा सहृद्दर्शनादेव भगवतः ‹शक्ष्यामि›[1] विशेषमधिगन्तुमिति ॥ ततो देवतया अशोको भगवत्सकाशमृद्ध्यनुभावान्नीतः । तस्य भगवद्दर्शनात्प्रसाद उत्पन्नः प्रसादजातस्य च भगवता काश्यपेन तथाविधो धर्मो देशितः यच्छ्रवणादर्हत्त्वं साक्षात्कृतं प्रथमतरं चायुष्मानशोकः परिनिर्वृतः ततो भगवान्काश्यपः सम्यक्संबुद्धः ॥

ततः सा देवता आयुष्मतो ऽशोकस्य परिनिर्वाणं दृष्ट्वा प्रीतिमुत्पा[40a]दयामास चिन्तयति च । यः कश्चिदनेनायुष्मता विशेषो ऽधिगतः सर्वः स मा‹मा›[2]गम्य । एवमप्यहमनागते ऽध्वनि यो ऽसौ भगवता काश्यपेन उत्तरो नाम माणवो व्याकृतो[3] भविष्यसि त्वं मानव[4]वर्षशतायुषि प्रजायां शाक्यमुनिर्नाम तथागतो ऽर्हन्सम्यक्संबुद्ध इति तस्याहमेव पश्चिम[5]शयनोपगतस्य चरमः साक्षाच्छ्रावकाणामेहिभिक्षुक[6]‹या प्रव्रजितानां› भवेयं पूर्वतरं च भगवतः परिनिर्वा‹पयेयं›[7] ततो भगवान्शाक्यमुनिरिति ॥

भगवानाह । किं मन्यध्वे भिक्षवो या[8]सौ देवतायं स सुभद्रः । तस्मात्तर्हि भिक्षव एवं शिक्षितव्यं यत्कल्याणमित्रा विहरिष्यामः कल्याणसहायाः कल्याणसंपर्का न पापमित्रा न पापसहाया न पापसंपर्का इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

---

1) I have filled up the obvious gap with the word which most probably has dropt; MS भगवतो विशे°.

2) As to my suppletion of the gap vide Feer p. 150, 14: «l'excellence, quelle qu'elle soit, obtenue par cet âyuṣmat, c'est en venant à moi (qu'il l'a acquise)». Just in the same way Divy. 350, 16 *yat kiṃcid asmābhiḥ çreyo 'vāptaṃ tat sarvam imaṃ markaṭam āgamya*, for this reading of the manuscripts is right, cp. W.Z., XVI, 107. Moreover, cp. *supra* p. 85, n. 11.

3) B व्याकृता, DP corr.

4) Ex conject.; MS माणव° owing to the suggestion of the preceding माणवो.

5) Ex conject.; MS पश्चिमे.

6) Ex conject.; MS °कानामेहिभिक्षुकोभवेयं. Cp. *supra* p. 230, 16.

7) Ex conject.; MS परिनिर्वाणं ततो. As to *parinirvāpayeyam*, instead of which some synonymous word may have been written by the author of our text, cp. *supra* p. 234, 6.

8) MS यो.

अथायुष्मानानन्दो भगवन्तमिदमवोचत्। इह मम भदन्तैकाकिनो रहोगतस्य प्रति-[1] संलीनस्यैवं चेतसि चेतःपरिवितर्क उदपादि। उपार्धमिदं ब्रह्मचर्यस्य[2] यदुत कल्याण-मित्रता[3] कल्याणसहायता[3] कल्याणसंपर्को न पापमित्रता न पापसहायता न पापसंपर्क इति॥ मा[4] त्वमानन्दैवं वोच उपार्धमिदं ब्रह्मचर्यस्य यदुत कल्याणमित्रता कल्याणस-5 हायता कल्याणसंपर्को न पापमित्रता न पापसहायता न पापसंपर्क इति। सकलमिद-मानन्द केवलं परिपूर्णं परिशुद्धं पर्यवदातं ब्रह्मचर्यं यदुत कल्याणमित्रता कल्याणस-हायता कल्याणसंपर्को न पापमित्रता न पापसहायता न पापसंपर्कः। तत्कस्य हेतोः। मां[5] ह्यानन्द कल्याणमित्रमागम्य जातिधर्माणः सत्त्वा जातिधर्मतायाः परिमुच्यन्ते जरा-व्याधि[6]मरणशोकपरिदेवदुःखदौर्मनस्योपायासधर्माणः सत्त्वा उपायासधर्मतायाः[7] परिमु-10 च्यन्ते। तदनेनैव[8] ते आनन्द पर्यायेण वेदितव्यं यत्सकलमिदं केवलं परिपूर्णं परिशुद्धं पर्यवदातं ब्रह्मचर्यं[9] यदुत कल्याणमित्रता कल्याणसहायता कल्याणसंपर्को न पापस-हायता न पापमित्रता न पापसंपर्क इत्येवं ते आनन्द[10] शिक्षितव्यम्॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो[11] भगवतो भाषितमभ्यनन्दन्॥[12]

---

1) B भदन्तेका°, D भदन्त एका°.

2) B चर्यस्या, the $\bar{a}$ has been cancelled; DCP चर्यस्य.

3) MS °ताः.

4) The words भगवानाह, which precede in the former occurrence of this sermon (*supra*, p. 211, 10) are wanting here. There are some other slight differences of redaction which I have kept, save in cases of obvious corruption.

5) MS मा.

6) B व्याधि, CDP corr. The placing of शोक after मरण is probably the better redaction, cp. *supra*, p. 211, 15.

7) MS उ (or ड)पायाःधर्म°.

8) MS भद°.

9) MS ब्रह्मचर्यस्य.

10) MS आनन्दा. *Ānanda* suits of course better than *bhikṣavaḥ* (*supra*, p. 212, 4).

11) B भगवो, DP corr.

12) In MS there follows अवदानशतके चतुर्थी उदानगाथा(sic)बोधिसत्त्वजातकानां समाप्तः. This colophon is not found in D.

---

# पञ्चमो वर्गः ।

## गुडशालेति[1] ४१ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासन- 5 ग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घो राजगृहे विहरति वेणुवने कलन्दकनिवापे ॥ यदा भगवता ऽनुत्तरा सम्यक्संबोधिरभिसंबुद्धा तदायुष्मद्भ्यां शारिपुत्रमौद्गल्यायनाभ्यामियं प्रतिज्ञा कृता न तावत्पिण्डकं[2] परिभोक्ष्यावहे यावन्नरकतिर्यक्प्रेतेभ्य एकसत्त्वमपि न मोचयाव इति । ततस्तावायुष्मन्तौ कालेन कालं कदाचिन्नरकचारिकां चरतः कदाचित्तिर्यक्प्रेतचारिकां चरतः । तौ तत्र सत्त्वानां विविधयातनाभ्याहतानामसत्प्रलापं 10 *दृष्ट्वा तानागत्य*[3] चतसृणां पर्षदामारोचयतः ते ऽपि श्रुत्वा संवेगमापद्यन्ते । ततस्तौ

---

1) In MS there precedes this *uddāna* of the fifth varga: उद्दानं गुडशाला च भक्तं च तोयं च[read व]र्चघटेन च कोलिको ह्युत्तरश्चापि जात्यन्धः श्रेष्ठिरेव च पुत्रो जाम्बालकश्चैव वर्गो भवति समुद्दितः ॥

2) MS परिभोक्ष्यावहे. The preceding word पिण्डकं has been depraved in P into पिशुकं, cp. Feer p. 162 n. 2.

3) The text is here disturbed. Firstly, *dṛṣṭvā* is not the fit word, but *çrutvā*, the Tibetan version has «ils entendirent» (see Feer l. l., n. 3); then, *tān āgatya* is here meaningless. Perhaps *dṛṣṭvā* has ousted its synonym निशम्य, and as to *tān āgatya*, one would rather expect something like चारिकाया आगत्य, 'étant revenus de la promenade', as M. Feer states to be the meaning of the Tibetan text in this place (see Feer l. l., n. 4), and as is found *infra* p. 243, 4.

तदधिष्ठानं तथाविधां धर्मदेशनां कुरुतो ययानेके सत्त्वा विशेषमधिगच्छन्ति [40b] धर्म-
श्रवणाकथायाश्च[1] भाजनीभवन्ति ॥

यावदपरेण समयेनायुष्मान्महामौद्गल्यायनः[2] प्रेतचारिकां चरन्नद्राक्षीत्प्रेतं पर्वत-
कूटप्रख्यं[3] समुद्रसदृशकुक्षिं सूचीछिद्रोपममुखं स्वकेशसंछन्नमादीप्तं सम्यकप्रज्वलितमे-
5 कज्वालीभूतं ध्मायन्तमार्तस्वरं[4] क्रन्दन्तं दुःखां तीव्रां खरां कटुकाममनापां वेदनामनुभवन्तं
येन येनोच्चारप्रस्रावभूमिस्तेन[5] तेनान्वाहिण्डमानं तदपि कृच्छ्रेणासादयन्तम् ॥ ततः स्थ-
विरः प्रेतं पप्रच्छ। किं ते भोः कर्म कृतं येनैवंविधां दुःखां तीव्रां खरां कटुकाममनापां[6]
वेदनां वेदयस इति ॥ प्रेत आह। आदित्ये हि समुद्गते न[7] दीपेन प्रयोजनम्। भगवन्तमेतमर्थं[8]
परिपृच्छ स ते अस्माकीनां[9] कर्मप्लोतिं व्याकरिष्यतीति ॥ अथायुष्मान्महामौद्गल्यायनो
10 येन भगवांस्तेनोपसंक्रान्तः ॥

तेन खलु समयेन भगवान्प्रतिसंलयनाद्व्युत्थाय चतसृणां पर्षदां मधुरमधुरं धर्मं देश-

---

1) With श्र commences F f. 3a. The folio 3 of this ms. contains this avadāna to *infra* p. 244, 6; f. 3b begins with गवानायुष्मन्तं (*infra* p. 243, 3).

2) F महामो°. Further on (vide p. 243, 3) it has महामौ°.

3) B कूटप्रख्यं (with interlinear ग्र). The interlinear akṣ. has been added, I think, a secunda manu; the copyists took it = मु, hence CP कूटप्रमुख्यं, D कूटमुखं. The prima manus, however, wrote the word rightly. — F प्रर्वतकूटप्रख्यं. In the sequel F has °दीप्त-सम्य°.

4) Ex conject.; B and F ध्याय°.

5) F प्रश्राव.......हिण्ड्यमानं.

6) F °कामननापां.

7) Both B and F न हि दीपेन, which cannot be right because of the preceding हि. In K. f. 19b 8 this answer is expressed by the half-çloka आदित्ये हि समुद्यति दीपेन किं प्रयोजनं.

8) F भवन्तमे°.

9) Both B and F °कीनं.

यति तोऽहं [(1)] मध्विवानेडकमनेकशता च पर्षद्भगवतः सकाशान्मधुरमधुरं धर्मं शृणोत्यनिन्द्यमानैरिन्द्रियैः । ततो बुद्धा भगवन्तः पूर्वालापिनः प्रियालापिनः [(2)] एह्येहीतिस्वागतवादिनः स्मितपूर्वङ्गमाश्च । तत्र भगवानायुष्मन्तं [(3)] महामौद्गल्यायनमिदमवोचत् । एहि मौद्गल्यायन स्वागतं ते कुतस्त्वमेतर्ह्यागच्छसीति ॥ मौद्गल्यायन आह । आगच्छाम्यहं भदन्त प्रेतचारिकायास्तत्राहं प्रेतमद्राक्षं सूचीछिद्रोपममुखं पर्वतोपमकुक्षिं स्वकेशसंछन्नं दुर्गन्धं परमदुर्गन्धम् [(4)] । आह च ।    5

विशुष्ककण्ठोष्ठपुटः सुदुःखितः [(5)] प्रवृद्धशैलोपमचञ्चिताश्रयः ।
स्वकेशसंछन्नमुखो दिगम्बरः सुसूक्ष्मसूचीसदृशाननः कृशः ॥

नग्नः स्वकेशसंछन्नो ‹अ›स्थिपल्लवदुच्छ्रितः ।
कपालपाणिर्घोरश्च क्रन्दन्समभिधावति ॥    10
बुभुक्षया पिपासया [(6)] क्लान्तो व्यसनपीडितः ।
आर्तस्वरं क्रन्दमानो दुःखां वेदति वेदनाम् [(7)] ॥
किं तेन प्रकृतं पापं मर्त्यलोके सुदारुणमिति ॥

---

1) Both B and F मध्विकमनेड°, but cp. *infra* p. 246, 14. F has शकाशात्मधुरं धर्मं शृणोत्यनिंद्य[or न्द्र]मानैरिन्द्रियैः, cp. *infra* p. 246, n. 6.

2) The gap in MS is filled up in F.

3) B and its copies महामो°, F महामौ°.

4) F दुगन्वं[= न्धं]परमदुगन्वं[= न्धं].

5) Ex conject., according to the better tradition in the repetitions of this stanza in avad. nr. **42** and **47**; B प्रतिवद्धशैलोपमचंचितश्रयः, F प्रपिन्ध[or द्ध?]शैलो°.

6) F °शया.

7) This çloka must be the sanskritized form of some prākrit (or pāli) prototype. In pāda a *pipāsayā* disturbing the metre presupposes a prākrit *pipāsāya*, and in d *vedati* is the poor Sanskrit varnish of prākrit *vedeti* = skr. *vedayate*. In nr. **42** and **47** *vindati* occurs instead of it.

भगवानाह । पापकारी मौद्गल्यायन स[1] प्रेत इच्छसि तस्य कर्मप्लोतिं श्रोतुम् ॥ एवं भदन्त ॥ तेन हि मौद्गल्यायन शृणु साधु च सुष्ठु च मनसि कुरु भाषिष्ये ।

भूतपूर्वं मौद्गल्यायन राजगृहे नगरेऽन्यतरः श्रेष्ठी आढ्यो महाधनो महाभोगो विस्तीर्णविशालपरिग्रहो वैश्रवणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी । तस्य पञ्चमात्राणीक्षुशालशतानि यत्र चेक्षवः[2] पीड्यते । असति च बुद्धानामुत्पादे प्रत्येकबुद्धा लोक उत्पद्यन्ते ही[3]<नदी>नानुकम्पकाः प्रान्तशयनासनभक्ता एकदक्षिणीया लोकस्य ॥ यावदन्यतमः प्रत्येकबुद्धो हीनदीनानुकम्पो प्रान्तशयनासनसेवी स पूर्वाह्णे निवास्य पात्रचीवरमादाय राजगृहं पिण्डाय प्राविक्षत् । स च भदन्तः क्षयव्याधिना स्पृष्टः । तस्य वैद्येनेक्षुरस उपदिष्टः । स श्रेष्ठिसकाशं यन्त्रशालामुपसंक्रान्तः श्रेष्ठिना च स प्रत्येकबुद्धो दृष्टः कायप्रासादिकश्चित्तप्रासादिकश्च[4] । दृष्ट्वा श्रेष्ठिना उक्तः । केनार्यस्य प्रयोजनमिति ॥ प्रत्येकबुद्धः कथयति । गृहपते इक्षुरसेनेति ॥ ततस्तेन गृहपतिना भृतकपुरुषस्याज्ञा दत्ता आर्यस्येक्षुरसं प्रयच्छेति । स च गृहपतिः केनचिदेव करणीयेन बहिर्यानाय संप्रस्थितः ॥ अथ तस्य पुरुषस्य परकीये द्रव्ये मात्सर्यमुत्पन्नं[5] यद्यहमस्य रसं दास्ये पुनरप्येष आगमिष्यतीति । तेनानिष्टगतित्रयप्रपातनप्रेम्णा सर्वाभिमतगतिद्वयनिराकरिष्णुना ऽत्यन्तदूरापगतेनार्यधर्मेभ्यः पापं चित्तमुत्पाद्य स प्रत्येक[41 a]बुद्ध उक्तः । आह[6] रे भिक्षो पात्रं देहि रसं ते दास्यामीति ॥ असमन्वाहृत्यार्हच्छ्रावकप्रत्येकबुद्धानां ज्ञानदर्शनं न प्रवर्तत

---

1) In F the portion, which commences with मौद्गल्यायन स to the next मौद्गल्यायन has been left out.

2) Ex conject.; B and F पीड्यन्ते.

3) The gap is filled up by F, which ceases here (f. 3 b 6). Cp. Divy. 88, 13.

4) MS °प्रसादिकश्च.

5) MS मांर्मय° (C मामंर्य°, D मार्मय°).

6) Ex conject.; MS आहर. The particle *āha* has here the meaning 2) of PW. I, 745, and may be styled rather a particle of exhortation. Jtkm. 222, 12 is an instance of meaning 3) l. l.

इति । क्षीनदीनानुकम्पितया[1] भृत्यपुरुषो ऽयमस्यानुग्रहः कर्तव्य इति तत्पात्रमुपना-[2]
मितम् ॥ ततो ऽसौ दुराचारो निर्घृणहृदयस्तद्गृहीत्वा[3] प्रतिगुप्तं प्रदेशं गत्वा प्रस्रावेण
पूरयित्वा उपरीनुरसेनाच्छाद्य तस्मै प्रत्येकबुद्धायानुप्रददौ । तेन संलक्षितम् । स चिन्तयति
बतानेन तपस्विना पापं कृतमिति । स तदेकान्ते[4] छोरयित्वा प्रक्रान्तः ॥

भगवानाह । किं मन्यसे मौद्गल्यायन यो ऽसौ तेन कालेन तेन समयेन भृतकपुरुष 5
आसीदयं स प्रेतः । तस्य कर्मणो विपाकेन संसारे ऽनन्तं दुःखमनुभूतवानिदानीमपि प्रेतभूतः
प्रकृष्टतरं[5] दुःखमनुभवति । तस्मात्तर्हि ते मौद्गल्यायन मात्सर्यप्रहाणाय[6] व्यायन्तव्यं[7] यथा
एवंविधा दोषा न स्युर्ये प्रेतस्य[8] । इति हि मौद्गल्यायन एकान्तकृष्णानां कर्मणामेकान्त-
कृष्णो विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रस्तस्मात्तर्हि ते
मौद्गल्यायन एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव कर्मस्वाभोगः 10
करणीय इत्येवं ते मौद्गल्यायन शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमना आयुष्मान्महामौद्गल्यायनो ऽन्ये च देवासुरगरुडादयो[9] भग-
वतो भाषितमभ्यनन्दन् ॥

---

1) MS क्षीनादी°.

2) B तत्प्रातमु°, D corr.

3) MS तं गृहीत्वा. I think the fault was occasioned by A having had this orthography तङ्गृहीत्वा, for the ligatures ङ्ग and द्ग are often confused in Nepalese mss., cp. Feer's remark, p. 162 n. 1. Yet in F they are kept distinct.

4) Ex conject.; MS सतमेकान्तप्रक्रम्यछोर°. Cp. the parallel conclusion of the tale in avad. nr. 44 (B 42b).

5) Ex conject.; B प्रकृष्टतरं out of प्रतिकृष्टतरं, which is the reading of DCP.

6) B मान्स°, D corr.

7) Ex conject., cp. *supra* p. 226, n. 3; MS व्यायतव्यं.

8) Ex conject.; MS स्युर्येनप्रेतस्य.

9) MS °दया.

## भक्तमिति ४२ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिस्सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्डदस्यारामे । तेन खलु समयेनायुष्मान्महामौद्गल्यायनो ऽन्यतरस्मिन्वृक्षमूले निषण्णो दिवाविहाराय ।[1] अश्रौषीदायुष्मान्महामौद्गल्यायनः प्रेत्याः शब्दमार्तस्वरं क्रन्दन्त्या दुःखां तीव्रां खरां कटुकाममनापां वेदनां वेदयमानाया भक्तं[2] मार्गन्त्या बुभुक्षितास्मि मार्षाः पिपासितास्मि मार्षा इति । ततः स्थविरमहामौद्गल्यायनेन प्रेती दृष्टा पृष्टा च किं ते पापं कृतं येनैवंविधानि दुःखान्यनुभविष्यसीति[3] ॥ प्रेती आह । आदित्ये हि समुद्गते[4] न दीपेन प्रयोजनम् । भगवन्तमेतमर्थं पृच्छ स ते अस्माकीनां कर्मप्लोतिं[5] व्याकरिष्यतीति ॥ अथायुष्मान्महामौद्गल्यायनो येन भगवांस्तेनोपसंक्रान्तः ॥

तेन खलु पुनः समयेन भगवान्प्रतिसंलयनाद्व्युत्थाय चतसृणां पर्षदां मधुरमधुरं धर्मं देशयति तद्यथा मध्विवानेडकमनेकशता च पर्षद्भगवतः सकाशान्मधुरमधुरं धर्मं शृणोत्यनिञ्ज्यमानैरिन्द्रियैः ।[6] ततो बुद्धा भगवन्तः पूर्वालापिनः प्रियालापिन एह्रीतिस्वागतवादिनः

---

1) MS °विहारायाश्रौ°.

2) MS मार्गन्त्या.

3) The employment of the future is somewhat strange. I think it is due to a mistake of some copyist. The right reading will be दुःखान्यनुभवसीति.

4) MS न हि दीपे°, cp. *supra*, p. 242, n. 7.

5) MS °प्लातिं (D °प्रोतिं), P corr.

6) B °त्यनिंञ्यमाने°, D corr.

स्मितपूर्वङ्गमाश्च । तत्र[1] भगवानायुष्मन्तं महामौद्गल्यायनमिदमवोचत् । एहि मौद्गल्यायन स्वागतं ते कुतस्त्वमेतर्ह्यागच्छसीति ॥ मौद्गल्यायन आह । आगच्छाम्यहं भदन्त प्रेतचारिकायास्तत्राहं[2] प्रेतीमद्राक्षं सूचीच्छिद्रोपममुखीं पर्वतोपमकुक्षिं स्वकेशसंछन्नां नग्नामार्तस्वरं क्रन्दन्तीं दुःखां तीव्रां खरां कटुकाममनापां वेदनां वेदयमानाम् । आह च ।

विशुष्ककण्ठोष्ठपुटा सुदुःखिता प्रवृद्धशैलोपमचर्चिताश्रया[3][4] । 5
स्वकेशसंछन्नमुखी दिगम्बरा सुसूक्ष्मसूचीसदृशानना कृशा ॥
नग्ना स्वकेशसंछन्ना अस्थिपञ्जरवदुच्छ्रिता[5] ।
कपालपाणिनी घोरा क्रन्दन्ती परिधावति ॥
बुभुक्षया पिपासयाक्रान्ता[6] व्यसनपीडिता । [41 b]
आर्तस्वरं क्रन्दमाना[7] दुःखां विन्दति वेदनाम् ॥ 10
किं तया प्रकृतं पापं मर्त्यलोके सुदारुणाम् ।
येन[8] एवंविधं दुःखमनुभवति भयानकमिति ॥

भगवानाह । पापकारिणी मौद्गल्यायन सा प्रेती । इच्छसि तस्याः कर्मप्लोतिं श्रोतुम् ॥ एवं भदन्त ॥ तेन हि मौद्गल्यायन शृणु साधु च सुष्ठु च मनसि कुरु[9] भाषिष्ये ।

भूतपूर्वं मौद्गल्यायनातीते ऽध्वनि विंशतिवर्षसहस्रायुषि प्रजायां काश्यपो नाम 15 सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः

---

1) B भत्र, DP corr.

2) B चारिकायातत्रा°, P corr.

3) Ex conject., cp. the same stanza *supra* p. 243, 7 and *infra* avad. nr. 47; MS रचिताश्रया against the metre.

4) MS °या:. Metre: vaṃçastha.

5) MS °च्छ्रिता:.

6) The parallel passage *supra*, p. 243, 11, has पिपासया क्लान्ता.

7) MS क्रन्दमानां.

8) I have, metro jubente, dissolved येनैवं°, the reading of MS.

9) MS कुरुत.

शास्ता देवमनुष्याणां बुद्धो भगवान्। स वाराणसीं नगरीमुपनिश्रित्य विहरति ऋषिपतने मृगदावे ॥ तस्यां च वाराणस्यामन्यतमा गृहपतिपत्नी मत्सरिणी कुटुकुञ्चिका आगृहीतपरिष्कारा काकायापि बलिं न प्रदातुं व्यवस्यति प्रागेवान्येषां याचकानाम्। सा श्रमणब्राह्मणकृपणवनीपकान्दृष्ट्वा चित्तं प्रदूषयति ॥ यावदन्यतरः पिण्डपातिकस्तस्या गृहं प्रविष्टः। तस्यास्तं दृष्ट्वा मात्सर्यमुत्पन्नं चित्तञ्च प्रदूष्य इमां चिन्तामापेदे। यद्यहमस्य सत्कारं करिष्यामि पुनरप्येष आगमिष्यतीति[1]। ततस्तया पापकारिण्या ऽनिष्टं परलोकभयमविगणय्य स भिक्षुरुपनिमन्त्र्य द्वारं बद्ध्वा[2] भक्तच्छेदं कारितः बहु च परिभाष्योक्त इयं ते भिक्षो सत्क्रिया[3] मा पुनरिदं गृहं प्रवेक्ष्यसीति ॥

सा तेन मात्सर्येणासेवितेन भावितेन[4] बहुलीकृतेन प्रेतेषूपपन्ना एवंविधानि दुःखानि प्रत्यनुभवति। तस्मात्तर्हि मौद्गल्यायन मात्सर्यप्रहाणाय व्यायन्तव्यमेते[5] दोषा न भविष्यन्ति ये तस्याः प्रेत्या इति ॥

इदमवोचद्भगवानात्तमनस आयुष्मान्महामौद्गल्यायनो ऽन्ये च देवासुरगरुडकिन्नरमहोरगा भगवतो भाषितमभ्यनन्दन् ॥

---

1) B आगमी°, P corr.

2) MS बद्धा.

3) Feer translating 'Voilà, Bhixu, le mauvais traitement qu'on te fait' (p. 167) divides *bhikṣo 'satkriyā* according to the acceptation of the Tibetan translator, who rendered it thus: དགེ་སློང་ཁྱོད་ལ་བཀུར་བསྟི་མ་ཡིན་པ་བྱས་པ་ (from a private communication of the late M. Feer), but it is preferable to take the answer ironically 'I give you this hospitality, that you never again may enter this house'.

4) Ex conject., cp. Feer p. 167, n. 4 and *infra*, p. 251, 2; MS भाषितेन.

5) MS व्यायत्तव्य°.

## पानीयमिति[1] ४३ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिस्सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घो राजगृहमुपनिश्रित्य विहरति वेणुवने 5 कलन्दकनिवापे ॥ अथायुष्मान्महामौद्गल्यायनः प्रेतचारिकां चरन्प्रेतीमद्राक्षीद्दग्धस्थूणासदृशीं स्वकेशसंछन्नां सूचीछिद्रोपममुखीं[3] पर्वतोपमकुक्षिमादीप्तां प्रदीप्तां प्रज्वलितामेकज्वालीभूतां[4] ध्मायन्तीं तृषार्तां दुःखां तीव्रां खरां कटुकाममनापां वेदनां वेदयमानां । दर्शनमात्रेण चास्या नद्युदपानानि शुष्यन्ति । यदा देवो वर्षति तदा तस्या उपरि सविस्फुलिङ्गाङ्गारवर्षं पतति ॥ दृष्ट्वा तामायुष्मान्महामौद्गल्यायन आह । किं त्वया कृतं पापं 10 येनैवंविधं दुःखमनुभवसीति ॥ प्रेती आह । पापकारिण्यहं भदन्त महामौद्गल्यायन एतमर्थं भगवन्तं पृच्छ स ते अस्माकीनां कर्मप्लोतिं कथयिष्यति यां श्रुत्वान्ये ऽपीह सत्त्वाः पापकात्कर्मणः प्रतिविरंस्यन्तीति । अथायुष्मान्महामौद्गल्यायनो येन भगवांस्तेनोपसंक्रान्तः ॥

तेन खलु पुनः समयेन भगवान्प्रतिसंलयनाद्व्युत्थाय चतसृणां पर्षदां मधुरमधुरं 15 धर्मं देशयति[5] स्मेदं मध्विवानेडकमनेकशता च पर्षद्भगवतः सकाशान्मधुरमधुरं[6] धर्मं शृणो-

(2) footnote mark at अद्राक्षीद्दग्ध.

---

1) B पाणी°, P corr.
2) B °द्राक्षीदुग्ध°, D corr.
3) MS °मुखां.
4) MS ध्यायन्तं. Cp. *supra* p. 242, n. 4.
5) B देत्तयति, D corr.
6) B मधुरंमधुरं, D corr.

त्यनिक्तमनैरिन्द्रियैः । ततो बुद्धा[1] भगवन्तः पूर्वालापिनः प्रियालापिन एह्येतिस्वागतवादिनः स्मितपूर्वङ्गमाश्च । तत्र भगवानायुष्मन्तं महामौद्गल्यायनमिदमवोचत् । एहि मौद्गल्यायन स्वागतं ते कुतस्त्वमेतर्ह्यागच्छसीति ॥ महामौद्गल्यायन आह । आगच्छाम्य[42a]हं भदन्त प्रेतचारिकायाः तत्राहं प्रेतीमद्राक्षं दग्धस्थूणासदृशीं[2] स्वकेशसंछन्नां
5 सूचीछिद्रोपममुखीं पर्वतोपमकुक्षिमादीप्तां प्रदीप्तां प्रज्वलितामेकज्वालीभूतां ध्मायन्ती[3]मार्तस्वरं क्रन्दन्तीं तृषार्तां दुःखां तीव्रां खरां कटुकाममनापां वेदनां वेदयमानां । दर्शनमात्रेण चास्या नद्युदपानानि शुष्यन्ति । यदा देवो वर्षति तदास्या उपरि सविस्फुलिङ्गमङ्गारवर्षं पतति ॥ भगवानाह । पापकारिणी मौद्गल्यायन सा प्रेती । इच्छसि तस्याः कर्मप्लोतिं श्रोतुम् ॥ एवं भदन्त ॥ तेन हि मौद्गल्यायन शृणु साधु च सुष्ठु च मनसि कुरु[4]
10 भाषिष्ये ।

भूतपूर्वं मौद्गल्यायनातीतेऽध्वनि अस्मिन्नेव भद्रकल्पे विंशतिसहस्रायुषि प्रजायां काश्यपो नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां[5] च मनुष्याणां <च> बुद्धो भगवान् । स वाराणसीं नगरीमुपनिश्रित्य विहरति ऋषिपतने[6] मृगदावे ॥ तत्रान्यतमो भिक्षुरध्वानं प्रतिपन्नः । स
15 तृषार्तः कूपमुपसृप्तः । तत्रान्यतरा दारिका पानीयघटं पूरयित्वा स्थिताभूत् ॥ सा भिक्षुणोक्ता तृषार्तो ऽहं भगिनि पानीयमनुप्रयच्छेति ॥ तस्या मात्सर्यमुत्पन्नम् । सागृहीतपरिष्कारा भिक्षुमुवाच । भिक्षो यदि म्रियसे[7] न ते ददामि पानीयं घटो मे ऊनो भविष्य-

1) MS बुद्धो.
2) MS °स्थूनस° (D स्थूनास°).
3) MS ध्याय°.
4) B कुरुत, D corr.
5) B देवनां, CP corr., D has देवमनुष्याणां.
6) B, it seems, ऋषिवदने, cp. Divy. 393, 21. 464, 16; C °चेदने; P °पदने; D corr.
7) MS यदि मृयसे. In R this saying of the young woman is thus paraphrased: अरे भिक्षो ऽत्र मा याहि म्रियसे यदि वा खलु । न ते ददामि पानीयं घटो न्यूनं भवेन्मम (f. 40b 6).

तीति ॥ ततो ऽसौ भिक्षुस्तृषार्तो निराशः प्रक्रान्तः ॥ ततो ऽसौ दारिका तेन मात्सर्येणा-सेवितेन भावितेन बहुलीकृतेन[1] कालं कृत्वा प्रेतेषूपपन्ना[2] एवंविधां दुःखां तीव्रां खरां कटुकाममनापां वेदनां वेदयते ॥ तस्मात्तर्हि मौद्गल्यायन एवं शिक्षितव्यं यन्मात्सर्यप्र-[3]हाणाय व्यायंस्यामह इत्येवं ते मौद्गल्यायन शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमना आयुष्मान्मौद्गल्यायनो ऽन्ये च देवासुरगरुडकिन्नरमहो-रगादयो भगवतो भाषितमभ्यनन्दन्[4] ॥ 5

---

1) MS बहुलक्°. Cp. *supra* p. 248, 9.

2) B प्रेतेषुप°, D corr.

3) B यत्मात्सर्यप्र°, DP यस्मात्सर्यप्र°.

4) B °नन्दम्, D corr.

## [1]वर्चघट इति ४४ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिस्सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लान-
5 प्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घो राजगृहमुपनिश्रित्य विहरति वेणुवने कलन्दकनिवापे ॥ अथायुष्मान्महामौद्गल्यायनः पूर्वाह्ने निवास्य पात्रचीवरमादाय राजगृहं पिण्डाय प्राविक्षत् । राजगृहं पिण्डाय चरित्वा कृतभक्तकृत्यः [2]पश्चा‹द्भक्त›पिण्डपातप्रतिक्रान्तः पात्रचीवरं [3]प्रतिसमर्प्य येन [4]गृध्रकूटः पर्वतस्तेनोपसंक्रान्तः । उपसंक्रम्य गृध्रकूटं पर्वतमवगाह्यान्यतर[5]दृक्षमूलं निश्रित्य निषण्णो दिवाविहाराय ॥ अथायुष्मान्महामौ-
10 द्गल्यायनः प्रेतीमद्राक्षीद्दग्धस्थूणासदृशीं नग्नां स्वकेशसंछन्नां सूचीछिद्रोपममुखीं पर्वतोपमकुक्षिमादीप्तां प्रदीप्तां प्रज्वलितामेकज्वालीभूतां [6]ध्मायन्तीमार्तस्वरं क्रन्दन्तीं तृषार्ता

---

1) MS पर्ववतघट. The right reading is found in the uddāna (see *supra* p. 241, n. 1), and the Tibetan translation (cp. Feer p. 171, n.); it appears of course also from the very contents of the tale.

2) Ex conject., vide Index to Divy. *s. v.*; MS प(or पे)श्चपिण्डपातप्र°. For the rest cp. *infra* the beginning of avad. nr. **47**.

3) I have left unchanged the form *pratisamarpya,* though it is obviously an alteration of *pratiçamayya*, the sanskritized form of pāli *paṭisamayya*, which, Mhv. I, 56, 2 underlies the would-be sanskr. *pratiçāmayitvā* and Divy. 516, 5 appears as *pratiçāmya* and p. 156, 1 as *pratiçrāmya.* Cp. Divy. Index *s. v.* and Windisch *Māra und Buddha* p. 40 and 44. For it may be that *pratisamarpya* in our text is not a mere clerical error, but a wrong sanskritization by the author of the Avadānaçataka.

4) B गृध्रकुटः, DP corr.

5) It seems that B had at the outset °रंदृक्षमूलं, the *manus secunda* cancelled दृ and put वृ above it, perhaps the anusv. above र is also *a secunda manu.*

6) MS ध्याय°, as usual.

दुःखां तीव्रां खरां कटुकाममनापां वेदनां वेदयमानां दुर्गन्धां परमदुर्गन्धां वर्चःसदृशीं[1] वर्चोद्दारां[2] तदपि कृच्छ्रेणासादयन्तीम्। दृष्ट्वा च पुनरायुष्मान्महामौद्गल्यायनः संविग्नः प्रेतीं[3] च पप्रच्छ।

किं त्वया प्रकृतं पापं यस्य ते ईदृशं फलमिति॥

प्रेती आह। [4]प्रागपकारिण्यहं भदन्त महामौद्गल्यायन एतमर्थं बुद्धं भगवन्तं पृच्छ स ते ऽस्माकीनां कर्मप्लोतिं व्याकरिष्यतीति यां श्रुत्वान्ये ऽपि सत्त्वाः पापकर्मणः प्रतिवि-रंस्यन्तीति[5]। अथायुष्मान्महामौद्गल्यायनो येन भगवांस्तेनोपसंक्रान्तः॥ 5

तेन खलु समयेन [42 b] भगवान्प्रतिसंलयनाद्व्युत्थाय चतसृणां पर्षदां मधुरमधुरं धर्मं देशयति नीलं मध्विवानेडकमनेकशता च पर्षद्भगवतः सकाशान्मधुरं[5] धर्मं शृणोत्यनि-ञ्ज्यमानैरिन्द्रियैः[6]। ततो बुद्धा भगवन्तः पूर्वालापिनः प्रियालापिन एहीतिस्वागतवादिनः स्मितपूर्वङ्गमाश्च। ‹तत्र› भगवानायुष्मन्तं महामौद्गल्यायनमिदमवोचत्। एहि मौद्गल्या-यन स्वागतं ते कुतस्त्वमेतर्ह्यागच्छसीति॥ महामौद्गल्यायन आह। आगच्छाम्यहं भदन्त प्रेतचारिकायाः तत्राहं प्रेतीमद्राक्षं दग्धस्थूणासदृशीं[7] नग्नां स्वकेशसंछन्नां सूचीछिद्रोप-ममुखीं पर्वतोपमकुक्षिमादीप्तां प्रदीप्तां प्रज्वलितामेकज्वालीभूतामार्तस्वरं क्रन्दन्तीं दुःखां तीव्रां खरां कटुकाममनापां वेदनां वेदयमानां। दर्शनमात्रेण चास्या नद्युदपानानि शुष्यन्ति। 10 15

---

1) MS °सदृशां.

2) Sic B with irregular sandhi; DP वर्चाहा°, C चर्चाहा°. Further on (p. 254, 2. 255, 11) the word is written वर्चाहार in B, too.

3) च is superfluous, it seems. Yet, it may be that the preceding संविग्नः does duty of a finite verb.

4) Is this a variant or a corruption of पापकारिण्यहं, that would be the standing formula (vid. *supra* p. 244, 1. 247, 13)?

5) Anusvāra wanting in MS.

6) Sic MS, also in several subsequent occurrences of this commonplace.

7) MS दग्धस्थूणासं°.

यदा देवो वर्षति तदा तस्या ‹उपरि› सविस्फुलिङ्गमङ्गारवर्षं पतति । दुर्गन्धां परमदुर्गन्धां वर्चःसदृशां च वर्चाहारां तदपि कृच्छ्रेणासादयन्तीम् । आह[1] च ।

* * * * * * * * * * * *

आर्तस्वरा क्रन्दमाना दुःखां विन्दति वेदनाम् ॥ १

5 येन[2] हि वर्चधानानि तेन धावति दुःखिता ।

वर्चः पास्यामि[3] भोक्ष्ये च तच्च दुःखेन लभ्यते ॥ २

किं तया प्रकृतं पापं मर्त्यलोके सुदारुणम् ।

येन एवंविधं[4] दुःखमनुभवति भयानकम् ॥ ३

भगवानाह । पापकारिणी मौद्गल्यायन[5] सा प्रेती । इच्छसि तस्याः कर्मप्लोतिं श्रोतुम् ॥

10 एवं भदन्त ॥ तेन हि मौद्गल्यायन शृणु साधु च सुष्ठु च मनसि कुरु[6] भाषिष्ये ॥

भूतपूर्वं मौद्गल्यायन वाराणस्यां नगर्यामन्यतमः[7] प्रत्येकबुद्धो हीनदीनानुकम्पी प्रान्तशयनासनसेवी च । स व्याधितो वाराणसीं पिण्डाय प्रविशति । यावदस्य वैद्येन

---

1) MS आह चाशु आर्त्तस्वरां. I suppose a half-çloka, at least, has perished, on account of (1) the abruptness of the metrical portion introduced by *āha ca*, (2) one half-çloka being wanted to complete the triad of çlokas to be expected here. Moreover MSS have also a superfluous syllable between आह चा (which I hold for a corrupted आह च ।) and आर्त्त°. Some line like *nagnā svakeçasaṃchannā* (cp. *supra* p. 247, 7) seems to have dropped out. Instead of the accus. आर्तस्वरां and क्रन्दमानां of MS, I have put nominatives.

2) Ex conject.; MS येनैह.

3) MS पश्यामि भोक्ते च. I have restored पास्यामि in accordance with Feer (p. 173, n. 3) who rests his opinion on the Tibetan translation, and, consequently, I have emended likewise भोक्ष्ये. The absence of इति in a metrical text cannot be considered a serious obstacle.

4) MS येनैवं°. Cf. *supra* p. 247, n. 7. Pronounce: *anubhoti.*

5) B सौ°, D corr.

6) B कुरुत, D corr.

7) B नगस्यां, D corr.

[1]सांप्रेयं भोजनमुपदिष्टम् । स येनान्यतमस्य श्रेष्ठिनो निवेशनं तेनोपसंक्रान्तः । तेन च श्रेष्ठिना दृष्टः पृष्टश्च केन ते आर्य प्रयोजनमिति । तेनोक्तं [2]कुलसांप्रेयेण भोजनेनेति ॥ ततः श्रेष्ठिना वध्वा आज्ञा दत्ता आर्याय सांप्रेयं भोजनं दातव्यमिति ॥ अथ तस्या वध्वा मात्सर्यमुत्पन्नं यद्यहमस्मै अद्य भोजनं प्रदास्यामि श्वो भूय आगमिष्यतीति । तया एकान्तमपसृत्य वर्चसः पात्रं पूरयित्वा उपरि भक्तेन प्रच्छाद्य तस्मै प्रत्येकबुद्धाय दत्तम् ॥ असमन्वाहृत्य श्रावकप्रत्येकबुद्धानां ज्ञानदर्शनं न प्रवर्तते । तेन प्रतिगृहीतं प्रतिगृह्य संलक्षितं यथैतद्दुर्गन्धं नूनमनया ऽमेध्यस्य पूरितमिति । ततो ऽसौ महात्मा तदेकान्ते छोरयित्वा प्रक्रान्तः ॥ 5

भगवानाह । किं मन्यसे मौद्गल्यायन यो ऽसौ तेन कालेन तेन समयेन श्रेष्ठिवधुका इयं सा प्रेती । यद्भूपादाया ऽनया तादृक्पापं कृतं ततः प्रभृति नित्यं नरकतिर्यक्प्रेतेषूपपद्यते नित्यं च वर्चाहारा ॥ तस्मात्तर्हि ते मौद्गल्यायन मात्सर्यप्रहाणाय व्यायन्तव्यं यथा एते दोषा न स्युर्ये तस्याः प्रेत्या एवं मौद्गल्यायन शिक्षितव्यम् ॥ 10

इदमवोचद्भगवानात्तमना आयुष्मान्मौद्गल्यायनो ऽन्ये च देवासुरगरुडकिन्नरमहोरगादयो भगवतो भाषितमभ्यनन्दन् ॥

---

1) This is the constant orthography of this new word. Cp. Feer p. 173, n. 4. In R it is mostly written *sāmpeya*, but also *sāmpreya*.

2) The word *kulasāmpreya* is as little known as *sāmpreya*. Perhaps it does not exist at all, and some vocative is hidden under कुल. — As to the ill-treatment of the pratyekabuddha cp. **Kathāsaritsāgara** 72, 84 foll.

## मौद्गल्यायन इति ४५ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्ला-
5 नप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घो राजगृहमुपनिश्रित्य विहरति स्म वेणुवने कलन्दकनिवापे । तेन खलु पुनः समयेनान्तरा च राजगृहमन्तरा च वेणुवनमत्रान्तरे[1] पञ्च प्रेतशतानि दग्धस्थूणाकृतीनि नग्नानि स्वकेशसंछन्नानि पर्वतोपमकुक्षीणि[2] सूचीछि[43a]-द्रोपममुखानि आदीप्तानि प्रदीप्तानि संप्रज्वलितान्येकज्वालीभूतान्यार्तस्वरं प्रलपमानानि दुःखां तीव्रां खरां कटुकाममनापां वेदनां वेदयमानानि वायुमण्डलवदा[3]काशे परि-
10 भ्रमन्ति न क्वचित्प्रतिष्ठां लभन्ते ॥ अथायुष्मान्मौद्गल्यायनः पूर्वाह्णे निवास्य पात्रचीव-

---

1) This prolix idiom is not rare in Buddhistic Sanskrit; *atrāntare* is also to be read Divy. 94, 2 and 151, 5 and 8 (instead of *atrāntarāt*) and *ibid.* 514, 11 (instead of *atrāntarā*).

2) MS °क्षीनि.

3) The Chinese translator seems to have had in his original this reading of B, which I have put for this reason into the text. He renders *vāyumaṇḍalavad ākāçe paribhramanti* by 四向馳走 'moving rapidly to the four points of the compass'. In this acceptation *vāyumaṇḍala* is taken as the circuit of the compass. But there must have existed also a various reading वायसमण्डलवदाकाशे etc., which in my opinion represents the original redaction better. It underlies the Tibetan version of this passage, for which I am indebted to the kindness of Mr. F. W. Thomas, ཁྭ་ཚོགས་ འཕྱིད་པ་བཞིན་དུ་ 'like the flight of a flock of crows'. Feer p. 175 n. 2, mentioning this Tibetan rendering with ཁྲ 'falcon' instead of ཁྭ 'crow', must have misread his blockprint.

रमादाय राजगृहं पिण्डाय प्राविक्षत्। तेन ते प्रेता दृष्टाः तैरपि[1] प्रेतैरायुष्मान्महामौद्गल्यायनः॥ ततस्ते एकसमूहेनायुष्मन्तं महामौद्गल्यायनमुपसंक्रान्ताः। उपसंक्रम्य करुणादीनविलम्बितैरन्तैरेकरवेणोचुः। वयं स्मो भदन्त महामौद्गल्यायन राजगृहे पञ्च श्रेष्ठिशतान्यभूवन्[2]। ते वयं मत्सरिणः कुटुकुञ्चका आगृहीतपरिष्काराः[3]। स्वयं तावदस्माभिर्दानप्रदानानि न दत्तानि परेषामपि दानप्रदानेषु दीयमानेषु विघ्नाः[4] कृता दक्षिणीयाश्च बहवः प्रेतवादेन परिभाषिताः प्रेतोपपन्ना इव यूयं नित्यं परगृहेभ्यो भैक्षमटथ। एते वयं कालं कृत्वा एवंविधेषु प्रेतेषूपपन्ना इति भदन्त महामौद्गल्यायन ये ऽस्माकं ज्ञातयो राजगृहे प्रतिवसन्ति तेषामस्माकीनां कर्मप्लोतिं निवेद्य छन्दकभिक्षणं कृत्वा बुद्धप्रमुखं भिक्षुसङ्घं भोजयित्वास्माकं नाम्ना दक्षिणादेशनां कारयित्वा चास्माकं प्रेतयोनेर्मोक्षः[5] स्यादिति॥ अधिवासयत्यायुष्मान्महामौद्गल्यायनः प्रेतानां तूष्णीभावेन॥ तत आयुष्मता महामौद्गल्यायनेन तेषां ज्ञातिगृहेभ्यश्छन्दकभिक्षणं कृत्वा बुद्धप्रमुखो भिक्षुसङ्घः श्वो भक्तेनोपनिमन्त्रितः प्रेतानां च निवेदितं[6] श्वो भगवान्सभिक्षुसङ्घो भक्तेनोपनिमन्त्रितः[7] तत्र युष्माभिरागन्तव्यमिति। ज्ञातीनामप्यारोचितं भवद्भिरागन्तव्यं तत्र ज्ञातिभोजने तान्प्रेतान्द्रक्ष्यामः[8]॥ अथायुष्मान्महामौद्गल्यायनः स्वयमेवोद्युक्तो भोजनं प्रतिजागरितुम्॥

---

1) Ex conject.; MS तैरति. Feer's translation (p. 175, 14) confirms the correction.

2) Note the solecism *abhūvan*, which seems strange with regard to the relatively pure Sanskrit of our text and disturbs the construction of the phrase because *smaḥ* precedes. In D *abhūvan* has been left out.

3) Visarga wanting in MS.

4) The akṣara घ्नाः is wanting in P, but found in the other MSS. This to explain Feer's n. 3 on p. 175.

5) MS योनेर्मोक्षः (in C and P still more depraved).

6) MS निवेदिते.

7) Ex conject.; MS तत्रायुष्मद्भिरा°.

8) MS द्रक्ष्यामो (D दृष्ट्वा, a would-be correction, it seems).

अथ प्रभातायां रजन्यामाहारे सज्जीकृते गण्डीदेशकाले संप्राप्ते तान्प्रेतान्न पश्यति । तत आयुष्मान्महामौद्गल्यायनो दिव्येन चक्षुषा तान्प्रेतान्समन्वाहर्तुं प्रवृत्तः ।[1] सर्वस्मिन्नेव मगधमण्डले नाद्राक्षीत् । यावत्क्रमेण चातुर्द्वीपिकं व्यवलोकयितुं प्रवृत्तः । तत्रापि नाद्राक्षीत् । ततो यावदस्य ज्ञानदर्शनं प्रवर्तते ततो व्यवलोकयितुं प्रवृत्तः । 5 तत्रापि नाद्राक्षीत् ॥ तत आयुष्मान्महामौद्गल्यायनः[2] संविग्नो भगवते निवेदयामास भगवन्न[3] मे दानपतयो दृश्यन्त इति ॥ भगवानाह । अयं मौद्गल्यायन मा खेदमापद्यस्व । सर्वश्रावकप्रत्येकबुद्धविषयमतिक्रम्यापरिमाणा लोकधातवः सन्ति । ‹तत्र› ते कर्मवायुना क्षिप्ताः[4] । अपि मौद्गल्यायनाद्य तथागतबलं पश्य सर्वज्ञज्ञानदर्शनं व्यक्तीकरिष्यामि तथागतविकुर्वितं दर्शयिष्यामि । आकोट्यतां गण्डीति ॥ ततो गण्ड्यामाकोटितायां सर्वो भि- 10 क्षुसङ्घः संनिपतितः प्रेतज्ञातयो ऽन्ये च कौतूहल्याभ्यागताः सत्त्वाः[5] प्रेतदर्शनोत्सुकाः संनिपतिताः ॥ ततो भगवता ऋद्ध्या तथा दर्शितं यथा प्रेता बुद्धं भगवन्तं सश्रावकसङ्घं भुञ्जानं पश्यन्ति स्मृतिं च प्रतिलभन्ते ज्ञातयो ऽस्मदर्थे[6] बुद्धप्रमुखं भिक्षुसङ्घं भोजयन्तीति ॥ ततो भगवान्पश्चाङ्गोपे‹ते›न स्वरेण दक्षिणामादिशति ।

---

1) BCD सर्वमस्मिन्नेव, P सर्वमस्मि°.

2) MS °ल्यायना संवि° (C °यनसंवि°).

3) Ex conject.; MS भगवन्तमेदानपतयो न दृश्यन्ते. I think the negation has been inserted after भगवन्न मे had become altered.

4) Ex conject.; MS सन्तितेकर्मवायुनाक्षिप्ताः. The translation of this whole passage by Feer (p. 176, 24–27) is wrong. On my request, after consulting again the Tibetan text, he wrote to me that the Tibetan equivalent of this passage is དེ་དག་ཏུ་ལས་ཀྱི་རླུང་གིས་འཕངས་མོད་ཀྱི་. Here དེ་དག་ཏུ is the translation of a Sanskrit तत्र = तेषु. For *karmavāyu* cp. a similar passage Çikṣāsamuccaya, p. 70, 15.

5) Visarga wanting in MS.

6) Ex conject., cp. the Tibetan translation apud Feer p. 177 n. In B there stood at first ज्ञातयास्तदर्थे, but the *ā* of the akṣ. या has been cancelled and above स्त there has been put a sign referring to the margin at the bottom, where we find युष्मत्. Of course, B's copies have put युष्मत् into the text (D ज्ञातयोस्तदर्थे-

इतो दानाद्धि यत्पुण्यं तत्प्रेता‹न›नुगच्छतु ।

उत्तिष्ठन्तां क्षिप्रमेते प्रेतलोकात्सुदारुणादिति ॥

यावद्भगवता तदधिष्ठाना तथाविधा धर्मदेशना कृता यां श्रुत्वानेकैः प्राणिशतसहस्रैर्मा-त्सर्यमलं प्रहाय सत्यदर्शनं कृतं ते च प्रेता भगवति चित्तमभिप्रसाद्य कालगताः प्रणीतेषु त्रयस्त्रिंशेषूपपन्नाः ॥ 5

धर्मता खलु देवपुत्रस्य वा देवकन्यकायां[1] वाचिरोपपन्नस्य त्रीणि[2] चित्तान्युत्पद्यन्ते कुतश्च्युतः[3] कुत्रोपपन्नः केन कर्मणेति[4] । पश्यन्ति प्रेतेभ्यश्च्युताः प्रणीते[43 b]षु देवेषु त्रय-स्त्रिंशेषूपपन्ना भगवतो ऽन्तिके चित्तमभिप्रसाद्येति । अथ प्रेतपूर्विणां देवपुत्राणामेतद-भवत् । नास्माकं प्रतिरूपं स्याद्यद्वयं[5] पर्युषितपरिवासा[6] भगवन्तं दर्शनायोपसंक्रामेम[7] यन्न्वयमपर्युषितपरिवासा एव भगवन्तं दर्शनायोपसंक्रामेमे‹ति›[8] । अथ› प्रेतपूर्विणो देवपुत्रा- 10 श्चलविमलकुण्डलधरा हारार्धहारविराजितगात्रा मणिरत्नविचित्रमौलयः[9] कुङ्कुमतमा-लपत्रस्पृक्कादिसंसृष्टगात्रास्तस्यामेव रात्रौ दिव्यानामुत्पलपद्मपुण्डरीकमन्दारकादीनां[10] पुष्पाणामुत्सङ्गं पूरयित्वा समन्ततो वेणुवनं कलन्दकनिवापमुदारेणावभासेनावभास्य

पुष्मद्बुद्ध°, C and P ज्ञातयोस्तपुष्मद्र्घे). It is plain that the would-be correction of B is erroneous, and that its first reading °यास्त° is simply to be changed into °योस्म°. — In the following word बुद्धप्रमुखं anusvāra wanting in MS.

1) B °न्यकया, D corr.

2) MS स्त्रोणि.

3) MS कुतोप°.

4) MS कर्मणेनेति.

5) Ex conject.; MS स्याद्यावद्वयं.

6) MS °वासो.

7) Ex conject., cp. *infra* p. 282. MS °संक्रामितुं यंनु.

8) Ex conject., cp. *infra* p. 282. MS °क्रमामःप्रेतपू°.

9) MS मणिलग्नविचि°, I have corrected this according to the other instances of this commonplace.

10) B मन्दावकादी°, CP corr. (D मन्दारवानां).

भगवन्तं पुष्पैराकीर्य भगवतः पुरस्तान्निषण्णा धर्मश्रवणाय ॥ अथ भगवान्प्रेतपूर्विणां देवपुत्राणामाशयानुशयं [(1)] धातुं प्रकृतिं च ज्ञात्वा तादृशीं धर्मदेशनां कृतवान्यां श्रुत्वा प्रेतपूर्वकैर्देवपुत्रैर्महान्विशेषो ऽधिगतः । ते लब्धलाभा इव वणिजो भगवन्तं त्रिः प्रदक्षिणीकृत्य तत्रैवान्तर्हिताः ॥

5 तत्र भगवानायुष्मन्तं महामौद्गल्यायनमामन्त्रयते । साधु साधु महामौद्गल्यायन सफलं ते वैयावृत्यं [(2)] संवृत्तं यत्ते * * * * [(3)] प्रेता देवेषु प्रतिष्ठापिताः । ते ऽस्यां रात्रौ मत्सकाशमुपक्रान्तास्तेषां मया धर्मो देशितः ते लब्धोदया लब्धलाभाः प्रक्रान्ता इति ॥

तत आयुष्मता महामौद्गल्यायनेन तेषां ज्ञातीनामारोचितम् । ते श्रुत्वा परं विस्मयमुपगता भगवतो ऽन्तिके चित्तं प्रसादयामासुर्भूयश्च सत्कारं प्रचक्रुरिति ॥ [(4)] तस्मात्तर्हि ते 10 मौद्गल्यायन मात्सर्यप्रहाणाय [(5)] व्यायन्तव्यम् । एते दोषा न भवन्ति ये तेषां प्रेतानामिति ॥

इदमवोचद्भगवानात्तमना आयुष्मान्मौद्गल्यायनो ऽन्ये च देवासुरगरुडकिन्नरमहोरगादयो भगवतो भाषितमभ्यनन्दन् ॥

---

1) B नुशयत्(seems to be an erased त)धातुं, C °नुशयतेधातुं, P °नुशयत्धातुं, D °नुसंशयद्धातुं!

2) Ex conject.; B वैयावृत्तं (with interlinear न), I think the interlinear न has been put there by some corrector. The copyist of C wholly neglected it, but P has वैनयावृत्तं, D वैनेयावृत्तं. For the rest cp. Index s. v. *vaiyāvṛtya*.

3) B यत्तेवमादः प्रेता, but the akṣaras वमादः are cancelled with a reference to the upper margin, where we find the correction प्रसाद्. C copied the prima manus, P has यत्तेवप्रसादः, D यत्तवप्रसादः. I consider प्रसाद् a bad correction and would rather suppose some word expressive of their number to be hidden under the corrupt वमादः. The Tibetan version has here མང་པོ་དག་ = *bahavaḥ*, as Mr. Thomas has told me.

4) This sentence is wholly out of place here and looks like a clumsy repetition of the ordinary conclusion of the avadānas in this varga applied improperly.

5) MS व्यापतव्यं.

# उत्तर इति ४६ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः श्रेष्ठिभिः पौरैस्सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घो राजगृहमुपनिश्रित्य[1] विहरति वेणुवने 5 कलन्दकनिवापे । राजगृहे ऽन्यतरः श्रेष्ठी आढ्यो महाधनो महाभोगो[2] विस्तीर्णविशालपरिग्रहो वैश्रवणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी । तेन [3]सदृशात्कुलात्कलत्रमानीतम् । स तया सार्धं क्रीडति रमते परिचारयति । तस्य क्रीडतो रममाणस्य परिचारयतः कालान्तरेण पत्नी आपन्नसत्त्वा संवृत्ता । साष्टानां वा नवानां ‹वा› मासानामत्ययात्प्रसूता । दारको जातः । तस्य जातौ जातिमहं कृत्वा नामधेयं व्यवस्थाप्यते किं भवतु 10 दारकस्य नामेति । ज्ञातय ऊचुः । यस्मादुत्तरे नक्षत्रे जातस्तस्माद्भवतूत्तर इति नाम ॥ उत्तरो दारक उन्नीतो वर्धितो महान्संवृत्तः । पिता चास्य कालगत उत्तरश्च गृहे स्वामी संवृत्तः ॥ तेनापण स्थापितः क्रीणाति विक्रीणीते क्रयविक्रयेण जीविकां कल्पयति ॥ स दिवसानुदिवसं भगवत्सकाशमुपसंक्रामति । तस्य [4]भगव‹त्सं›दर्शनात्सद्धर्मश्रवणाच्च भगवच्छासने प्रसादो जातः । तस्य प्रव्रज्याचित्तमुत्पन्नम् ॥ स मातरं विज्ञापयामास अम्बा- 15 नुजानीहि मां भगवच्छासनेषु प्रव्रजिष्यामीति । ततो माता कथयति । पुत्र त्वमेकपुत्रको

---

1) MS °निसृत्य.

2) B °भोगविस्ती°, D corr.

3) B सदृशात्कुत्कलंत्रकलत्रमा°, P corr.

4) Ex conject., *saṃdarçana*, not *darçana* being here the proper word; MS भगवन्दर्शना°.

यावदहं जीवामि तावन्न प्रव्रजितव्यं मृतायां मयि यथाकरणीयं करिष्यसीति ॥ स चो-
त्तरो यत्किंचिदुपार्जयति तत्सर्वं मात्रे ऽनुप्रयच्छत्यनेनाम्ब श्रमणब्राह्मणकृपणवनीप-
कान्प्रतिपादयस्वेति । सा चास्य माता लुब्धा कुटुकुञ्चिका मत्सरिणी आगृहीतपरि-
ष्कारा तान्कार्षापणान्गोपायित्वा ये श्रमण[44 a]ब्राह्मणाः पिण्डार्थिनस्तद्गृहं प्रविशन्ति
5 तान्परिभाषते प्रेतोपपन्ना इव यूयं नित्यं परगृहेभ्यो भैक्षमटथेति । सा च पुत्रं विसंवा-
दयत्यहमद्य इयतां भिक्षूणां भोजनं प्रयच्छामीति ॥

यावदसौ कालं कृत्वा प्रेतेषूपपन्ना उत्तरश्च मातृवियोगाद्दानानि दत्त्वा पुण्यानि
कृत्वा भगवच्छासने प्रव्रजितः ॥ तेन युज्यमानेन घटमानेन व्यायच्छमानेनेदमेव पञ्चगण्डकं
संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः शतनपतनविकिरणविध्वंसनधर्मतया
10 पराहत्य सर्वक्लेशप्रहाणादर्हत्वं साक्षात्कृतम् । अर्हन्संवृत्तस्त्रैधातुकवीतरागः समलो-
ष्टकाञ्चन आकाशपाणितलसमचित्तो वासीचन्दनकल्पो विद्याविदारिताण्डकोशो विद्या-
भिज्ञाप्रतिसंवित्प्राप्तो भवलाभलोभसत्कारपराङ्मुखः सेन्द्रोपेन्द्राणां देवानां पूज्यो मान्यो
ऽभिवाद्यश्च संवृत्तः ॥

स गङ्गातीरे पर्णकुटिं(1) कृत्वा ध्यायति । सा चास्य माता प्रेतलोकोपपन्ना नग्ना
15 दग्धस्थूणासदृशी स्वकेशरोमसंछन्ना सूचीछिद्रोपममुखी पर्वतोपमकुक्षिरादीप्ता संप्रज्व-
लिता एकज्वालीभूतार्तस्वरं(2) क्रन्दन्ती आयुष्मन्तमुत्तरमुपसंक्रान्ता । यावदायुष्मता उत्तरेण
सा प्रेती दृष्टा पृष्टा(3) च का त्वमेवंविधेति ॥ प्रेती आह ।

अहं ते जननी स्निग्धा यया जातो ऽसि पुत्रक ।
अन्नपानवियुक्तेषु प्रेतेषु समुपागता ॥ १

---

1) So MS.

2) MS °तार्त्तास्वरं.

3) Ex conject., cp. *supra* p. 36 n. 2; MS दृष्टा दृष्ट्वा च.

पञ्चविंशति[1] वर्षाणि यतः[2] कालगता ह्यहम् ।
नाभिजानामि पानीयं[3] कुतो भक्तस्य दर्शनम् ॥　२

सफलान्वृक्षान्गच्छामि[4] निष्फला भवन्ति ते पूर्णानि सरांसि गच्छामि तानि शुष्काणि[5] सन्ति ॥ सुखं भदन्तस्य हि वृक्षमूलं *भजते शीतलभाजन[6]* । कृपां जनयित्वा कृपणायै मह्यं ददस्व तोयं तृषार्दितायै[7] ॥ तत उत्तरो मातरमुवाच । अम्ब ननु पुरा त्वं <म>या 5 मनुष्यभूता[8] दानानि दापिता पुण्यानि कारितेति ॥ प्रेती आह । न मया पुत्रक मात्सर्या-

---

1) Cp. *supra* p. 135 n. 5 and 138 n. 2.

2) Ex conject.; MS यातः. Cp. a similar çloka in a quite different version of the tale of Uttara's mother, Petavatthu II, 10, 3.

3) B पाणियं, D corr.

4) I have edited this part of the *pretī's* words as prose, though it is beyond doubt that her whole utterance must be a metrical one. Feer, who in his translation (p. 179) does not indicate that she answered in verse, replied thus to my enquiry on the point: «Tout le discours de la *pretī* est en vers dans le Tibétain: 4 stances de 4 padas de 7 syllabes chacune.» Yet the Sanskrit tradition is here too much altered to make it advisable to restore the metre in the printed text. The çloka 3 may have had this form: *saphalān vṛkṣān gacchāmi niṣphalā <me> bhavanti te | pūrṇasarāṃsi gacchāmi tāni çuṣkāṇi santi* [if not rather *bhānti*] *me.* The fourth stanza may have had triṣṭubh metre.

5) MS शुष्कानि.

6) Here one or more words are lost. In Tibetan the fourth stanza runs thus, according to the late M. Feer:

བཙུན་པའི་ཤིང་དྲུང་བདེ་བ་ལགས། ། 
ཁྱོད་ཀྱི་སྣོད་ནང་ཆུ་ཡང་བསིལ། ། 
བཀྲེན་པ་བདག་ལ་ཐུགས་རྗེ་སྐྱེད། ། 
སྐོམ་གྱིས་གདུངས་ཀྱིས་ཆབ་སྩོལ་ཅིག ། ། 

= «It is a quiet place near the Reverend's tree, there is also (fresh) cold water in thy waterpot. Well, show pity towards wretched me and give me water, for I am tormented by thirst.»

7) In pāda c pronounce *janetvā*, in pāda d one short syllable is missing.

8) Ex conject.; MS नचपत्व [if not rather to read त्वे]यामनुष्यभूतयादानानि. The correction त्वं <म>या मनुष्यभूता is necessitated by an obvious syntactical reason.

भिभूतया दानानि ‹दत्तानि› पुण्यानि वा कृतानि सर्वं तदर्थजातं पापचित्तया अग्निखदायां निखातम्। तदिदानीं पुत्रक ज्ञातिगृहं गत्वा छन्दनभित्तं[1] कृत्वा मम नाम्ना बुद्धप्रमुखं भिक्षुसङ्घं भोजय दक्षिणामादिशय देशनां च कारय। एवं प्रेतयोनेर्मम मोक्षः स्यादिति॥ उत्तर आह। एवमस्त्वम्ब किं तु त्वया बुद्धान्ते स्थातव्यमिति॥ प्रेती आह। पुत्रका
5 ऽपत्रपे[2] नग्ना ह्रियान्वितेति॥ उत्तर आह। अम्ब यदा पापं करोषि तदा नापत्रपिता इदानीं किमर्थं फलकाले व्यपत्रपस इति[3]॥ प्रेती आह। एवं भवत्वागमिष्यामीति॥

तत उत्तरेण ज्ञातिगृहेभ्यश्छन्दनभिक्षणं[4] कृत्वा बुद्धप्रमुखो भिक्षुसङ्घः श्वो भक्तेनोपनिमन्त्रितो गण्डीकाले च बुद्धप्रमुखो भिक्षुसङ्घः संनिपतितः सा च प्रेती बुद्धान्ते स्थिता। प्रेतीदिदृक्षुकाण्यनेकानि प्राणिशतसहस्राणि संनिपतितानि। ते तां प्रेतीं विकृता-
10 श्रयां दृष्ट्वा परं संवेगमुपगता भगवतो ऽन्तिके चित्तं प्रसादयामासुः॥ तत आयुष्मानुत्तरो बुद्धप्रमुखं भिक्षुसङ्घं प्रणीतेनाहारेण संतर्प्य प्रेत्या नाम्ना दक्षिणादेशनां कारयामास। भगवांश्च पञ्चाङ्गोपेतेन स्वरेण स्वयमेव दक्षिणादेशनामादिशति।

इतो दानाद्धि यत्पुण्यं तत्प्रेतीमनुगच्छतु।
उत्तिष्ठतां क्षिप्रमियं प्रेतलोकात्सुदारुणादिति॥

15 यावद्भगवता तदधिष्ठानं तस्याः प्रेत्या महतश्च जनकायस्य तथाविधा धर्मदेशना कृता यां श्रुत्वानेकप्राणिशतसहस्रैः सत्यदर्शनं कृतं सा च प्रसन्नचित्ता कालगता प्रेतमहर्द्धिके-[5]

---

Changing न च परं in ननु पुरा is not so certain, but as this emendation substitutes the proper sense in proper words for the nonsense of the tradition, I have put it into the text.

1) Or should we read °भित्त‹णां›? This gathering of alms for some special reason at the houses and from many people is always styled *chandanabhikṣaṇa*.

2) Ex conject.; MS ऽपत्रप.

3) The portion from स्थातव्यमिति up to व्यपत्रपस इति is wanting in Feer's translation.

4) MS भिक्षुणां.

5) B प्रेतमह°, CDP corr.

षूपपन्ना ॥ ग्रायुष्मतोत्तरेण समन्वाहृता[1] प्रेतमहर्द्धिकेषूपपन्ना[2]। तत ग्रायुष्मता उत्तरेणोक्तम्। ग्रम्बास्ति ते शक्तिः क्रियतां दानोत्सर्ग इति ॥ प्रेतमहर्द्धिकोवाच। पुत्र न शद्यामि[3] नास्ति मे दाने ऽभिलाष इति ॥ तत ग्रायु[44b]ष्मानुत्तरः प्रेतमहर्द्धिकामुवाच।

ग्रद्यापि ते तिष्ठति तच्छरीरं विवृद्धनिर्मांसत्वगस्थिचर्म[4]
लोभान्धकारावृतलोचनाया[5] निवर्तितं यत्त्वया प्रेतलोक इति ॥ 5

यावदायुष्मता उत्तरेण सुबद्ध परिभाष्यैका यमली[6] लब्धा। ततः सा सङ्घाय दत्ता। येन च भिक्षुणा सङ्घमध्यात्सा यमली[6] क्रीता तेन मानवके[7] स्थापिता ॥ ततस्तया प्रेत्या रात्रावुपागत्यापहृता ॥ ततस्तेन भिक्षुणा ऽयुष्मत उत्तराय निवे-

---

1) Ex conject.; MS समन्वाहृत्वा. Cp. Feer, p. 180, 25.

2) MS °पन्नाः.

3) B seems to have शद्यामि, its copies शक्यामि.

4) Feer (p. 180 in fine) translating: «ton corps....décharné, n'a que la peau et les os», combines *tvak* and *carma*. Yet both *carma* (the rough skin) and *tvak* (the fine skin) are severally represented in the Tibetan version by ལྤགས་པ་སྐྱི, as Mr. Thomas informs me. — I have retained MS °चर्म.

5) B लोचनाया with cancelled *ā* in the penultima. The correction, though necessary, since the instrumental is here indispensable, is checked by the metre. I think *locanāyā* may be a mechanical sanskritization of *locanāya* that stood in the original Pāli (Prākrit) stanza. In the second and fourth pāda, too, of this upajāti strophe the metre is disturbed in the transmitted Sanskrit text.

6) B यमली, both times नी is written above मली, C has both times यमली, but D यमनी, P has at first यमनी, afterwards यमनली. Perhaps both forms were in use, *yamalī* and *yamanī*. I have kept यमली, which is found also in Divy. 276, 11.

7) If the reading is good, मानवक must signify something like a cloakroom. The Tibetan translator understood it so: གོས་ཁྲི་གདང་ལ་ = 'into the clothesstand of garments', Feer, p. 181 n. 2 'la mit dans le vestiaire'. Feer himself, accepting *mānavake* = *māṇavake*, translates 'la remit à son novice' (p. 181, l. 3); but how is this novice no otherwise mentioned as the possessor? Sarat Chandra Das, in his Tibetan-English-Dictionary, gives ग्रारम्भणक as the Sanskrit equivalent of གདང. Hence one might be inclined to hold तेनमानवके for a corruption of तेनारम्भणके.

दितम्[1]। उत्तरेण गत्वा प्रेतीं परिभाष्य पुनरप्यानीय दत्ता ॥ एवं यावत्त्रिरपि तस्य भिक्षोः सकाशादपहृता आयुष्मता चोत्तरेणानीय दत्ता। भिक्षुणा च सा पाटयित्वा चातुर्दिशाय भिक्षुसङ्घाय[2] विलेपनिकायां सीविता। ततस्तया न पुनरपहृता ॥

अत एवं मात्सर्यं सत्त्वानां विडम्बनकरं दृष्ट्वा मात्सर्यप्रहाणाय व्यायितव्यम्। तथा 5 एवंविधा दोषा न स्युर्यथा तस्याः प्रेत्या इति ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो ऽन्ये च देवासुरगरुडकिन्नरमहोरगादयो भगवतो भाषितमभ्यनन्दन् ॥

---

1) MS निवेदितउत्त°.

2) The Tibetan translator accepted this dative with the meaning 'in behalf of the congregation of monks' ཕྱོགས་བཞིའི་དགེ་སློང་གི་དགེ་འདུན་གྱི་ཕྱིར་ and rendered *pāṭayitvā* by གཞོགས་ནས་ (private communication of the late M. Feer).

## ज्ञात्यन्धे इति ४७ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्डदस्यारामे ॥ अथायुष्मान्नन्दकः[1] पूर्वाह्णे निवास्य पात्रचीवरमादाय श्रावस्तीं[2] पिण्डाय चरित्वा कृतभक्तकृत्यः पश्चाद्भक्तपिण्डपात[3]प्रतिक्रान्तः पात्रचीवरं प्रतिसमर्प्य प्रेतचारिकां चरति स्म ॥ अद्राक्षीदायुष्मान्नन्दकः प्रेतीं दग्धस्थूणासदृशीं ज्ञात्यन्धां स्वकेशरोमसंछन्नां सूचीछिद्रोपममुखीं पर्वतोपमकुक्षिं दुर्गन्धां श्मशानसदृशीं काकैर्गृध्रैः श्वभिः सृगालैश्चाभिद्रुतां ये ऽस्याः समन्तत [4]उत्पाद्योत्पाद्य मांसं भक्षयन्ति । सा [5]मर्मवेदनाभ्याहता आर्तस्वरं क्रन्दति दुःखां तीव्रां खरां कटुकाममनापां वेदनां वेदयन्ती ॥ आयुष्मान्नन्दकः संविग्नः पृच्छति । किं त्वया भगिनि प्रकृतं पापं येनैवंविधं दुःखमनुभवसीति ॥ प्रेती आह । आदित्ये हि समुद्गते न दीपेन प्रयोजनम् । भगवन्तमेतमर्थं पृच्छ स ते अस्माकीनां कर्मप्लोतिं व्याकरिष्यति यां श्रुत्वान्ये ऽपीह सत्त्वाः पापात्प्रतिविरंस्यन्तीति ॥ अथायुष्मान्नन्दको येन भगवांस्तेनोपसंक्रान्तः ॥

---

1) MS °ष्मानानन्दकः, but in the sequel the sthavira is constantly named Nandaka.

2) Anusvāra wanting in MS. I suppose here is a small gap, to be filled up thus: श्रावस्तीं‹पिण्डाय प्राविक्षत् । श्रावस्तीं›पिण्डाय चरित्वा.

3) MS °पातः प्रति°. Cp. *supra* p. 252, 7 and n. 3, where also vide about *pratisamarpya.*

4) C and P by mistake copied उत्पाद्योत्पाद्य, which Feer (p. 182) renders by 's'élançant contre elle'. B has distinctly उत्पाट्योत्पाट्य 'tearing her flesh'.

5) B मर्मावे°, D corr.

तेन खलु पुनः समयेन भगवान्प्रतिसंलयनाद्व्युत्थाय चतसृणां पर्षदां मधुरमधुरं धर्मं देशयति नीलं मध्विवानेडकमनेकशता च पर्षद्भगवतः सकाशान्मधुरमधुरं धर्मं शृणोत्यनिञ्यमानैरिन्द्रियैः। ततो बुद्धा भगवन्तः पूर्वालापिन एह्येतिस्वागतवादिनः स्मितपूर्वङ्गमाश्च[1]। तत्र भगवानायुष्मन्तं नन्दकमिदमवोचत्। एहि नन्दक स्वागतं ते कुतस्त्वं नन्दक एतर्ह्यागच्छसीति॥ नन्दक आह। आगच्छाम्यहं भदन्त प्रेतचारिकायास्तत्राहं प्रेतीमद्राक्षं दग्धस्थूणासदृशीं स्वकेशरोमसंछन्नां सूचीछिद्रोपममुखीं पर्वतोपमकुक्षिं दुर्गन्धां श्मशानसदृशीं काकैर्गृध्रैः श्वभिः सृगालैश्चाभिद्रुतां ये ऽस्याः समन्तत उत्पाट्योत्पाट्य मांसं भक्षयन्ति। सा मर्मवेदनाभ्याहता आर्तस्वरं[2] क्रन्दति दुःखां तीव्रां खरां कटुकाममनापां वेदनां वेदयते। आह च।

विशुष्ककण्ठोष्ठपुटा सुदुःखिता प्रवृद्धशैलोपमचञ्चिताश्रया[3]।
स्वकेशसंछन्नमुखी दिगम्बरा सुसूक्ष्मसूचीसदृशानना कृशा॥
नग्ना स्वकेशसंछन्ना अस्थियन्त्रवदुच्छ्रिता।
कपालपाणिनी घोरा क्रन्दन्ती परिधावते॥
बुभुक्षया पिपासया क्लान्ता व्यसनपीडिता।
आर्तस्वरं क्रन्दमाना दुःखां [45 a] विन्दति वेदनाम्॥
किं तया प्रकृतं पापं मर्त्यलोके सुदारुणम्[4]।
येन[5] एवंविधं दुःखमनुभवति भयानकमिति॥

भगवानाह। पापकारिणी नन्दक सा प्रेती इच्छसि तस्याः कर्मप्लोतिं श्रोतुम्॥ एवं भदन्त॥ तेन हि नन्दक शृणु साधु च सुष्ठु च मनसि कुरु भाषिष्ये।

---

1) B पूर्वङ्गमा°, D corr.
2) B आत्त°, D corr.
3) MS °श्रयाः.
4) B सुदारुणां, D corr.
5) MS येनैवंवि°, cp. *supra* p. 247, n. 7.

भूतपूर्वं नन्दकास्मिन्नेव भद्रकल्पे विंशतिसहस्रायुषि प्रजायां काश्यपो नाम सम्यक्संबुद्धो <लोक> उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां <च> बुद्धो भगवान्। स वाराणसीं नगरीमुपनिश्रित्य विहरति ऋषिपतने मृगदावे ॥ वाराणस्यामन्यतमा श्रेष्ठिदुहिता। सा धर्माभिलाषिणी। यावदसौ धर्मं श्रुत्वा संसारदोषदर्शिनी[1] निर्वाणे गुणदर्शिनी संवृत्ता। सा मातापितरावनुज्ञाप्य भगवच्छासने प्रव्रजिता ॥ तस्या अर्थं ज्ञातिभिर्भिक्षुणीवर्षकः कारितः। [2]सा तत्र शैक्षाशैक्षीभिर्भिक्षुणीभिः सार्धं प्रतिवसति ॥ यावत्तया प्रमादाच्छिक्षाशैथिल्यं कृतम्। ततो भिक्षुणीभिर्दुःशीलेति निष्कासिता ॥ ततस्तया [3]दानपतिगृहेभ्यः प्रवृत्तकानि छन्दकानि * * * *[4] शैक्षाशैक्षीणां चावर्णो भाषितः भिक्षवश्च ये शीलवन्तस्तान्दृष्ट्वा नयने निमीलितवती ॥

किं मन्यसे नन्दक या सा [5]श्रेष्ठिदुहिता इयं सा प्रेती। यत्तया वर्षके मात्सर्यं कृतं तेन प्रेतेषूपपन्ना। यत्तया नैत्यकसमुच्छेदः कृतस्तेन काकैर्गृध्रैः [6]कुर्कुरैश्चाभिद्रुता। यत्तया शैक्षाशैक्षीणां भिक्षुणीनामवर्णो भाषितः तेन दौर्गन्ध्यमासादितम्। यत्तया शीलवतो भिक्षून्दृष्ट्वा नयने निमीलिते तेन जात्यन्धा संवृत्ता ॥ इति हि नन्दक एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रस्तस्मात्तर्हि ते नन्दक एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीय इत्येवं ते नन्दक शिक्षितव्यम् ॥

---

1) MS °दर्शनी.

2) B सात्रत्रशैक्षाश्रैक्षी°, D corr.

3) Ex conject.; MS दानप्रति°.

4) The predicate has dropped out, most probably it is छिन्नानि, समुच्छिन्नानि, or some synonymous participle, cp. *infra* l. 12. See Feer p. 183 n. 2.

5) B साशेष्टि, D साश्रेष्टि, P साशैष्टि.

6) As the Tibetan translation adds that she was attacked by foxes, too (Feer p. 184 n. 3), it is likely, the Sanskrit text is here mutilated, so that we should correct कुर्कुरैः <सृगालै>श्चा°.

अस्मिन्खलु धर्मपर्याये भाष्यमाणे दशभिः प्राणिशतसहस्रैः सत्यदर्शनं कृतम् ॥ तत्र भगवान्भिक्षूनामन्त्रयते स्म । इमे चान्ये च आदीनवा मात्सर्ये वाग्दुश्चरिते चेति ज्ञात्वा मात्सर्यस्य वाग्दुश्चरितस्य च प्रहाणाय [1] व्यायन्तव्यमित्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो ऽन्ये च देवासुरगरुडकिन्नरमहोरगादयो भग-
5 वतो भाषितमभ्यनन्दन् ॥

---

1) MS व्यायत्त°, as usual.

# श्रेष्ठीति ४८ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुड-किन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयना-सनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथ-पिण्डदस्यारामे । श्रावस्त्यामन्यतमः श्रेष्ठी आढ्यो महाधनो महाभोगो विस्तीर्णविशा-लपरिग्रहो वैश्रवणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी ॥ सो ऽपरेण समयेन जेतवनं निर्गतः । अथासौ ददर्श बुद्धं भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः समलङ्कृतमशीत्या-नुव्यञ्जनैर्विराजितगात्रं व्यामप्रभालङ्कृतं सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं सम-न्ततो भद्रकं दृष्ट्वा च पुनर्भगवतः पादाभिवन्दनं कृत्वा पुरस्तान्निषण्णो धर्मश्रवणाय । तस्मै भगवता संसारवैराग्यिकी धर्मदेशना कृता यां श्रुत्वा संसारदोषदर्शी निर्वाणे गुणदर्शी भूत्वा भगवच्छासने प्रव्रजितः[1] । प्रव्रजितश्च ज्ञातो महापुण्यः[2] संवृत्तो[3] लाभी चीवरपि-ण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणाम् । स गृहीतपरिष्कारो लब्धं लब्धं[4] संचयं करोति न तु सब्रह्मचारिभिः [45 b] सह संविभागं करोति ॥ स तेन मात्सर्येण सेवितेन भावितेन बहुलीकृतेन परिष्काराध्यवसितः कालगतः स्वके लयने प्रेतेषू-पपन्नः ॥

---

1) MS °जिता.

2) B °पुण्या, CDP °पुण्यो.

3) MS संवृत्ता.

4) Ex conject.; MS लम्बंलब्धं.

ततो ऽस्य सब्रह्मचारिभिर्मुण्डिकां गण्डीं[1] पराहत्य शरीराभिनिर्हारः कृतः। ततो ऽस्य शरीरे शरीरपूजां कृत्वा विहारमागताः। ततो लयनद्वारं विमुच्य पात्रचीवरं [2]प्रत्यवेक्षितुमारब्धाः। यावत्पश्यन्ति तं प्रेतं विकृतकरचरणनयनं परमबीभत्साश्रयं पात्रचीवरमवष्टभ्यावस्थितम्। तथाविकृतं दृष्ट्वा भिक्षवः संविग्ना भगवते निवेदितवन्तः॥
5 ततो भगवांस्तस्य कुलपुत्रस्यानुग्रहार्थं शिष्यगणस्योद्वेजनार्थं मात्सर्यस्य[3] चानिष्टविपाकसंदर्शनार्थं भिक्षुगणपरिवृतो[4] भिक्षुसङ्घपुरस्कृतस्तं[5] प्रदेशमनुप्राप्तः। ततो ऽसौ ददर्श बुद्धं भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः समलङ्कृतमशीत्या चानुव्यञ्जनैर्विराजितगात्रं व्यामप्रभालङ्कृतं सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकं सहदर्शनाच्चास्य भगवतो ऽन्तिके प्रसादो जातः। स व्यपत्रपितवान्। ततो भगवान्सजलजलदगम्भी-
10 रदुन्दुभिस्वरैः[6] प्रेतं परिभाषितवान्। भद्रमुख त्वयैवैतदात्मवधाय पात्रचीवरं समुदानीतं येनास्यपायेषूपपन्नः साधु ममान्तिके[7] चित्तं प्रसादयास्माच्च परिष्कारात्चित्तं[8] विरागय मा हैवेतः कालं कृत्वा नरकेषूपपत्स्यसे[9] इति॥ ततः प्रेतः[10] सङ्घे पात्रचीवरं निर्यात्य भगवतः पादयोर्निपत्यात्ययं देशितवान्। ततो भगवता प्रेतस्य नाम्ना दक्षिणा आदिष्टा।

[11]इतो दानाद्धि यत्पुण्यं तत्प्रेतमनुगच्छतु।
15 उत्तिष्ठतु क्षिप्रमयं[12] प्रेतलोकात्सुदारुणादिति॥

---

1) Anusvāra wanting in MS.
2) Ex conject.; MS प्रत्यवेषितुमा°.
3) B मात्सर्पस्य, CDP corr.
4) B परिवृत्तो, P corr.
5) Ex conject.; MS °पुरस्कृतोसंप्रदेश°.
6) MS स्वराः.
7) B °न्तिकं, CDP corr.
8) Anusvāra wanting in MS.
9) Ex conject.; MS °पत्स्यत.
10) Visarga wanting in MS.
11) Ex conject., cp. *supra* p. 259, 1. 264, 13; MS ततो.
12) MS क्षिप्रमियं.

ततः स प्रेतो भगवति चित्तं प्रसाद्य कालगतः प्रेतमहर्द्धिकेषूपपन्नः ॥ ततः प्रेतमहर्द्धिकश्चलविमलकुण्डलधरो हारार्धहारविराजितगात्रो मणिरत्नविचित्रमौलिः कुङ्कुमतमालपत्रस्पृक्कादिसंसृष्टगात्रस्तस्यामेव रात्रौ दिव्यानामुत्पलपद्मकुमुदपुण्डरीकमन्दारकाणां[1]मुत्सङ्गं पूरयित्वा सर्वं[2] जेतवनमुदारेणावभासेनावभास्य भगवन्तं पुष्पैरवकीर्य भगवतः पुरस्तान्निषण्णो धर्मश्रवणाय भगवता चास्य तथाविधा धर्मदेशना कृता यां श्रुत्वा 5 प्रसादजातः प्रक्रान्तः ॥

भिक्षवः पूर्वरात्रापररात्रं[3] जागरिकायोगमनुयुक्ता विहरन्ति । तैर्दृष्टो भगवतो ऽन्तिके उदारो ऽवभासः यं दृष्ट्वा संदिग्धा भगवन्तं पप्रच्छुः[4] । किं भगवन्नस्यां[5] रात्रौ ब्रह्मा सहाम्पतिः शक्रो देवेन्द्रश्चत्वारो लोकपाला भगवन्तं दर्शनायोपसंक्रान्ताः ॥ भगवानाह । न भिक्षवो ब्रह्मा सहाम्पतिर्न शक्रो देवेन्द्रो नापि चत्वारो लोकपाला मां दर्शनायोपसं- 10 क्रान्ता अपि तु स प्रेतः कालं कृत्वा प्रेतमहर्द्धिकेषूपपन्नः । स इमां रात्रीं मत्सकाशमुपसंक्रान्तस्तस्य मया धर्मो देशितः स प्रसादजातः प्रक्रान्तः । तस्मात्तर्हि भिक्षवो मात्सर्यप्रहाणाय व्यायन्तव्यम् । एते दोषा न भविष्यन्ति ये तस्य श्रेष्ठिनः प्रेतभूतस्येत्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो ऽन्ये च देवासुरगरुडकिन्नरमहोरगादयो भग- 15 वतो भाषितमभ्यनन्दन् ॥

---

1) B °रकानामु°, P has °रवाना°, cp. Feer p. 186, 13.

2) B सर्वज्ञे°, DP corr.

3) MS पूर्वरात्रोप°.

4) B पपच्छुः, P corr.

5) MS भगवानस्यां.

## पुत्रा[1] इति ४६ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुड-किन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयना-
5 सनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घो राजगृहमुपनिश्रित्य विहरति स्म वेणुवने कलन्दकनिवापे । अथायुष्मान्नालदः पूर्वाह्णे निवास्य पात्रचीवरमादाय राजगृहं पिण्डाय प्राविक्षत् । राज[46a]गृहं पिण्डाय चरित्वा कृतभक्तकृत्यः पश्चाद्भक्तपिण्डपात-[2] प्रतिक्रान्तः पात्रचीवरं प्रतिसमर्प्य प्रेतचारिकां प्रक्रान्तः ॥

स गृध्रकूटपर्वतसामन्तके प्रेतीं ददर्श यमराजसमदृशीं रुधिरबिन्दुचितामस्थिश-
10 कलापरिवृतां श्मशानमध्य इवावस्थितां रात्रिंदिवेन पञ्च पुत्रान्[3]प्रसूय तादृशं दुःखम-नुभूय पुत्रस्नेहे सत्यपि क्षुत्क्षामतया पुत्रांस्तान्भक्षयन्तीम् ॥ ततः स्थविरो नालदस्तां पृष्टवान् । किं त्वया प्रकृतं पापं येनैवंविधं दुःखमनुभवसीति ॥ प्रेती आह । आदित्ये हि समुद्गते न[4] दीपेन प्रयोजनम् । भगवन्तमेतमर्थं परिपृच्छ स ते ऽस्माकीनां कर्मप्लोतिं[5] व्याकरिष्यतीति यां श्रुत्वान्ये ऽपीह सत्त्वाः पापकात्कर्मणः प्रतिविरंस्यन्तीति ॥ अथा-
15 युष्मान्नालदो येन भगवांस्तेनोपसंक्रान्तः ॥

---

1) Ex conject.; MS पुत्र, an obvious corruption. Cp. the titles of the corresponding tales in Petavatthu (I, 6 and 7).

2) MS पातः प्र°. Cp. *supra* p. 252, n. 2 and 3.

3) MS पुत्राप्र°.

4) MS न हि दीपेन. Cp. *supra*, p. 242, n. 7.

5) Anusvāra wanting in MS.

तेन खलु समयेन भगवान्प्रतिसंलयनाद्व्युत्थाय चतसृणां पर्षदां मधुरमधुरं धर्मं देशयति लोहं[1] मध्विवनेडकमनेकशता[2] च पर्षद्भगवतः सकाशान्मधुरमधुरं धर्मं शृणोत्य-निङ्ग्यमानैरिन्द्रियैः[3]। ततो बुद्धा भगवन्तः पूर्वालापिन एह्येहितिस्वागतवादिनः स्मितपूर्व-ङ्गमाश्च। तत्र भगवानायुष्मन्तं नालदमामन्त्रयते। एहि नालद स्वागतं ते कुतस्त्वं नालद एतर्ह्यागच्छसीति॥ नालद आह। आगच्छाम्यहं भदन्त प्रेतचारिकायास्तत्राहं प्रेतीमद्रा- 5 क्षं यमराक्षससदृशीं रुधिरबिन्दुचितामस्थिशकलापरिवृतां श्मशानमध्य इवावस्थिताम्। आह[4] च।

पञ्च पुत्रानहं रात्रौ दिवा पञ्च तथापरान्।
भक्षयामि जनित्वा तान्नास्ति तृप्तिस्तथापि मे इति॥
किं तया[5] प्रकृतं पापं मर्त्यलोके सुदारुणम्।   10
येन[6] एवंविधं दुःखमनुभवति भयानकमिति॥

भगवानाह। पापकारिणी नालद सा प्रेती इच्छसि तस्याः कर्मप्लोतिं श्रोतुम्॥ एवं भदन्त॥ तेन हि नालद शृणु साधु च सुष्ठु च मनसि कुरु[7] भाषिष्ये।

भूतपूर्वं नालदातीते ऽध्वनि वाराणस्यां नगर्यामन्यतमः श्रेष्ठी आढ्यो महाधनो महाभोगो विस्तीर्णविशालपरिग्रहो वैश्रवणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी। तेन 15 सदृशात्कुलात्कलत्रमानीतम्। स तया सार्धं क्रीडति रमते परिचारयति। तस्य क्रीडतो रममाणस्य परिचारयतो नैव पुत्रो न दुहिता। स करे कपोलं कृत्वा चिन्तापरो व्यव-

---

1) MS लो°.

2) B °नेडकमेनेक°, PC corr.

3) I have followed DP, cp. *supra*, p. 253, 10; B °निंग्यमा°.

4) The change of the subject is abrupt. Instead of *āha* a participle signifying 'who spoke thus' ought to be expected. Yet, the Tibetan translation agrees with this redaction. As to the first çloka, cp. Petavatthu I, 6, 8.

5) MS त्वया.

6) MS येनैवंविधं. Cp. *supra*, p. 247, n. 7.

7) B कुरुत, D corr.

स्थितः। अनेकधनसमुदितं मे गृहं न मे पुत्रो ‹न› दुहिता। ममात्ययात्सर्वस्वापतेयम-
पुत्रकमिति कृत्वा राजविधेयं भविष्यतीति॥ सो ऽपुत्रः पुत्राभिनन्दी शिववरुणकुबेरश-
क्रब्रह्मादीनन्यांश्च देवताविशेषानायाचते स्म। तद्यथारामदेवता वनदेवताश्चत्वरदेवताः[1]
शृङ्गाटकदेवता बलिप्रतिग्राहि‹का›[2] देवताः सहजाः सहधार्मिका नित्यानुबद्धा अपि
5 देवता आयाचते स्म॥ अस्ति चैष लोके प्रवादो यदायाचनहेतोः पुत्रा जायन्ते दुहित-
रश्चेति। तच्च नैवम्। यद्येवमभविष्यदेकैकस्य पुत्रसहस्रम[3]भविष्यत्तद्यथा राज्ञश्चक्रव-
र्तिनः[4]। अपि तु त्रयाणां स्थानानां संमुखीभावात्पुत्रा जायन्ते दुहितरश्च। कतमेषां
त्रयाणाम्। मातापितरौ रक्तौ भवतः संनिपतितौ माता कल्या भवति ऋतुमती गन्धर्वश्च
प्रत्युपस्थितो भवति। एषां त्रयाणां स्थानानां संमुखीभावात्पुत्रा जायन्ते दुहितरश्च॥
10 तस्य देवताराधने ऽपि सति न पुत्रो न दुहिता॥

तस्यैवं बुद्धिरुत्पन्ना। द्वितीयां भार्यामानयामि कदाचित्सा सत्त्ववती स्यादिति।
तेन सदृशात्कुलाद्द्वितीया भार्या आनीता। स तया सार्धं क्रीडति रमते परिचारयति।
तस्य क्रीडतो रममाणस्य परिचारयतः कालान्तरेण सा आपन्नसत्त्वा संवृत्ता। तया हृष्ट-
‹तुष्ट›[5]प्रमुदितया स्वामिने निवेदितम्। दिष्ट्यार्यपुत्र वर्धसे आपन्नसत्त्वास्मि संवृत्ता यथा
15 च मे दक्षिणां कुक्षिं निश्रित्य तिष्ठति नियतं दारको भविष्यतीति। सो ऽप्यात्तमना‹त्तमनाः›
पूर्वकायमत्यु[46 b]न्नमय्य दक्षिणं बाहुमभिप्रसार्य[6] उ‹दानमु›[7]दानयत्यप्येवाहं चिरकाला-
भिलषितं पुत्रमुखं पश्येयं जातो मे स्यान्नावजातः कृत्यानि मे कुर्वीत भृतः प्रतिबिभृया-

---

1) MS वनदेवताचत्वरदेवताश्°.

2) D °ग्राहिकदे°.

3) MS °स्रंभविष्यत्तद्यथा.

4) MS °न अपि.

5) I inserted तुष्ट, according to the regular presence of that participle in this formula. D हृष्टतुष्टाप्रमुदितया.

6) MS °प्रसाद्य.

7) DP fill up the gap.

द्दायाद्यं प्रतिपद्येत कुलवंशो मे चिरस्थितिकः स्यादस्माकं चाप्यतीतकाल[1]गतानामल्पं वा प्रभूतं वा दानानि दत्त्वा पुण्यानि कृत्वा ऽस्माकं नाम्ना दक्षिणामादेक्ष्यते । इदं तयोर्यत्रतत्रोपपन्नयोर्गच्छतोरनुगच्छत्विति । आपन्नसत्त्वां चैनां विदित्वोपरिप्रासादतलगतामयन्त्रितां धारयति शीते शीतोपकरणैरुष्णे उष्णोपकरणैर्वैद्य[2]प्रज्ञप्तैराहारैर्नातितिक्तैर्नात्यम्लैर्नातिलवणैर्नातिमधुरैर्नाति<कटुकैर्नाति>कषायैस्तिक्ताम्ललवणमधुरकटुककषायविवर्जितैराहारैर्हारार्धहारविराजितगात्रीमप्सरसमिव[3] नन्दनवनविचारिणीं[4] मञ्चान्मञ्चं[5] पीठात्पीठमनवतरन्तीमधरि<मां> भूमिम् । न चास्याः किंचिदमनोज्ञशब्दश्रवणं यावदेव गर्भस्य परिपाकाय ॥

ततस्तस्याः पूर्विकायाः प्रजापत्याः प्रथमपत्न्यास्तां [6]बङ्कमानाह्लडितां दृष्ट्वा ईर्ष्या समुत्पन्ना चिन्तयति च । यद्येषा पुत्रं जनयिष्यति नियतं मां बाधयिष्यति सर्वथोपायसंविधानं कर्तव्यमिति । कामान्खलु प्रतिसेवमानस्य नास्ति किंचित्पापं कर्माचर[7]णीयमिति । तया ऽनिष्टगतिप्रपातनमुग्धया विस्रम्भमुत्पाद्य तथाविधं गर्भशातनं द्रव्यं दत्तं येन पीतमात्रेणैव तस्यास्तपस्विन्याः स्रस्तो गर्भः ॥ ततस्तया द्वितीयपत्न्या सर्वज्ञातीन्संनिपात्य सा प्रथमा पत्नी समनुयुज्यते त्वया मे विस्रम्भमुत्पाद्य शातनं द्रव्यं दत्तं येन मे स्रस्तो गर्भ इति । [8]ततो ऽसौ प्रथमपत्नी ज्ञातिमध्ये शपथं कर्तुं प्रवृत्ता । यदि मया गर्भशातनं द्रव्यमनुप्रदत्तं स्यादहं प्रेती भूत्वा जाताञ्जातान्पुत्रान्भक्षयेयमिति ॥

---

1) MS कालेग°.

2) B °वैद्यैप्र°, CP corr.

3) MS °गात्रीरप्सरस इव.

4) Anusvāra wanting in MS.

5) B पोडात्पीठम°, DPC corr.

6) Ex conject.; MS वङ्कमानांलाउनां.

7) B कर्मावर°, PC corr. Cp. *supra* p. 179, 8.

8) B ततोसौ, D corr.

किं मन्यसे नालद यासौ श्रेष्ठिभार्या इयं सा प्रेती। यत्तया ईर्ष्याप्रकृतया गर्भशातनं दत्तं तेन प्रेतेषूपपन्ना। यत्तया मृषावादेन शपथः कृतः तस्य कर्मणो विपाकेन रात्रिंदिवेन पञ्च पुत्रान्प्रसूय तानिव[1] भक्षयति। तस्मात्तर्हि ते नालद वाग्दुश्चरितप्रहाणाय व्यापत्तव्यं[2] यथा एवंविधा दोषा न स्युर्य तस्याः प्रेत्या इत्येवं ते नालद शिक्षितव्यम्॥

5 इदमवोचद्भगवानात्तमना आयुष्मान्नालदो ऽन्ये च देवासुरगरुडकिन्नरमहोरगादयो भगवतो भाषितमभ्यनन्दन्॥

---

1) Ex conject.; MS तान्येव (P तान्यैव).

2) MS व्यापत्तव्यं.

# [1]जाम्बाल इति ५०।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षा[2]सुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घो वैशालीमुपनिश्रित्य विहरति मर्कटह्रदतीरे कूटागारशालायाम्। तेन खलु समयेन वैशाल्यामन्यतरस्यां नगरपरिखायां पञ्च प्रेतशतानि प्रतिवसन्ति वान्ताशान्युज्झिताशानि खेटमूत्रोपजीवीनि पूयशोणितविष्ठा[3]हाराणि घोराणि [4]प्रकृतिदुःखितानि च। [5]आह च।

> वान्ताशा उज्झिताशाश्च खेटमूत्रोपजीविनः।
> पूयशोणितवि[6]ष्ठाशा घो[7]राः प्रकृतिदुःखिता इति॥   10

तस्यां च वैशाल्यामन्यतरो ब्राह्मणः। तेन सदृशात्कुलात्कलत्रमानीतम्। स तया सार्धं क्रीडति रमते परिचारयति। तस्य क्रीडतो रममाणस्य परिचारयतः पत्नी आप-

---

1) Ex conject.; MS जाम्बल.

2) The portion, left out by inadvertence in B or its archetype, is supplied in D, with the exception of गरुडैः.

3) MS निष्टा° (D निष्ठा).

4) B प्रकृत°, P corr.

5) The composition is here troubled. Perhaps *āha ca* is only employed as the usual introduction of a metrical portion of the same contents as the preceding prose.

6) B विश्वासा (in marg. corrected to विष्ठाशा).

7) MS घोरप्रकृति°.

न्नसन्ना संवृत्ता दौर्गन्धं[1] चास्याः काये संवृत्तम् । ततस्तेन ब्राह्मणेन नैमित्तिका आहूय पृष्टाः । ते कथयन्ति यो ऽयमुदरस्थो दारकस्तस्यायं प्रभाव इति ॥ यावदसौ नवानां मासानामत्ययात्प्रसूता । दारको जातो दुर्वर्णो[2] दुर्दर्शनो अव[3][47a]कोटिमको ऽमेध्यप्रलिप्त[4]गात्रो दुर्गन्धश्च । तथाप्यसौ स्नेहपाशानुबद्धाभ्यां[5] परमबीभत्सो[6] ऽपि मातापितृभ्यां संवर्धितः ॥
5 सो ऽमेध्यस्थानेष्वेवाभिरमते संकारकूटे जाम्बाले[7] केशाँल्लुञ्चति अमेध्यं मुखे प्रक्षिपति । तस्य बालो जाम्बाल[8] इति संज्ञा संवृत्ता ॥

---

1) Though PWK, VII 349 objects to *daurgandha* (Divy. 57, 21. 193, 21) and replaces it by the commoner form *daurgandhya*, I cannot persuade myself that the inculpated abstract noun should be imputed rather to clerical error than to the composers of the avadānas. As well here as f. 5b (cp. my preliminary Introduction p. VIII) MS has *daurgandha*, not °*dhya.* For this reason I have retained MS दौर्गन्धं.

2) MS डुवर्णो (D corr.) डुर्दर्शन अव°.

3) Ex conject.; MS अवक्कोटिमको, so at least I read the word in B, perhaps C has also अव°, but DP have distinctly अच°. I have corrected it after the corresponding form in Pāli *okoṭimaka*, for which I am indebted to Prof. Kern, who pointed out to me the occurence of *okoṭimaka* in Saṁyutta Nikāya I, 94 and 237, Aṅgutt. Nik. I, 106, with the meaning 'deformed, misshapen'. He thinks it may be etymologically related to अवकुटार = वैरूप्य (Pāṇ. 5, 2, 30). The late M. Feer wrote me that the commentary of Saṁy. Nik. explains it by *lakuṇḍako* (dwarf), and elsewhere with the addition *mahodaro.* According to this explication some figure like that of the typical Vidūṣaka may be meant. The corresponding Tibetan term བྱེད་ངན་པོ་ (cp. Feer p. 190, n. 2) may fairly be explained = «misshapen».

In Açokāvadānamālā, nr. 17, which contains the metrical paraphrase of our tale, there is in the parallel passage (MS Cambr. Add. 1482 f. 237a) no corresponding word to *avakoṭimaka.* The astrologers, in this redaction, predict also the future spiritual greatness of the child to be born.

4) MS प्रलित.

5) The akṣ. भ्यां being added in B between the lines, has been neglected in all the copies.

6) B भीभत्सो, D corr.

7) Ex conject.; MS जाम्वाले (DP °म्वाल), likewise Açokāvad., f. 237b 5.

8) B जास्वाल, P corr. According to Açokāvad. he was named Durgandhi at the nāmakaraṇa ceremony.

यावदसावितश्चामुतश्च परिभ्रमन्[1]पूरणेन काश्यपेन दृष्टः । तस्यैतदभवत् । यादृशेषु स्थानेष्वयमभिरमते नूनमयं सिद्धपुरुषो यन्न्वहमेनं प्रव्राजयेयमिति ॥ स तेन प्रव्राजितो नग्नः [2]पर्यटति सत्क्रियासु च वर्तते । ततस्तेन पर्यटता वैशालीपरिखायां पञ्च प्रेतशतानि दृष्टानि । स पूर्वकर्मविपाक[3]संबन्धात्तां नगरपरिखामवतीर्य तैः सार्धं संगम्य समागम्य संमोदते सखित्वं चाभ्युपगतः ॥ यावदपरेण समयेन जाम्बालो दारकः क्वचित्प्रयोजनेन[4] 5 व्याक्षिप्तो वैशालीं प्रविष्टः भगवांश्च तां नगरपरिखामनुप्राप्तः । ददृशुस्ते प्रेता बुद्धं भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः समलङ्कृतमशीत्यानुव्यञ्जनैर्विराजितगात्रं [5]व्याम-प्रभालङ्कृतं सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकं सहदर्शनाच्च भगवतः पादयोर्निपतिता भगवता उक्ताः किं भवतां बाधत इति ॥ ते ऊचुः पिपासिताः[6] स्मो भगवन्निति ॥ ततो भगवता पञ्चभ्यो ऽङ्गुलिभ्यो [7]ऽष्टाङ्गोपेतस्य पानीयस्य पञ्च धारा 10 उत्सृष्टा येन तानि पञ्च प्रेतशतानि संतर्पितानि । ततस्ते भगवतो ऽन्तिके चित्तं प्रसाद्य कालगताः प्रणीतेषु देवेषु त्रयस्त्रिंशेषूपपन्नाः ॥

धर्मता खलु देवपुत्रस्य वा देवकन्यकाया वाचिरोपपन्नस्य त्रीणि चित्तान्युत्पद्यन्ते[8]

---

1) MS परिभ्रमत्पू°.

2) Ex conject.; MS पर्यटाभ्यसत्क्रि°. My correction rests on both the Chinese and Tibetan translations which agree in the statement that Jāmb., after his initiation by Pūraṇa, devoted himself to virtuous deeds. And Açokāv., after having related that Pūraṇa made a Maskarin monk of Jāmbāla (व्यधान्मस्करिणं यतिम् f. 238a 1) adds that J. पात्रमादाय भिक्षार्थं पर्यटत (sic) समन्ततः । तथासौ सत्क्रियावर्ती etc.

3) Ex conject.; B सम्वन्वात्तां, which has been variously depraved in the other MSS.

4) Note the blunder of *kvacit* for *kenacit*, or can it be a clerical error? As to व्याक्षिप्त, cp. *supra* p. 213, 8.

5) In B it is not clear, whether it has व्योम or व्याम; the copies have व्योम.

6) Visarga wanting in MS.

7) MS °भ्य(D °भ्यः)म्रष्टा°.

8) MS °द्यते.

कुतश्च्युतः कुत्रोपपन्नः[1] केन कर्मणेति । ते पश्यन्ति प्रेतेभ्यश्च्युताः प्रणीतेषु ‹देवेषु› त्रय-
स्त्रिंशेषूपपन्ना भगवतो ऽन्तिके चित्तमभिप्रसाद्येति ॥ अथ प्रेतपूर्विणां देवपुत्राणामेतद-
भवत् । नास्माकं प्रतिरूपं स्याद्यद्वयं[2] पर्युषितपरिवासा भगवन्तं दर्शनायोपसंक्रामेम[3] यन्नु
वयमपर्युषितपरिवासा एव भगवन्तं दर्शनायोपसंक्रामे‹मे›ति ॥ अथ प्रेतपूर्विणो देवपुत्रा-
5 श्चलविमलकुण्डलधरा हारार्धहारविराजितगात्रा मणिरत्नविचित्रमौलयः[4] कुङ्कुमतमा-
लपत्रस्पृक्कादिसंमृष्टगात्रास्तस्यामेव रात्रौ दिव्यानामुत्पलपद्मकुमुदपुण्डरीकमन्दारका-
णां[5] पुष्पाणामुत्सङ्गं पूरयित्वा सर्वां[6] कूटागारशालामुदारेणावभासेनावभास्य भगवन्तं पुष्पै-
रवकीर्य भगवतः पुरस्तान्निषण्णा[7] धर्मश्रवणाय ॥ अथ भगवान्प्रेतपूर्विणां देवपुत्राणामा-
शयानुशयं धातुं प्रकृतिं च ज्ञात्वा तादृशीं[6] चतुरार्यसत्यसंप्रतिवेधिकीं[6] धर्मदेशनां कृतवा-
10 न्यां श्रुत्वा पञ्चभिर्देवपुत्रशतैर्विंशतिशिखरसमुद्गतं[6] सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रो-
तआपत्तिफलमनुप्राप्तम् ॥ ते दृष्टसत्या[8] लब्धलाभा इव वणिजः संपन्नसस्या इव कर्षकाः
शूरा इव विजितसंग्रामाः सर्वरोगपरिमुक्ता इवातुरा यया विभूत्या भगवत्सकाशमागता-
स्तयैव विभूत्या भगवन्तं त्रिः प्रदक्षिणीकृत्य स्वभवनं गताः ॥

अथ ज्ञाम्बालो नगरपरिखामागतस्तान्प्रेतान्नाद्राक्षीत्[9] । ततः समन्वेषितुमारब्धः[10] ।
15 स च तान्परिमार्गमाणः खेदमापन्नो न च तानासादयति ॥

---

1) MS कुतो°.

2) B प्रतिरूपंस्यावद्येवयं. The aks. व before द्ये is perhaps expunged; CDP °स्याद्येवयं.

3) MS °क्रामेस.

4) MS मणिलम्रवि°. Cp. *supra* p. 259, 9.

5) BC मन्दारकानां, DP मन्दारवानां. Perhaps the right reading is: मन्दारका‹दी›नां.

6) Anusvāra wanting in MS.

7 MS °षण्णो.

8) MS दृष्टासत्या (D दृष्ट्वासत्या, P दृष्ट्वासभ्या).

9) Ex conject.; MS °तानाद्रा°.

10) MS °मालब्धः (D °ब्धाः).

अत्रान्तरे नास्ति किंचिद्बुद्धानां भगवतामज्ञातमदृष्टमविदितमविज्ञातम्। धर्मता
खलु बुद्धानां भगवतां महाकारुणिकानां लोकानुग्रहप्रवृत्तानामेकारक्षाणां शमथविपश्य-
[1]नाविहारिणां त्रिदमथवस्तुकुशलानां चतुरोघोत्तीर्णानां [2]चतुर्ऋद्धिपादचरणतलसुप्रतिष्ठि-
तानां चतुर्षु संग्रहवस्तुषु [3]दीर्घरात्रकृतपरिचयानां पञ्चाङ्गविप्रहीणानां पञ्चगतिसमति-
क्रान्तानां षडङ्गसमन्वागतानां षट्पारमितापरिपूर्णानां सप्तबोध्यङ्गकुसुमाढ्यानामष्टाङ्गमा-
[47 b]र्गदेशिकानां नवानुपूर्वविहारसमापत्तिकुशलानां दशबलबलिनां दशदिक्समापूर्ण-
यशसां दशशतवशवर्तिप्रतिविशिष्टानां [4]त्री रात्रेस्त्रिर्दिवसस्य बुद्धचक्षुषा लोकं व्यव-
लोक्य ज्ञानदर्शनं प्रवर्तते। को हीयते को वर्धते कः कृच्छ्रप्राप्तः कः संकटप्राप्तः कः संबा-
धप्राप्तः कः कृच्छ्रसंकटसंबाधप्राप्तः कोऽपायनिम्नः[5] कोऽपायप्रवणः कोऽपायप्राग्भारः
कमहमपायादुद्धृत्य[6] स्वर्गे मोक्षे च प्रतिष्ठापयेयं कस्य कामपङ्कनिमग्नस्य हस्तोद्धारमनु-
प्रदद्यां कमार्यधनविरहितमार्यधनैश्वर्याधिपत्ये प्रतिष्ठापयेयं कस्यानवरोपितानि कुशल-
मूलान्यवरोपयेयं कस्यावरोपितानि परिपाचयेयं कस्य परिपक्वानि विमो‹च›येयम्[7]।
आह च।

अप्येवातिक्रमेद्वेलां सागरो मकरालयः।
न तु वैनेयवत्सानां बुद्धो वेलामतिक्रमेत्[8]॥

ततो भगवाञ्जाम्बालस्य कुलपुत्रस्यानुग्रहार्थं पूर्वाह्णे निवास्य पात्रचीवरमादाय
भिक्षुगणपरिवृतो[9] भिक्षुसङ्घपुरस्कृतो वैशालीं पिण्डाय प्राविक्षत्। यावदनुपूर्वेण पिण्ड-

---

1) MS °श्यनांवि°.

2) MS चतुर्ऋ°.

3) MS दीर्घरात्रंततपरिचय्यनां (D °परिवय्य°).

4) MS त्रिरात्रेंस्त्रिदिव° (D त्रिरात्रेत्रिदिव°).

5) B कोपायनिमग्नः, P corr. Cp. *supra* p. 31, n. 1; 72 n. 6.

6) B °पाउद्धृत्य, P corr., it seems.

7) D restores the dropped akṣara.

8) In Açokāvad. Jāmbāla becomes a Bauddha spontaneously, and not, as here, in consequence of the intervention of Bhagavān.

9) B परिवृत्तो, DP corr.

पातमटन्वीथीमवतीर्णः जाम्बालश्च इतस्ततो ऽन्वाहिण्डमानो[1] भगवतो ऽग्रतः स्थितः । अथ ददर्श बुद्धं भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः समलङ्कृतमशीत्यानुव्यञ्जनैर्विराजितगात्रं व्यामप्रभालङ्कृतं सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकं सहदर्शनाच्चानेन भगवतो ऽन्तिके चित्तं प्रसादितम् । स[2] प्रसादजातो भगवतः पादयोर्निपत्य

5 कृतकरपुट उवाच । यदि भगवन्मादृशानां[3] सत्त्वानामस्मिन्धर्मविनये प्रव्रज्यास्ति लभेयं[4] स्वाख्याते धर्मविनये प्रव्रज्यामिति । ततो भगवान् महाकरुणापरिगतहृदयः सत्त्वानामाशयानुशयज्ञस्तं भव्यरूपं विदित्वा गजभुजसदृशं सुवर्णवर्णबाहुमभिप्रसार्येदमवोचत् । एहि भिक्षो चर ब्रह्मचर्यम् । इत्युक्तमात्रे भगवता सप्ताहावरोपितैरिव केशैर्द्वादशवर्षोपसंपन्नस्येव भिक्षोरीर्यापथेन पात्रकरकव्यग्रहस्तो ऽवस्थितः । आह च ।

10 एहीति चोक्तः स तथागतेन मुण्डश्च साङ्घाटिपरीतदेहः[5] ।
सद्यः प्रशान्तेन्द्रिय एव तस्थावेवं स्थितो[6] बुद्धमनोरथेन[7] ॥

ततो ऽस्य भगवता मनसिकारो दत्तः ॥ तेन युज्यमानेन घटमानेन व्यायच्छमानेनेदमेव पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः शतनपतनविकिरणविध्वंस-

---

1) Ex conject., cp. *supra* p. 242, 6; MS °न्वाहिण्ड्यमानो.

2) Ex conject.; MS सं.

3) Ex conject.; MS भगवान्माद° (D भगवानीद°).

4) As it is uncertain whether *labheyaṃ* may be a clerical blunder for *labheya* or stands for *labheyāhaṃ*, as is commonly found in this formula, I have retained the reading of MS. Other instances of parasmaipada used for ātmanepada in avadāna texts and in prose, vide *supra* p. 243, n. 7 and Divy. 437, 11. 584, 1. 620, 11.

5) Sic MS. The usual orthography is *saṃghāṭi*. As here, *sā°* is the reading of mss. in Divy. 494, 2.

6) Ex conject.; MS तस्थौ नेवस्थितो. The tradition of the fourth pāda of this indravajrā is very depraved. Wheresoever this commonplace stanza occurs (e. g. Divy. 48, 23. 159, 11. 558, 21) mss. afford either नैवस्थिता or °ता or नैवस्थितो as here, or नेपथ्यस्थितो, or an even still worse corrupted form (e. g. Divy. 463, 26). I believe its original and genuine form cannot have been much different from what I have edited here.

7) MS बुद्धोमनोरथेन (D बुद्धा°).

नधर्मतया पराकृत्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम् । अर्हन्संवृत्तस्त्रैधातुकवीतरागः[1] समलोष्टकाञ्चन आकाशपाणितलसमचित्तो वासीचन्दनकल्पो विद्याविदारिताण्डकोशो विद्याभिज्ञाप्रतिसंवित्प्राप्तो भवलाभलोभसत्कारपराङ्मुखः सेन्द्रोपेन्द्राणां देवानां पूज्यो मान्यो ऽभिवाद्यश्च संवृत्तः । सो ऽर्हत्त्वप्राप्तो ऽपि लूहेनाभिरमते ॥ तत्र भगवान्भिक्षूना-मन्त्रयते स्म । एषो[2] ऽग्रो मे भिक्षवो भिक्षूणां मम श्रावकाणां लूहाधिमुक्तानां यदुत ज्ञा- 5
म्बालो भिक्षुरिति[3] ॥

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः । किं भदन्त ज्ञाम्बालेन स्थविरेण कर्म कृतं येनैवंविधं दुःखमनुभवतीति ॥ भगवानाह । ज्ञाम्बालेनैव भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघव-त्प्रत्युपस्थितान्यवश्यंभावीनि[4] । ज्ञाम्बालेनैव कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्य- 10
नुभविष्यति । न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते ना-[5]ब्धातौ न तेजोधातौ न वायुधातावपि तूपात्तेष्वेव[6] स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च ।

न प्रणश्यन्ति कर्माणि अपि कल्पश[48a]तैरपि[7] ।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ॥ 15

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि अस्मिन्नेव भद्रकल्पे चत्वारिंशद्वर्षसहस्रायुषि प्रजायां क्रकुच्छन्दो नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोक-

---

1) B °र्हत्संवृ°, D corr., and l. 3 *infra* B संविन्प्राप्तो, P corr.

2) MS एषोग्रा.

3) As to this stereotyped formula which will be met with elsewhere in the sequel cp. Divy. 186, 19. 495, 20

4) MS °भागीनि.

5) B नाव्धाधौ, DP corr.

6) Cp. *supra* p. 74, n. 9.

7) All MSS agree here in the depraved reading, cp. *supra* p. 80, n. 12.

विद्यनुत्तरः पुरुषदम्यसारथिः[1] शास्ता देवमनुष्याणां बुद्धो भगवान्। स शोभावतीं राजधानीमुपनिश्रित्य विहरति। तस्यां च राजधान्यामन्यतमेन गृहपतिना विहारः कारितो यत्र नानादिग्देशवासिनो भिक्षव आगन्तव्यं गन्तव्यं वस्तव्यं च मन्यन्ते[2]। तस्मिंश्च विहारे[3] पृथग्जनो भिक्षुर्नैवासिकः स चातीवावासमत्सरी आगन्तुकान्भिक्षून्दृष्ट्वा[4] ऽभिषज्यते कुप्यति 5 व्यापद्यते मद्गुः[5] प्रतितिष्ठति कोपं संजनयति। ये तु तस्माद्विहाराद्भिक्षवः प्रक्रामन्ति तान्दृष्ट्वा प्रीतिप्रामोद्यबहुलः प्रत्युद्गम्याभाषते च॥ यावदपरेण समयेन जनपदाद्गृहपतिरागतः। स च विहारस्वाम्यनागामी। तेनासावीर्यापथेन संलक्षितो ऽर्हन्निति। ततः प्रसादजातेन श्वो भक्तेन जेन्ताकस्नात्रेण[6] चोपनिमन्त्रितः सार्धं भिक्षुसङ्घेन। स चावासिको भिक्षुस्तत्र नासीत्॥ यावद्द्वितीये दिवसे जेन्ताकस्नात्रे प्रतिपादिते भक्ते सज्जीकृते आवा-10 सिको भिक्षुरागतः। सो ऽपि जेन्ताकस्नात्रं प्रविष्टः पश्यति विहारस्वामिनमेकशाटकनिवसितमागन्तुकस्य भिक्षोः परिकर्म कुर्वाणम्। ततो ऽस्य मात्सर्यमुत्पन्नम्। तेन प्रदुष्टचित्तेन खरं वाक्कर्म निश्चारितम्। वरं खलु ते भिक्षो ऽमेध्येन[7] शरीरमुपलिप्तं न त्वेवंविधस्य दानपतेः सकाशादुपस्थानं स्वीकृतमिति। ततस्तेनार्हता तूष्णीभावेनाधिवासितं मा हैवायं तपस्वी गाढतरस्य[8] कर्मणो भागी भविष्यतीति॥ यावत्सामग्रीदेशकाले

---

1) B° दस्यसारथिः, CDP corr.

2) Ex conject.; MS मन्यते (D °से). For the turn of the phrase cp. Divy. 556, 13.

3) B विहार, D corr.

4) Ex conject.; MS आगन्तुकंभिक्षूंदृष्ट्वा (D °क्षुंदृष्ट्वा).

5) Cp. *supra* p. 48, 10.

6) Ex conject. This word is written here जेन्ताकस्त्रात्रेण (D जेन्ताकष्ठा°), further on जन्ताकस्तात्रे and °त्रं. That its second part must be °स्नात्र is certain, cp. Feer, p. 193, n. 1. It does not occur in the redaction of our tale which is found in Açokāvad.

7) Ex conject.; MS भिक्षोरमेध्ये°.

8) It is not clear, whether B has गाढतरस्य or °तमस्य. The copyist of D read it °तरस्य, P has °तपस्य and C even गाढतम्यकर्मणो, omitting the difficult akṣara.

संप्राप्ते नैवासिकेन भिक्षुणा श्रुतमर्हतो ऽन्तिके त्वया चित्तं प्रदूषितमिति श्रुत्वा चास्य विप्रतिसारो जातः । ततो ऽर्हतो भिक्षोः पादयोर्निपत्याह । क्षमस्वार्य यन्मया त्वयि परुषा वाग्निश्चारितेति । ततो ऽर्हंस्तस्य[1] प्रसादाभिवृद्ध्यर्थं गगनतलमभ्युद्गम्य[2] विचित्राणि प्रातिहार्याणि विदर्शयितुमारब्धः । ततो ऽस्य भूयसा विप्रतिसारः समुत्पन्नः । तेन तस्य पुरस्तात्तत्कर्मात्ययनादेशितं[3] [4]प्रकाशितमुत्तानीकृतं च न चानेन शकितं[5] नैष्ठिकं ज्ञान- 5 मुत्पादयितुम् ॥ [6]यावन्मरणकालसमये प्रणिधिं कर्तुमारब्धः । [7]यन्मया ऽर्हतो ऽन्तिके चित्तं प्रदूषितं खरं च वाक्कर्म निश्चारितं मा अस्य कर्मणो विपाकं प्रतिसंवेदयेयं यत्तु मया पठितं स्वाध्यायितं दानप्रदानानि दत्तानि सङ्घस्य चोपस्थानं कृतं तस्य कर्मणो विपा- केनानागतान्सम्यक्संबुद्धानारागयेयं मा विरागयेयमिति[8] ॥

किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेनावासिको भिक्षुरयमेवासौ 10 ज्ञाम्बालः । यदनेनार्हतो ऽन्तिके खरं वाक्कर्म निश्चारितमस्य[9] कर्मणो विपाकेनानन्तं संसारे दुःखमनुभूतं तेनैव च कर्मावशेषेण एतर्हि पश्चिमे भवे एवं दुर्गन्धः परमदुर्गन्धो ऽमेध्यावस्करस्थाननिवासाभिप्रायः संवृत्तः । यत्पुनरनेन तत्र पठितं स्वाध्यायितं स्कन्ध- कौशलं[10] धातुकौशलमायतनकौशलं प्रतीत्यसमुत्पादकौशलं स्थानास्थानकौशलं च कृतं

---

1) MS °र्हन्स्यन्स्तस्य (D ऽर्हंत्तस्य).

2) B °भ्युद्गम्य, D corr.

3) MS °त्तत्कर्मोत्ययनो°.

4) B °देदितं, D corr.

5) Ex conject.; MS चानेन तेकितं (D °तेकृतं).

6) The reading of P यावत्परेण कालसमये, that Feer (p. 193, 8) rendered by the words 'plus tard' is, of course, only a mistake of the copyist of that MS.

7) Ex conject.; MS यन्मयारर्हतो. I surmise the superfluous र is due to the avagraha, which may have stood in A.

8) MS विरामयेय°.

9) MS °रितंमा अस्य.

10) Anusvāra wanting in MS.

तेन मम शासने प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्। तस्मात्तर्हि भिक्षव एवं शिक्षितव्यं यन्मात्सर्यप्रहाणाय व्यायन्तव्यम्। तत्कस्य हेतोः। एते दोषा न भविष्यन्ति ये जाम्बालस्य पृथग्जनभूतस्य एष एव गुणगणो भविष्यति यो ऽसौ ‹तस्यै›[1]वार्हत्त्वप्राप्तस्येत्येवं वो भिक्षवः शिक्षितव्यम्॥

5 इदमवोचद्भगवानात्तमनसस्ते भिक्षवो ऽन्ये च देवासुरगरुडकिन्नरमहोरगादयो भगवतो भाषितमभ्यनन्दन्[2]॥

---

1) The supplement agrees with the usual conclusion of such spiritual exhortation, cp. *supra* p. 204, 15.

2) After this and the number ४८, which in B has been erased with big strokes, MSS — except D — have this paragraph: अवदानशतके पञ्चमी उदानगाथा समाप्ता॥ Then follows the uddāna of the 6th varga.

## षष्ठो वर्गः ।

### (1) कृष्णसर्प इति ५१ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवै[48 b]र्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घो राजगृहमुपनिश्रित्य विहरति वेणुवने कलन्दकनिवापे । राजगृहे नगरद्वारे ऽन्यतरो गृहपतिराढ्यो महाधनो महाभोगो विस्तीर्णविशालपरिग्रहो वैश्रवणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी । स च मत्सरी कुटुकुञ्चक आगृहीतपरिष्कारः काकायापि बलिं न प्रदातुं व्यवस्यति । स (2) श्रमणब्राह्मणवनीपकान्दृष्ट्वा चित्तं प्रदूषयति स्वके चोद्याने (3) महान्हिरण्यसुवर्णस्य राशिः स्थापितः ॥ स तत्र (4) गृद्धो ऽध्यवसितः कालगतः ॥

---

1) In MS this uddāna of the sixth varga precedes: उद्दानं कृष्णसर्पश्च चन्द्रश्च माला श्रीमतिरेव च ‹।› वस्त्रं शुकश्च दूतश्च महिषः पोषधश्चैव [query पोषधश्च वै?] मान्सो भवति पश्चिमः ॥

2) MS श्रवण°.

3) MS महाहि°.

4) Ex conject.; MS वृद्धोध्यावसितः. This corruption must have existed already in the manuscript used by the author of the Kalpadrumāv. For K., f. 24 a 6, the parallel passage runs thus: ततः काले स वृद्धोभूद्रोगी कालं गतोपि हि, where रोगी has been added by the paraphrast himself. My correction is confirmed by the Tibetan, cp. Feer p. 198, n. 2.

स कालं कृत्वा तस्यैवोपरि आशीविष उत्पन्नो महान्कृष्णसर्पो[1] दृष्टिविषः। अथ ये तदुद्यानं जनकायाः प्रविशन्ति तान्प्रेक्षितमात्रेण जीविताद्व्यपरोपयति। एष च शब्दो राजगृहे नगरे समन्ततो विसृतः[2] ये अमुकमुद्यानं प्रविशन्ति सर्वे ते निधनमुपयान्तीति। जनकायेन च राज्ञे बिम्बिसाराय निवेदितम्॥ अथ राज्ञो बिम्बिसारस्यैतदभवत्। कस्तं 5 शक्यति[3] विनेतुमन्यत्र बुद्धाद्भगवत इति॥

अथ राजा बिम्बिसारो महाजनकायपरिवृतो येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्ते निषण्णः। एकान्तनिषण्णं राजानं बिम्बिसारं भगवान्धर्म्यया[4] कथया संदर्शयति समादापयति समुत्तेजयति संप्रहर्षयति। अनेकपर्यायेण धर्म्यया कथया संदर्श्य समादाप्य समुत्तेज्य संप्रहर्ष्य तूष्णीम्। अथ राजा बिम्बिसार 10 उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमिदमवोचत्। इह भगवन्राजगृहे नगरेऽमुष्मिन्नुद्याने महानाशीविषः कृष्णसर्पो दृष्टिविषः प्रतिवसति महाजनविप्रघातं करोति साधु भगवांस्तं विनयेदनुकम्पामुपादायेति। अधिवासयति भगवान्राज्ञो बिम्बिसारस्य तूष्णीभावेन। अथ राजा बिम्बिसारो भगवतस्तूष्णीभावेनाधिवासनां विदित्वा भगवतः पादौ शिरसा वन्दि- 15 त्वोत्थायासनात्प्रक्रान्तः॥

अथ भगवांस्तस्या[5] एव रात्रेरत्ययात्पूर्वाह्णे निवास्य पात्रचीवरमादाय येन तदु-

---

1) B °सपा (the stroke of the *ā* looks as if effaced), D °सर्प्पा, C °सर्पा, P °सर्प्प.

2) Ex conject., cp. K. (f. 24 a 7) विससारैष वृत्तान्तो राजगृहे समन्ततः; MS निसृतः.

3) In Buddhistic Sanskrit शक्यति = शक्नोति is not unfrequent. See f. i. Divy. 111, 10 *na çakyāmi sthito gantum.* 358, 10 *yadi moktuṃ na çakyāmi kaṇṭhāt çvakuṇapaṃ svayam.* 303, 30. 398, 13. 486, 11.

4) MS धर्मया कथया (D धर्म्मकथया).

5) Ex conject.; MS तस्यामेव रात्रौ अत्यया°. The original reading is easily elicited from K. (f. 24 b 7 foll.), where it is hidden under a slight corruption, the Ms. having अथ श्रीभगवान्बुद्धः वद्रात्रभ्यया॑न्मुनिः, which is to be corrected into °द्धः तद्रात्रेरत्ययान्मुनिः.

ध्यानं तेनोपसंक्रान्तः। उपसंक्रम्य भगवता सूर्यसहस्रातिरेकप्रभाः कनकवर्णा मरीचय
उत्सृष्टा यैस्तदुद्यानं सर्वमवभासितं[1] कल्पसहस्रपरिभाविताश्च मैत्र्यंशव उत्सृष्टा यैरस्य
स्पृष्टमात्रं शरीरं प्रह्लादितम्[2]॥ अथ स आशीविष इतश्चामुतश्च प्रेक्षितुमारब्धः कस्य
प्रभावान्मम शरीरं प्रह्लादितमिति। अथासौ ददर्श बुद्धं भगवन्तं द्वात्रिंशता महापुरुष-
लक्षणैः समलङ्कृतमशीत्या चानुव्यञ्जनैर्विराजितगात्रं व्यामप्रभालङ्कृतं सूर्यसहस्रातिरे- 5
कप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकं सहदर्शनाच्चानेन भगवतो ऽन्तिके चित्तं प्रसा-
दितं प्रसन्नचित्तस्य च भगवता तन्मध्या गत्यास्तन्मध्या[3] योन्या धर्मो देशितः। भद्रमुख
त्वयैवैतद्द्रव्यमुपार्जितं येन त्वमाशीविषगतिमुपपादितः[4] साधु ममान्तिके चित्तं प्रसादया-
स्माच्च निधानाच्चित्तं विरागय मा हैवेतः कालं कृत्वा नरकेषूपपत्स्यस इति। यदास्य
भगवता ज्ञातिः स्मारिता तदा रोदितुं प्रवृत्तः॥ अथ भगवांस्तस्यां वेलायां गाथे भाषते। 10

इदानीं किं करिष्यामि तिर्यग्योनिगतस्य ते।
अक्षणप्रतिपन्नस्य किं रोदिषि निरर्थकम्॥
साधु प्रसाद्यतां चित्तं महाकारुणिके जिने।
तिर्यग्योनिं विराग्येह ततः स्वर्गं गमिष्यसीति॥

यावद्भगवता पात्रे प्रक्षिप्य वेणुवनं नीतः॥ अत्रान्तरे राज्ञा मागधेन जनकायेन च श्रुतं 15
यथासावाशीविषो भगवता विनीत इति[5]॥

अथासावाशीविषः स्वाश्रयं जुगुप्समानो[6] ऽनाहारतां प्रतिपन्नः। भगवतो ऽन्तिके

---

1) Ex conject.; MS सर्वमभिभा°. Cp. *supra* p. 17, 10 and 31, 9.

2) MS °दितः।.

3) Ex conject; MS गत्यातन्मध्या. Cp. a similar passage in avad. nr. 58.

4) Ex conject.; MS °गतिउप°.

5) In Kalpadrumāvadānamālā Bimbisāra, after hearing the taming of the serpent, abounds in praise of the Buddha. Perhaps some phrase of that purport had originally its place also in our text, which is here somewhat abrupt, indeed.

6) I have added the avagraha, as often. K. f. 27 b 1 निराहारो मृतः.

चित्तं प्रसाद्य कालगतः प्रणीतेषु देवेषु त्रयस्त्रिंशेषूपपन्नः ॥ धर्मता खलु देवपुत्रस्य वा [49 a] देवकन्याया वाचिरोपसंपन्नस्य त्रीणि चित्तान्युत्पद्यन्ते[1] कुतश्च्युतः कुत्रोपपन्नः[2] केन कर्मणेति । पश्यत्याशीविषेभ्यश्च्युतः प्रणीतेषु देवेषु त्रयस्त्रिंशेषूपपन्नो भगवतोऽन्तिके चित्तं प्रसाद्येति । अथाशीविषपूर्वकस्य देवपुत्रस्यैतदभवत् । न मम प्रतिरूपं
5 स्याद्यदहं पर्युषितपरिवासो भगवन्तं दर्शनायोपसंक्रामेयं यन्न्वहमपर्युषितपरिवास एव भगवन्तं दर्शनायोपसंक्रामेयमिति । अथाशीविषपूर्वको देवपुत्रश्चलविमलकुण्डलधरो हारार्धहारविराजितगात्रो मणिरत्नचित्रचूडः कुङ्कुमतमालपत्रस्पृक्कादिसंसृष्टगात्रस्तस्यामेव रात्रौ दिव्यानामुत्पलपद्मकुमुदपुण्डरीकमन्दारकाणां[3] पुष्पाणामुत्सङ्गं पूरयित्वा सर्ववेणुवनं कलन्दकनिवापमुदारेणावभासेनावभास्य भगवन्तं पुष्पैरवकीर्य भगवतः पुर-
10 स्तान्निषण्णो धर्मश्रवणाय । अथ भगवानाशीविषपूर्वकस्य देवपुत्रस्याशयानुशयं धातुं प्रकृतिं च ज्ञात्वा तादृशीं[4] चतुरार्यसत्यसंप्रतिवेधिकीं[5] धर्मदेशनां कृतवान्यां श्रुत्वाशीविषपूर्वकेण देवपुत्रेण विंशतिशिखरसमुद्गतं सत्कायदृष्टिशैलं[6] ज्ञानवज्रेण भित्त्वा स्रोतआपत्तिफलं प्राप्तम् । स दृष्टसत्यस्त्रिरुदानमुदानयति । इदमस्माकं भदन्त न मात्रा कृतं न पित्रा न राज्ञा न देवताभिर्नेष्टेन स्वजनबन्धुवर्गेण न पूर्वप्रेतैर्न श्रमणब्राह्मणैर्यद्भगवता-[7]
15 स्माकं कृतम् । उच्छोषिता रुधिराश्रुसमुद्रा लङ्घिता अस्थिपर्वताः[8] पिहितान्यपायद्वाराणि विवृतानि स्वर्गमोक्षद्वाराणि प्रतिष्ठापिताः[8] स्मो देवमनुष्येषु । आह च ।

---

1) MS °त्पद्यते.

2) MS कुतोपप°.

3) Sic B, D मन्दारवानां, I suppose the original reading to have been मन्दारकादीनां, cp. *supra*, p. 259, 12.

4) MS तीदृशी(D तादृशी).

5) Anusvāra wanting in MS.

6) B सवाप°, D corr.

7) MS श्रवण°.

8) Visarga wanting in MS.

तवानुभावात्पिहितः सुघोरो ह्यपायमार्गो बहुदोषयुक्तः।
अपावृता[1] स्वर्गगतिः सुपुण्या[2] निर्वाणमार्गश्च मयोपलब्धः॥
त्वदाश्रयाच्चाप्तमपेतदोषं मयाद्य[3] शुद्धं सुविशुद्ध चक्षुः।
प्राप्तं च शान्तं[4] पदमार्यकान्तं तीर्णश्च दुःखार्णवपारमस्मि[5]॥
नरवरेन्द्र नरामरपूजित विगतजन्मजरामरणामय। 5
भवसहस्रसुदुर्लभदर्शन सफलमद्य मुने तव दर्शनमिति॥
अवनम्य ततः प्रलम्बहारः चरणौ द्वावभिवन्द्य जातहर्षः।
परिगम्य च दक्षिणं जितारिं सुरलोकाभिमुखो दिवं जगाम॥

अथाशीविषपूर्वको देवपुत्रो वणिगिव लब्धलाभः संपन्नसस्य इव कर्षकः शूर इव विजितसंग्रामः सर्वरोगपरिमुक्त इवातुरो यया विभूत्या भगवत्सकाशमुपगतस्तयैव वि- 10 भूत्या तस्यामेव रात्रौ राज्ञो बिम्बिसारस्य सकाशमुपसंक्रम्य सर्वं राजकुलमुदारेणावभासेनावभास्य राजानं प्रबोध्य एतदुवाच। महाराज उत्तिष्ठ २[6] किं स्वपिषीति॥ अथ राजा प्रबुद्धः पश्यति तमुदारमवभासं तं च देवपुत्रम्। दृष्ट्वा प्रीतमनास्तं[7] पप्रच्छ कस्त्वमिति॥ स कथयत्यहं स दृष्ट्याशीविषो[8] भगवता तत्रोद्याने[9] विनीतः कालं कृत्वा प्रणीतेषु देवेषु त्रयस्त्रिंशेषूपपन्नः भगवन्तश्च मे पर्युपास्य सत्यदर्शनं[10] कृतम्। स इदानीं प्रबोध- 15

1) MS °वृताःस्व°.

2) MS °पुण्यो.

3) MS मय्यद्य.

4) Anusvāra wanting in MS.

5) MS °पारमस्मिन्नरवरेन्द्र.

6) So MS, D उत्तिष्ठ उत्तिष्ठ किं.

7) Ex conject.; MS प्रीतिमना°. Cp. *supra*, p. 210, 4 and *Wiener Ztschr.*, XVI, 344.

8) MS दृष्ट्या° (D दृष्ट्वा!). It seems that *dṛṣṭyāçīviṣaḥ* is equivalent to *dṛṣṭiviṣa āçīviṣaḥ*, and means 'whose eyes have the effect of poisonous teeth'.

9) Ex conject.; MS ततोद्याने.

10) B °दर्शन, D corr.

यामि । गत्वा तदुद्यानममुकस्मात्प्रदेशान्महानिधानमुत्पाद्य[1] [2] मम नाम्ना भगवन्तं सश्रावकसङ्घं भोजय दक्षिणादेशनां च कारयेति । अधिवासयति राजा बिम्बिसारो देवपुत्रस्य तूष्णीभावेन । अथाशीविषपूर्वको देवपुत्रो राज्ञस्तूष्णीभावेनाधिवासनां विदित्वा तत्रैवान्तर्हितः ॥

5 अथ स राजा बिम्बिसारस्तस्यामेव[3] रात्र्यां मागधानां पौरजानपदानां निवेद्य तदुद्यानं गत्वा निधानमुत्पाद्य[2] भगवन्तं सश्रावकसङ्घं त्रैमास्यं भोजयित्वा भगवन्तं पप्रच्छ । कानि भगवन्नाशीविषपूर्वकेण देवपुत्रेण कर्माणि कृतानि येनाशीविषेषूपपन्नः कानि कर्माणि कृतानि येन देवेषूपपन्नः सत्यदर्शनञ्च कृतमिति ॥ भगवानाह । यत्तेनातिमात्रो[4] लोभ उत्पादितः श्रमणब्राह्मणवनीपकानां चान्तिके चित्तं प्रदूषितं तेनाशीविषेषूपपन्नः ।

10 यन्ममान्तिके [49 b] चित्तं प्रसादितं तेन देवेषूपपन्नः । काश्यपे च सम्यक्संबुद्धे उपासकभूतेन शरणगमनशिक्षापदग्रहणं कृतं तेन सत्यदर्शनं कृतमिति । तस्मात्तर्हि महाराज मात्सर्यप्रहाणाय [5] व्यायन्तव्यमेते दोषा न भविष्यन्ति ये आशीविषस्य एष एव गुणगणो भविष्यति यस्तस्यैव देवपुत्रस्येत्येवं ते महाराज शिक्षितव्यम् ॥ अथ राजा बिम्बिसारो भगवतो भाषितमानन्द्यानुमोद्य भगवतः पादौ शिरसा वन्दित्वोत्थायासनात्प्रक्रान्तः ॥

15 इदमवोचद्भगवानात्तमनसस्ते भिक्षवो ऽन्ये च देवासुरगरुडकिन्नरमहोरगादयो भगवतो भाषितमभ्यनन्दन् ॥

---

1) MS °कस्मान्प्रदे°.

2) In B °पाद्य is somewhat indistinct, the copyist of P doubtless read it as °पाद्य. Cp. *supra* p. 267, n. 4.

3) B °मेवं, D corr.

4) MS यत्तेनाधिमात्रो.

5) MS व्यायन्तव्यं एते.

## चन्द्र इति ५२ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्डदस्यारामे । श्रावस्त्यामन्यतमः कर्षको ब्राह्मणः । तेन सदृशात्कुलात्कलत्रमानीतम् । स तया सार्धं क्रीडति रमते परिचारयति । तस्य क्रीडतो रममाणस्य परिचारयतः पत्नी आपन्नसत्त्वा संवृत्ता । साष्टानां वा नवानां वा मासानामत्ययात्प्रसूता । दारको जातो[1] ऽभिरूपो दर्शनीयः प्रासादिकः सर्वजनमनोनयनप्रह्लादनकरः । तस्य ज्ञातौ ज्ञातिमहं कृत्वा नामधेयं व्यवस्थाप्यते किं भवतु दारकस्य नामेति । ज्ञातय ऊचुः । यस्मादस्य जातौ सर्वलोकानां[2] नयनप्रह्लादनं[3] तस्माद्भवतु अस्य दारकस्य चन्द्र इति[4] नामेति । स च तेन ब्राह्मणेन कृच्छ्रेण लब्धो न चास्यान्यः पुत्रो न दुहिता ॥

स उन्नीतो वर्धितो महान्संवृत्तः । स सर्वलोकप्रह्लादनकरत्वाद्ब्राह्मणगृहपतिभिः

---

1) MS जातः अभि°.

2) In B the two akṣaras after सर्वलो are hidden under a blur. I have adopted the reading of D, which represents probably B's original one.

3) Ex conject.; MS नयनप्रह्लादितस्तस्मा°, which is quite meaningless. One might also suppose नयनप्रह्लादनं <कृतं>. The parallel passage in Kalpadrumāv. (f. 114 b 7) is: यस्माद्दारको ऽयं तवात्मजः । लोकचक्षुर्मनोह्लादकरणाद्धि मनोहरः ॥.

4) Ex conject.; MS नामाः ।.

कृत्स्नं नगरमन्वाहिण्डयत[1] इति स ब्राह्मणास्तस्मिन्भूयस्या मात्रया ऽध्यवसितो[2] नित्यमेव क्रमस्थानशय्यासु संरक्षणपरो ऽवतिष्ठते ॥ तस्य च ब्राह्मणस्यानाथपिण्डदसमीपे गृहम् । अथ स ब्राह्मणदारको ऽनाथपिण्डदसंसर्गाज्जेतवनं[3] गत्वा बुद्धवचनं शृणोति । तेन भगवच्छासने प्रसादः[4] प्रतिलब्धः ॥ स चाल्पायुष्कः कालं कृत्वा प्रणीतेषु देवेषु त्रयस्त्रिंशेषू-
5 पपन्नः ॥

धर्मता खलु देवपुत्रस्य वा देवकन्याया वाचिरोपपन्नस्य त्रीणि चित्तान्युत्पद्यन्ते कुतश्च्युतः कुत्रोपपन्नश्च केन कर्मणेति । पश्यति मनुष्येभ्यश्च्युतः प्रणीतेषु देवेषु त्रयस्त्रिंशेषूपपन्नो भगवतो ऽन्तिके चित्तमभिप्रसाद्येति । अथ[5] ब्राह्मणपूर्विणो देवपुत्रस्यैतदभवत् । न मम प्रतिरूपं स्याद्यदहं पर्युषितपरिवासो भगवन्तं दर्शनायोपसंक्रामेयं[6] यन्न्वहमपर्युषितप-
10 रिवास एव भगवन्तं दर्शनायोपसंक्रामेयमिति । अथ ब्राह्मणपूर्वको[7] देवपुत्रश्चलविमलकुण्डलधरो हारार्धहारविराजितगात्रो मणिरत्नविचित्रचूडः कुङ्कुमतमालपत्रस्पृक्कादिसंसृष्टगात्रस्तस्यामेव रात्रौ दिव्यानामुत्पलकुमुदपुण्डरीकमन्दारकाणां[8] पुष्पाणामुत्सङ्गं पूरयित्वा सर्वजेतवनमुदारेणावभासेनावभास्य भगवन्तं पुष्पैरवकीर्य भगवतः पुरस्तान्निषण्णो धर्मश्रवणाय । अथ भगवान्ब्राह्मणपूर्वकस्य[7] देवपुत्रस्याशयानुशयं[9] धातुं प्रकृतिं च
15 ज्ञात्वा तादृशीं[9] चतुरार्यसत्यसंप्रतिवेधिकीं धर्मदेशनां कृतवान्यां श्रुत्वा ब्राह्मणपूर्वकेण[7] देवपुत्रेण विंशतिशिखरसमुद्गतं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रोतआपत्तिफलं

---

1) Ex conject.; MS °हिण्ड्येत इति.

2) The avagraha is in MS.

3) Ex conject.; MS °संसर्गेजेत°.

4) MS प्रसादप्रति°.

5) MS has between अथ and ब्राह्मण° the akṣara स, which is here superfluous and unmeaning.

6) MS क्रमेयं.

7) Ex conject.; MSS have thrice °पूर्वि (or पूर्व्वि)क°, once (p. 297,13) °पूर्वक. Cp. *supra*, p. 292, 4 and 6 आशीविषपूर्वक.

8) Cp. *supra*, p. 282 n. 5 and p. 259, 12.

9) Anusvāra wanting in MS.

प्राप्तम्। स दृष्टसत्यस्त्रिरुदानमुदानयति[1]।[2] इदमस्माकं भदन्त न मात्रा कृतं न पित्रा न राज्ञा न देवताभिर्नेष्टेन स्वजनबन्धुवर्गेण[3] न पूर्वप्रेतैर्न श्रमणब्राह्मणैर्यद्भगवतास्माकं कृतम्। उच्छोषिता रुधिराश्रुसमुद्रा लङ्घिता अ[50 a]स्थिपर्वताः पिहितान्यपायद्वाराणि विवृतानि स्वर्गमोक्षद्वाराणि प्रतिष्ठापिताः[4] स्मो देवमनुष्येषु। आह च।

तवानुभावात्पिहितः सुघोरो ह्यपायमार्गो बहुदोषयुक्तः। 5
अपावृता स्वर्गगतिः सुपुण्या निर्वाणमार्गश्च मयोपलब्धः॥
त्वदाश्रयाच्चाप्तमपेतदोषं मयाद्य शुद्धं सुविशुद्ध चक्षुः।
प्राप्तं च शान्तं पदमार्यकान्तं तीर्णश्च दुःखार्णवपारमस्मि॥
नरवरेन्द्र नरामरपूजित विगतजन्मजरामरणामय।
भवसहस्रसुदुर्लभदर्शन सफलमद्य मुने तव दर्शनमिति॥ 10

अवनम्य ततः प्रलम्बहारश्चरणौ द्वावभिवन्द्य जातहर्षः।
परिगम्य च दक्षिणं जितारिं सुरलोकाभिमुखो दिवं जगाम॥

अथ ब्राह्मणपूर्वको देवपुत्रो वणिगिव लब्धलाभः सस्यसंपन्न इव[5] कर्षकः शूर इव जितसंग्रामः सर्वरोगपरिमुक्त इवातुरो यया हि विभूत्या भगवत्सकाशमागतस्तयैव विभूत्या स्वभवनं गतः॥ 15

भिक्षवः पूर्वरात्रापररात्रं जागरिकायोगमनुयुक्ता विहरन्ति। तैर्दृष्टो[6] भगवतो

---

1) MS दृष्टसत्व°.

2) MS °नयन्ति.

3) In B at the bottom of the page न has wrongly been added to be inserted before स्वजन°, in P it has been put into the text; in C it has become र; D has °र्नेष्टेन बन्धुस्वजनबन्धु°.

4) Visarga wanting in MS. — B °पितास्मो (स्मि written above).

5) B इवा, D corr.

6) MS तैर्दृश्यो (D तैः पश्यो!). Cp. *supra*, p. 273, 7.

ऽन्तिके उदारो ऽवभासः । यं दृष्ट्वा संदिग्धा भगवन्तं पप्रच्छुः । किं भगवन्नस्यां रात्र्यां भगवन्तं दर्शनाय ब्रह्मा सहाम्पतिः शक्रो देवेन्द्रश्चत्वारो लोकपाला उपसंक्रान्ताः ॥ भगवानाह । न भिक्षवो ब्रह्मा सहाम्पतिर्न शक्रो देवेन्द्रो नापि चत्वारो लोकपाला मां दर्शनायोपसंक्रान्ता अपि यो ऽसावेकपुत्रको ऽस्य ब्राह्मणस्य पुत्रो ऽल्पायुष्कः कालगतः <स> ममान्तिके चित्तमभिप्रसाद्य प्रणीतेषु देवेषु त्रयस्त्रिंशेषूपपन्नः । सो ऽस्यां रात्रौ मत्सकाशमुपसंक्रान्तस्तस्य मया धर्मो देशितो दृष्टसत्यश्च स्वभवनं गतः ॥

अत्र चान्तरे स ब्राह्मणस्तमेकपुत्रकमिष्टं कान्तं प्रियं मनापं[1] ज्ञातमप्रतिकूलं श्मशाने निर्हृत्योत्सङ्गे कृत्वा करुणाकरुणं विलपन्कथयति हा पुत्रक हा एकपुत्रकेति । ज्ञातयः सुबह्वपि शोकविनोदनं[2] कुर्वाणा न शक्नुवन्त्युत्थापयितुम् । स काककुररश्वसृगालगृध्रपरिवृतः प्रकीर्णकेशीभिः स्त्रीभिरनुगतो महाजनकायेन चोद्वीक्ष्यमाणस्तिष्ठति ॥ ततो ऽस्य पुत्रो देवभूतः पितरं परिदेवमानं दृष्ट्वा कारुण्यादाकम्पितहृदयः पितुः शोकविनोदनार्थमृषिवेषधारिणमात्मानमभिनिर्माय श्मशानसमीपे पञ्चतपा[3]वस्थितः ॥ अथ स ब्राह्मणस्तमृषिं पप्रच्छ । भो महर्षे अनेन तपसा किं प्रार्थयस इति ॥ ऋषिराह । राज्यं प्रार्थये[4] सौवर्णश्च मे रथः स्यान्नानारत्नविचित्रः सूर्यचन्द्रमसौ रथचक्रे स्यातां चत्वारश्च लोकपालाः पुरस्तान्नयेयुः सो ऽहं तं रथमभिरुह्येमां महापृथिवीमन्वाहिण्डेयेति[5] ॥ ब्राह्मणः कथयति ।

---

1) MS प्रयमनापं (D प्रेमनापं).

2) B °विनोदनकु°, likewise C; D शोकदनोनकु°, P °विनोदेनकु°.

3) Irregular sandhi, cp. *supra*, p. 20 n. 6.

4) MS प्रार्थय.

5) The Kalpadrumāvadāna paraphrases this vratābhiprāya in this manner:

ब्राह्मण प्रार्थये राज्यं सौवर्णश्च(ms. °र्णास्य) रथो मम ।
नानारत्नविचित्रः स्यात्सपताकाध्वजान्वितः ॥

यदि वर्षशतं पूर्णं तपिष्यसि[1] निरन्तरम्।

न लप्स्यसे ऽपि[2] तत्स्थानं[3] परमतपसापि ह्रीति॥

ऋषिः कथयति। त्वं च पुनरनेन मृतकुणपेनाशुचिना परमदुर्गन्धेन शवेन[4] काष्ठभूतेन किं प्रार्थयस इति॥ ब्राह्मणः प्राह। प्रियो मे एकपुत्रकः कालगतस्तं प्रार्थय इति॥ ऋषिराह। 5

यदि वर्षशतं पूर्णं रोदिष्यसि निरन्तरम्।

न लप्स्यसे ऽपि तं पुत्रं रुदितेन हि किं तवेति[5]॥

ततस्तस्य ब्राह्मणस्य भूतमृषिवचनमवगत्य[6] प्रसादो जातः प्रसादजातश्चाह। कस्त्व-

---

रथचक्रेऽपि तौ स्यातां सूर्यचन्द्रमसौ मम।

चत्वारो लोकपालास्ते भवेयू(ms. °यु) रथवाहकाः॥

सो ऽहं तं रथमारुह्य सर्वरत्नसमन्वितः।

सर्वामिमां महापृथ्वीमन्वाहिण्डेय सर्वदा॥ (K., f. 120 b 7—9).

1) Ex conject.; MS तपस्तप्स्यसि निरन्तरं disturbs the metre. My correction is based on the symmetrical agreement with रोदिष्यसि, the corresponding word in the second pāda of the counterpart of this çloka.

2) In B पि is somewhat difficult to be read, being put instead of a wrong akṣara (भ or स) which it is intended to correct. The copyists taking it for हि transcribed it so. In the corresponding passage a few lines lower (l. 7), there can be no doubt about B having पि.

3) Ex conject.; MS तंस्थानं.

4) B (somewhat indistinct) शयेन or शवेन, C शयन, D शपेन, P शयेन.

5) Ex conject.; MS किं तथेति, cp. Feer, p. 204, 29. My correction is supported by the Tibetan translation: ཁྱོད་ནི་ངུས་ཀྱང་ཅི་ལ་ཕན་॥

6) Ex conject.; MS भूतं॥ ऋषिवचनमिवगत्वा, which is plain nonsense. Perhaps *avagatvā* is here the true form. Yet, since in the Avadānaçataka absolutives in *-tvā* of compound verbs are excessively rare, (e. g. *supra* p. 222, 6), I have preferred *avagatya*. Here, too, the Tibetan translation དྲང་སྲོང་གི་ཚིག་བདེན་ནོ་སྙམ་ནས་ seems to favour the correction. As to *bhūtam*, which is rendered by Tibetan བདེན་ 'true', it is here a synonym of *satya*.

मिति ॥ तत ऋषिस्तं वेषमन्तर्धाप्य स्ववेषेण स्थित्वा पितरमाह । अहं ते स एकपुत्रको भगवतो ऽन्तिके चित्तं प्रसाद्य कालगतः प्रणीतेषु देवेषु त्रयस्त्रिंशेषूपपन्नस्तव शोकविनोदनार्थमिहागत एहि त्वं तात बुद्धं भगवन्तं शरणं गच्छ अप्येव त्वमपि संसारसमतिक्रामं[1] कुर्या इति ॥

5 अथ स ब्राह्मणो मृतशरीरमपहाय येन भगवांस्तेनोपसंक्रान्तः । उपसंक्रम्य भगवतः पादाभिवन्दनं कृत्वा पुरस्तान्निषण्णो धर्मश्रवणाय । तस्मै भगवता चतुरार्यसत्यसंप्रतिवेधिकी धर्मदेशना कृता यां श्रुत्वा तेन ब्राह्मणेन विंशतिशिखरसमुद्गतं[2] सत्कायदृष्टिशैलं ज्ञानवज्रेण[3] भित्त्वा स्रोत[50b]आपत्तिफलं प्राप्तम् । स लब्धोदयो लब्धलाभो भगवतः पादौ शिरसा वन्दित्वा भगवन्तं त्रिः प्रदक्षिणीकृत्य प्रक्रान्तः ॥

10 ततो भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः । पश्य भगवन्यावदनेन देवपुत्रेणायं पिता शोकं विनोद्य सत्यदर्शने प्रतिष्ठापित इति ॥ भगवानाह । किमत्र भिक्षव आश्चर्यं यदनेनैतर्हि दृष्टसत्येन पिता परित्रातः । यत्त्वनेनातीते ऽध्वनि[4] पृथग्जनेन सता यावच्चिरपि पिता जीविताद्व्यवरोप्यमाणः परित्रातः तच्छृणुत साधु च[5] सुष्ठु च मनसि कुरुत भाषिष्ये ।

15 भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि वाराणस्यां नगर्यामन्यतमः पारदारिकः । तस्य पुत्रो भद्रः कल्याणाशयो[6] ऽतीव लोकस्याभिमतः ॥ यावदस्य पित्रा चौर्यं कृतम् । ततो राज्ञा वध्यतामित्याज्ञप्तम् । ततः पुत्रेण यावच्चिरपि राजानं विज्ञाप्य इष्टेन जीवितेनाच्छादितः ॥

---

1) B संसारसमति°, D corr. I suppose *samatikrāmam* must be corrected into *samatikramam* according to grammar, and cp. Divy. 164, 13.

2) Anusvāra wanting in MS.

3) B ज्ञानवज्रेन, DP corr.

4) MS यत्त्व°.

5) D adds साधु च.

6) MS °शयः ॥ अ° (D °शयअ°).

भगवानाह् । किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन पारदारिक आसीदयं स ब्राह्मणः पारदारिकपुत्रो ऽयमेव ब्राह्मणदारकः ॥

भिक्षव ऊचुः । किं कर्म कृतं (1) येन पितापुत्राभ्यां सत्यदर्शनं कृतमिति ॥ भगवानाह् । काश्यपे सम्यक्संबुद्धे उपासकभूताभ्यां शरणागमनशिक्षापदग्रहणं कृतं तेनेदानीं सत्यदर्शनं कृतम् । तस्मात्तर्हि भिक्षवस्सर्व(2)संस्कारा अनित्याः सर्वधर्मा अनात्मानः शान्तं 5 निर्वाणमिति निर्वाणे यत्नः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो ऽन्ये च देवासुरकिन्नरगरुडमहोरगादयो भगवतो भाषितमभ्यनन्दन् ॥

---

1) Ex conject.; B कृतंनपितापुत्राभ्यां सत्य°, the 3d akṣara न is signed by two small vertical strokes, referring to an akṣara ते, it seems, on the upper margin, but it ought to be ये; for येन is the proper word here. DP कृंतेतनपिता°, C कृतेनापिता°.

2) B °वस्सर्वसंस्का°, D corr.

## साल इति ५३ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिस्सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्डदस्यारामे । तेन खलु पुनः समयेन श्रावस्त्यां सालभञ्जिका नाम पर्व[1] प्रत्युपस्थितम् । तत्रानेकानि प्राणिशतसहस्राणि संनिपत्य सालपुष्पाण्यादाय क्रीडन्ति रमन्ते परिचा‹र›यन्ति[2] ॥ यावदन्यतरा श्रेष्ठिदारिका सा‹ल›[3]पुष्पाण्यादाय श्रावस्तीं प्रविशति भगवांश्च भिक्षुगणपरिवृतः श्रावस्तीं पिण्डाय चरित्वा निर्गच्छति । ददर्श सा दारिका बुद्धं भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः समलङ्कृतमशीत्या चानुव्यञ्जनैर्विराजितगात्रं व्यामप्रभा[4]लङ्कृतं सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकं दृष्ट्वा च पुनः प्रसादजा-

---

1) Ex conject.; B has, as it seems to me, पर्वनं प्रत्यु°, but in PC it is written पर्वतं, in D पर्वत. The paraphrast of Ratnāvadānamālā must have read likewise पर्वतं, for such is his description:

श्रावस्तेयास्त(ms. त्त)दानेके दारिका दारकाश्च ते ।
कुसुमान्याचितुं (sic) सालभञ्जिकाख्यं गिरिं ययुः ॥ (R., f. 49 a 1).

But it is plain that *sālabhañjikā* must be the name of a festival, not of a mountain, and पर्व means 'festival', cp. *supra* p. 121, 10 and Divy. 307, 20 (*ibid.* 87, 26 the synonymous *parvaṇī*); Mhv. I, 232, 10 *parvaṃ* is a synonym of *utsava*. The Dvāviṃçāvadāna, indeed, has पर्व in its corresponding passage.

2) D and P add the akṣara left out in B.

3) P wrongly supplies सार°; D साल.

4) MS व्योम°.

तया भगवान्सालपुष्पैरवकीर्णः । ततः प्रदक्षिणीकृत्य प्रतिनिवृत्ता भूयो ऽन्यानि गृह-स्यार्थे आनेष्यामीति ॥ यावदसौ सालवृक्षमधिरूढा पतिता भगवतः कृतोपस्थाना काल-गता प्रणीतेषु देवेषु त्रयस्त्रिंशेषूपपन्ना ॥

यावत्सालपुष्पविमानालङ्कृता देवसमितिमुपसंक्रान्ता तस्मिंश्च काले शक्रो देवेन्द्र-स्सुधर्मायां[(1)] देवसभायां देवगणस्य मध्ये बुद्धस्य वर्णं भाषते धर्मस्य सङ्घस्य च वर्णं[(2)] भाषते । ददर्श शक्रो देवेन्द्रस्तां देवकन्यां सालपुष्पविमानालङ्कृतामुत्तप्तकुशलमूलां दृष्ट्वा च गाथया प्रत्यभाषत ।

गात्रं केन विमृष्टकाञ्चननिभं पद्मोत्पलाभं तव ।
गात्रश्रीरतुला[(3)] कृतेयमिह ते देहात्प्रभा निःसृता ।
वक्त्रं केन विबुद्धपद्मसदृशं चामीकराभं तव ।
ब्रूहि त्वं मम देवते फलमिदं यत्कर्मजं भुज्यते ॥

देवता प्राह ।

सश्रावको नरादित्य आकीर्णो वरलक्षणैः ।
तत्कर्म कुशलं कृत्वा राजते[(4)] ऽभ्यधिकं मम ।
जलजेन्दु वि[51a]शुद्धाभं[(5)] वदनं[(6)] कान्तदर्शनम् ॥

शक्रः प्राह ।

अहो गुणमयं क्षेत्रं सर्वदोषविवर्जितम् ।
यत्र न्यस्तं त्वया बीजमिष्टं स्वर्गोपपत्तये ॥

---

1) Ex conject., cp. Divy. 220, 12, Jtkm. 33, 2; MS °धर्माणां (C °धर्माणा).

2) B वर्षं, D corr.

3) Ex conject.; MS गात्रशी°.

4) MS राज्यते.

5) Anusvāra wanting in MS.

6) Ex conject.; MS वदनैका°.

को नार्चयेत्प्रवरकाञ्चनराशिगौरम्।
बुद्धं विशुद्धकमलायतपत्त्रनेत्रम्।
यत्राधिकारजनितानि वराङ्गनानाम्।
रेजुर्मुखानि कमलायतलोचनानि ॥

5 धर्मता खलु देवपुत्रस्य वा[1] देवकन्याया वा[2] ऽचिरोपपन्नस्य त्रीणि चित्तान्युत्पद्यन्ते कुतश्च्युतः कुत्रोपपन्नः केन कर्मणेति । सा पश्यति मनुष्येभ्यश्च्युता प्रणीतेषु देवेषु त्रयस्त्रिंशेषूपपन्ना भगवतो ऽन्तिके चित्तं प्रसाद्येति । अथ तस्या देवकन्याया एतदभवत् । न मम प्रतिरूपं स्याद्यदहं पर्युषितपरिवासा भगवन्तं दर्शनायोपसंक्रामेयं यन्न्वहमपर्युषितपरिवासा एव भगवन्तं दर्शनायोपसंक्रामेयमिति ॥ अथ सा देवकन्या चलविमलकुण्डलधरा 10 हारार्धहारविराजितगात्री मणिरत्नविचित्रचूडा कुङ्कुमतमालपत्रस्पृक्कादिसंसृष्टगात्री अनेकदेवताशतसहस्रपरिवृता तेनैव सालपुष्पविमानेन सह भगवत्सकाशमुपसंक्रान्ता । भगवन्तं पुष्पैरवकीर्य भगवतः पुरस्तान्निषण्णा धर्मश्रवणाय ॥ अथ भगवांस्तस्या देवताया आशयानुशयं[3] धातुं प्रकृतिं च ज्ञात्वा तादृशीं[3] चतुरार्यसत्यसंप्रतिवेधिकीं[3] धर्मदेशनां कृतवान्यां श्रुत्वा तया देवकन्यया विंशतिशिखरसमुद्गतं सत्कायदृष्टिशैलं ज्ञानवज्रेण[4] 15 भित्त्वा स्रोतआपत्तिफलं साक्षात्कृतम् ॥ सा दृष्टसत्या त्रिरुदानमुदानयति । इदमस्माकं भदन्त न मात्रा कृतं न पित्रा न देवताभिर्न राज्ञा नेष्टेन स्वजनबन्धुवर्गेण न पूर्वप्रेतैर्न श्रमणब्राह्मणैर्यद्भगवतास्माकं कृतम् । उच्छोषिता रुधिराश्रुसमुद्रा लङ्घिता अस्थिपर्वताः पिहितान्यपायद्वाराणि विवृतानि स्वर्गमोक्षद्वाराणि प्रतिष्ठापिताः[5] स्मो देवमनुष्येषु । आह च ।

---

1) MS वो.
2) Avagraha in MS.
3) Anusvāra wanting in MS.
4) B °वड्रेण, P corr.
5) MS °पितास्मो (D °स्मः).

तवानुभावात्पिहितः सुघोरो ह्यपायमार्गो बहुदोषयुक्तः ।
अपावृता स्वर्गगतिः सुपुण्या निर्वाणमार्गश्च मयोपलब्धः ॥
त्वदाश्रयाच्चाप्तमपेतदोषं मयाद्य शुद्धं सुविशुद्ध चक्षुः ।
प्राप्तं च शान्तं पदमार्यकान्तं तीर्णा[1] च दुःखार्णवपारमस्मि ॥
नरवरेन्द्र नरामरपूजित विगतजन्मजरामरणामय । 5
भवसहस्रसुदुर्लभदर्शन सफलमद्य मुने तव दर्शनमिति ॥
अवनम्य ततः प्रलम्बहारा चरणौ द्वावभिवन्द्य जातहर्षा ।
परिगम्य च दक्षिणं जितारिं सुरलोकाभिमुखी दिवं जगाम ॥

अथासौ देवकन्या वणिगिव लब्धलाभः सस्यसंपन्न इव कर्षकः शूर इव विजितसंग्रामः सर्वरोगपरिमुक्त इवातुरो यया विभूत्या भगवत्सकाशमागता तयैव विभूत्या स्वभवनं 10 गता ॥

भिक्षवः पूर्वरात्रापररात्रं जागरिकायोगमनुयुक्ता विहरन्ति । तैर्दृष्टो[2] भगवतो ऽन्तिके उदारो ऽवभासो यं दृष्ट्वा संदिग्धा भगवन्तं पप्रच्छुः । किं भदन्त इमां रात्रिं ब्रह्मा [3]सहाम्पतिः शक्रो देवेन्द्रश्चत्वारो लोकपाला भगवन्तं दर्शनायोपसंक्रान्ताः ॥ भगवानाह । न भिक्षवो ब्रह्मा [3]सहाम्पतिर्न शक्रो देवेन्द्रो नापि चत्वारो लोकपाला मां दर्शनायोपसंक्रान्ता 15 अपि तु दृष्टा युष्माभिः सा दारिका यया [4]अर्ह(म)न्तमार्गे सालपुष्पैरवकीर्णः ॥ एवं भदन्त ॥ सैषा ममान्तिके चित्तमभिप्रसाद्य कालगता प्रणीतेषु देवेषु त्रयस्त्रिंशेषूपपन्ना । [5]सा इमां रात्रिं मत्सकाशमुपसंक्रान्ता तस्या मया धर्मो देशितो[6] दृष्टसत्या च स्वभवनं गता ।

1) MS तीर्णाश्च.

2) MS तैर्दृश्यो (D तैर्दृशो).

3) MS सहाप° (D सहांप°).

4) Ex conject.; B यया अर्हन्तं मार्गे, the ˆ seems to have been expunged. Of B's copies, C has यया अहन्तं, P यया अर्हन्तं, D यया ऽर्हन्त.

5) MS स.

6) B दशितः, D corr.

तस्मात्तर्हि भिक्षव एवं शिक्षितव्यं यच्छास्तारं सत्करिष्यामो गुरुकरिष्यामो मानयिष्यामः पूजयिष्यामः शास्तारं सत्कृत्य गुरुकृत्य मानयित्वा पूजयित्वोपनिश्रित्य विहरिष्याम इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

## [51b] श्रीमतीति ५४।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घो राजगृहमुपनिश्रित्य विहरति वेणुवने 5 कलन्दकनिवापे। राजगृहे नगरे राजा बिम्बिसारो राज्यं कारयति ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं चाकीर्णबहुजनमनुष्यं च प्रशान्तकलिकलहडिम्बडमरं तस्कररोगापगतं शालीक्षुगोमहिषीसंपन्नमखिलमकण्टकमेकपुत्रकमिव राज्यं पालयति॥ यदा राज्ञा बिम्बिसारेण भगवतः सकाशात्सत्यानि दृष्टानि तदा रात्रिं भगवन्तमुपसंक्रामति सार्धमन्तःपुरेण॥ अथ राजा बिम्बिसारो ‹ऽपरे›ण समयेन(1) संप्राप्ते वसन्तकालसमये संपुष्पितेषु पादपेषु 10 हंसक्रौञ्च(2)मयूरशुकशारि(3)काकोकिलजीवञ्जीवकनिर्घोषिते वनषण्डे देव्या सहान्तःपुरपरिवृत उद्यानभूमिं निर्गतः। तत्र चान्तःपुरिकाभी राजा(4) विज्ञप्तो देव(5) वयं न शक्नुमो ऽहन्यहनि भगवन्तमुपसंक्रमितुं तत्साधु देवो ऽस्मिन्नन्तःपुरे तथागतस्य केशनखस्तूपं प्रतिष्ठापयेद्यत्र वयमसकृत्पुष्पैर्गन्धैर्माल्यै(6)र्विलेपनैश्छत्रैर्ध्वजैः पताकाभिः पूजां कुर्यामे-

---

1) Ex conject.; MS राज्ञाविंविसारेणासमयेन. Cp. the parallel passage *supra*, p. 179, 3.

2) MS क्रोच, cp. *supra*, p. 179, 3.

3) B शारिकोकाकिल, D corr.

4) MS राज्ञो.

5) B देवे, D corr.

6) B मालैर्वि°, D corr.

ति ॥ यावद्राज्ञा बिम्बिसारेण भगवान्विज्ञप्तो दीयतामस्मभ्यं केशनखं येन[1] वयं तथागतस्तूपमन्तःपुरमध्ये प्रतिष्ठापयाम इति । यावद्भगवता केशनखं दत्तम् ॥ राज्ञा बिम्बिसारेण महता सत्कारेणान्तःपुरसहायेन तथागतस्य केशनखस्तूपो ऽन्तःपुरमध्ये प्रतिष्ठापितः तत्र चान्तःपुरे ऽन्तःपुरिका दीपधूपपुष्पगन्धमाल्यविलेपनैरभ्यर्चनं कुर्वन्ति ॥

5 यदा पुना[2] राज्ञा ऽजातशत्रुणा देवदत्तविग्राहितेन[3] पिता धार्मिको धर्मराजो जीविताद्व्यवरोपितः स्वयं च राज्यं प्रतिपन्नः तदा भगवच्छासने सर्वदेयधर्माः समुच्छिन्नाः क्रियाकारश्च कारितो न केनचित्तथागतस्तूपे काराः कर्तव्या इति[4] ॥ यदा पञ्चदश्यां[5] प्रवारणा संवृत्ता तदा तत्र केशनखस्तूपे न कश्चित्संमार्जनं दीपधूपपुष्पदानं वा कुरुते । ततो ऽन्तःपुरिकाः[6] केशनखस्तूपं तथाविधं राजानं च बिम्बिसारमनुस्मृत्य करुणाकरुणं रोदि-

10 तुमारब्धाः हा कष्टं धर्मराजवियोगाद्वयं पुण्यात्प्रहीणा इति ॥ तत्र च श्रीमती नामान्तःपुरिका । सा स्वकं जीवितमगणयित्वा बुद्धगुणांश्चानुस्मृत्य केशनखस्तूपं संमृज्य दीपमालामकार्षीत् ॥ यावदजातशत्रुरुपरिप्रासादतलगतस्तमुदारमवभासं दृष्ट्वा पप्रच्छ किमिदमिति । यावदन्यया कथितं श्रीमत्या केशनखस्तूपे दीपमाला कृतेति ॥ ततः श्रीमतीमाहूय कथयति । किमर्थं राजशासनमतिक्रमसीति ॥ सा कथयति । यद्यपि मया तव

15 शासनमतिक्रान्तं किं तु धर्मराजस्य मया बिम्बिसारस्य शासनं नातिक्रान्तमिति ॥

---

1) Ex conject.; MS यन्वहंतथा°, but there is no room here for the idiom *yan nu* which always expresses self-exhortation, nor is the sing. *aham* admissible.

2) MS पुनराज्ञा ऽजात°.

3) Ex conject., cp. Divy. 272, 20. 419, 19. 557, 28. Jtkm. 146, 19; MS विग्राहिकेण.

4) Here follow in MS some words, which I have left out; तत्र च श्रीमती नामान्तःपुरिका सा, an evident dittography. They stand in their place at l. 10, where they are repeated in our manuscripts. Cp. Feer, p. 210 n. 2.

5) Ex conject.; MS पञ्चदशां (D °दशा).

6) Visarga wanting in MS.

ततस्तेन कुपितेन चक्रं त्तिप्त्वा[1] जीविताद्व्यवरोपिता । सा भगवति प्रसन्नचित्ता कालगता प्रणीतेषु देवेषु त्रयस्त्रिंशेषूपपन्ना ॥

तत्र काले देवसमितिरुपस्थिता[2] । अथ श्रीमती देवकन्या समन्तयोजनं दिव्यप्रभामण्डलावभासिता देवसमितिमुपसंक्रान्ता । ततः शक्रो देवेन्द्रस्तमुदारमवभासं[3] [52a] दिव्याच्च प्रभां समन्तयोजनां दृष्ट्वा पप्रच्छ । 5

गात्रं केन विमृष्टकाञ्चननिभं पद्मोत्पलाभं तव ।
गात्रश्रीरतुला कृतेयमिह ते देहात्प्रभा निःसृता ।
वक्त्रं केन विबुद्धपद्मसदृशं चामीकराभं तव ।
ब्रूहि त्वं मम देवते फलमिदं यत्कर्मजं भुज्यते ॥

देवता प्राह । 10

त्रैलोक्यनाथं जगतः प्रदीपं निरीक्ष्य बुद्धं वरलक्षणाढ्यम्[4] ।
चकार दीपं वदतां वरस्य तमोनुदं क्लेशतमोनुदस्य ॥
दृष्ट्वा प्रभां चन्द्रमरीचिवर्णां चकार भावेन मुनौ प्रसादम् ।
प्रभाच्च हर्षात्समुदीक्ष्य शास्तुः चक्रे प्रणामं वदतां वरस्य ॥
[5]तत्कर्मणः श्रिया देहं राजते ऽभ्यधिकं मम । 15
जलजेन्दुविशुद्धाभं वदनं कान्तदर्शनम्[6] ॥

---

1) Ex conject.; MS त्तिप्ता. The correction is confirmed by K., f. 189 a 4 तेन नृपेना(sic)जातशत्रुणा । चक्रं त्तिप्त्वा रुषा सा स्त्री जीविताद्व्यव(ms. प)रोपिता.

2) Ex conject.; MS समितिमुपस्थिता.

3) B °भास, D corr.

4) Ex conject.; B वरदत्तणाढ्रं, the last akṣara is uncertain and has been read differently by the copyists. The right reading is found also in K., f. 189 b.

5) Ex conject.; MS तत्कर्मणाक्रियतेदेहं, K., f. 189 b 5 तत्कर्मणाक्रियतेदेहं with a superfluous syllable. My correction rests on the assumption that देहं is the right reading, which became depraved into तेदेहं, and cp. *supra*, n. 9 on p. 29.

6) MS कान्ति°.

शक्रः प्राह।

अहो गुणमयं क्षेत्रं सर्वदोषविवर्जितम्।
यत्र न्यस्तं त्वया बीजमिष्टं स्वर्गोपपत्तये॥

को नार्चयेत्प्रवरकाञ्चनराशिगौरम्।
5 बुद्धं विशुद्धकमलायत(प)[1]त्त्रनेत्रम्।
यत्राधिकारजनितानि वराङ्गनानाम्।
रेजुर्मुखानि कमलायतलोचनानि॥

धर्मता खलु देवपुत्रस्य वा देवकन्याया वाचिरोपपन्नस्य त्रीणि चित्तान्युत्पद्यन्ते कुतश्च्युतः कुत्रोपपन्नः केन कर्मणेति। सा[2] पश्यति मनुष्येभ्यश्च्युता प्रणीतेषु देवेषु त्रय-10 स्त्रिंशेषूपपन्ना भगवतो ऽन्तिके चित्तमभिप्रसाद्येति॥ अथ श्रीमत्या देवकन्याया एतद-भवत्। न मम प्रतिरूपं स्याद्यदहं पर्युषितपरिवासा भगवन्तं दर्शनायोपसंक्रामेयं यन्न्वह-मपर्युषितपरिवासा एव भगवन्तं दर्शनायोपसंक्रामेयमिति॥ अथ श्रीमती देवकन्या दिव्य-प्रभावभासपरिवेष्टिता दिव्यानामुत्पलपद्मकुमुदपुण्डरीकमन्दारकाणामुत्सङ्गं पूरयित्वा सर्वं[3] वेणुवनं कालन्दकनिवापमुदारेणावभासेनावभास्य भगवन्तं पुष्पैरवकीर्य भगवतः पुर-15 स्तान्निषण्णा[4] धर्मश्रवणाय॥ अथ भगवाञ्छ्रीमत्या देवकन्याया आशयानुशयं[5] धातुं प्रकृतिं च ज्ञात्वा तादृशीं चतुरार्यसत्यसंप्रतिवेधिकीं धर्मदेशनां कृतवान्यां श्रुत्वा श्रीमत्या देवक-न्यया[6] विंशतिशिखरसमुद्गतं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रोतआपत्तिफलं प्राप्तम्॥

सा दृष्टसत्या त्रिरुदानमुदानयति। इदमस्माकं भदन्त न मात्रा कृतं न पित्रा न

---

1) P inserts the missing akṣara.

2) MS स.

3) MS सर्वत्रे° (D सर्वेषुत्रे°).

4) MS °षण्णो (D °षण्णः).

5) Anusvāra wanting in MS.

6) MS °कन्यायाः.

राज्ञा न देवताभिर्नेष्टेन स्वजनबन्धुवर्गेण न पूर्वप्रेतैर्न श्रमणब्राह्मणैर्यद्भगवतास्माकं कृतम्। उच्छोषिता रुधिराश्रुसमुद्रा लङ्घिता अस्थिपर्वताः पिहितान्यपायद्वाराणि विवृतानि स्वर्गमोक्षद्वाराणि प्रतिष्ठापिताः[1] स्मो देवमनुष्येषु। आह च।

तवानुभावात्पिहितः सुघोरो ह्यपायमार्गो बहुदोषयुक्तः।
अपावृता स्वर्गगतिः सुपुण्या निर्वाणमार्गश्च मयोपलब्धः॥ 5

त्वदाश्रयाच्चाप्तमपेतदोषं मयाद्य शुद्धं सुविशुद्ध चक्षुः।
प्राप्तं च शान्तं पदमार्यकान्तं तीर्णा च दुःखार्णवपारमस्मि॥

नरवरेन्द्र नरामरपूजित विगतजन्मजरामरणामय।
भवसहस्रसुदुर्लभदर्शन सफलमद्य मुने तव दर्शनम्॥

अवनम्य ततः प्रलम्बहारा[2] चरणौ द्वावभिवन्द्य जातहर्षा। 10
परिगम्य[3] च दक्षिणं जितारिं सुरलोकाभिमुखी दिवं जगाम॥

अथ श्रीमती देवकन्या वणिगिव लब्धलाभः[4] सस्यसंपन्न इव कर्षकः शूर इव जितसंग्रामः सर्वरोगविमुक्त इवातुरो यया विभूत्या भगवत्सकाशमागता तयैव विभूत्या स्वभवनं गता॥

भिक्षवः पूर्वरात्रापररात्रं[5] जागरिकायोगमनुयुक्ता विहरन्ति। तैर्दृष्टो भगवतो 15 ऽन्तिके उदारो ऽवभासः। यं दृष्ट्वा संदिग्धा भगवन्तं पप्रच्छुः। किं भगवन्निमां रात्रिं ब्रह्मा सहाम्पतिः[6] शक्रो देवेन्द्रश्चत्वारो लोकपाला[7] भगवन्तं दर्शनायोपसंक्रान्ताः[1]॥ भगवानाह। न भिक्षवो ब्रह्मा सहाम्पतिर्न[6] शक्रो देवेन्द्रो नापि चत्वारो लोकपाला मां दर्शनायोपसं-

---

1) Visarga wanting in MS.
2) MS °लम्ववाहारा (D °लम्ववाहोत्रा).
3) MS परिगम्य प्रदक्षिणां.
4) MS °लाभा.
5) MS °रात्रा.
6) MS सहापति°.
7) B लोकपाला उपसंक्रान्ता ॥. D and P fill up the gap.

क्रान्ता अपि तु राज्ञो बिम्बिसारस्य श्रीमती नामान्तः[52 b]पुरिका स्वजीवितमगणयित्वा बुद्धगुणांश्चानुस्मृत्य तथागतस्य केशनखस्तूपे दीपमालां कृतवती ततो राज्ञा ऽजातशत्रुणा कुपितेन जीविताद्व्यवरोपिता । सा ममान्तिके चित्तं प्रसाद्य कालगता प्रणीतेषु देवेषु त्रयस्त्रिंशेषूपपन्ना । सास्यां रात्रौ मत्सकाशमुपसंक्रान्ता तस्या मया धर्मो देशितः दृष्ट-
5 सत्या च स्वभवनं गता । तस्मात्तर्हि भिक्षव एवं शिक्षितव्यं यच्छास्तारं सत्करिष्यामो गुरुकरिष्यामो मानयिष्यामः पूजयिष्यामः शास्तारं सत्कृत्य गुरुकृत्य मानयित्वा पूज-यित्वोपनिश्रित्य विहरिष्याम इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

# वस्त्रमिति ५५ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुड-किन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयना-सनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथ- 5
पिण्डदस्यारामे ॥ यदानाथपिण्डदेन गृहपतिना बुद्धप्रमुखाय भिक्षुसङ्घाय जेतवनं निर्या-तितं क्रमेण ‹च› कोटिशतं भगवच्छासने[1] दत्तं तदा तस्य बुद्धिरभवत्। किमत्राश्चर्यं यदहं दानानि ददामि पुण्यानि वा करोमि यन्न्वहं दरिद्रजनानुग्रहार्थं श्रावस्तीनिवासिनो जनका-याच्छन्दकभिक्षणां[2] कृत्वा भगवन्तं सश्रावकसङ्घमुपतिष्ठेयम्। एवं मे महाजनानुग्रहः कृतो भविष्यति बहु चानेन[3] पुण्यं प्रसूतं भविष्यतीति ॥ ततो ऽनाथपिण्डदेन गृहपतिना एष 10
वृत्तान्तो राज्ञे निवेदितः[4]। राज्ञा सर्वस्यां श्रावस्त्यां घण्टावघोषणं[5] कारितम्। शृण्वन्तु

---

1) MS °सन.

2) MS here and *infra*, p. 314, 2 and 4. 317, 16 °भिक्षुणां, cp. Feer, p. 214 n. 1. The right form °*bhikṣaṇa* is also found in the corresponding passage of the Paris MS of Ratnâvâdânamâlâ, see f. 164a 3 and cp. f. 129a 2.

3) Ex conject.; MS बहुचरणपुण्यं. That the unmeaning रण does not conceal anything essential for the understanding of this passage, appears from the Tibetan translation བསོད་ནམས་མང་པོ་ཡང་བསྐྱེད་པར་འགྱུར་རོ (communication of the late M. Feer). For this reason I have put चानेन (viz. *mahājanena*) instead of चरण into the text.

4) B निवेशितः, D corr.

5) MS °षणां.

भवन्तः श्रावस्तीनिवासिनः पौरा अद्य सप्तमे दिवसे ऽनाथपिण्डदो गृहपतिर्हस्तिस्कन्धा[1]-
भिरूढस्तथागतस्य सश्रावकसङ्घस्यार्थाय छन्दकभिक्षणं कर्तुकामः । यस्य वो यन्मात्रं
परित्यक्तं[2] तदनुप्रदातव्यमिति ॥ यावत्सप्तमे दिवसे ऽनाथपिण्डदो गृहपतिर्हस्तिस्कन्धा-
धिरूढस्तथागतस्य सश्रावकसङ्घस्यार्थाय छन्दकभिक्षणं कर्तुं प्रवृत्तः । तत्र येषां यन्मात्रो
5 विभवस्ते तन्मात्रं दातुं प्रवृत्ताः[3] । केचिद्धारं प्रयच्छन्ति केचित्कटकं[4] केचित्केयूरं केचिन्ना-
तरूपमालां केचिदङ्गुलिमुद्रां केचिन्मुक्ताहारं केचिद्धिरण्यं केचित्सुवर्णं केचिद्[5]त्तशः का-
र्षापणम् । गृहपतिरपि परानुग्रहार्थं प्रतिगृह्णाति ॥

यावदन्यतमा स्त्री परमदरिद्रा । तया त्रिभिर्मासैः कृच्छ्रेण पटक उपार्जितः । सा
तं पटकं प्रावृत्य वीथीमवतीर्णा ऽनाथपिण्डदश्च तया दूरत एवागच्छञ्छङ्खपटहैर्वाद्यमानै-
10 रवलोकितः ।> तयान्यतम उपासकः पृष्टः । यदि तावदयं गृहपतिराढ्यो महाधनो महा-

---

1) B °स्तिकन्धा°, D corr. Perhaps the right reading is °धिरूढ°, cp. *infra*, l. 4.

2) Anāthapiṇḍada employs the solemn formula of begging. Cp. *supra* p. 3, 9.

3) B प्रवृत्ताके°, D corr.

4) B केचिद्धर्षं प्रयान्ति केचित्कटकटं, an interpolated redaction, which seems to convey this purport that some were rejoiced and others got angry. But the absence of any verb of 'giving, sacrificing' in the sequel, the stylistic necessity of a symmetrical arrangement of the different clauses the subject of which is केचित्, and last not least, the evidence of the Tibetan translation (see Feer, p. 214, 15) prove that the genuine form of this phrase must have been somewhat different. The reading that I have put into the text, I have arrived at by a conjecture, resting on both the Tibetan and the Chinese versions. The former is given by Feer as follows: 'des uns offrent un collier, d'autres un bracelet'; 'collier' is here the translation of དོ་ཤལ་, the Tibetan word for 'necklace'. The Chinese version is to this effect, that the first of the ornaments forwarded is a 瓔珞 (ying loh); according to Wells Williams' dictionary, ying is «a fine pebble suitable to put in a lady's necklace» and loh «ornaments for the neck». As to कटकं = 'bracelet' apud Feer, the copyist of P has already corrected so the कटकटं of B.

5) Ex conject.; MS °दन्नशः.

भोगो ऽन्तर्‹भूमौ›[1] निगूढान्यपि निधानानि पश्यति कस्मादयं परकुलेभ्यो भैक्ष्यमटतीति ॥ सा उपासकेनोक्ता । परानुग्रहार्थं ये ऽसमर्था भगवन्तं सश्रावकसङ्घं भोजयितुं तेषामर्थे ऽनुग्रहं करोति कथं बहवः समेता भगवन्तं प्रतिपादयेयुरिति ॥ ततस्तस्या दारिकाया बुद्धिरुत्पन्ना ऽहं तावदकृतपुण्या न मे शक्तिरस्ति यदहमेकाकिनी भगवन्तं सश्रावकसङ्घं भोजनेन प्रतिपादयेयं[3] यन्न्वहमत्र किञ्चिदनुप्रदद्यामिति ॥ सा स्वकं विभवमवलोकयन्ती न 5 किञ्चित्पश्यति ऋते पटकात् । सा चिन्तयितुं प्रवृत्ता यद्यहमिहस्थैव पटकं प्रदास्यामि नग्ना भविष्यामि यन्न्वहं शरणपृष्ठमभिरुह्य पटकं क्षिपेयमिति ॥ ततः सा शरणपृष्ठमभिरुह्य स्व[53 a]शरीरात्पटकमवनीयानाथपिण्डदस्योपरि क्षिप्तवती । ‹सा›[4] गृहपतिना संलक्षिता नूनमस्या एष एव विभवो यदनया शरणसंस्थया क्षिप्तमिति ॥ तेन स्वपौरुषेयाणामाज्ञानुप्रदत्ता गच्छन्तु भवन्तो ऽवलोकयन्तु केनायं पटकः क्षिप्त इति । तैरवलोकिता 10 यावदुत्कुटुका[5] निषण्णा । ततस्तैः पृष्टा तया चोक्तं यो मे विभव आसीत्स मे भगवद्गुणानुकीर्तनं प्रतिश्रुत्य[6] दारिद्र्यभयभीतया तथागतप्रमुखे भिक्षुसङ्घे दत्त[7] इति ॥ ततस्तैरनाथ-

---

1) Ex conject., cp. Feer, p. 214, 25: «s'il voit des trésors cachés sous terre», where 'sous terre' is the translation of ས་འོག་ཏུ་. Cp. *antarbhūmigata* in PWK, I.

2) I think it would not be advisable to change here *bhaikṣyam*, though Boehtlingk in PW and PWK does not acknowledge this form, into *bhaikṣam*.

3) Ex conject.; MS प्रतिपादयितुं. A similar aberration from syntax is met with *supra*, p. 259, 9. Should it be probable that the infinitive in both places really originates from the author of our Avadānaç., who expressing himself very carelessly used some popular blending of two constructions?

4) It is, of course, possible that the gap is larger, and includes अनाथपिण्डदेन before गृहपतिना; MS क्षिप्तंगृहप°.

5) R. (f. 168 a 2) has, in the same point of the story, उत्कुटका निषण्णा.

6) *Pratiçrutya* = 'having heard', cp. *supra* p. 2, 10, Lalitavistara, ed Lefm., p. 58, 4, Mhbh. 3, 277, 16. The Ratnāv. (f. 168b 2) renders this phrase by त्रिरत्नगुणमाहात्म्यं श्रुत्वा.

7) B दत्तेति, the sign ˇ refers to the upper margin, where we find मि. But दत्तमिति is a wrong correction, it must of course be दत्त इति. P दत्तेति.

पिण्डदाय निवेदितम् । ततो ऽनाथपिण्डदेन गृहपतिना परमविस्मयजातेन सा दारिका विचित्रैर्वस्त्रै(1)राभरणैश्चाच्छादिता ॥ सा चाल्पायुष्का कालगता प्रणीतेषु देवेषु त्रयस्त्रिं-शेषूपपन्ना । उपपन्नमात्रायास्तस्यास्तथाविधानि वस्त्राणि प्रादुर्भूतानि न कस्यचिदन्यस्य देवपुत्रस्य वा देवकन्याया वा ॥

5 धर्मता खलु देवपुत्रस्य वा देवकन्याया वाचिरोपपन्नस्य त्रीणि चित्तान्युत्पद्यन्ते कुतश्च्युतः(2) कुत्रोपपन्नः(3) केन कर्मणेति । सा पश्यति मनुष्येभ्यश्च्युता प्रणीतेषु देवेषु त्रय-स्त्रिंशेषूपपन्ना भगवतः पटकप्रदानादिति ॥ ततो वस्त्रदायिका देवकन्या चलविमलकुण्ड-लधरा हारार्धहारविभूषितगात्री मणिरत्नविचित्रचूडा कुङ्कुमतमालपत्रस्पृक्कादिसंसृष्ट-गात्री तामेव रात्रिं दिव्यानामुत्पलपद्मकुमुदपुण्डरीकमन्दारका(4)णां पुष्पाणामुत्सङ्गं पूर-

10 यित्वा सर्वं जेतवनमुदारेणावभासेनावभास्य भगवन्तं पुष्पैरवकीर्य भगवतः पुरस्तान्निषण्णा धर्मश्रवणाय । अथ भगवान्पटकप्रदायिकाया देवकन्याया आशयानुशयं धातुं प्रकृतिं च ज्ञात्वा तादृशीं(5) चतुरार्यसत्यसंप्रतिवेधिकीं(5) धर्मदेशनां कृतवान्यां श्रुत्वा पटप्रदायिकाया देवकन्याया विंशतिशिखरसमुद्गतं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा (6)स्रोतआपत्तिफलं साक्षात्कृतम् ॥ सा दृष्टसत्या त्रिरुदानमुदानयति । इदमस्माकं भदन्त न मात्रा कृतं न पित्रा

15 न राज्ञा न देवताभिर्नेष्टेन स्वजनबन्धुवर्गेण न पूर्वप्रेतैर्न श्रमणब्राह्मणैर्य(7)द्भगवतास्माकं कृतम् । उच्छोषिता रुधिराश्रुसमुद्रा लङ्घिता अस्थिपर्वताः पिहितान्यपायद्वाराणि वि(8)वृतानि स्वर्गमोक्षद्वाराणि प्रतिष्ठापिताः(9) स्मो देवमनुष्येषु । आह च ।

---

1) MS विचित्रैव°.
2) MS °ता:.
3) MS °पन्ना:.
4) BCP °रकानां, D °रवानां.
5) Anusvāra wanting in MS.
6) B स्रोतआ°.
7) B °द्दुग°, DP corr.
8) B °वृत्तानि, D corr.
9) Visarga wanting in MS.

तवानुभावात्पिहितः सुघोरो ह्यपायमार्गो बहुदोषयुक्तः ।
अपावृता स्वर्गगतिः सुपुण्या निर्वाणमार्गश्च मयोपलब्धः ॥
त्वदाश्रयाच्चाप्तमपेतदोषं मयाद्य शुद्धं सुविशुद्ध चक्षुः ।[1]
प्राप्तं च शान्तं पदमार्यकान्तं तीर्णा च दुःखार्णवपारमस्मि ॥
नरवरेन्द्र नरामरपूजित विगतजन्मजरामरणामय । 5
भवसहस्रसुदुर्लभदर्शनं[2] सफलमद्य मुने तव दर्शनमिति ॥
अवनम्य ततः प्रलम्बहारा चरणौ द्वावभिवन्द्य जातहर्षा ।
परिगम्य च दक्षिणं जितारिं सुरलोकाभिमुखी दिवं जगाम ॥

अथ पटप्रदायिका देवकन्या वणिगिव लब्धलाभः[3] सस्यसंपन्न इव कर्षकः शूर इव विजितसंग्रामः सर्वरोगपरिमुक्त इवातुरो यया विभूत्या भगवत्सकाशमागता[4] तयैव विभूत्या 10 स्वभवनं गता ॥

भिक्षवः पूर्वरात्रापररात्रं जागरिकायोगमनुयुक्ता[5] विहरन्ति । तैर्दृष्टो[6] भगवतो ऽन्तिके ‹उदारो ऽवभासः ।› यं दृष्ट्वा संदिग्धा भगवन्तं पप्रच्छुः । किं भगवन्नस्यां रात्रौ भगवन्तं दर्शनाय ब्रह्मा सहाम्पतिः शक्रो देवेन्द्रश्चत्वारो लोकपाला उपसंक्रान्ताः ॥ भगवानाह । न भिक्षवो ब्रह्मा सहाम्पतिर्न[7] शक्रो देवेन्द्रो नापि चत्वारो लोकपाला मां 15 दर्शनायोपसंक्रान्ताः । या दरिद्रदारिका ऽनाथपिण्डदस्य गृहपतेश्छन्दकभिक्षणं कुर्वाणस्य पटं दत्वा कालगता प्रणीतेषु देवेषु त्रयस्त्रिंशेषूपपन्ना सा इ[53 b]मां रात्रिं मत्सकाशमुप-

1) B त्वयाश्र°, D corr.
2) MS °र्शनं.
3) B °लाभाः, D corr.
4) B °गवस्सका°, DCP corr.
5) MS °युक्ताः । विह°.
6) MS तैदृष्ट्वा (D तैर्द°).
7) MS सहाप°.

संक्रान्ता तस्या मया धर्मो देशितः सा प्रसादजाता प्रक्रान्ता दृष्टसत्या च स्वभवनं गता। तस्मात्तर्हि भिक्षव एवं शिक्षितव्यं यद्बुद्धधर्मसङ्घेषु कारान्करिष्यामो नापकारां[1]नित्येवं वो भिक्षवः शिक्षितव्यम्॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्॥

---

1) MS °रामि°. Cp. *supra* p. 204, 14 and Çikṣāsamuccaya, ed. Bendall, p. 87, 3.

## शुक इति ५६ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्डदस्यारामे। राजगृहे नगरे राजा बिम्बिसारो राज्यं कारयति ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं चाकीर्णबहुजनमनुष्यं च प्रशान्तकलिकलहडिम्बडमरं[1] तस्कररोगापगतं[1] शालीक्षुगोमहिषीसंपन्नमखिलमकण्टकमेकपुत्रकमिव राज्यं पालयति। स च राजा श्राद्धो भद्रः कल्याणाशय आत्महितपरहितप्रतिपन्नः कारुणिको महात्मा धर्मकामः प्रजावत्सलः॥ यावदसौ भगवद्दर्शनोत्कण्ठितः करे कपोलं दत्त्वा चिन्तापरो व्यवस्थितः। ततो ऽमात्यैरुक्तः किमर्थं देव शोकः क्रियत इति॥ राजोवाच। चिरदृष्टो मे सुगतः सो ऽहमाकाङ्क्षामि भगवतो दर्शनमिति॥ [2]अश्रौषीद्भगवान्दिवाविहारोपगतो[3] दिव्येन श्रोत्रेण विशुद्धेनातिक्रान्तमानुषेण[4] राजा बिम्बिसार उत्कण्ठित इति। [अत्रान्तरे नास्ति किंचिद्बुद्धानां भगवतामज्ञातमदृष्टमविदितमविज्ञातम्। धर्मता खलु बुद्धानां भगवतां महाकारुणिकानां लोकानुग्रहप्रवृत्तानामेका[5]रक्षाणां शमथविपश्यनाविहारिणां त्रिदमथवस्तुकुशलानां चतुरोघोत्तीर्णानां चतुर्ऋद्धिपादचरणतलसुप्रतिष्ठितानां चतुर्षु संग्रहवस्तुषु दीर्घरात्रकृतपरि-

---

1) Anusvāra wanting in MS.

2) MS अश्रो°.

3) Ex conject.; MS °गतां. With *divāvihāropagata* compare *varṣā upagataḥ* e. g. in the beginning of avad. nr. 57.

4) Ex conject., cp. *supra* p. 230, 13; MS °मानुष्येण.

5) MS °वृत्तानामेकारुणिकाशम° (D वृत्तानांमहाकारुणिकाशम°).

चयानां पञ्चाङ्गविप्रहीणानां पञ्चगतिसमतिक्रान्तानां षडङ्ग[1]समन्वागतानां षट्पारमितापरिपूर्णानां सप्तबोध्यङ्गकुसुमाढ्यानामष्टाङ्गमार्गदेशिकानां नवानुपूर्वसमापत्तिकुशलानां दशबलबलिनां दशदिक्समापूर्णयशसां दशशतवशवर्तिप्रतिविशिष्टानां त्री[2] रात्रेस्त्रिर्दिवसस्य बुद्धचक्षुषा लोकं व्यवलोक्य ज्ञानदर्शनं प्रवर्तते। को हीयते को वर्धते कः कृच्छ्रप्राप्तः कः संकटप्राप्तः <कः संबाधप्राप्तः> कः कृच्छ्रसंकटसंबाधप्राप्तः को ऽपायनिम्नः को ऽपायप्रवणः को ऽपायप्राग्भारः कमहमपायादुद्धृत्य स्वर्गे मोक्षे च प्रतिष्ठापयेयं कस्य कामपङ्कनिमग्नस्य हस्तोद्धारमनुप्रदद्यां कमार्यधनविरहितमार्यधनैश्वर्याधिपत्ये प्रतिष्ठापयेयं कस्यानवरोपितानि कुशलमूलान्यवरोपयेयं कस्यावरोपितानि परिपाचयेयं क[3]स्य परिपक्वानि विमोचयेयम्। आह च।

अप्येवातिक्रमेद्वेलां सागरो मकरालयः।
न तु वैनेयवत्सानां बुद्धो वेलामतिक्रमेत्[4] ॥]

ततो भगवान्राज्ञो बिम्बिसारस्यानुग्रहार्थं त्रयाणां वार्षिकाणां मासानामत्ययात्कृतचीवरो निष्ठितचीवरः समादाय पात्रचीवरं ज[5]नपदचारिकां प्रक्रान्तो ऽनुपूर्वेण चारिकां चरन्नन्यतमं वनषण्डमनुप्राप्तः। तत्र च वनषण्डे मनुष्यप्र[6]लापी शुकः प्रतिवसति। तेन भगवान्दूरत एव दृष्टः। ततस्त्वरितत्वरितं भगवन्तमुवाच। एतु[7] भगवान्स्वागतं भगवते क्रियतामस्माकमनुग्रह इहैव वनषण्डे एकां रात्रिं प्रतिवसेति॥ ततो भगवाञ्छुकस्यानुग्रहार्थं यत्र वृक्षे शुकस्यालयस्तत्र तृणसंस्तरं संस्तीर्य पर्यङ्केण निषण्णः अन्यवृक्षेषु

1) B षटङ्ग°, D corr.

2) MS त्रिरात्रेस्त्रि(D त्रि)दिव°.

3) MS तस्य.

4) This whole stereotyped *locus communis*, beginning with *atrāntare nāsti* is out of place here. It is evident that the sentence *tato bhagavān rājño* etc. ought to follow immediately after *açrauṣīd bhagavān.......utkaṇṭhita iti.*

5) MS ज्ञानपद°, cp. *supra* p. 153, n. 3.

6) B प्रलीपी, DP corr.

7) Ex conject.; MS एतु भगवंस्वागतं.

महाश्रावकाः ॥ ततः शुकः कृत्स्नां रात्रि[54a]मितस्ततस्तं वनषण्डं पर्यटति मा हैव कश्चिद्भगवन्तं सश्रावकसङ्घं विहेठयिष्यतीति मनुष्यो वा ऽमनुष्यो वा यक्षो वा राक्षसो वा श्वापदश्चण्डशृङ्गो[1] वेति ॥ ततः प्रभातायां रजन्यां भगवन्तं त्रिः[2] प्रदक्षिणीकृत्य क्षमयितुमारब्धः । क्षमस्व भगवंस्तिर्यग्योनिगतो ऽहं नास्ति मे विभवो येन भगवन्तमभ्यर्चयेयमपि त्वहमयतो गच्छामि राज्ञो बिम्बिसारस्य भगवत आगमनं निवेदयामीति ॥ एवमस्त्विति ॥ यावदसौ राज्ञः सकाशं संप्रस्थितो ऽनुपूर्वेण राज्ञः सकाशमनुप्राप्तः । तस्मिंश्च समये राजा उपरिप्रासादतलगतो निष्पुरुषेण तूर्येण क्रीडति रमते परिचारयति । ततः शुको मानुषप्रलापो राजानमुवाच । भो राजन्विदितं ते भवतु भगवान्सश्रावकसङ्घस्तव विजितमनुप्राप्तः तदर्हति देवो भक्तं सज्जीकर्तुमिति ॥ ततो राजा त्वरितत्वरितं प्रासादादवतीर्यामात्यगणपरिवृतो भगवतो ऽर्थेन[3] आसनकानि प्रज्ञप्य छत्रध्वजपताकाभिर्विचित्रैश्च गन्धपुष्पधूपैर्भगवन्तं प्रत्युद्गतः । ततो राज्ञा भगवान्सश्रावकसङ्घो महता सत्कारेण प्रवेशितः प्रणीतेन चाहारेण संतर्पितः ॥

अथ शुकस्यैतदभवत् । यद्भगवान्सश्रावकसङ्घ एवंविभूतिस्तत्सर्वं[4] मामागम्य[5] । इति विदित्वा हृष्टतुष्टप्रमुदित[6] उदग्रप्रीतिसौमनस्यजातो राज्ञः पुरस्तादितश्चामुतश्च

---

1) Ex conject.; B श्वातश्च° (the akṣ. त being rather indistinct), in D this has been copied श्वाव्यश्च°, in CP श्वापतश्च°, cp. Feer, p. 219 n. 1.

2) MS त्रिप्रद°.

3) Cp. PW, vol. V *s. v.* अर्थ 1).

4) Ex conject.; MS °संघस्यैवंविभूतिः सा सर्वा. The transmitted shape of the phrase cannot be the genuine one. It ought to have been either *yad bhagavataḥ saçrāvakasaṃghasyaiṣā vibhūtiḥ sā* etc., or *yad bhagavān saçrāvakasaṃgha evaṃvibhūtis tat sarvaṃ* etc. I have preferred the latter reading, which being the lectio difficilior, has more chance of being the original one.

5) Ex conject.; MS ममागम्येति. *Mām āgamya* signifies 'thanks to me', cp. my observation in W. Z. XVI, 107; this idiom has been corrupted also *supra*, p. 239, 6. Cp. also Feer, p. 220, n. 1.

6) B दृष्ट, D corr.

पर्यटन् ध्येनकेनापहृत्य पञ्चत्वमापादितः । भगवतो ऽन्तिके चित्तं प्रसाद्य कालगतः
प्रणीतेषु <देवेषु> त्रयस्त्रिंशेषूपपन्नः ॥

धर्मता खलु देवपुत्रस्य वा देवकन्याया वाचिरोपपन्नस्य त्रीणि चित्तान्युत्पद्यन्ते
कुतश्च्युतः कुत्रोपपन्नः[1] केन कर्मणेति । स पश्यति तिर्यग्भ्यश्च्युतः प्रणीतेषु देवेषु त्रयस्त्रिं-
5 शेषूपपन्नो भगवतो ऽन्तिके चित्तमभिप्रसाद्येति ॥ अथ शुकपूर्विणो देवपुत्रस्यैतदभवत् ।
न मम प्रतिरूपं स्याद्यदहं पर्युषितपरिवासो भगवन्तं दर्शनायोपसंक्रामेयं यन्न्वहमपर्युषितप-
रिवास एव भगवन्तं दर्शनायोपसंक्रामेयमिति ॥ अथ शुकपूर्वी देवपुत्रश्चलविमलकु-
ण्डलधरो हारार्धहारविराजितगात्रो मणिरत्नविचित्रचूडः[2] कुङ्कुमतमालपत्रस्पृक्कादिसं-
[3]सृष्टगात्रस्तस्यामेव रात्रौ दिव्यानामुत्पलपद्मकुमुदपुण्डरीकमन्दारकाणां पुष्पाणामुत्सङ्गं
10 पूरयित्वा सर्वं जेतवनमुदारेणावभासेनावभास्य भगवन्तं पुष्पैरवकीर्य भगवतः पुरस्ता-
न्निषण्णो धर्मश्रवणाय । अथ भगवांश्छुकपूर्विणो देवपुत्रस्याशयानुशयं धातुं प्रकृतिं च
ज्ञात्वा तादृशीं[4] चतुरार्यसत्यसंप्रतिवेधिकीं धर्मदेशनां कृतवान्यां श्रुत्वा शुकपूर्विणा
देवपुत्रेण विंशतिशिखरसमुद्गतं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रोतआपत्तिफलं
साक्षात्कृतम् ॥ स दृष्टसत्यस्त्रिरुदानमुदानयति । इदमस्माकं भदन्त न मात्रा कृतं न पित्रा
15 न राज्ञा न देवताभिर्नेष्टेन स्वजनबन्धुवर्गेण न पूर्वप्रेतैर्न श्रमणब्राह्मणैर्यद्भगवतास्माकं
कृतम् । उच्छोषिता रुधिराश्रुसमुद्रा लङ्घिता अस्थिपर्वताः पिहितान्यपायद्वाराणि
<विवृतानि स्वर्गमोक्षद्वाराणि> प्रतिष्ठापिताः[5] स्मो देवमनुष्येषु । आह च ।

तवानुभावात्पिहितः सुघोरो ह्यपायमार्गो बहुदोषयुक्तः ।
अपावृता स्वर्गगतिः सुपुण्या निर्वाणमार्गश्च मयोपलब्धः ॥

---

1) B °पसंपन्नः, D corr.
2) Visarga wanting in MS.
3) MS संस्पृष्ट°.
4) Anusvāra wanting in MS.
5) MS पितास्मो.

त्वदाश्रयाच्चाप्तमपेतदोषं मयाद्य शुद्धं सुविशुद्ध चक्षुः।
प्राप्तं च शान्तं पदमार्यकान्तं तीर्णाश्च[1] दुःखार्णवपारमस्मि॥
नरवरेन्द्र नरामरपूजित विगतजन्मजरामरणामय।
भवसहस्र‹सु›दुर्लभदर्शनं[2] सफलमद्य मुने तव दर्शनम्॥
अवनम्य ततः प्रलम्बहारश्चरणौ द्वावभिवन्द्य जातहर्षः। 5
परिगम्य च दक्षिणं जितारिं सुरलोकाभिमुखो दिवं जगाम॥

अथ शुकपूर्वो देवपुत्रो वणिगिव लब्धलाभः सस्यसंपन्न इव क[54 b]र्षकः शूर इव विजितसंग्रामः सर्वरोगपरिमुक्त इवातुरो यया विभूत्या भगवत्सकाशमागतस्तयैव विभूत्या स्वभवनं गतः॥

भिक्षवः पूर्वरात्रापररात्रं जागरिकायोगमनुयुक्ता विहरन्ति। तैर्दृष्टो भगवतो 10 ऽन्तिके उदारो ऽवभासः। यं दृष्ट्वा संदिग्धा भगवन्तं पप्रच्छुः। किं भगवन्नस्यां रात्रौ भगवन्तं दर्शनाय ब्रह्मा सहाम्पतिः शक्रो देवेन्द्रश्चत्वारो लोकपाला उपसंक्रान्ताः॥ भगवानाह। न भिक्षवो ब्रह्मा सहाम्पतिर्न शक्रो देवेन्द्रो नापि चत्वारो लोकपाला मां दर्शनायोपसंक्रांता अपि तु दृष्टः स युष्माभिः शुको येन वयं तस्मिन्वनषण्डे रात्रिं[3] वस्तुमुपनिमन्त्रिता इति॥ भिक्षव ऊचुरेवं भदन्तेति॥ भगवानाह। स एष भिक्षवः कालं कृत्वा प्रणीतेषु 15 देवेषु त्रयस्त्रिंशेषूपपन्न इति॥ भिक्षव ऊचुः। कानि भदन्त शुकपूर्वकेण देवपुत्रेण कर्माणि कृतानि येन शुकेषूपपन्नः कानि कर्माणि कृतानि येन देवेषूपपन्नः सत्यदर्शनं च कृतमिति॥ भगवानाह। शुकपूर्वकेणैव भिक्षवो देवपुत्रेण ‹पूर्वमन्यासु जातिषु› कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि[4]। शुकपूर्वकेण देवपुत्रेण कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति। न भिक्षवः कर्माणि कृता- 20

---

1) MS तीर्णाश्च.
2) MS °स्रदुर्लभदर्शनं.
3) Anusvāra wanting in MS.
4) MS °श्यभागीनि (D, as always in this formula, °भाविनी).

न्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते अब्धातौ[1] न तेजोधातौ न वायुधातावपि [2]तूपात्तेष्वेव स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च।

न प्रणश्यन्ति कर्माणि अपि कल्पशतैरपि।[3]
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम्॥

5 भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि अस्मिन्नेव भद्रकल्पे विंशतिवर्षसहस्रायुषि प्रजायां काश्यपो नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान्। स वाराणसीं नगरीमुपनिश्रित्य विहरति स्म। तस्यान्यतम उपासकः। तेन शिक्षा[4]शैथिल्यं कृतम्। तस्य कर्मणो विपाकाच्छुक्रेषूपपन्नः। यन्ममान्तिके चित्तं प्रसादितं तेन देवेषूपपन्नः। यत्तेन परिशिष्टानि 10 शिक्षा[5]पदानि रक्षितानि तेन सत्यदर्शनं कृतम्। इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रस्तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम्॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्॥

---

1) B नाब्धाधौ, DP corr.

2) Cp. *supra*, p. 74 n. 9.

3) So even D, except that it has at the end of the 2d pāda कल्पशतानि च. Cp. *supra*, p. 74 n. 13.

4) B शिद्या°, D corr.

5) B शिद्या°, P corr.

---

# दूत इति ५७।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घो राजगृहे वर्षा उपगतो वेणुवने कलन्दकनि- 5
वापे ॥ अथानाथपिण्डदो गृहपतिर्येन राजा प्रसेनजित्कौशलस्तेनोपसंक्रान्तः। उपसंक्रम्य राजानं प्रसेनजितं जयेनायुषा च वर्धयित्वा विज्ञापयति। यत्खलु देव जानीयाश्चिरदृष्टो ऽस्माभिर्भगवान्परितृषिता[1]ः स्मो भगवतो दर्शनायेच्छामो वयं भगवन्तं द्रष्टुमिति ॥ ततो राजा ऽनाथपिण्डदं गृहपतिमुवाच। कच्चित्ते[2] गृहपते श्रुतं कुत्र भगवानेतर्हि वर्षा उपगत इति ॥ अनाथपिण्डद उवाच। श्रुतं मे देव भगवान्राजगृहे वर्षा उपगत इति ॥ 10

ततो राज्ञा प्रसेनजिता कौशलेनानाथपिण्डदाद्यैश्च पौरजानपदामात्यैरन्यतमः पुरुषो [55a] [3]दूत्येनाहूयो[4]क्तः। एहि त्वं भो पुरुष येन भगवांस्तेनोपसंक्राम उपसंक्रम्या[5]ऽस्माकं वचनेन भगवतः पादौ शिरसा वन्दस्वा[6]ल्पाबाधतां च पृच्छाल्पातङ्कं च लघूत्था-

---

1) Visarga wanting in MS.

2) Ex conject.; B किंचिते, but the stroke of the *i* in चि has been cancelled; of its copies CP have किंचिते, D किंचते. Yet the original reading of B seems to come nearer to the genuine form of the interrogative. Since *kaccit* may have the force of lat. *-nĕ* (e. g. Jtkm. XXII, 66. Mhbh. 2, 5, 17 foll.), I have put it into the text.

3) Ex conject.; MS दूतेना°. As to the construction, cp. my *Sanskrit Syntax* § 237. Feer, who used also the Tibetan version, has here (p. 221, 22) «donnèrent à un individu le nom de Messager, et lui dirent.»

4) B °नोक्ता, D corr.

5) Avagraha in MS.

6) MS वन्दस्वल्पावाधताश्च.

नतां च यात्राञ्च बलञ्च सुखं चानवद्यतां च स्पर्शविहारतां च एवं च वद राजा भदन्त कौशलः[1] श्रावस्तीनिवासिनश्च पौरा आकाङ्क्षन्ति भगवतो दर्शनमेवं चाकाङ्क्षिरदृष्टो ऽस्माभिर्भगवान्परितृषिताः[2] स्मो भगवतो दर्शनायेच्छामो वयं भगवन्तं द्रष्टुं साधु भगवाञ्छ्रावस्तीमागच्छेदनुकम्पामुपादायेति ॥ एवं देवेति स पुरुषो राज्ञः प्रसेनजितः कौशलस्य
5 सामात्यपौरजानपदस्य प्रतिश्रुत्य श्रावस्तीतो[3] ऽनुपूर्वेण चञ्चूर्यमाणो राजगृहं नगरमनुप्राप्तः। ततः पूर्वं राजगृहं नगरमवलोक्य येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्ते निषण्णः। ‹एकान्तनिषण्णः› स पुरुषो भगवन्तमिदमवोचत्। राजा भदन्त प्रसेनजित्कौशलः श्रावस्तीनिवासिनश्च पौरा भगवतः पादौ शिरसा वन्दित्वाल्पाबाधतां[4] पृच्छन्त्यल्पातङ्कतां[5] च लघूत्थानतां च यात्रां च बलञ्च सुखञ्चानवद्यतां च
10 स्पर्शविहारतां चैवं चाकाङ्क्षिरदृष्टो[6] ऽस्माभिर्भगवान्परितृषिताः[2] स्मो भगवतो दर्शनायेच्छामो वयं भगवन्तं द्रष्टुं साधु भगवाञ्छ्रावस्तीमागच्छेदनुकम्पामुपादायेति[7] ॥ भगवानाह। सचेन्मे भोः पुरुष राजा बिम्बिसारो ऽनुज्ञास्यति गमिष्यामीति ॥ ततः स दूतो राजानं बिम्बिसारमनुज्ञाप्य भगवन्तमिदमवोचत्। अनुज्ञातो ऽसि भगवन्राज्ञा बिम्बिसारेण ‹गमनाय›[8] यस्येदानीं भगवान्कालं मन्यत इति। अधिवासयति भगवांस्तस्य पुरुषस्य तूष्णी-
15 भावेन ॥

1) B कोशलः, D corr., but in the sequel B has the good orthography.

2) Visarga wanting in MS.

3) B °स्तीतानुपू°, CP corr.

4) B वन्दित्वैल्पा°, with an erasure between त्वै and ल्पा. Hence D त्वैवाल्प°, C °त्विवल्पा°, P °त्वैऽल्पा°.

5) Ex conject.; cp. *supra*, p. 325,13; MS °वाधतांचिचक्कत्याल्पा° (in D corrected into °धतांपृच्छन्ताल्पा°).

6) MS चाकृश्चि°.

7) B °नुपादायेति, D corr.

8) That here is a small gap must be inferred not only from the Tibetan (cp. Feer, p. 222, n. 4) but also from the relative sentence *yasyedānīṃ* etc. whose antecedent must be some word like *gamanāya*. Cp. *supra*, p. 9, 5.

अथ भगवांस्त्रयाणां वार्षिकाणां मासानामत्ययात्कृतचीवरो निष्ठितचीवरः समादाय पात्रचीवरं महता परिवारेण श्रावस्त्यभिमुखो ऽभिप्रगाम । दूतो ऽपि रथाभिरूढः संप्रस्थितः ॥ अथासौ ददर्श बुद्धं भगवन्तं पद्भ्यां संप्रस्थितम् । ततो रथादवतीर्य येन भगवांस्तेनाञ्जलिं प्रणाम्य भगवन्तमिदमवोचत् । प्रतिगृह्यतां भगवन्नस्माकीनो[1] रथो ऽनुकम्पामुपादायेति[2] ॥ भगवानाह ।

ऋद्धिपादरथेनाहं सम्यग्व्यायामवर्तिना ।
विचरामि महीं कृत्स्नामततः[3] क्लेशकण्टकैरिति[4] ॥

दूतः प्राह । यद्यपि भगवानृद्धिपादयानयायी तथापि तु क्रियतां ममानुग्रहार्थमनुकम्पेति ॥ अथ भगवान्दूतस्यानुग्रहार्थमृद्ध्या रथस्योपरि स्थितः । ततो भगवान्रथाभिरूढः[5] श्रावस्तीमनुप्राप्तो दूतेन च राज्ञे निवेदितम् ॥ अथ राजा सामात्यः सपौरजानपदो भगवन्तं प्रत्युद्गतः तत्रैव च जेतवने रात्रिंवासमुपगतो धर्मश्रवणाय ॥ स च दूतो ऽल्पायुष्को[6] धर्मं श्रुत्वा तस्यामेव रात्रौ कालगतः । स कालं कृत्वा प्रणीतेषु देवेषु त्रयस्त्रिंशेषूपपन्नः ॥

धर्मता खलु देवपुत्रस्य वा देवकन्याया वाचिरोपपन्नस्य त्रीणि चित्तान्युत्पद्यन्ते कुतश्च्युतः कुत्रोपपन्नः केन कर्मणेति । स पश्यति मनुष्येभ्यश्च्युतः प्रणीतेषु देवेषु त्रयस्त्रिंशेषूपपन्नो भगवतो ऽन्तिके चित्तमभिप्रसाद्येति ॥ अथ दूतपूर्विणो देवपुत्रस्यैतदभवत् । न मम प्रतिरूपं स्याद्यदहं पर्युषितपरिवासो भगवन्तं दर्शनायोपसंक्रामेयं[7] यन्न्वहमपर्युषितपरिवास एव भगवन्तं दर्शनायोपसंक्रामेयमिति ॥ अथ दूतपूर्वी[8] देवपुत्रश्चल-

1) B भगवन्नास्मा°, D corr.

2) B °कम्पानुपा°, D corr.

3) Ex conject.; MS °ततल्क्ले°.

4) MS कष्टकैरिति. I have adopted Feer's correction (p. 223 n. 1) suggested by the Tibetan translation.

5) B रथोभि°, D corr.

6) Ex conject., cp. *supra*, p. 316, 2; MS ल्पायुषो (D °ष).

7) MS °क्रामितुं, the same blending of constructions as *supra*, p. 259 n. 7.

8) MS र्वि (D र्वी).

विमलकुण्डलधरो हारार्धहारविराजितगात्रो मणिरत्नविचित्रचूडः कुङ्कुमतमालपत्रस्पृ-
क्कादिसंसृष्टगात्रस्तस्यामेव रात्रौ दिव्या<ना>मुत्पलपद्मकुमुदपुण्डरीकमन्दारकाणां[(1)] पुष्पा-
णामुत्सङ्गं[(2)] पूरयित्वा सर्वं जेतवनमुदारेणावभासेनावभास्य भगवन्तं पुष्पैरवकीर्य भग[55b]-
वतः पुरस्तान्निषण्णो धर्मश्रवणाय ॥ अथ भगवान्दूतपूर्विणो देवपुत्रस्याशयानुशयं धातुं
5 प्रकृतिं च ज्ञात्वा तादृशीं[(2)] चतुरार्यसत्यसंप्रतिवेधिकीं[(2)] धर्मदेशनां कृतवान्यां श्रुत्वा दूतपू-
र्विणा देवपुत्रेण विंशतिशिखरसमुद्गतं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रोतआपत्ति-
फलं साक्षात्कृतम्[(3)] । स दृष्टसत्यस्त्रिरुदानमुदानयति । इदमस्माकं भदन्त न मात्रा कृतं न
पित्रा न राज्ञा न देवताभिर्नेष्टेन स्वजनबन्धुवर्गेण न पूर्वप्रेतैर्न श्रमणब्राह्मणैर्यद्भगवता-
स्माकं कृतम् । उच्छोषिता रुधिराश्रुसमुद्रा लङ्घिता अस्थिपर्वताः पिहितान्यपायद्वाराणि
10 विवृतानि स्वर्गमोक्षद्वाराणि प्रतिष्ठापिताः[(4)] स्मो देवमनुष्येषु । आह च ।

तवानुभावात्पिहितः सुघोरो ह्यपायमार्गो बहुदोषयुक्तः ।
अपावृता स्वर्गगतिः सुपुण्या निर्वाणमार्गश्च मयोपलब्धः ॥
त्वदाश्रयाच्चाप्तमपेतदोषं मयाद्य शुद्धं सुविशुद्ध चक्षुः ।
प्राप्तं च शान्तं पदमार्यकान्तं तीर्णश्च[(5)] दुःखार्णवपारमस्मि ॥
15 नरवरेन्द्र नरामरपूजित विगतजन्मजरामरणामय ।
भवसहस्रसुदुर्लभदर्शन सफलमद्य मुने तव दर्शनम् ॥
अवनम्य ततः प्रलम्बहारश्चरणौ द्वावभिवन्द्य जातहर्षः ।
परिगम्य च दक्षिणं जितारिं सुरलोकाभिमुखो दिवं जगाम ॥

---

1) MS. °कानां, cp. *supra*, p. 316, n. 4.

2) Anusvāra wanting in MS.

3) MS °त्कृतः., yet it seems that the visarga has been wiped out.

4) MS °पितास्मो; this constant orthography in this *cliché* will hereafter no more be noted.

5) MS तीर्णाश्च.

अथ दूतपूर्वी देवपुत्रो वणिगिव लब्धलाभः सस्यसंपन्न इव कर्षकः शूर इव विजितसंग्रामः सर्वरोगपरिमुक्त इवातुरो यया हि विभूत्या भगवत्सकाशमागतस्तयैव विभूत्या स्वभवनं गतः ॥

ततो राजा प्रसेनजिदुपरिप्रासादतलगतस्तमुदारमवभासं दृष्ट्वा प्रभातायां रजन्यां भगवन्तं पप्रच्छ । किं भगवन्निमां रात्रिं भगवन्तं दर्शनाय ब्रह्मा सहाम्पतिः[1] शक्रो देवेन्द्रश्चत्वारो लोकपाला उपसंक्रान्ताः ॥ भगवानाह । न महाराज ब्रह्मा सहाम्पतिर्न[1] शक्रो देवेन्द्रो नापि चत्वारो लोकपाला मां दर्शनायोपसंक्रान्ता अपि तु तावको दूतः स ममान्तिके चित्तमभिप्रसाद्य कालगतः प्रणीतेषु देवेषु त्रयस्त्रिंशेषूपपन्नः । स इमां रात्रिं मत्सकाशमागतस्तस्य मया धर्मो देशितः स दृष्टसत्यः स्वभवनं गत इति ॥ ततो राजा विस्मयजातः कथयति । अहो बुद्धो ऽहो धर्मो ऽहो सङ्घो यत्र नाम परीत्तं कर्म कृत्वा महान्विपाक इति ॥ अथ राजा प्रसेनजित्कौशलो भगवतो भाषितमभिनन्द्यानुमोद्य[2] भगवतः पादौ शिरसा वन्दित्वोत्थायासनात्प्रक्रान्तः ॥

तत्र भगवान्भिक्षूनामन्त्रयते[3] स्म । तिस्र इमा भिक्षवो ऽग्रप्रज्ञप्तयः । कतमास्तिस्रः । बुद्धे ऽग्रप्रज्ञप्तिर्धर्मे सङ्घे ऽग्रप्रज्ञप्तिः । ‹बुद्धे ऽग्रप्रज्ञप्तिः›[4] कतमा । ये केचित्सत्त्वा अपदा वा द्विपदा वा बहुपदा वा रूपिणो वा ऽरूपिणो वा संज्ञिनो वा ऽसंज्ञिनो वा नैवसंज्ञिनो नासंज्ञिनस्तथागतो ऽर्हन्‹सम्यक्›संबुद्धस्तेषामग्र आख्यातः[5] । ये केचिद्बुद्धे ऽभिप्रसन्ना अग्रे ते ऽभिप्रसन्नाः । तेषामग्रे ऽभिप्रसन्नानामग्र एव विपाकः प्रतिकाङ्क्षितव्यो देवेषु वा देवभूतानां मनुष्येषु[6] वा मनुष्यभूतानाम् । इयमुच्यते बुद्धे ऽग्रप्रज्ञप्तिः । धर्मे[7] ऽग्रप्रज्ञप्तिः

---

1) MS सहापति°.

2) MS भाषितमत्यनन्द्या°.

3) MS भिक्षूणाम°.

4) Cp. *supra*, p. 49, 10.

5) MS आख्यातायेकेचि° (D आख्यापतेकेचि°).

6) Ex conject.; MS मनुष्यभूतेषु.

7) MS धर्माग्र°.

कतमा । ‹ये› केचिद्धर्माः संस्कृता वा ऽसंस्कृता वा विरागो[1] धर्मस्तेषामग्र आख्यातः[2] । ये केचिद्धर्मे ऽभिप्रसन्ना अग्रे ते ऽभिप्रसन्नाः । तेषामग्रे ऽभिप्रसन्नानामग्र एव विपाकः प्रतिकाङ्क्षितव्यो देवेषु वा देवभूतानां मनुष्येषु वा मनुष्यभूतानाम् । इयमुच्यते धर्मे ऽग्रप्रज्ञप्तिः । सङ्घे ऽग्रप्रज्ञप्तिः[3] कतमा । ये केचित्सङ्घा वा गणा ‹वा› पूगा वा पर्षदो वा तथागतश्राव-
5 कसङ्घस्तेषामग्र आख्यातः ये [56a] केचित्सङ्घे ऽभिप्रसन्ना अग्रे ते ऽभिप्रसन्नाः । तेषामग्रे ऽभिप्रसन्नानामग्र एव विपाकः ।प्रतिकाङ्क्षितव्यो देवेषु वा देवभूतानां मनुष्येषु वा मनुष्यभूतानाम् । इयमुच्यते सङ्घे ऽग्रप्रज्ञप्तिः ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

1) MS विरागये धर्मस्तेषा°. Cp. *supra*, p. 50, 4.

2) MS आख्यातोयेकेचि°.

3) In B follows सङ्घेप्रज्ञप्तिः, an evident dittography. The copyist of D, therefore, has left it out.

## माहिष इति ५८ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिस्सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः कोशलेषु[1] जनपदेषु चारिकां चरन्नन्य- 5
[2]तमवनषण्डमनुप्राप्तः । तत्र च वनषण्डे महान्महिषीयूथः प्रतिवसति पञ्चमात्राणि[3] च महिषीपालशतानि ॥ यावत्तत्रा[4]न्यतमो महिषो बलवान्परमेण[5] बलेन समन्वागतः । स परमनुष्याणां गन्धमाघ्राय पृष्ठतो ऽनुधावति ॥ भगवांश्च तं प्रदेशमनुप्राप्तः । ततो महिषीपालैर्भगवान्सश्रावकसङ्घो[6] दूरत एव दृष्टः । ततस्तैरुच्चैःशब्दैरुक्तः भगवन्निमं मार्गं वर्जय दुष्टमहिषो ऽत्र प्रतिवसतीति ॥ भगवानाह । अल्पोत्सुका भवन्तु भवन्तो वयमत्र 10
कालज्ञा भविष्याम इति ॥ अथासौ दुष्टमहिषो भगवन्तं दूरत एव दृष्ट्वा लाङ्गूलमुन्नाम्य येन भगवांस्तेन प्रधावितः । ततो भगवता पुरस्तात्पञ्च केशरिणः सटा[7]धारिणः सिंहा निर्मिता वामे दक्षिणे च पार्श्वे द्वावग्निस्कन्धावुपरिष्टान्महत्ययोमयी शिला ॥ ततः स

---

1) MS कोषलेषु (D कौश°).

2) Query: न्यतमं वन°?

3) B पंचाँत्राणि, the sign ˘ serving both to cancel the *ā* and to refer to the top of the page, where मा is written to be inserted here. Through failure to understand this the copies have पञ्चा (or पंचा) मात्राणि.

4) B यावत्तन्त्रा°, D corr.

5) Ex conject.; MS प्रमेन वलेन.

6) B °संघा, P corr.

7) Ex conject.; MS पटधारिणः, which it would be hard to explain in this connection. My correction is confirmed by the Tibetan translation apud Feer, p. 224 n. 2.

महिषः समन्ततो महाभयं दृष्ट्वा भगवतः पादौ निश्रित्य[1] दीनवदनश्च भगवन्तं प्रेक्षते[2]॥ ततो ऽस्य भगवता तन्मध्या[3] गत्यास्तन्मध्या योन्यास्त्रिभिः पदैर्धर्मो देशित इति हि भद्रमुख सर्वसंस्कारा अनित्याः सर्वधर्मा अनात्मानः शान्तं[4] निर्वाणमिति ज्ञातिश्च स्मारिता। स श्रुत्वा रोदितुं प्रवृत्तः॥ अथ भगवांस्तस्यां वेलायां गाथे भाषते।

5 इदानीं किं करिष्यामि तिर्यग्योनिगतस्य ते।
अक्षणाप्रतिपन्नस्य किं रोदिषि निरर्थकम्॥
साधु प्रसाद्यतां चित्तं मयि कारुणिके जिने।
तिर्यग्योनिं विराग्येह ततः स्वर्गं[5] गमिष्यसीति॥

अथासौ दुष्टमहिषः स्वाश्रयं जुगुप्समानो ऽनाहारतां[6] प्रतिपन्नः। दीप्ताग्नयस्तिर्यग्योनि-
10 गताः प्राणिनः। स आशु कालं कृत्वा प्रणीतेषु देवेषु त्रयस्त्रिंशेषूपपन्नः॥

धर्मता खलु देवपुत्रस्य वा देवकन्याया वाचिरोपपन्नस्य त्रीणि चित्तान्युत्पद्यन्ते[7] कुतश्च्युतः कुत्रोपपन्नः केन कर्मणेति। स पश्यति तिर्यग्भ्यश्च्युतः प्रणीतेषु देवेषु त्रयस्त्रिंशेषूपपन्नो भगवतो ऽन्तिके चित्तमभिप्रसाद्येति॥ अथ महिषपूर्विणो देवपुत्रस्यैतदभवत्। न मम प्रतिरूपं स्याद्यदहं पर्युषितपरिवासो भगवन्तं दर्शनायोपसंक्रामेयं यन्न्वहमपर्युषितप-
15 रिवास एव भगवन्तं दर्शनायोपसंक्रामेयमिति॥ अथ महिषपूर्वो देवपुत्रश्चलविमलकुण्ड-लधरो हारार्धहारविराजितगात्रो मणिरत्नविचित्रचूडः कुङ्कुमतमालपत्रस्पृक्कादिसंसृष्टगात्रस्तस्यामेव रात्रौ दिव्यानामुत्पलपद्मकुमुदपुण्डरीकमन्दारकाणामुत्सङ्गं पूरयि-

---

1) Ex conject.; MS निसृत्य. Cp. *supra*, p. 1 n. 4 and Divy. 598, 27 *saṃsṛtāḥ = saṃçritāḥ*.

2) B प्रेद्यते, D corr.

3) Ex conject.; MS तन्मध्यागत्यातन्मध्यायोन्यात्रिभिः. Cp. *supra*, p. 291, 7.

4) Anusvāra wanting in MS.

5) Ex conject., according to the corresponding metrical portion in avad. nr. 51, cp. *supra*, p. 291, 14; MS स्वर्गगतिं गमि°.

6) Ex conject.; cp. *supra*, p. 291, 17; MS °मानोमहारतां.

7) B °द्यते, D corr.

त्वा सर्वं तं वनषण्डमुदारेणावभासेनावभास्य भगवन्तं[1] पुष्पैरवकीर्य भगवतः पुरस्तान्निषण्णो धर्मश्रवणाय । अथ भगवान्मह्हिषपूर्विणो देवपुत्रस्याशयानुशयं धातुं प्रकृतिं च ज्ञात्वा तादृशीं[2] चतुरार्यसत्यसंप्रतिवेधिकीं धर्मदेशनां कृतवान्यां श्रुत्वा मह्हिषपूर्विणा देवपुत्रेण विंशतिशिखरसमुद्गतं सत्कायदृष्टिशै[56b]लं ज्ञानवज्रेण भित्त्वा स्रोतआपत्तिफलं साक्षात्कृतम् । स दृष्टसत्यस्त्रिरुदानमुदानयति । इदमस्माकं 5 भदन्त न मात्रा कृतं न पित्रा न राज्ञा न देवताभिर्नेष्टेन स्वजनबन्धुवर्गेण न पूर्वप्रेतैर्न श्रमणब्राह्मणैर्यद्भगवतास्माकं कृतम् । उच्छोषिता रुधिराश्रुसमुद्रा लङ्घिता अस्थिपर्वताः पिहितान्यपायद्वाराणि विवृतानि स्वर्गमोक्षद्वाराणि प्रतिष्ठापिताः स्मो देवमनुष्येषु । आह च ।

तवानुभावात्पिहितः सुघोरो ह्यपायमार्गो बहुदोषयुक्तः । 10
अपावृता स्वर्गगतिः सुपुण्या निर्वाणमार्गश्च मयोपलब्धः ॥
त्वदाश्रयाच्चाप्तमपेतदोषं मयाद्य शुद्धं सुविशुद्ध चक्षुः ।
प्राप्तं च शान्तं पदमार्यकान्तं तीर्णश्च दुःखार्णवपारमस्मि ॥
नरवरेन्द्र नरामरपूजित विगतजन्मजरामरणामय ।
भवसहस्रसुदुर्लभदर्शन सफलमद्य मुने तव दर्शनम् ॥ 15
अवनम्य ततः प्रलम्बहारः चरणौ द्वावभिवन्द्य जातहर्षः ।
परिगम्य च दक्षिणं जितारिं सुरलोकाभिमुखो दिवं जगाम ॥

अथ तैर्मह्हिषीपालैः स उदारो ऽवभासो दृष्टो यं दृष्ट्वा कुतूहलजाता[3] भगवन्तं पप्रच्छुः[4] । क एष भगवन्रात्रौ दिव्यमवभासं कृत्वा भगवत्सकाशमनुप्राप्त इति ॥ भगवानाह । स एष भवन्तो मह्हिषो ममान्तिके चित्तमभिप्रसाद्य कालगतः प्रणीतेषु देवेषु त्रय- 20

1) B °वन्तपुष्पै°, D corr.
2) Anusvāra wanting in MS.
3) MS कुतूहर°.
4) B °प्रच्छुक, D corr.

स्त्रिंशेषूपपन्नः। सो ऽस्यां रात्रौ मत्सकाशमुपसंक्रान्तस्तस्य मया धर्मो देशितः स दृष्टसत्यः स्वभवनं गतः॥ ततस्ते महिषीपालाः परं विस्मयमापन्नाः। आश्चर्यं यन्नामायं तिर्यग्योनिगतो भूत्वा भगवन्तं कल्याणमित्रमासाद्य देवेषू(1)पपन्नः सत्यदर्शनं च कृतम्। कथं नाम वयं मनुष्यभूता विशेषं नाधिगच्छेमेति॥ ततस्ते बुद्धं भगवन्तं सश्रावकसङ्घं प्रणीतिनाहारेण संतर्प्य भगवतो ऽन्तिके प्रव्रजिताः॥ तैर्युज्यमानैर्घटमानैर्व्यायच्छमानैः सर्वक्लेशप्रहाणादर्हत्वं साक्षात्कृतम्॥

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। कानि भदन्त महिषपूर्वकेण देवपुत्रेण कर्माणि कृतानि येन महिषेषूपपन्न एभिश्च महिषीपालैः किं कर्म कृतं येनार्हत्वं(2) साक्षात्कृतम्॥ भगवानाह। एभिरेव भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि(3)। एभिः कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति। न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ(4) न तेजोधातौ न वायुधातावपि तूपा(5)त्तेष्वेव स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम्॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि अस्मिन्नेव भद्रकल्पे विंशतिसहस्रायुषि प्रजायां काश्यपो नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान्। स वाराणसीं नगरीमुपनिश्रित्य विहरति ऋषिपतने मृगदावे। तत्र च काले भिक्षूणां विनिश्चये वर्तमाने त्रिपिटो भिक्षुः

1) MS °षुप°.
2) MS °र्हत्वां.
3) MS °भागीनि (D °भाविनो, cp. *supra*, p. 323, n. 4).
4) B नाब्धाधौ, DP corr.
5) Cp. *supra*, p. 74 n. 9.

पञ्चशतपरिवारो विनिश्चये ऽवस्थितः । तत्र च भिक्षवः शैक्षाशैक्षाः । ते त्रिपिटं प्रश्नं पृच्छन्ति । स न शक्नोति व्याकर्तुम् । तेन कुपितेन खरं वाक्कर्म निश्चारितम्(1) । इमे च मक्षिषाः किं प्रजानन्तीति । शिष्यैर्(2)प्यस्योक्तमिमे मक्षिषीपालाः किं प्रजानन्तीति ॥

भगवानाह । किं मन्यध्वे भिक्षवो यो [57 a] ऽसौ मक्षिषः अयमसौ त्रिपिटः(3) ये ते शिष्या इमे ते मक्षिषीपालाः । तेन कर्मणा पञ्च जन्मशतानि मक्षिषेषूपपन्नं(4) इमानि च पञ्च 5 मक्षिषीपालशतानि संवृत्तानि । यन्ममान्तिके चित्तं प्रसादितं तेन देवेषूपपन्नः सत्यदर्शनं च कृतम् । तस्मात्तर्हि भिक्षवो वाग्दुश्चरितप्रहाणाय व्यायन्तव्यं(5) यथा एते दोषा न भविष्यन्ति ये मक्षिषस्य मक्षिषीपालानां च एष(6) एव गुणगणो भविष्यति यस्तस्यैव देव-पुत्रभूतस्येत्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

1) Ex conject.; B निश्चारितवाम्, its copies °तवान्.
2) MS शिक्षैर्प्य°.
3) B here त्रिपठः out of त्रिपिठः, C त्रिपठः, D त्रिपटः, P त्रिपिटः.
4) Ex conject.; MS °पन्ना.
5) MS व्यायत्त°.
6) MS एवमेव, cp. *supra*, p. 204, 15.

## उपोषध इति ५६ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिस्सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्डदस्यारामे। तेन खलु पुनः समयेन देवानां त्रयस्त्रिंशानामुपोषधो नाम देवपुत्रो ऽसकृदसकृद्भगवत्सकाशमुपसंक्रामति धर्मश्रवणाय ॥ यावदपरेण समयेन उपोषधो नाम देवपुत्रः पञ्चशतपरिवारो येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्ते निषण्णो धर्मश्रवणाय ॥ अथ भगवानुपोषधस्य देवपुत्रस्याशयानुशयं धातुं प्रकृतिं च ज्ञात्वा तादृशीं[1] चतुरार्यसत्यसंप्रतिवेधिकीं धर्मदेशनां कृतवान्यां श्रुत्वोपोषधेन देवपुत्रेण विंशतिशिखरसमुद्गतं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रोतापत्तिफलं साक्षात्कृतम्॥ स दृष्टसत्यस्त्रिरुदानमुदानयति। इदमस्माकं भदन्त न मात्रा कृतं न पित्रा न राज्ञा न देवताभिर्नेष्टेन स्वजनबन्धुवर्गेण न पूर्वप्रेतैर्न श्रमणब्राह्मणैर्यद्भगवतास्माकं कृतम्। उच्छोषिता रुधिराश्रुसमुद्रा लङ्घिता अस्थिपर्वताः पिहितान्यपायद्वाराणि विवृतानि स्वर्गमोक्षद्वाराणि प्रतिष्ठापिताः स्मो देवमनुष्येषु। आह च।

तवानुभावात्पिहितः सुघोरो ह्यपायमार्गो बहुदोषयुक्तः।
अपावृता स्वर्गगतिः सुपुण्या निर्वाणमार्गश्च मयोपलब्धः॥
त्वदाश्रयाच्चाप्तमपेतदोषं मयाद्य शुद्धं सुविशुद्धचक्षुः।
प्राप्तं च शान्तं पदमार्यकान्तं तीर्णश्च दुःखार्णवपारमस्मि॥

1) Anusvāra wanting in MS.

नरवरेन्द्र नरामरपूजित विगतजन्मजरामरणामय।
भवसहस्रसुदुर्लभदर्शन[1] सफलमद्य मुने तव दर्शनम्॥
अवनम्य ततः प्रलम्बहारश्चरणौ द्वावभिवन्द्य जातहर्षः।
परिगम्य च दक्षिणं जितारिं सुरलोकाभिमुखो दिवं जगाम॥

ततो[2] भिक्षवः पूर्वरात्रापररात्रं जागरिकायोगमनुयुक्ता विहरन्ति। तैर्दृष्टो भगवतो 5
ऽन्तिके उदारो ऽवभासः। यं दृष्ट्वा संविग्ना भगवन्तं पप्रच्छुः। किं भदन्त इमां रात्रिं भगवन्तं
दर्शनाय ब्रह्मा सहाम्पतिः[3] शक्रो देवेन्द्रश्चत्वारो लोकपाला उपसंक्रान्ताः[4]॥ भगवानाह। न
भिक्षवो ब्रह्मा सहाम्पतिर्न[3] शक्रो देवेन्द्रो नापि चत्वारो लोकपाला मां दर्शनायोपसंक्रान्ता
अपि तु देवेषु त्रयस्त्रिंशेषूपोषधो नाम देवपुत्रः पञ्चशतपरिवारो मां दर्शनायोपसंक्रान्त-
स्तस्य मया धर्मो देशितो दृष्टसत्यश्च स स्वभवनं गत इति॥ भिक्षवस्संशयजाताः सर्वसंश- 10
यच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। कुतो भदन्त उपोषधस्य देवपुत्रस्योत्पत्तिर्नामाभिनिर्वृ-
त्तिश्चेति॥ भगवानाह। इच्छथ यूयं भिक्षवः श्रोतुम्॥ एवं भदन्त॥ तेन हि[5] भिक्षवः शृणुत
साधु च सुष्ठु च मनसि कुरुत भाषिष्ये॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि अस्मिन्नेव भद्रकल्पे विंशतिवर्षसहस्रायुषि प्रजायां
काश्यपो नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो [57 b] लोकविद- 15
नुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान्। स वाराणसीं नगरीमुप-

---

1) The copies have °र्शनं, because in B an accidental dot on the top line of न looks like anusvāra.

2) B तता, DP corr.

3) MS सहाप°.

4) MS लोकपाला भगवन्तं दर्शनायोपसं°, the copyist had forgotten that he had written already भगवन्तं दर्शनाय a little before.

5) MS तेनाह.

‹नि›श्रित्य[1] विहरति ऋषिपतने[2] मृगदावे ॥ यावदपरेण समयेन कृकी राजा भगवन्तं दर्शना-
योपसंक्रामति पर्युपासनाय । यावद्द्वौ ब्राह्मणौ ऋषिपतनं[3] गतौ केनचित्करणीयेन । ताभ्यां
राजा दृष्टो महत्या राजर्द्ध्या[4] महता राजानुभावेन । तयो राज्याभिलाषो जातः[5] । ताभ्या-
मन्यतम उपासकः पृष्टः । भो बुद्धोपासक किं कर्म कृत्वा यच्चिन्तयति[6] यत्प्रार्थयते तदस्य
5 सर्वं समृध्यतीति ॥ उपासकेनोक्तम् । यः परिशुद्धमष्टाङ्गसमन्वागतमुपवासमुपवसति
यच्चिन्तयति यत्प्रार्थयते त‹द्›स्य सर्वं समृध्यतीति ॥ ततस्तौ ब्राह्मणौ आषाढस्य गृह-
पतेस्सकाशादष्टाङ्गसमन्वागतमुपवासमु‹पलभ्यो›[7]पोषितौ[8] । तदेकेन[9] परिशुद्धो रक्षितः[10] ।
स कालं कृत्वा राज्ञः कृकेः पुत्रत्वमभ्युपग‹तः ।› तस्य सुजात इति नामधेयं व्यवस्था-
पितम् । स पितुरत्ययाद्राज्ये प्रतिष्ठापितः ॥

10 द्वितीयेनोपवासः खण्डितः । स कालं कृत्वा नागेषूपपन्नः । तस्योपरि दिवसे[11] ‹दिवसे

---

1) MS °मुपसृत्य (D corr. °मुपनिसृत्य).

2) B ऋषिवदने, the copyist of C kept °वदने, those of D and P changed it into °पतने. Cp. *supra*, p. 250, n. 6.

3) B °पतन or °नं out of °वदनं.

4) So MS, the sandhi is observed *supra*, p. 69, 10.

5) Ex conject.; B राज्याभिलाषो (afterwards changed into °लाष, it seems) वाजातस्ता°. I have passed over वा, since it is unlikely that any prefix of *jāta* should be hidden under that akṣara.

6) Ex conject., cp. *infra*, l. 6; MS यच्चिन्तयते.

7) The supposition of a gap, which I have filled up by inserting *upalabhya*, being the verbal form required because of *sakāçāt*, is confirmed by the Tibetan version, see Feer, p. 228 n. 1.

8) B °षितो, D corr.

9) Ex conject.; MS तदेकेन.

10) MS रक्षितस्स, and l. 10 खण्डितस्स.

11) Cp. Feer p. 228, 16 and his note 2 on that page. The Tibetan corresponding text is: དེའི་སྟེང་དུ་ཉིན་ཅིག་བཞིན་དུ་ལན་བདུན་བདུན་གྱི་ཚོན་པས་ཏེ॥ Skt. *divase divase saptakṛtvaḥ* would closely answer to the Tib. ཉིན་ཅིག་བཞིན་དུ་ལན་བདུན་བདུན་.

सप्तकृत्वस्तप्तवालुका निपतति[1] यया सो[2] ऽस्थिशेषः क्रियते ॥ तस्यैतदभवत्। कस्येदं कर्मणः फलं कस्यायं कर्मणः फलविपाको येनाहमीदृशं दुःखमनुभवामीति। स पश्यत्यष्टाङ्गसमन्वागतं मे उपवासं समादाय शिक्षाशैथिल्यं कृतं येनाहमीदृशं महद्दुःखं प्रत्यनुभवामि' येन पुनः समादाय रक्षितं तेन राज्यं प्रतिलब्धमिति । तस्यैतदभवत् । यन्न्वहमिदानीमपि तावदष्टाङ्गसमन्वागतमुपवासमुपवसेयमप्येव नाम नागयोनेर्मोक्षः[3] स्यादिति ॥ ततो नागवर्णमन्तर्धाप्य ब्राह्मणवर्णमात्मानमभिनिर्माय राज्ञः सकाशमुपसंक्रान्तः । उपसंक्रम्य जयेनायुषा च वर्धयित्वोवाच। अष्टाङ्गसमन्वागतेन मे महाराज उपवासे<न> प्रयोजनम्। तदर्हति देवो ऽष्टाङ्गसमन्वागतमुपवासं पर्येषितुम्। अथ न पर्येषसे नियतं देवस्य सप्तधा मूर्धानं स्फालयामि[4] । इत्युक्त्वा तत्रैवान्तर्हितः ॥ ततो राजा भीतस्त्रस्तसंविग्न आहृष्टरोमकूपो[5] हिरण्यपिटकं ध्वजाग्रे बद्ध्वा सर्वविजिते[6] घण्टावघोषणं कारयामास। यो मे ऽष्टाङ्गसमन्वागतमुपवासं देशयिष्यति तस्यैतं[7] हिरण्यपिटकं दास्यामि महता सत्कारेण सत्करिष्यामीति ॥ यावदन्यतमा वृद्धा स्त्री पलगण्डगृहिता। तया राज्ञः स्तम्भो दर्शितः। अत्र मे स्तम्भे पिता असकृद्गन्धधूपपुष्पार्चनं कृतवान्' तमुत्पाट्य प्रत्यवेक्षस्वेति ॥ ततो राज्ञा पौरुषेयाणामाज्ञा दत्ता अयं स्तम्भ उत्पाट्यतामिति। ततो राजपुरुषै स्तम्भ उत्पाटितः।

---

1) Ex conject.; MS निपतन्ति.

2) Ex conject.; MS मास्थि°.

3) MS योनेर्मोक्तः, C योनेमौत्तिः, P योनेर्मैत्तिः, D योनेमोक्त.

4) Ex conject.; B स्फालयी (or या) तीत्युक्त्वा, instead of यी or या D has ये, P य. It may be observed that *sphālayati* is here used with the meaning of *sphoṭayati* or *sphāṭayati*. Should we not read स्फारयामि? The akṣaras *ra* and *la* are often confounded.

5) Ex conject., cp. Divy. 41, 15 where this very expression is found; MS आकृीरोम°.

6) MS विदिते.

7) Ex conject.; MS तस्यैवं (C तस्येवं).

तस्याधस्तात्सुवर्णपत्त्राभिलिखितो[1] ऽष्टाङ्गसमन्वागत उपवासो लब्धः स⟨ह⟩[2] पञ्च चोपासकशिक्षापदानि सप्तत्रिंशच्च बोधिपक्ष्या धर्माः॥ ततो राज्ञा तस्य नागस्याष्टाङ्गसमन्वागत उपवासो लिखित्वा दत्त ऋषिपतननिवासिभिश्च द्वादशभिर्ऋषिसहस्रैः सप्तत्रिंशद्बोधिपक्ष्या धर्माः प्रत्यक्षीकृताः। स च नागो ऽष्टाङ्गसमन्वागतमुपवासमुपोष्य स्थलमुद्गम्योत्सृष्टकायो 5 ऽवस्थितः[3]। सो ऽनाहारतां प्रतिपन्नः कालं कृत्वा पञ्चशतपरिवारः प्रणीतेषु देवेषु त्रयस्त्रिंशेषूपपन्नः। अतो भिक्षव उपोषधस्योत्पत्तिर्नामाभिनिर्वृत्तिश्चेति[4]॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्॥

---

1) Ex conject.; MS °लिख्यत अष्टाङ्ग°.

2) Ex conject.; MS सपञ्च°. Feer p. 229, 11 «..... le jeûne à huit membres avec les cinq bases de l'enseignement etc.»

3) Ex conject.; MS °वस्थितस्स्वेनाहारतां.

4) MS °निर्वृतिश्चेति(D °निर्वृत्तिश्चेति). Cp. *supra*, p. 119, 10 and 134, 8.

# हंसा[1] इति ६० ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिस्सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरि[58 a]ष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्डदस्यारामे । श्रावस्त्यां राजा प्रसेनजित्कौशलो राज्यं कारयति ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं चाकीर्णबहुजनमनुष्यं च प्रशान्तकलिकलहडिम्बडमरं तस्कररोगापगतं शालीक्षुगोमहिषीसंपन्नमखिलमकण्टकमेकपुत्रमिव राज्यं पालयति ॥ यावदपरेण समयेन राजा प्रसेनजित्कौशलो जेतवनं[2] निर्गतो भगवन्तं दर्शनायोपसंक्रमितुं पर्युपासनाय । राज्ञा च पञ्चालेन राज्ञः[3] प्रसेनजित्कौशलस्य प्राभृतं पञ्च हंसशतानि प्रेषितानि । यदा राजा जेतवनं[2] निर्गतस्तदा तानि पञ्च हंसशतान्युपनामितानि । ततो राज्ञा प्रसेनजिता तेषामभयप्रदानं दत्वा तत्रैव जेतवने समुत्सृष्टानि ॥ यदा भगवान्महाश्रावकपरिवृतो[4] ऽशन उपनिषीदति तदा ते हंसा भगवत्सकाशमुपसंक्रामन्ति भगवानपि तेभ्य आलोपमनुप्रयच्छति महाश्रावकाश्च । ते भुक्त्वा तृप्ताः[5] प्रणीतेन्द्रियास्तिष्ठन्ति । यदा भगवान्प्रतिसं-

---

1) MS हंस (D हंश).

2) MS जेतवनान्नि° against the obvious meaning. From Feer (p. 230, n. 1) I infer that the Tibetan translator had the good reading in his manuscript.

3) As to the compound cp. *supra*, p. 56, 3 and 104, 3.

4) Ex conject.; MS परिवृतोजिन उपनिषीदति. The Tibetan has here བསྔོས་གསོལ་ཞིང་བཞུགས་པ, translated by Feer p. 230, 6 'était assis pour le repas'.

5) MS तृप्ताप्रणीतेन्द्रियातिष्ठन्ति.

लयनाद्व्युत्थाय चतसृणां पर्षदां[1] धर्मं देशयति तदा ते हंसा भगवत्सकाशं गत्वा धर्मं शृण्वन्ति ॥ ते चाल्पायुष्कत्वात् कालं कृत्वा प्रणीतेषु देवेषु त्रयस्त्रिंशेषूपपन्नाः ॥

धर्मता खलु देवपुत्रस्य वा देवकन्याया वाचिरोपपन्नस्य त्रीणि चित्तान्युत्पद्यन्ते कुतश्च्युतः कुत्रोपपन्नः केन कर्मणेति । पश्यन्ति हंसेभ्यश्च्युताः प्रणीतेषु देवेषु त्रयस्त्रिंशेषू-
5 पपन्ना भगवतो ऽन्तिके चित्तमभिप्रसाद्येति ।[2] <अथ> हंसपूर्विणो देवपुत्राश्चलविमलकुण्ड-
लधरा हारार्धहारविराजितगात्रा मणिरत्नविचित्रितचूडाः कुङ्कुमतमालपत्रस्पृक्कादिसंसृष्टगात्रास्तस्यामेव रात्रौ दिव्यानामुत्पलपद्मकुमुदपुण्डरीकमन्दारवाणां पुष्पाणामुत्सङ्गं पूरयित्वा सर्वं[3] जेतवनमुदारेणावभासेनावभास्य भगवन्तं पुष्पैरवकीर्य भगवतः पुरस्ता-
न्निषण्णा[4] धर्मश्रवणाय । अथ भगवान्हंसपूर्विणां देवपुत्राणामाशयानुशयं धातुं प्रकृतिं च
10 ज्ञात्वा तादृशीं चतुरार्यसत्यसंप्रतिवेधिकीं धर्मदेशनां कृतवान्यां श्रुत्वा हंसपूर्विभिर्देव-
पुत्रैर्विंशतिशिखरसमुद्गतं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रोतापत्तिफलं[5] प्राप्तम् । ते
दृष्टसत्या वणिज[6] इव लब्धलाभाः सस्यसंपन्ना[7] इव कर्षकाः शूरा इव विजितसंग्रामाः
सर्वरोगपरिमुक्ता इवातुरा यया विभूत्या भगवत्सकाशमागतास्तयैव विभूत्या स्वभवनं
गताः ॥

15 भिक्षवः पूर्वरात्रापररात्रं जागरिकायोगमनुयुक्ता विहरन्ति । तैर्दृष्टो भगवतो ऽन्तिके उदारो ऽवभासः । यं दृष्ट्वा संदिग्धा भगवन्तं पप्रच्छुः । किं भगवन्निमां रात्रिं

---

1) MS पर्षदान्धर्मं.

2) Probably a whole sentence is missing here. It may be easily supplied, conveying the meaning that the angels, formerly swans, thought it became them to call upon the Buddha: अथ हंसपूर्विणां देवपुत्राणामेतदभवत् । नास्माकं प्रतिरूपं स्यात् etc. Cp. a similar abridged form of this commonplace, *supra*, p. 316, 7.

3) Anusvāra wanting in MS.

4) MS °षण्णो.

5) Sandhi in MS (स्रोता°).

6) MS वणिगिव.

7) B °पन्न, D corr.

भगवन्तं दर्शनाय ब्रह्मा सहाम्पतिः[1] शक्रो देवेन्द्रश्चत्वारो लोकपाला उपसंक्रान्ताः ॥ भगवानाह। न भिक्षवो ब्रह्मा सहाम्पतिर्न शक्रो देवेन्द्रो नापि चत्वारो लोकपाला मां दर्शनायोपसंक्रान्ता अपि तु दृष्टास्ते[2] युष्माभिर्भिक्षवस्तानि पञ्च हंसशतानि राज्ञा प्रसेनजिता कौशलेन इक्षोत्सृष्टानि॥ एवं भदन्त ॥ तानि ममान्तिके चित्तमभिप्रसाद्य कालगतानि प्रणीतेषु देवेषूपपन्नानि। तान्यस्यां रात्रौ मत्सकाशमुपसंक्रान्तानि[3] तेषां मया धर्मो 5 देशितः दृष्टसत्यानि च स्वभवनं गतानि॥

भिक्षवः संशयजातास्सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। कानि भदन्त हंसपूर्वकैर्देवपुत्रैः[4] कर्माणि कृतानि येन हंसेषूपपन्नाः कानि कर्माणि कृतानि येन देवेषूपपन्नास्सत्यदर्शनं ‹च›[5] कृतमिति ॥ भगवानाह। एभिरेव भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि[6] लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि । एभिः 10 कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति। न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ[7] न तेजोधातौ न वायुधातावपि तूपात्तेष्वेव[8] स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि।

सामग्रीं प्राप्य कालं च फलन्ति खलु देहि[58b]नाम्॥ 15

भूतपूर्वं भिक्षवो ऽस्मिन्नेव भद्रके कल्पे विंशतिवर्षसहस्रायुषि प्रजायां काश्यपो नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्य-

---

1) MS सहाप°.

2) Sic MS.

3) Ex conject., cp. *supra*, p. 298, 6. 305, 18. 312, 4 etc.; MS शमुपसंज्ञातानि.

4) MS °पूर्विकै°. Cp. *supra*, n. 7 on p. 296 and p. 323, 18. 334, 8.

5) Cp. *supra*, p. 323, 17.

6) B °पवितानि, DP corr.

7) B नाब्धाधौ, DP corr.

8) Cp. *supra*, p. 74 n. 9; MS °धातौ अपि तूपात्ते°.

सारथिः शास्ता देवमनुष्याणां बुद्धो भगवान्। स वाराणसीं नगरीमुपनिश्रित्य[1] विहरति ऋषिपतने[2] मृगदावे। तत्रैभिः प्रव्रजितैः शिक्षाशैथिल्यं कृतम्। तेन हंसेषूपपन्नाः। यन्ममान्तिके चित्तं प्रसादितं तेन देवेषूपपन्नाः। यत्परिशिष्टानि शिक्षापदानि तेन सत्यदर्शनं कृतमिति। इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाक एकान्तशुक्ला-
5 नामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रस्तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माणि अपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीय इत्येवं ‹वो›[3] भिक्षवः शिक्षितव्यम्॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्[4]॥

---

1) MS °निसृत्य. Cp. *supra*, p. 332 n. 1.

2) B °वदने (cp. *supra*, p. 250 n. 6), DP corr.

3) D fills up the gap.

4) In BCP there follows this colophon अवदानशतके (°कौ BC) षष्ठी उद्दानगाथा समाप्ता॥

## सप्तमो वर्गः ।

### [1]सुवर्णाभ इति ६१ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः
श्रेष्ठिभिस्सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकि-
न्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्ला- 5
नप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः कपिलवस्तुनि विहरति न्यग्रोधारामे । कपि-
लवस्तुन्यन्यतमः शाक्य आढ्यो महाधनो महाभोगो विस्तीर्णविशालपरिग्रहो वैश्रवणधन-
समुदितो वैश्रव[2]णधन‹प्रति›स्पर्धी । तेन सदृशात्कुलात्कलत्रमानीतम् । स तया सार्धं
क्रीडति रमते परिचारयति । तस्य क्रीडतो रममाणस्य परिचारयतः पत्नी आपन्नसत्त्वा
संवृत्ता । सा अष्टानां वा नवानां वा मासानामत्ययात्प्रसूता । दारको जातो[3]ऽभिरूपो दर्श- 10
नीयः प्रासादिको[4]ऽतिक्रान्तो मानुषवर्ण‹म्›[5]संप्राप्तश्च दिव्यं [6]वर्णं जाम्बूनदनिष्कसदृ[7]शस्सु-
वर्णवर्णया चानेन प्रभया सर्वं कपिलवस्तु नगरमवभासितम् । तद्दर्शनान्मातापितरावन्ये च

---

1) In MS there precedes the *uddāna* of this *varga*: उद्दानं सुवर्णाभः सुगन्धिश्च (MS श्र) वपुष्मान्बलवान्प्रियः पद्मान्तो दुन्दुभिः पुत्र सूर्यो मल्लपताकयोः; read पुत्राः and मल्लपताकया.

2) MS वन°.

3) MS जात अभि° (D जातः). Likewise *infra*, p. 346, 4 MS दारक अष्टा°.

4) MS प्रासादिकअ° (D कोऽ°).

5) Ex conject., cp. *infra* p. 350, 9; MS मानुषवर्णसंप्रा°.

6) MS दिव्यंसुवर्ण.

7) MS °निष्कंसदृ°.

कुतूहलाभ्यागतास्सत्त्वाः परं विस्मयमागताश्चिन्तयन्ति[1] च कुतो ऽयमीदृशः सत्त्वविशेष इति॥
तस्य ज्ञातौ ज्ञातिमहं कृत्वा नामधेयं व्यवस्थाप्यते किं भवतु दारकस्य नामेति। ज्ञातय
ऊचुः। यस्मादनेन ज्ञातेन सुवर्णवर्णया प्रभया सर्वं कपिलवस्तु नगरमवभासितं तस्मा-
द्भवतु दारकस्य सुवर्णाभ[2] इति नामेति॥ सुवर्णाभो[3] दारको ऽष्टाभ्यो धात्रीभ्यो ऽनुप्रदत्तो
5 द्वाभ्यामंसधात्रीभ्यां द्वाभ्यां क्षीरधात्रीभ्यां द्वाभ्यां मलधात्रीभ्यां द्वाभ्यां क्रीडनिकाभ्यां
<धात्रीभ्याम्>[4]। सो ऽष्टाभिर्धात्रीभिरुन्नीयते वर्ध्यते[5] क्षीरेण दध्ना नवनीतेन सर्पिषा सर्पि-
मण्डेनान्यैश्चोत्तप्तोत्तप्तैरुपकरणविशेषैराशु वर्धते ह्रदस्थमिव पङ्कजम्। स च पण्डितो
व्यक्तो मेधावी श्राद्धो भद्रः कल्याणाशय आत्महितपरहितप्रतिपन्नः कारुणिको महा-
त्मा धर्मकामः॥

10 यावदपरेण समयेन रूपमदमत्तो[6] बहिरधिष्ठानस्य क्रीडति संबहुलाश्च शाक्या
न्यग्रोधारामं गच्छन्ति। ततस्तेन सुवर्णाभेन दृष्टाः पृष्टाश्च क्व भवन्तो गच्छन्तीति। तैरुक्तं
न्यग्रोधारामं गच्छामो बुद्धं भगवन्तं द्रष्टुमिति॥ सुवर्णाभस्य बुद्ध इत्यश्रुतपूर्वं नाम श्रुत्वा
सर्वरोमकूपाण्याहृष्टानि परमं च कुतूहलमुत्पन्नम्। तस्यैतदभवत्। यन्न्वहमपि बुद्धं
भगवन्तं दर्शनायोपसंक्रामेयमिति[7]। सो ऽपि न्यग्रोधारामं गच्छति। ततस्तत्र[8] ददर्श सुव-
15 र्णाभकुमारो[9] बुद्धं भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः समलङ्कृतमशीत्या चानुव्यञ्जनै-
र्विराजितगात्रं व्यामप्रभालङ्कृतं सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो

---

1) MS °न्तयति च.
2) MS सुवर्णाभा इति.
3) MS सुवर्णाभा.
4) D has क्रीडाधात्रीभ्यां.
5) MS वर्द्धते.
6) Ex conject.; MS वहिर (P न)विष्ठानस्य.
7) MS संक्रमे°.
8) Ex conject.; MS ततस्तेन.
9) I have retained the reading of MS. Cp. *infra*, p. 347, n. 6 and 351, n. 5.

भद्रकम्। सद्दर्शनाच्चास्य[1] ‹यो ऽसौ› रूपमदः ‹स प्रतिविगतः। स› भगवतः पादाभिवन्दनं कृत्वा पुरस्तान्निषण्णो धर्मश्रवणाय। तस्य भगवता धर्मो देशितः॥ स तं [59a] धर्मं श्रुत्वा प्रव्रज्याभिलाषी संवृत्तः[2]। यावन्मातापितरावनुज्ञाप्य भगवत्सकाशमुपसंक्रान्तः। उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा येन भगवांस्तेनाञ्जलिं प्रणमय्य[3] भगवन्तमिदमवोचत्। लभेयाहं भदन्त स्वाख्याते[4] धर्मविनये प्रव्रज्यामुपसंपदं[5] भिक्षुभावं चरेयमहं भगवतो ऽन्तिके 5 ब्रह्मचर्यमिति। ततो भगवान्गजभुजसदृशं सुवर्णवर्णबाहुमभिप्रसार्य सुवर्णाभं[6] दारकमिदमवोचत्। एहि कुमार चर ब्रह्मचर्यमिति।

एहीति चोक्तस्स तथागतेन मुण्डश्च सङ्घाटिपरीतदेहः।
सद्यः प्रशान्तेन्द्रिय एव तस्थावेवं[7] स्थितो बुद्धमनोरथेन॥

यावत्सप्ताहावरोपितकेशश्मश्रुर्द्वादशवर्षोपसंपन्नेर्यापथः पात्रकरव्यग्रहस्तो[8] भगवतः पुर- 10

---

1) It is plain that the text is here mutilated. My restoration is suggested by some closely similar places (*supra* p. 163, 13 and *infra*, avad. nr. 88 B f. 83 a).

2) B संवृत्तो या°, D corr. MS has here ग्रनुज्ञाप्य, but in all other instances of this stock-formula °ज्ञाप्य.

3) Sic MS. As to *praṇamayya* cp. a similar instance of ordaining with the *chibhikṣukā* formula Divy. 463, 22.

4) MS चाख्याते.

5) MS प्रव्रज्यमु(D °ज्यामु)पसंम्पदां. Though *upasampadā* by itself may be defended here on account of its Pāli prototype, yet in the parallel passages it is said throughout *upasampad*.

6) Sic MS, cp. *supra*, p. 346, n. 9.

7) Ex conject., cp. *supra*, p. 284, n. 6; MS एव तस्थां नेपथ्यस्थितो. That the depravation of the last pāda must be old, I infer also from the manner in which the paraphrast of our avadāna treats this passage. The author of Kalpadrumāv. (f. 38 b 2) modified the 4th pāda of the traditional indravajrā stanza in this manner, that he put aside the four syllables following after एव तस्थौ, as if he avoided those embarrassing words. For he did so not only here, but wherever he had to meddle with this stanza. Cp. K. f. 79 b 2, f. 132 a 6, f. 196 a 7 (in the paraphrases of Avadānaç. nr. **91**, **62** and **84** respectively). The same applies to the composer of Ratnāv., see R. f. 63 b 3, f. 177 b 7 (in the paraphrases of Avadānaç. nr. **63** and **64**).

8) The epithet *pātrakaravyagrahastaḥ* is also met with Divy. 48, 21. 159, 9. 281, 24. 558, 21, but *supra* p. 3, 5 and Divy. 37, 2 *pātrakarakavyagrahastaḥ*.

स्तात्स्थितः ॥ तस्य भगवता मनसिकारो दत्तः । तेन युज्यमानेन व्यायच्छमानेन घट-
मानेनेदमेव पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः[1] शतन‹पतन›वि-
करण[2]विध्वंसनधर्मतया पराहत्य सर्वक्लेशप्रहाणादर्हत्वं साक्षात्कृतम् । अर्हन्[3]संवृत्तस्त्रै-
धातु‹क›[4]वीतरागस्समलोष्टकाञ्चन आकाशपाणितलसमचित्तो वासीचन्दनकल्पो विद्या-
5 विदारिताण्डकोशो विद्या[5]भिज्ञाप्रतिसंवित्प्राप्तो भवलाभलोभसत्कारपराङ्मुखस्सेन्द्रोपे-
न्द्राणां देवानां पूज्यो मान्यो ऽभिवाद्यश्च संवृत्तः ॥

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं ‹बुद्धं›[6] भगवन्तं पप्रच्छुः । कानि भदन्त सुव-
र्णाभेन कर्माणि कृतानि येनैवमभिरूपो दर्शनीयः प्रासादिकः प्रव्रज्य[7] चाचिर‹म›र्हत्वं सा-
क्षात्कृतमिति ॥ भगवानाह । सुवर्णाभेनैव भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्यु-
10 पचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि । सुव-
र्णाभेन कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति । न भिक्षवः कर्माणि कृता-
न्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ[8] न तेजोधातौ न वायुधाता[9]वपि तूपा-
त्तेष्वेव स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च ।

---

1) MS °रगतिं.

2) Here and often in the sequel MS has विकरण in this stereotype description of the attainment of Arhatship, not *vikiraṇa* (cp. *supra*, p. 96, n. 7). Hereafter this variant will not be mentioned in the notes, the form found in each case in B will be put into the text.

3) B °र्हत्संवृ°, D corr.

4) D adds the missing akṣara.

5) B वैद्या°, D corr.

6) DP fill up the gap.

7) Ex conject.; MS प्रव्रज्यचारिरर्हत्वं च साक्षात्कृतमिति. The reading *aciram* is confirmed by the paraphrase of K., where the monks ask how he became an Arhant so soon (सहसा). The Tibetan, however, has here no word for 'soon' (communication of Mr. Thomas).

8) B नाब्धाधौ, DP corr.

9) MS °धातौ आपतूपात्तेष्वेव. Cp. *supra*, p. 74 n. 9.

न प्रणश्यन्ति कर्माणि अपि कल्पशतैरपि।[1]
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम्॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि एकनवते कल्पे विपश्यी[2] नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नस्सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान्। स बन्धुमतीं राजधानीमुपनिश्रित्य[3] विहरति॥ यावद्विपश्यी सम्यक्सं- 5 बुद्धो बुद्धकार्यं कृत्वा इन्धनक्षयादिवाग्निर्निरुपधिशेषे निर्वाणधातौ परिनिर्वृतस्ततो राज्ञा बन्धुमता भगवतः शरीरे शरीरपूजां कृत्वा समन्तयोजनस्तूपश्च<तू>रत्नमयः[4] प्रतिष्ठापितः क्रोशमुच्चत्वेन स्तूपमहश्च प्रज्ञप्तः॥ यावदन्यतमो गृहपतिस्तस्मिन्स्तूपमहे वर्तमाने निर्गतः। तेन तस्मात्स्तूपात्सौवर्णवर्णा आदर्शः पतितो दृष्टः। स तेनावतंसकं कारयित्वा तत्र स्तूपे आरोपितः। गन्धधूपपुष्पार्चनं कृत्वा पादयोर्निपत्य प्रणिधानं कृतम्। अहम- 10 प्येवंविधानां गुणानां लाभी भविष्याम्येवंविधमेव शास्तारमारागयेयमिति॥

भगवानाह। किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन गृहपतिरासीदयं स सुवर्णाभः। यत्तेन विपश्यिनः[5] सम्यक्संबुद्धस्य स्तूपे काराः कृतास्तेनास्यैवंविधो रूपविशेषः संवृत्तः। यत्प्रणिधानं कृतं तदिहैव जन्मन्यर्हत्त्वं साक्षात्कृतम्। इति <हि> भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यति- 15 मिश्राणां व्यतिमिश्रस्तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम्॥

[59b] इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्॥

---

1) So all MSS. B कर्मान्यपि. Cp. *infra*, p. 352, n. 4.

2) Cp. *supra*, p. 134 n. 7.

3) In this common-place about the nirvāṇa of Vipaçyin and the stūpa erected for him MSS have always उपनिसृत्य.

4) D °श्चतुरत्नमयः.

5) Even B seems to have here विपश्विनः.

## सुगन्धिरिति ६२ ।

बुद्धो भगवान्सत्कृतो[1] गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिस्सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः कपिलवस्तुनि विहरति न्यग्रोधारामे। कपिलवस्तुन्यन्यतमः कुलपुत्रः प्रतिवसति आढ्यो महाधनो महाभोगो विस्तीर्णविशालपरिग्रहो वैश्रवणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी । तेन सदृशात्कुलात्कलत्रमानीतम् । स तया सार्धं क्रीडति रमते परिचारयति । तस्य क्रीडतो रममाणस्य परिचारयतः पुत्रो जातो[2] अभिरूपो दर्शनीयः प्रासादिको अतिक्रान्तो मानुषवर्णमसंप्राप्तश्च दिव्यं वर्णम् । तस्य मुखान्नीलोत्पलगन्धो वाति सर्वशरीराच्चन्दनगन्धः ॥ तस्य ज्ञाती ज्ञातिमहं कृत्वा नामधेयं व्यवस्थाप्यते किं भवतु दारकस्य नामेति । ज्ञातय ऊचुर्यस्मादस्य[3] मुखान्नीलोत्पलगन्धो वाति शरीराच्चन्दनगन्धस्तस्माद्भवतु दारकस्य सुगन्धिरिति नामेति ॥ सुगन्धिर्दारको[4] ऽष्टाभ्यो धात्रीभ्यो दत्तो द्वाभ्यामंसधात्रीभ्यां[5] द्वाभ्यां क्षीरधात्रीभ्यां द्वाभ्यां मलधात्रीभ्यां द्वाभ्यां क्रीडनिकाभ्यां धात्रीभ्याम् । सो ऽष्टाभिर्धात्रीभिरुन्नीयते वर्ध्यते[6] क्षीरेण दध्ना नवनीतेन सर्पिषा सर्पिमण्डेनान्यैश्चोत्तप्तोत्तप्तैरुपकरणविशेषैराशु वर्धते

---

1) B भगवात्स°, DP corr.

2) MS जातः अभि° प्रसादिक अति°. Cp. *supra*, p. 345, n. 3.

3) B ऊचूर्यस्माद°, D corr.

4) MS दारकः अष्टा°.

5) MS °भ्यामत्सधा°.

6) MS वर्द्धते.

ह्रदस्थमिव पङ्कजम्[1]॥ स पूर्वहेतुबलाधानाच्छ्राद्धो भद्रः कल्याणाशयः[2] आत्महितपरहितप्रतिपन्नः कारुणिको महात्मा धर्मकामः। यदा सुगन्धिर्दारकः केयूरहारकटकालङ्कृतो[3] वीथीमवतरति तदा चन्दनगन्धेन सर्वं नगरमापूरयति जनकायश्च दिव्यं गन्धमाघ्राय परं विस्मयमापद्यते एवं चाह। अहो पुण्यानां सामर्थ्यमिति॥

यावदपरेण समयेन सुगन्धिर्दारको न्यग्रोधारामं गतः। अथासौ ददर्श बुद्धं भगवन्तं 5 द्वात्रिंशता महापुरुषलक्षणैः समलङ्कृतमशीत्या चानुव्यञ्जनैर्विराजितगात्रं व्यामप्रभालङ्कृतं सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकं सहदर्शनाच्चानेन भगवतोऽन्तिके चित्तं प्रसादितं प्रसादजातश्च भगवतः पादाभिवन्दनं कृत्वा पुरस्तान्निषण्णो धर्मश्रवणाय। तस्मै भगवता आशयानुशयं धातुं प्रकृतिं च ज्ञात्वा तादृशी चतुरार्यसत्यसंप्रतिवेधिकी[4] धर्मदेशना कृता यां श्रुत्वा सुगन्धिदारकेण[5] विंशतिशिखरसमुद्गतं सत्कायदृष्टिशैलं 10 ज्ञानवज्रेण भित्त्वा स्रोतापत्तिफलं साक्षात्कृतम्। स दृष्टसत्यो मातापितरावनुज्ञाप्य भगवच्छासने प्रव्रजितः॥ तेन युज्यमानेन घटमानेन व्यायच्छमानेन इदमेव पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः शतनपतनविकरणविध्वंसनधर्मतया[6] पराहत्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्। अर्हन्संवृत्तस्त्रैधातुकवीतरागः[7] समलोष्टकाञ्चन आकाशपाणितलसमचित्तो वासीचन्दनकल्पो विद्याविदारिताण्डकोशो विद्याभिज्ञाप्र- 15

---

1) B पंकज।, P corr.

2) MS कल्याणाश्रयः.

3) Ex conject.; MS केयूरहर्ष°. Feer, who used also the Tibetan version, p. 239, 8 «le jeune Sugandhi orné de ses anneaux, de ses colliers, de ses bracelets». Cp. *supra*, n. 4 on p. 314.

4) B °वेधकिधर्म°, D corr. — B, but not its copies, has here this marginal gloss: दुःख / समुदय / निरोध / मार्ग /.

5) Compound like *Prasenajitkauçalena supra*, p. 56, n. 8.

6) B °ध्वंसननधर्मतया, D corr.

7) MS °त्कृतमर्हत्संवृ°.

तिसंवित्प्राप्तो भवलाभलोभसत्कारपराङ्मुखः सेन्द्रोपेन्द्राणां देवानां पूज्यो मान्यो ऽभिवाद्यश्च संवृत्तः ।

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः । कानि भदन्त सुगन्धिना कर्माणि कृतानि येनास्य मुखान्नीलोत्पलगन्धो वाति सर्वशरीराच्चन्द[60a]नगन्धश्च ॥ भगवानाह । सुगन्धिनैव भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि[1] । <सुगन्धिना> कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति । न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ[2] न तेजोधातौ न वायुधातावपि[3] तूपात्तेष्वेव स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च ।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि[4] ।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि एकनवते कल्पे विपश्यी नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान् । स बन्धुमतीं राजधानीमुपनिश्रित्य[5] विहरति । यावद्विपश्यी सम्यक्संबुद्धः सकलं बुद्धकार्यं कृत्वा इन्धनक्षयादिवाग्निर्निरुपधिशेषे निर्वाणधातौ परिनिर्वृतस्ततो राज्ञा बन्धुमता भगवतः शरीरे शरीरपूजां कृत्वा समन्तयोजनस्तूपश्चतूरत्नमयः प्रतिष्ठापितः क्रोशमुच्चत्वेन स्तूपमहश्च[6] प्रज्ञप्तः । तत्रान्यतमेन गृहपतिना प्रसादजातेन विचित्रै-

1) MS °भागीनि (D, as always, °भाविनो).

2) B नाब्धाधौ, DP corr.

3) Cp. *supra*, p. 74, n. 9.

4) I follow here D, as elsewhere in this passage; BCP कर्मान्यपि कल्पशतैरपि.

5) Cp. *supra*, p. 349, n. 3.

6) Ex conject., cp. *supra* p. 349, 8; MS °महः प्रज्ञप्तः.

गन्धैः[1] प्रलेपं दत्त्वा धूपपुष्पार्चनं कृत्वा प्रणिधानं कृतम्। अनेनाहं कुशलमूलेन चित्तोत्पादेन देयधर्मपरित्यागेन एवंविधानां गुणानां लाभी भविष्याम्येवंविधमेव शास्तारमारागयेयं मा विरागयेयमिति ॥

भगवानाह। किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन गृहपतिरासीदयं[2] स सुगन्धिः। यदनेन विपश्यिनः सम्यक्संबुद्धस्य स्तूपे काराः कृतास्तेन सुगन्धस्संवृत्तः। [3]यत्प्रणिधानं कृतं तेनेह जन्मन्यर्हत्त्वं साक्षात्कृतम्। इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रस्तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीय[4] इत्येवं[5] वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

1) Ex conject.; MS विचित्रैर्गन्धैः पुलेपद्यह्न (or द) दोधूप°. My conjectural reading has been suggested by the Tibetan translation, for which I am indebted to the kindness of F. W. Thomas, སྤོས་དང་བྱུག་པ་སྣ་ཚོགས་ཕུལ་ཏེ་བདུག་པ་དང་མེ་ཏོག་གིས་མཆོད་ནས་.

2) MS स:.

3) B यन्प्र°, P corr.

4) MS करणाय.

5) B इत्येव, D corr.

## वपुष्मानिति ६३ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुड-किन्नरमहोरगाभ्यर्चितो ‹बुद्धो›[1] भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयना-
5 सनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः कपिलवस्तुनि विहरति न्यग्रोधारामे। कपिलवस्तुन्यन्यतमः शाक्य आढ्यो महाधनो महाभोगो विस्तीर्णविशालपरिग्रहो वैश्र-वणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी। तेन सदृशात्कुलात्कलत्रमानीतम्। स तया सार्धं क्रीडति रमते परिचारयति। तस्य क्रीडतो रममाणस्य परिचारयतः पुत्रो जातो ऽभिरूपो[2] दर्शनीयः प्रासादिको गौरो ऽतिक्रान्तो मानुषवर्णमसंप्राप्तश्च दिव्यं वर्णं रम्यवपुः[3]
10 सूक्ष्मत्वश्वदेशाढ्यः प्राप्तोच्चरूपकायश्च[4]। तस्य ज्ञातौ ज्ञातिमहं कृत्वा नामधेयं व्यवस्थापितं किं भवतु दारकस्य नामेति। ज्ञातय ऊचुः। यस्मादस्य दिव्यं वपुस्तस्माद्भवतु दारकस्य

---

1) added in D.

2) MS जात (D जातः) अभि° गौरः अति°. Cp. *supra*, p. 345, n. 3.

3) Ex conject.; MS चारयवपुः, but the Tibetan has ལུས་བྱད་དཔེ་མེད་ 'of incomparable bodily beauty'.

4) Ex conject.; MS प्राप्तोच्चरकायश्च (D °च्चकन्द°, P °च्चकंद°), which is, evidently corrupt. The Tibetan translator rendered this epithet ལུས་ཀྱི་མདུན་མཐོ་བ་ «la partie antérieure de son corps était élevée». My conjectural correction depends on the supposition that the conception of tallness must needs be expressed in the first element of the compound, but that the translator put མདུན་ 'fore-part, van, पूर्व, अग्र' (Sarat's Dict. *s. v.*) by mistake, reading प्राक्तो° instead of प्राप्तो°.

वपुष्मानिति नामेति ॥ वपुष्मान्दारको[1] ऽष्टाभ्यो धात्रीभ्यो दत्तो [2] द्वाभ्यामंसधात्रीभ्यां द्वाभ्यां क्षीरधात्रीभ्यां द्वाभ्यां मलधात्रीभ्यां द्वाभ्यां क्रीडनिकाभ्यां धात्रीभ्याम् । सो ऽष्टाभिर्धात्रीभिरुन्नीयते [3] वर्ध्यते क्षीरेण दध्ना नवनीतेन सर्पिषा सर्पिमण्डेनान्यैश्चोत्तप्तोत्तप्तैरुपकरणविशेषैराशु वर्धते ह्रदस्थमिव पङ्कजम् । स च श्राद्धो भद्रः कल्याणाशय आत्महितपरहितप्रतिपन्नः[4] कारुणिको महात्मा धर्मकामः सर्वलोकेषु पूज्यो मान्यो ऽभिवाद्यश्च। [5] ततो वपुष्मान्यान्यानपि [60b] स भूप्रदेशान्गत्वाक्रामति ‹ते› ते ऽस्य मेध्या [6] भवन्त्येवंविधः पुण्यमहेशाख्यः ॥

यावदपरेण समयेन न्यग्रोधारामं गतः । अथासौ ददर्श बुद्धं भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः समलङ्कृतमशीत्या चानुव्यञ्जनैर्विराजितगात्रं व्यामप्रभालङ्कृतं सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकं सहदर्शनाच्चानेन भगवतो ऽन्तिके चित्तं [7] प्रसादितं प्रसादजातश्च भगवतः पादाभिवन्दनं कृत्वा पुरस्तान्निषण्णो धर्मश्रवणाय । तस्मै भगवता आशया[8]नुशयं धातुं प्रकृतिं च ज्ञात्वा तादृशी चतुरार्यसत्यसंप्रतिवेधिकी धर्मदेशना कृता यां श्रुत्वा वपुष्मता विंशतिशिखरसमुद्गतं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रोतआपत्तिफलं साक्षात्कृतम् । स दृष्टसत्यो मातापितरावनुज्ञाप्य भगवच्छासने प्रव्र-

1) MS °रक अष्टा°.

2) B द्वाभ्यांवत्सधा°, D द्वाभ्यांमत्सधा°, P द्वाभ्यावत्सधा°.

3) MS वर्द्धते.

4) B °पन्नकारु°, D corr.

5) Ex conject.; MS ततो मनुष्याणामपि पांसुभूतप्रदेशां. In correcting the manifestly corrupted tradition I have availed myself of this parallel place in Ratnāvadānamālā:

यत्र यत्र वपुष्मान्स चक्राम भुवि संचरन् ।
तत्र तत्राभवन्मेध्या भूप्रदेशाः समन्ततः ॥ (R. f. 60 a 6).

Cp. Feer's note 1 on p. 242 of his translation.

6) MS भवन्त्ये°.

7) MS प्रसादितः.

8) B °नुशयधा°, DP corr. — MS धातुप्र°.

त्रितः। तेन युज्यमानेन घटमानेन व्यायच्छ[1]मानेनेदमेव पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः शतनपतनविकिरणविध्वंसनधर्मतया पराहत्य सर्वक्लेशप्रहाणादर्हत्वं साक्षात्कृतम्। [2]अर्हन्संवृत्तस्त्रैधातुकवीतरागः समलोष्टकाञ्चन आकाशपाणितलसमचित्तो वासीचन्दनकल्पो विद्याविदारिताण्डकोशो विद्याभिज्ञाप्रतिसंवित्प्राप्तो
5 भवलाभलोभसत्कारपराङ्मुखः सेन्द्रोपेन्द्राणां देवानां पूज्यो मान्यो ऽभिवाद्यश्च संवृत्तः॥

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। कानि भदन्त वपुष्मता कर्माणि कृतानि येनास्यैवंविध आश्रयो ऽर्हत्वं च प्राप्तमिति॥ भगवानाह। वपुष्मतैव भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघव[3]त्प्रत्युपस्थितान्यवश्यंभावीनि। वपुष्मता कर्माणि कृतान्युपचितानि को ऽन्यः[4]
10 प्रत्यनुभविष्यति। [5]<न> भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते [6]नाब्धातौ न तेजोधातौ न वायुधा[7]तावपि तूपात्तेष्वेव स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि[8]।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम्॥

15 भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि एकनवते कल्पे विपश्यी नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां

---

1) D fills up the gap.
2) MS अर्हत्संवृ° (D अर्हसंवृ°).
3) B °वन्प्रत्यु°, P corr.
4) Visarga wanting in MS.
5) P adds the missing negative particle.
6) B नाब्धाधौ, DP corr.
7) MS °धातौ अपि तूपात्तेष्वेव. Cp. *supra*, p. 74 n. 9.
8) Cp. *supra*, p. 352, n. 4.

बुद्धो भगवान्। स बन्धुमतीं राजधानीमुपनिश्रित्य[1] विहरति। यावद्विपश्यी सम्यक्संबुद्धः सकलं बुद्धकार्यं कृत्वा इन्धनक्षयादिवाग्निर्निरुपधिशेषे निर्वाणधातौ परिनिर्वृतस्ततो ऽस्य राज्ञा बन्धुमता शरीरे शरीरपूजां कृत्वा समन्तयोजनश्चतूरत्नमयः[2] स्तूपः प्रतिष्ठापितः क्रोशमुच्चत्वेन तत्र च राज्ञा बन्धुमता सपुत्रवर्गेण सामात्यगणपरिवृतेन स्तूपमहः कृतः॥ यावदन्यतमस्मिन्दिवसे ऽन्यतमो दरिद्रपुरुषः स्तूपाङ्गणं प्रविष्टः। तत्र तेन पुष्पाणि 5 [3]म्लानानि दृष्टानि [4]रजसा च *** मलिनीकृतः। ततस्तेन बुद्धगुणाननुस्मृत्य प्रसादजातेन संमार्जनीं गृहीत्वा स्तूपः संमृष्टो निर्माल्यं चापनीतम्॥ ततो ऽपगतरजं[5] स्तूपं निर्मलं[6] दृष्ट्वा प्रसादजातः पादयोर्निपत्य प्रणिधानं कृतवान्। अनेनाहं कुशलेन चित्तोत्पादेन चैवंविधानां गुणानां लाभी भविष्यामीत्येवंविधमेव शास्तारमारागयेयं मा विरागयेयमिति॥

---

1) Cp. *supra*, p. 349, n. 3. This correction will no more be mentioned hereafter.

2) MS °श्चतुरत्नमयस्तूपः.

3) Ex conject.; MS ग्लानानि. I have changed *glāna*, because *glāyati* is the proper word to denote sickness of men, but *mlāyati* to signify withering flowers. The Tibetan translation has here རྙིས་པ་, which Sarat in his Dict. renders by म्लान, शीर्ण. In R. f. 64b 2 the flowers are called म्लानीभूतानि, but on the following line ग्लानीभूतानि, yet soon again (f. 64b 4) पुष्पैः.....म्लानितैः (sic).

4) B रजे(or ज)नसाचर्ष्ममलिनी°, the vowel-sign of जे appears to be effaced and न is expunged, but feebly, so that the copies retain this akṣara (CD रजनसावर्ण°, P रजेनसावर्ण°). The subject of *malinīkṛtaḥ* has evidently been lost, the akṣara र्ण being its only remnant. Perhaps the original wording was रजसा च ‹स्तूपाङ्ग›णो मलिनीकृतः. That *stūpāṅganaḥ* (sic) or at least *stūpaḥ* must be inserted for the subject of *malinīkṛtaḥ* is to be inferred from the Tibetan མཆོད་རྟེན་རྡུལ་གྱིས་ཡོག་པ་དག་མཐོང་ངོ་; cp. also the parallel passage *infra*, p. 361, 16. But for that parallel and the Tibetan, I should have thought of correcting रजसा च ‹व›र्णो मलिनीकृतः.

5) MS °रजस्तूप. Cp. R. (f. 64b 6) ततः स्तू(cod. सू)पाङ्गणं सर्वं विरजं परिशोधितं दृष्ट्वा etc.

6) MS दृष्ट्वाः.

भगवानाह । किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन दरिद्रः पुरुष आसीदयं स[1] वपुष्मान् । यतस्तेन स्तूपः संमृष्टः तेनाभिरूपः संवृत्तो यत्प्रणिधानं कृतं तेनेह जन्मन्यर्हत्त्वं साक्षात्कृतम् । इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रस्तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्[2]भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

1) MS नः वपु°.

2) B इदमवाच°, DCP corr.

## बलवानिति ६४ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः [1]सार्थवाहैर्देवैर्नागै[61 a]र्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः कपिलवस्तुनि विहरति न्यग्रोधारामे । 5 कपिलवस्तुन्यन्यतमः शाक्य आढ्यो महाधनो महाभोगो ‹[2]विस्तीर्ण›विशालपरिग्रहो वैश्रवणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी । तेन सदृशात्कुलात्कलत्रमानीतम् । स तया सार्धं क्रीडति रमते परिचारयति । तस्य क्रीडतो रममाणस्य परिचारयतः पुत्रो [3]जातो ऽभिरूपो दर्शनीयः प्रासादिको [4]ऽतिक्रान्तपौरुष‹बलः› ॥ तस्य ज्ञाती ज्ञातिमहं कृत्वा नामधेयं व्यवस्थाप्यते किं भवतु दारकस्य नामेति । ज्ञातय ऊचुर्यस्मादयं दारको बलवान्[5]प्राप्तं स्यादस्य बलवानिति नाम ॥ बलवान्दारको [6]ऽष्टाभ्यो धात्रीभ्यो दत्तो द्वाभ्या- 10

---

1) B सार्थवार्थवाहैर्दे°, DP corr.

2) P fills up the gap.

3) MS जातः । अभि°, and प्रासादिकः अति°.

4) Ex conject.; MS अतिक्रान्तपौरुषस्य. As to my correction cp. Feer's translation (p. 244, 12) «dont la force dépassait celle de l'homme».

5) Ex conject., *prāptam* signifies 'fit, proper' (PW. s. v. आप् + प्र, sign. 9 of the participle); MS प्राप्तः स्यादस्यबलवानिति नाम भवतु ।. I have left out भवतु, taking this word for a gloss of प्राप्तं स्यात्.

6) MS °रकअष्टा°, cp. *supra* p. 345, n. 3.

(1)मत्सधात्रीभ्यां ‹द्वाभ्यां› क्षीरधात्रीभ्यां द्वाभ्यां (2)मलधात्रीभ्यां ‹द्वाभ्यां› क्रीडनिकाभ्यां ‹धात्रीभ्याम्›। सो ऽष्टाभिर्धात्रीभिरुन्नीयते (3)वर्ध्यते क्षीरेण दध्ना नवनीतेन सर्पिषा सर्पिमण्डेनान्यैश्चोत्तप्तोत्तप्तै(4)रुपकरणविशेषैराशु वर्धते ह्रदस्थमिव पङ्कजम्। स च श्राद्धो भद्रः कल्याणाशय आत्महितपरहितप्रतिपन्नः कारुणिको महात्मा धर्मकामः॥

5 यावदपरेण समयेन न्यग्रोधारामं गतः। अथासौ ददर्श बुद्धं भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः समलङ्कृतमशीत्यानुव्यञ्जनैर्विराजितगात्रं व्यामप्रभालङ्कृतं सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकं सहदर्शनाच्चानेन भगवतो ऽन्तिके चित्तं प्रसादितं प्रसादजातश्च भगवतः पादाभिवन्दनं कृत्वा पुरस्तान्निषण्णो धर्मश्रवणाय। तस्मै भगवता आशयानु(5)शयं धातुं प्रकृतिं च ज्ञात्वा तादृशी चतुरार्यसत्यसंप्रतिवेधिकी धर्मदेशना 10 कृता यां श्रुत्वा बलवता विंशतिशिखरसमुद्गतं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा (6)स्रोतापत्तिफलं साक्षात्कृतम्। स दृष्टसत्यो मातापितरावनुज्ञाप्य भगवच्छासने प्रव्रजितः। तेन युज्यमानेन घटमानेन व्यायच्छमानेनेदमेव पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः शतनपतनविकरणविध्वंसनधर्मतया पराहत्य सर्वक्लेशप्रहाणादर्हत्वं साक्षात्कृतम्। (7)अर्हन्संवृत्तस्त्रैधातुकवीतरागः समलोष्टकाञ्चन आकाशपाणितलसमचित्तो 15 वासीचन्दनकल्पो विद्याविदारिताण्डकोशो विद्याभिज्ञाप्रतिसंवित्प्राप्तो भवलाभलोभसत्कारपराङ्मुखः सेन्द्रोपेन्द्राणां देवानां पूज्यो मान्यो ऽभिवाद्यश्च संवृत्तः॥

---

1) MS द्वाभ्यांमत्सधा°. The first time that द्वाभ्यां is wanting it has been inserted in D.

2) In MS utterly corrupted, owing doubtless to the disturbed condition of A in this place: द्वाभ्यां क्रीडनिकाभ्यां मलधात्रीभ्यां सोष्टा°.

3) MS वर्द्धते.

4) MSS — except D, which leaves out here some akṣaras — °त्तप्तात्तप्तै°.

5) B °शयधातं, D corr

6) Sandhi in MS.

7) MS °कृतमर्कृत्सं° (D °कृतमहत्सं°).

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। कानि भदन्त बलवता कर्माणि कृतान्युपचितानि येनास्याश्रयो बलवानर्हत्त्वं च प्राप्तमिति ॥ भगवानाह। बलवतैव भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि। बलवता कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति। न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ[1] न तेजोधातौ न[2] वायुधातावपि तूपात्तेष्वेव स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च। 5

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि एकनवते[3] कल्पे विपश्यी नाम सम्यक्संबुद्धो लोक 10 उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान्। स बन्धुमतीं राजधानीमुप[4]निःश्रित्य विहरति। यावद्विपश्यी सम्यक्संबुद्धः सकलं बुद्धकार्यं कृत्वा इन्धनक्षयादिवाग्निर्निरुपधिशेषे निर्वाणधातौ परिनिर्वृत[61 b]स्तस्य राज्ञा बन्धुमता शरीरे शरीरपूजां कृत्वा समन्तयोजनस्तूपश्चतूरत्नमयः[5] प्रतिष्ठापितः क्रोशमुच्चत्वेन। तत्र स्तूपमहे वर्तमाने महाजनकायेन नृत्यता गायता च 15 स्तूपं पांसुना मलिनीकृतम् ॥ यावदन्यतमो गृहपतिः स्तूपाङ्गणं प्रविष्टः। स पश्यति स्तूपाङ्गणं रजसा मलिनीकृतम्। ततस्तेन गृहपतिना बुद्धगुणाननुस्मृत्य प्रसादजातेन

---

1) B नाब्धाधौ, DP corr.

2) BC न वायुवातावपितूपात्तेष्वेव, D °यूधातौ ऽपितू°, P °युधातावपितू°. Cp. *supra*, p. 74 n. 9.

3) MS एकनवतिकल्पे; cp. *supra*, p. 349, 8. 352, 12 etc.

4) D adds the missing akṣara.

5) MS °पश्चतुर° (D °पंश्चतुर°).

तैलव्यामिश्रो गन्धकायो[1] दत्तः प्रणिधानं च कृतम्। अप्येवंविधानां गुणानां[2] लाभी स्यामेवंविधमेव शास्तारमारागयेयं मा विरागयेयमिति ॥

भगवानाह। किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन गृहपतिरयं स बलवान्। यदनेन विपश्यिनः स्तूपे काराः कृतास्तेन बलवान्संवृत्तो[3] यत्प्रणिधानं कृतं 5 तेनेदानीमर्हत्त्वं साक्षात्कृतम्। इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रस्तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

1) In B कायो is indistinctly written and may be read कार्यो. The copies have कायो.

2) Ex conject.; MS कर्मणां. It is obvious that this word is corrupted. My correction has been suggested by the Tibetan translation ཡོན་ཏན་, mentioned by Feer p. 245 n., and by the parallel passages *supra*, p. 349, 11. 353, 2. 357, 9 etc., where गुणानां appears throughout.

3) B सवृत्तो, D corr.

## प्रिय इति ६५ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्[1] देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुड-किन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयना-सनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः कपिलवस्तुनि विहरति न्यग्रोधारामे। 5
कपिलवस्तुन्यन्यतमः शाक्य आढ्यो महाधनो[2] महाभोगो विस्तीर्णविशालपरिग्रहो वैश्र-वणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी। तेन सदृशात्कुलात्कलत्रमानीतम्। स तया सार्धं क्रीडति रमते परिचारयति। तस्य क्रीडतो रममाणस्य परिचारयतः पुत्रो जातो[3] ऽभिरूपो दर्शनीयः प्रासादिको महेशाख्यो प्रियदर्शनश्च। तस्य जन्मनि सर्वं कपिलवस्तु नगरं यशसा आपूरितम्॥ तस्य जातौ जातिमहं कृत्वा नामधेयमवस्थाप्यते किं भवतु दारकस्य ना- 10
मेति। ज्ञातय ऊचुः। यस्मादयं जातमात्र एव सर्वजनप्रियः तस्मादस्य प्रिय इति नाम भवतु। प्रियो दारको[4] ऽष्टाभ्यो धात्रीभ्यो दत्तो द्वाभ्यामंसधात्रीभ्यां[5] ‹द्वाभ्यां› क्षीरधात्रीभ्यां द्वाभ्यां मलधात्रीभ्यां द्वाभ्यां क्रीडनिकाभ्यां धात्रीभ्याम्। सो ऽष्टाभिर्धात्रीभिरुन्नीयते वर्ध्यते[6] क्षीरेण दध्ना नवनीतेन सर्पिषा सर्पिमण्डेनान्यैश्चोत्तप्तोत्तप्तैरुपकरणविशेषैराशु वर्धते ह्रदस्थमिव पङ्कजम्। स च श्राद्धो भद्रः कल्याणाशय आत्महितपरहितप्रतिपन्नः 15

1) B साथवा°, CDP corr.
2) B °धना, D corr.
3) MS जातः अभि°.
4) MS दारक अष्टा°.
5) MS °भ्यांमत्स°. D adds the missing द्वाभ्यां.
6) MS वर्द्धते.

कारुणिको महात्मा धर्मकामः प्रजावत्सलस्त्यागरुचिः प्रदानरुचिः प्रदाने ऽभिरतो महति त्यागे वर्तते । स श्रमण[1]ब्राह्मणकृपणवनीपकानां विविधैर्दानविसर्गैः संग्रहं करोति ॥

यावत्प्रियो दारको ऽपरेण समयेन न्यग्रोधारामं गतः । अथासौ ददर्श बुद्धं भगवन्तं 5 द्वात्रिंशता महापुरुषलक्षणैः समलङ्कृतमशीत्या चानुव्यञ्जनैर्विराजितगात्रं व्याम[2]प्रभालङ्कृतं सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकं सहदर्शनाच्चानेन भगवतो ऽन्तिके चित्तं प्रसादितम् । स[3] प्रसादजातश्च भगवतः पादाभिवन्दनं कृत्वा पुरस्तान्निषण्णो धर्मश्रवणाय । तस्मै भगवता आशयानुशयं धातुं[4] प्रकृतिं च ज्ञात्वा तादृशी चतुरार्यसत्यसंप्रतिवेधिकी धर्मदेशना कृता यां श्रुत्वा प्रियेण दारकेण विंशतिशिखरसमुद्गतं सत्कायदृष्टिशैलं 10 ज्ञानवज्रेण [62 a] भित्त्वा [5]स्रोतापत्तिफलं साक्षात्कृतम् । स दृष्टसत्यो मातापितरावनुज्ञाप्य भगवच्छासने प्रव्रजितः ॥ तेन युज्यमानेन घटमानेन व्यायच्छमानेनेदमेव[6] पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः शतनपतनविकिरणविध्वंसनधर्मतया पराहत्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम् । [7]अर्हन्संवृत्तस्त्रैधातुकवीतरागः समलोष्टकाञ्चन आकाशपाणितलसमचित्तो वासीचन्दनकल्पो विद्याविदारिताण्डकोशो विद्याभिज्ञाप्र- 15 तिसंवित्प्राप्तो भवलाभलोभसत्कारपराङ्मुखः सेन्द्रोपेन्द्राणां देवानां पूज्यो मान्यो ऽभिवाद्यश्च संवृत्तः ॥

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः । कानि भदन्त प्रियेण

---

1) MS श्रवण°.

2) B व्योम°, P corr.

3) So MS. Commonly the pronoun स is wanting in this often recurring formula (cp. e. g. *supra*, p. 360, 7), in P it has been omitted here, too.

4) Anusvāra wanting in MS.

5) Sandhi in MS.

6) MS °मानेने(P न)द्मेवंचपंचग°.

7) B °तमर्हत्संवृत्त°, D corr.

कर्माणि कृतानि येन महायशसां प्रियो मनापश्च प्रव्रज्य चार्हत्त्वं प्राप्तमिति ॥ भगवा-
नाह । प्रियेणैव भिक्षवः पूर्वमन्यासु ज्ञातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि
परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि । प्रियेण कृतानि कर्माण्युपचितानि
को ऽन्यः प्रत्यनुभविष्यति । न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ
विपच्यन्ते नाब्धातौ[1] न तेजोधातौ न वायुधातावपि तूपात्तेष्वेव[2] स्कन्धधात्वायतनेषु कर्माणि 5
कृतानि विपच्यन्ते शुभान्यशुभानि च ।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि ।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि एकनवते कल्पे विपश्यी नाम सम्यक्संबुद्धो लोक
उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां 10
बुद्धो भगवान् । स बन्धुमतीं राजधानीमुपनिश्रित्य विहरति । यावद्विपश्यी सम्यक्संबुद्धः
सकलं बुद्धकार्यं कृत्वा इन्धनक्षयादिवाग्निर्निरुपधिशेषे निर्वाणधातौ परिनिर्वृतस्तस्य
राज्ञा बन्धुमता[3] शरीरे शरीरपूजां कृत्वा समन्तयोजनश्चतूरत्नमयः[4] स्तूपः प्रतिष्ठापितः
क्रोशमुच्चत्वेन ॥ यावदपरेण समयेन वसन्तकालसमये संपुष्पितेषु <पादपेषु> नाना[5] चित्रितेषु
पुष्पेषु प्रादुर्भूतेष्वन्यतमो गृहपती राजानं विज्ञापयामास । इच्छाम्यहं देवसहायो[6] विप- 15

---

1) B नाब्धाधौ, DP corr.

2) Cp. *supra*, p. 74, n. 9.

3) MS बन्धुमत्यां.

4) MS °श्चतुर°.

5) B नानाविचित्रितेषु, P corr.; D has नानाविचित्रितेषु. Cp. नाना चित्र in PW, IV s. v. नाना. — The insertion of पादपेषु is necessary on account of the evident mutilation of the text and the comparison of parallel places, vid. *supra*, p. 179, 3. 225, 10. 307, 10.

6) In B it is not plain whether सहायो is written or सहीयो, probably the latter, cp. *infra*, p. 366, n. 2 and 6; C and P सहीयो, D सहायो. For the rest, सहीय instead of सहाय is sometimes met with in the manuscripts of Sanskrit Buddhist texts: Divy. 312,5 *antarjanasahīya udyānabhūmiṃ nirgataḥ*, Buddhac. 10,26 *sadbhiḥ sahīyā*.

श्यिनः स्तूपे[1] पुष्पारोपणं कर्तुमिति । राज्ञा कथयत्येवमस्त्विति ॥ यावत्तेन गृहपतिना राज्ञामात्यपौरुषैः सहायेन[2] घण्टावघोषणेन विचित्रपुष्पसंग्रहं कृत्वा विपश्यिनः[3] स्तूपे पुष्पारोहणं कृतं यत्रानेकैः प्राणिशतसहस्रैश्चित्तानि प्रसाद्य कुशलमूलानि समारोपितानि[4] ॥

भगवानाह । किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन गृहपतिरासीदयं स[5] प्रियः । यत्तेन महाराजसहायेन[6] कुशलमूलान्यवरोपितानि तेन महाजनस्य[7] प्रियो मनापश्च संवृत्तः तेनैव हेतुना दर्शनीयः प्रासादिकः अर्हत्त्वं च प्राप्तम् । इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रस्तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

1) Ex conject.; MS. स्तूपेषु पुष्पा°.

2) B सहीयेन, changed by a *secunda manus* into सहायेन; C and P सही°, D सहा°.

3) Here even B has विपश्यिनः.

4) Note the rather negligent and incorrect structure of the phrase.

5) MS सः.

6) BCP सहीयेन, D सहायेन.

7) Ex conject., cp. Feer, p. 247, n. 3; B महाराज्ञनस्य (D महाराजजनस्य). The Tibetan version སྐྱེ་བོ་ཕལ་པོ་ཆེའི་སྙིང་དུ་སྡུག་ཅིང་ confirms the correction महाजनस्य.

## पद्माक्ष इति ६६[1] ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रे-
ष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किंनरैर्महोरगैरिति देवनागयक्षासुरगरुडकिं-
नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्ला-
नप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः कपिलवस्तुनि विहरति न्यग्रोधारामे । 5
कपिलवस्तुन्यन्यतमः शाक्य आढ्यो महाधनो महाभोगो विस्तीर्णविशालपरिग्रहो वैश्र-
वणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी । तेन सदृशात्कुलात्कलत्रमानीतम् । स तया
सार्धं क्रीडति रमते परिचारयति । तस्य क्रीडतो रममाणस्य परिचारयतः पुत्रो जातो
ऽभिरूपो दर्शनीयः प्रासादिको ऽभिनीलपद्मनेत्रो दिव्येनेन्द्रनील[62b]मणिरत्नेन शि-
रस्याबद्धेन येन कपिलवस्तु[2] नगरमिन्द्रनीलवर्णं[3] व्यवस्थापितम् ॥ तस्य ज्ञातौ ज्ञातिमहं 10
कृत्वा नामधेयं व्यवस्थाप्यते किं भवतु दारकस्य नामेति । ज्ञातय ऊचुः । यस्मादस्य
पद्मसदृशे अक्षिणी तस्माद्भवतु दारकस्य पद्माक्ष इति नामेति । पद्माक्षो दारको[4] ऽष्टाभ्यो
धात्रीभ्यो दत्तो [5]द्वाभ्यामंसधात्रीभ्यां द्वाभ्यां क्षीरधात्रीभ्यां द्वाभ्यां मलधात्रीभ्यां द्वाभ्यां
क्रीडनिकाभ्यां धात्रीभ्याम् । सो ऽष्टाभिर्धात्रीभिरुन्नीयते [6]वर्ध्यते क्षीरेण दध्ना नवनीतेन
सर्पिषा सर्पिमण्डेनान्यैश्चोत्तप्तोत्तप्तैरुपकरणविशेषैराशु वर्धते ह्रदस्थमिव पङ्कजम् । स च 15

---

1) MS पद्म इति. But, as Feer (p. 247, n. 4) observes, the name of this avadāna must be पद्माक्ष, as appears both from the Tibetan translation and the content of the story. The *uddāna*, too, calls it पद्माक्ष, see *supra*, p. 345, n. 1.

2) B °वास्तु, D corr.

3) Ex conject.; MS °नीलवर्णाव(D च)वस्थापितं.

4) MS दारक अष्टा° and *supra*, l. 8, ज्ञातस्रभि°.

5) MS द्वाभ्यांमत्स°.

6) MS वर्द्धते.

आढ्यो भद्रः कल्याणाशय आत्महितपरहितप्रतिपन्नः कारुणिको महात्मा धर्मका-
मस्त्यागरुचिः प्रदानाभिरतो महति त्यागे वर्तते । [1] स येन येन गच्छति तेन देवमनुष्यैः
पूज्यते[2] ऽभ्यर्च्यते च ॥

अथ पद्मान्तो दारको ऽपरेण समयेन न्यग्रोधारामं गतः । अथासौ ददर्श बुद्धं भगवन्तं
5 द्वात्रिंशता महापुरुषलक्षणैः समलङ्कृतमशीत्या चानुव्यञ्जनैर्विराजितगात्रं [3] व्यामप्रभा-
लङ्कृतं सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकं सहदर्शनाच्चानेन भगवतो
ऽन्तिके चित्तमभिप्रसादितं प्रसादजातश्च भगवत्पादाभिवन्दनं कृत्वा पुरस्तान्निषण्णो धर्मश्रव-
णाय । तस्मै भगवता आशयानुशयं[4] धातुं [5] प्रकृतिं च ज्ञात्वा तादृशी चतुरार्यसत्यसंप्रतिवे-
धिकी धर्मदेशना कृता यां श्रुत्वा पद्मान्तेन विंशतिशिखरसमुद्गतं सत्कायदृष्टिशैलं ज्ञा-
10 नवज्रेण भित्वा स्रोतापत्तिफलं साक्षात्कृतम् । स दृष्टसत्यो दानप्रदानानि[6] दत्त्वा [7] श्रमण-
ब्राह्मणकृपणवनीपकदुःखितान्संतर्पयित्वा[8] मातापितरावनुज्ञाप्य भगवच्छासने प्रव्र-
जितः । तेन युज्यमानेन घटमानेन व्यायच्छमानेनेदमेव पञ्चगण्डकं संसारचक्रं चलाचलं
विदित्वा सर्वसंस्कारगतीः शतनपतनविकिरणविध्वंसनधर्मतया पराहत्य सर्वक्लेशप्र-
हाणादर्हत्वं साक्षात्कृतम् । [9] अर्हन्संवृत्तस्त्रैधातुकवीतरागः समलोष्टकाञ्चन आकाशपा-
15 णितलसमचित्तो वासीचन्दनकल्पो विद्याविदारिताण्डकोशो विद्याभिज्ञाप्रतिसंवित्प्राप्तो
भवलाभलोभसत्कारपराङ्मुखः सेन्द्रोपेन्द्राणां देवानां पूज्यो मान्यो ऽभिवाद्यश्च संवृत्तः ॥

---

1) Ex conject.; MS समयेन येन. Cp. Feer, p. 248, 9.

2) B भ्यच्यते, D corr.

3) B व्यायप्रभा, D व्योम°, P व्याप्रभा.

4) Anusvāra wanting in MS.

5) MS धातुं च प्रकृ°.

6) Ex conject.; MS दानप्रदानादि. The same fault recurs in the subsequent instances of this phrase, except avad. nr. **70**.

7) MS श्रवण.

8) The °*tvā*-gerund of a compound verb is very rarely met with in this text.

9) B अर्हत्सं°, D corr.

यावदसौ पिण्डपातप्रविष्टो महाजनकायेनोद्वीक्ष्यमाणो विहरति। अथ स पद्मानो भगवतः सकाशमुपसंक्रम्य भगवन्तं विज्ञापयामास। साधु मे भगवांस्तथा करोतु यथा मणिरत्नम-न्तर्धीयेत[1]॥ भगवानाह। कर्मजं ह्येतन्न शक्यमन्तर्धापयितुमपि तु तथा[2] करिष्यामि यच्छ्राद्धा द्रक्ष्यन्ति नाश्राद्धा इति॥ ततो भगवता तथा कृतम्॥

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। कानि भदन्त पद्मानेन कर्माणि कृतानि येनैवं महेशाख्यो ऽर्हत्त्वं च प्राप्तमिति॥ भगवानाह। पद्मानेनैव[3] भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि[4] परिणतप्रत्ययान्योघवत्प्र-त्युपस्थितान्यवश्यंभावीनि। पद्मानेन कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभ-विष्यति। न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ न तेजोधातौ न वायुधातावपि तूपात्तेष्वेव[5] स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम्॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि एकनवते कल्पे विपश्यी नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान्। स बन्धुमतीं राजधानीमुपनिश्रित्य विहरति। यावद्विपश्यी सम्यक्संबुद्धः सकलं बुद्धकार्यं कृत्वेन्धनक्षयादिवाग्निर्निरुपधिशेषे निर्वाणधातौ परिनिर्वृतस्तस्य[6] राज्ञा बन्धुमता शरीरे शरीरपूजां कृत्वा समन्तयोजनश्चतूरत्नमयः[7] स्तूपः प्रतिष्ठापितः। तत्राने-

1) Ex conject.; MS मणिरत्नमंतर्धापेत्.
2) Ex conject.; MS कथा.
3) MSS पद्मानेणाच, in B the last akṣ. uncertain whether च or व.
4) B आरब्धसंसाराणि, D corr.
5) MS °नूपात्ते(D °भूयात्ते)ष्वेव. Cp. *supra*, p. 74 n. 9.
6) B परिर्निवृत°, D corr.
7) MS °श्चतुर°.

कानि [1]‹प्राणि›शतसहस्राणि कारान्कृत्वा स्वर्गमोक्षपरायणानि भवन्ति ॥ यावदन्यतमः सार्थवाहो महासमुद्रात्सिद्धयानपात्रो ऽभ्यागतः । तेन तत्र महदिन्द्रनीलकं[2] रत्नमानीतम् । तेन विपश्यिनः स्तूपं दृष्ट्वा तथागतगुणाननुस्मृत्य तन्मणिरत्नं [63a] विपश्यिनः स्तूपवर्षस्थाल्यामुपरि निबद्धम् । तस्यानुभावेन दिग्विदिशः सर्वा[3] नीलाकारा अवस्थिताः ।
5 पद्मैश्च पूजां कृत्वा प्रणिधानं कृतमहमप्येवं गुणानां लाभी स्यामेवंविधमेव शास्तारमारागयेयं मा विरागयेयमिति ॥

भगवानाह । किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन सार्थवाह आसीदयं स[4] पद्माक्षः । यत्तेन विपश्यिनः स्तूपे मणिरत्नमारोपितं तस्य कर्मणो विपाकेनास्य मणिरत्नं शिरसि प्रादुर्भूतम् । यन्नीलपद्मैः पूजा कृता तेनाभिनीलपद्मनेत्रः संवृत्तः ।
10 यत्प्रणिधानं कृतं तेनेह जन्मन्यर्हत्त्वं साक्षात्कृतम् । इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रस्तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

1) This insertion is found in D, not in the other copies. I have put it into the text, because I hold it for an emendation, the substantive construed with *çatasahasrāṇi* being indispensable here, and cp. *supra*, p. 48, 4. 85, 11. 221, 3.

2) Ex conject.; MS °नीलकानि.

3) MS सर्वनी°.

4) MS सः पद्मा°.

## डन्डुभिस्वर इति ६७ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो[1] बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः कपिलवस्तुनि विहरति न्यग्रोधारामे । कपिलवस्तुन्यन्यतमः शाक्य आढ्यो महाधनो महाभोगो विस्तीर्णविशालपरिग्रहो वैश्रवणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी । तेन सदृशात्कुलात्कलत्रमानीतम् । स तया सार्धं क्रीडति रमते परिचारयति । तस्य क्रीडतो रममाणस्य परिचारयतः पुत्रो[2] जातो ऽभिरूपो दर्शनीयः प्रासादिको महेशाख्यः कलविङ्कमनोज्ञभाषी[3] डन्डुभिस्वरनिर्घोषः ॥ तस्य ज्ञातो ज्ञातिमहं कृत्वा नामधेयं व्यवस्थाप्यते किं भवतु दारकस्य नामेति । ज्ञातय ऊचुः । यस्मादयं दारको डन्डुभिस्वरस्तस्मादस्य भवतु <डन्डुभिस्वर इति नामेति> ॥ डन्डुभिस्वरो दारको ऽष्टाभ्यो धात्रीभ्यो दत्तो द्वाभ्यामंसधात्रीभ्यां[4] द्वाभ्यां क्षीरधात्रीभ्यां द्वाभ्यां मलधात्रीभ्यां द्वाभ्यां क्रीडनिकाभ्यां धात्रीभ्याम् । सो ऽष्टाभिर्धात्रीभिरुन्नीयते वर्ध्यते[5] क्षीरेण दध्ना नवनीतेन सर्पिषा सर्पिमण्डेनान्यैश्चोत्तप्तोत्तप्तैरुपकरणविशेषैराशु

---

1) B °भ्यर्थितो, D corr.

2) MS ज्ञातम्रभि° (D ज्ञातःम्रभि°).

3) Ex conject.; B °मनोज्ञभा(or हा or शा)णी, C °ज्ञशाणी, D °ज्ञवाणी, P °ज्ञसाणी. I surmise णी is a depravation of शी which stood in the prototype of B and was intended to signify षी. As to the correction °भाषी, cp. Raghuvaṃça 12, 39.

4) MS °भ्यांमत्स°, but in B त्स has been made out of न्स.

5) MS वर्द्धते.

वर्धते ह्रदस्थमिव पङ्कजम्। स च श्राद्धो भद्रः कल्याणाशय आत्महितपरहितप्रतिपन्नः कारुणिको महात्मा धर्मकामः प्रजावत्सलस्त्यागरुचिः प्रदानरुचिर्महति त्यागे वर्तते॥

यावदपरेण समयेन दुन्दुभिस्वरो दारको न्यग्रोधारामं गतः। अथासौ ददर्श बुद्धं भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः समलङ्कृतमशीत्या चानुव्यञ्जनैर्विराजितगात्रं व्या-
5 मप्रभालङ्कृतं सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकं सहदर्शनाच्चानेन भगवतो ऽन्तिके चित्तं प्रसादितं प्रसादजातश्च भगवतः पादाभिवन्दनं कृत्वा पुरस्तान्निषण्णो धर्मश्रवणाय। तस्मै भगवताशयानुशयं धातुं[1] प्रकृतिं च ज्ञात्वा तादृशी चतुरार्यसत्यसंप्रतिवेधिकी धर्मदेशना कृता यां श्रुत्वा दुन्दुभिस्वरेण दारकेण विंशतिशिखरसमुद्गतं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रोतापत्तिफलं साक्षात्कृतम्॥ स दृष्टसत्यो दानप्रदा-
10 [2]नानि दत्त्वा श्रमणब्राह्मणवनीपकान्दुःखितान्संतर्पयित्वा मातापितरावनुज्ञाप्य भगवच्छासने प्रव्रजितः। तेन युज्यमानेन घटमानेन व्यायच्छमानेनेदमेव पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः शत[63b]नपतनविकिरणविध्वंसनधर्मतया पराहत्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्। [3]अर्हन्संवृत्तस्त्रैधातुकवीतरागः समलोष्टकाञ्चन आकाशपाणितलसमचित्तो वासीचन्दनकल्पो विद्याविदारिताण्डकोशो विद्याभिज्ञाप्रतिसं-
15 वित्प्राप्तो भवलाभलोभ‹सत्कार›पराङ्मुखः सेन्द्रोपेन्द्राणां देवानां पूज्यो मान्यो ऽभिवाद्यश्च संवृत्तः॥

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। कानि भदन्त दुन्दुभिस्वरेण कर्माणि कृतानि येनाभिरूपो दर्शनीयः प्रासादिको ऽर्हत्त्वं प्राप्तमिति॥ भगवानाह। दुन्दुभिस्वरेणैव भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृ‹ता›न्युपचि‹ता›नि लब्ध-
20 संभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि। दुन्दुभिस्वरेण कर्माणि

---

1) B धातुप्र, D corr.

2) Ex conject.; MS दानप्रदानादि. Cp. *supra*, p. 368, n. 6 and 8.

3) B °तमर्हत्संवृ°, D corr.

कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति । न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ[1] न तेजोधातौ न वायुधातावपि[2] तूपात्तेष्वेव स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च ।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि ।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ॥ 5

भूतपूर्वं[3] भिक्षवो ऽतीते ऽध्वनि एकनवते[4] कल्पे विपश्यी नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान् । स बन्धुमतीं राजधानीमुपनिश्रित्य विहरति । यावद्विपश्यी सम्यक्संबुद्धः सकलं बुद्धकार्यं कृत्वेन्धनक्षयादिवाग्निर्निरुपधिशेषे[5] निर्वाणधातौ परिनिर्वृतस्तस्य राज्ञा बन्धुमता शरीरे शरीरपूजां कृत्वा समन्तयोजनश्चतूरत्नमयः[6] स्तूपः 10 प्रतिष्ठापितः क्रोशमुच्चत्वेन । तत्रानेकानि प्राणिशतसहस्राणि कारान्कृत्वा स्वर्गमोक्षपरायणानि भवन्ति ॥ यावदन्यतरेण गृहपतिना विचित्राणि वाद्यभाण्डानि पुरुषाश्च शिक्षयित्वा तत्र स्तूपे निर्यातिता ये तत्र स्तूपे[7] ऽहन्यहनि वाद्यविशेषैः सत्कारं कुर्वन्ति ॥

---

1) B नाव्धाधौ, DP corr.

2) MS °धातौ अपि तूपात्तेष्वेव. Cp. *supra*, p. 74 n. 9.

3) B भूतपूर्व, P corr.

4) P corrects the mutilated word.

5) MS °वाग्निनिरूप°.

6) MS °श्चतुर°.

7) B स्तूपे सौ अह°. It is, however, not clear, whether the interlinear akṣara really means सौ. The copyists took it up into the text: DP स्तूपेसौ अह°, C स्तूपेसो अह°; yet it seems that this sign, whatever it may be intended to signify, cannot have been put there to *insert* anything into a wholly perspicuous and rather prolix sentence.

किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन गृहपतिरासीदयं स दुन्दुभिस्वरः। यत्तेन विपश्यिनः स्तूपे विचित्राणि वाद्यभाण्डानि निर्या‹ति›तानि तेनेदानीं दुन्दुभिस्वरः संवृत्तः। तेनैव हेतुनेदानीमर्हत्वं साक्षात्कृतम्। इति हि भिक्षव एकान्तकृष्णानामेकान्तकृष्णो विपाक एकान्तशुक्लानां कर्मणामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमि-
5 श्रस्तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम्॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्॥

---

# पुत्रा[1] इति ६८ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो[2] बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः कपिलवस्तुनि विहरति न्यग्रोधारामे । कपिलवस्तुन्य‹न्य›तमः[3] शाक्य आढ्यो महाधनो महाभोगो विस्तीर्णविशालपरिग्रहो वैश्रवणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी । तेन सदृशात्कुलात्कलत्रमानीतम् । स तया सार्धं क्रीडति रमते परिचारयति । तस्य क्रीडतो रममाणस्य परिचारयतः पत्नी आपन्नसत्त्वा संवृत्ता । साष्टानां वा नवानां वा मासानामत्ययात्प्रसूता । महतीमहती[4] मांसपेशी[5] जाता यां दृष्ट्वा मातापितरौ विषण्णावन्ये च गृहवासिनः प[64a]रिचारका ज्ञातयश्च को नामायमेवंविधो जात इति ॥ यावदसौ गृहपतिः शोकागारं प्रविश्य करे कपोलं दत्त्वा चिन्तापरो व्यवस्थितः कस्य निवेदयेयं को ज्ञास्यति किमेतदिति । तस्य बुद्धिरुत्पन्ना अयं बुद्धो भगवान्सर्वज्ञः सर्वदर्शी बुद्धस्य भगवतो निवेदयामि स ज्ञास्यतीति ॥ स येन भगवांस्तेनोपसंक्रान्तः । उपसंक्रम्य भगवन्तं पप्रच्छ ॥ भगवानाह । मा भैषीस्त्वं गृहपते मा भैषीः सुविहिते कर्पासे मांसपेशीं स्थापयित्वा त्रिर्दिवसस्य पाणिनापमृज्य क्षीरेण पुनः परिप्रोक्षस्व

---

1) MS पुत्र.

2) B °भ्यर्थितो (cp. *supra*, p. 371, n. 1), D corr.

3) D adds the akṣara left out in B.

4) Ex conject.; B महति महती मांसपेशी. The copies leave out the first three akṣaras, but our author will here have used the *āmreḍita*.

5) MS पेसी, in the sequel it has the correct orthography (CP here °पसी).

यावत्सप्ताहं ततः स्फुटिष्यति कुमारशतमुत्पत्स्यते ते च सर्वे महानग्नबलिनो भविष्यन्ति । इति श्रुत्वा गृहपतिः परं विस्मयमापन्नश्चिन्तयति च । लाभा मे सुलब्धा यस्य मे ईदृशाः[1] पुत्रा उत्पत्स्यन्तीति ॥ तेन तथैव कृतम् । यावत्सप्तमे दिवसे सा मांसपेशी स्फुटिता । कुमारशतमुत्पन्नं[2] सर्वे अभिरूपा दर्शनीयाः प्रासादिकाः सर्वाङ्गप्रत्यङ्गोपेता महान-
5 ग्नबलिनः ॥

यावत्क्रमेण उन्नीता वर्धिता महान्तः संवृत्ताश्च[3] सर्वे यौवनमदमत्ता इतश्चामुतश्च परिभ्रमन्तो न्यग्रोधारामं गताः । अथ ते ददृशुर्बुद्धं भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः समलङ्कृतमशीत्या चानुव्यञ्जनैर्विराजितगात्रं व्यामप्रभालङ्कृतं सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकं सहदर्शनाच्च भगवतः पादाभिवन्दनं कृत्वा पुरस्तान्निषण्णा
10 धर्मश्रवणाय । तेषां भगवता आशयानुशयं[4] धातुं प्रकृतिं च ज्ञात्वा तादृशी चतुरार्यसत्यसंप्रतिवेधिकी धर्मदेशना कृता यां श्रुत्वा सर्वैरेव विंशतिशिखरसमुद्गतं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रोतापत्तिफलं साक्षात्कृतम् । ते दृष्टसत्या मातापितरावनुज्ञाप्य भगवच्छासने प्रव्रजिताः ॥ तैस्सर्वैर्युज्यमानैर्घटमानैर्व्यायच्छमानैः सर्वक्लेशप्रहाणादर्हत्वं साक्षात्कृतम् । अर्हन्तो बभूवुस्त्रैधातुकवीतरागाः समलोष्टकाञ्चना आकाशपाणितलसम-
15 चित्ता वासीचन्दनकल्पा विद्याविदारिताण्डकोशा[5] विद्याभिज्ञाप्रतिसंवित्प्राप्ता भवलाभलोभसत्कारपराङ्मुखाः सेन्द्रोपेन्द्राणां देवानां पूज्या मान्या अभिवाद्याश्च संवृत्ताः ॥

भिक्षवः संशयजातास्सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः । कानि भदन्त कुमारशतेन कर्माणि कृतानि येन महानग्नबलिनः संवृत्ताः सहिताश्च भ्रातर इति ॥ भगवा-

---

1) Visarga wanting in MS (D ईदृशपु°).

2) B °मुत्पन्नः, D corr.

3) It seems, B has °त्ताशु, as is found in D; the copyist of P carefully imitated the strokes of the indistinct last akṣara so that we may read it शु, as well as श्च.

4) Anusvāra wanting in MS.

5) MS here कोषा.

नाह्द । [1]एभिरेव भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि । एभिः कृतानि कर्माण्युपचितानि को ऽन्यः प्रत्यनुभविष्यति । न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते [2]नाब्धातौ न तेजोधातौ न वायुधातावपि [3]तूपात्तेष्वेव स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च । 5

न प्रणश्यन्ति कर्माणि [4]कल्पकोटिशतैरपि ।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि एकनवते कल्पे विपश्यी नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान् । स बन्धुमतीं राजधानीमुपनिश्रित्य विहरति । यावद्विपश्यी सम्यक्संबुद्धः 10 सकलं बुद्धकार्यं कृत्वेन्धनक्षयादिवाग्निर्निरुपधिशेषे निर्वाणधातौ परिनिर्वृतस्तस्य राज्ञा बन्धुमता शरीरे शरीरपूजां कृत्वा समन्तयोजनश्[5]चतूरत्नमयः स्तूपः प्रतिष्ठापितः क्रोशमुच्चत्वेन यत्रानेकानि प्राणिशतसहस्राणि कारान्कृत्वा स्वर्गमोक्षपरायणानि भवन्ति ॥ यावद्गोष्ठिकानां शतं निर्गतम्[6] । तं स्तूपं दृष्ट्वा तथागतगुणाननुस्मृत्य तैस्तत्र स्तूपे एकपुरुषेणैवैकदेहिनैवैकात्मनैवैकचित्तेनैवैकात्मभावेनैव[7] सर्वैरेकासमूहीभूतैः प्रसन्नचित्तैः प्री- 15

---

1) These words being written very indistinctly in B, have been variously read and transcribed by those who made the copies DCP.

2) B नाव्धाधौ, DP corr.

3) Cp. *supra*, p. 74 n. 9.

4) Cp. *supra*, p. 74 n. 13.

5) MS °श्चतुर°.

6) Ex conject.; BC शतंनिर्गतस्तंस्तंस्तूपं, P शतंनिर्गस्तैस्तंस्तूपं, D शतंनिर्गतस्तैस्तूपं.

7) Ex conject.; MS °भावेनतैस्सवैरेक°.

तिज्ञा[64b]नैरे[1]कात्मनीभूतैस्तत्र स्तूपे पुष्पधूपगन्धमाल्यविलेपनानि नैवेद्यरसरसाय[2]-भोज्यानि सर्वोपकाराणि[3] चोपढौकितानि[4] ध्वजवितानच्छत्त्राणि चारोपितानि[5]। आरोप्य एकसमूहीभूत्वा एकस्वरेण स्तुतिं[6] कृत्वा प्रदक्षिणाशतसहस्रं[7] कृतम्। ततस्तैः सर्वैरेकात्मभावेनैकचित्तकेन प्रणिधानं कृतम्। अनेन कुशलमूलेनास्माकं तत्रैवैकात्मजाता एकचित्तकाः समानदेहाः समानाचाराः समानधर्माः समानपुण्याः समनिर्वाणा भवन्तु। इति तत्रैव स्तूपे एवं भक्तिपरायणा निर्वृताः[8]॥

[9] * * * * * * तेनैव हेतुनेदानीमेकपेशीजाताः[10] समरूपाः समदेहभावाः समात्मचित्ताः समबलवीर्यपराक्रमाः समाचाराः समधर्मेषु[11] परायणाः समं स्रोता‹प›[12]त्तिफलं प्राप्ताः

---

1) MS °ज्ञाति एका°.

2) Perhaps रस is put twice in consequence of a dittography.

3) Neuter gender instead of the masculine; cp. *supra*, p. 29 n. 9.

4) B वोपडोकि°, D चोपधौकि°, C वोपढाकि°, P चोपढो(?)कि°.

5) Ex conject.; MS ध्वजाविताननच्छत्त्राणि चारोपितं.

6) B स्तुतीं, D corr.

7) MS प्रदक्षिणांश°.

8) Ex conject.; MS निर्वृत्तः. I accept *nirvṛtāḥ* = pāli *nibbutā* and as a gentle way of saying that they all met with a peaceful death, whilst offering their devotion. Cp. the story of Cleobis and Biton.

9) The conclusion of this tale, which must have begun with the identification किं मन्यध्वे भिक्षवः etc. has come down to us in a very mutilated condition. A great part of it has been lost. The Tibetan text, as translated by Feer, p. 253 I, represents the complete redaction, though slightly different from ours.

10) Visarga wanting in MS.

11) In B समधर्मेषु has been changed by a *man. sec.*, it seems, into समांध° (P समांध°, D समाध°).

12) DP add the akṣara left out in B.

समं[1] चार्हत्त्वं प्राप्ताः। इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्त[2]<कृष्णो> विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रस्तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम्॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्॥ 5

---

1) Ex conject.; MS समेनार्हं°.

2) MS कर्मणामेकान्तो (P °कान्तो) विपाक.

## सूर्य इति ६९ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्मनुष्यैर्महोरगैरिति[1] देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासन-
5 ग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः कपिलवस्तुनि विहरति न्यग्रोधारामे । कपिलवस्तुन्यन्यतमः शाक्य आढ्यो महाधनो महाभोगो विस्तीर्णविशालपरिग्रहो वैश्रवणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी । तेन सदृशात्कुलात्कलत्रमानीतम् । स तया सार्धं क्रीडति रमते परिचारयति । तस्य क्रीडतो रममाणस्य परिचारयतः पुत्रो[2] जातो ऽभिरूपो दर्शनीयः प्रासादिको महेशाक्यः शिरसि मणिरत्नयुक्तः । * * * *[3] ॥ तस्य ज्ञातौ
10 ज्ञातिमहं कृत्वा नामधेयं व्यवस्थाप्यते किं भवतु दारकस्य नामेति । ज्ञातय ऊचुः । यस्मादस्य[4] दारकस्य शिरसि मणिरत्नं[5] प्राडुर्भूतं तस्य मणिरत्नस्य प्रभया सर्वं गृहमवभा-

---

1) मनुष्यैः, the abnormal addition here to the constant introductory phrase, has been left out in D.

2) MS जात अभि° (P जातः अभि°).

3) Here one or more phrases are wanting, which give account of the effect of the radiance of the jewel that the miraculous child bore on his head. Feer who translates them must have taken them from the Tibetan: «De ce joyau jaillissaient dans toutes les directions de rayons semblables à ceux du soleil; et sa clarté pénétrant tout Kapilavastu, le faisait briller pendant la nuit comme un soleil. Le père et la mère, tous les habitants de la maison, serviteurs et parents, les Çâkyas qui demeuraient à Kapilavastu furent étonnés à la vue de ce prodige et vivement réjouis.»

4) B had at the outset यस्मादय्यं, which appears to have been corrected into °स्य. D has the corrected reading, C यस्मादप्य, P यस्मादयं.

5) Ex conject.; MS °रत्नप्राडुर्भतः. It is also possible, the author wrote °रत्नः प्राडुर्भूतः, treating *ratna* as a masculine.

सितं सूर्यस्येव[1] तस्मादस्य सूर्यो नाम[2] भवतु इति ॥ सूर्यो दारको ऽष्टाभ्यो धात्रीभ्यो दत्तो द्वाभ्यामंसधात्रीभ्यां[3] द्वाभ्यां मलधात्रीभ्यां द्वाभ्यां क्षीरधात्रीभ्यां द्वाभ्यां क्रीडनिकाभ्यां धात्रीभ्याम्। सो ऽष्टाभिर्धात्रीभिरुन्नीयते वर्ध्यते[4] क्षीरेण दध्ना नवनीतेन सर्पिषा सर्पिमण्डेनान्यैश्चोत्तप्तोत्तप्तैरुपकरणविशेषैराशु[5] वर्धते ह्रदस्थमिव पङ्कजम्। स च श्राद्धो भद्रः कल्याणाशय आत्महितपरहितप्रतिपन्नः कारुणिको महात्मा धर्मकामः प्रजावत्सल- 5
स्त्यागरुचिः प्रदानकौशलो महति त्यागे वर्तते ॥

यावदपरेण समयेन सूर्यो दारको न्यग्रोधारामं गतः। अथासौ ददर्श बुद्धं भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः समलङ्कृतमशीत्या चानुव्यञ्जनैर्विराजितगात्रं व्यामप्रभालङ्कृतं सूर्यसहस्रातिरेकप्रभं जङ्गमं[6] ‹म›मिव रत्नपर्वतं समन्ततो भद्रकं सहदर्शनाच्चानेन भगवतो ऽन्तिके चित्तं प्रसाद्य स्वशिरसि मणिरत्नमुद्धृत्य भगवत उपनामितम्। ततः प्रसा- 10
दजातो भगवतः पादाभिवन्दनं कृत्वा पुरस्तान्निषण्णो धर्मश्रवणाय। ततो भगवता सूर्यस्यानुकम्पामुपादाय तन्मणिरत्नमुपगृह्याशयानुशयं धातुं[7] प्रकृतिं च ज्ञात्वा तादृशी चतुरा[65 a]-र्यसत्यसंप्रतिवेधिकी धर्मदेशना[8] कृता यां श्रुत्वा तेन सूर्येण दारकेण विंशतिशिखरसमुद्गतं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रोतआपत्तिफलं साक्षात्कृतम्। स दृष्टसत्यो दानप्रदानानि[9] दत्त्वा श्रमणब्राह्मणवनीपकान्दुःखितान्सत्त्वान्संतर्पयित्वा मातापितरावनुज्ञाप्य[10] भग- 15

---

1) BCP °स्येवस्त°, D °स्यैवत°.

2) MS नाम्ना. One would expect सूर्य इति नाम.

3) MS °मत्सधा°.

4) MS वर्द्धते.

5) B °पकरणैवि°, D corr.

6) D has the akṣara left out in B.

7) Anusvāra wanting in MS.

8) B देशनां, D corr.

9) MS °प्रदानादिं (D °दिं). Cp. *supra*, p. 368 n. 6.

10) B मातापितारौश्र, D मातापितरौ श्र°.

वतः शासने प्रव्रजितः। तेन युज्यमानेन घटमानेन व्यायच्छमानेनेदमेव पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः शतनपतनविकिरणविध्वंसनधर्मतया पराहत्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्। अर्हन्संवृत्तस्त्रैधातुकवीतरागः समलोष्टकाञ्चन आकाशपाणितलसमचित्तो वासीचन्दनकल्पो विद्याविदारिताण्डकोशो विद्याभिज्ञाप्रतिसंवित्प्राप्तो भवलाभलोभ‹सत्कार›पराङ्मुखः सेन्द्रोपेन्द्राणां देवानां पूज्यो मान्यो ऽभिवाद्यश्च संवृत्तः॥

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः[1]। कानि भदन्त सूर्येण दारकेण कर्माणि कृतानि[2] येन शिरसि मणिरत्नं जातं[3] येन च महेशाख्यो ऽर्हत्त्वं च प्राप्तमिति॥ भगवानाह। सूर्येणैव भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यभावीनि। सूर्येण कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति। न भिक्षवः[4] कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ[5] न तेजोधातौ न वायुधातावपि तूपात्तेष्वेव[6] स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि।[7]
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम्॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि एक‹न›वते[8] कल्पे विपश्यी नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान्। ‹स›[8] बन्धुमतीं राजधानीमुपनिश्रित्य विहरति। यावद्विपश्यी

1) B पपच्छुः, DP corr.
2) B कृताणि, D corr.
3) Anusvāra wanting in MS.
4) Visarga wanting in MS.
5) B नाव्धाधौ, D corr.
6) Cp. *supra*, p. 74, n. 9.
7) Cp. *supra*, p. 74, n. 13.
8) D has the akṣara missing in B.

सम्यक्संबुद्धः सकलं बुद्धकार्यं कृत्वा इन्धनक्षयादिवाग्निर्निरुपधिशेषे निर्वाणधातौ परि-
निर्वृतस्तस्य राज्ञा बन्धुमता शरीरे शरीरपूजां कृत्वा समन्तयोजनश्चतूरत्नमयः[1] स्तूपः
प्रतिष्ठापितः क्रोशमुच्चत्वेन यत्रानेकानि प्राणिशतसहस्राणि कारान्कृत्वा स्वर्गमोक्षपरा-
यणानि भवन्ति । तत्र स्तूपमहो वर्तते । आढ्या ब्राह्मणगृहपतयो विचित्रैर्गन्धमाल्यवि-
लेपनैश्छत्रैर्ध्वजैः पताकाभिः पूजां कुर्वन्ति ॥ यावदपरेण पुरुषेण राज्ञः सकाशाद्यूतं क्री- 5
डतः सूर्यावभासं मणिरत्नं[2] निर्जितम् । ततस्तेन प्रसादजातेन विपश्यिनश्चैत्ये वर्षास्थाल्यां[3]
समारोपितम् । ततः पादयोर्निपत्य प्रणिधानं कृतम् । अनेनाहं कुशलेन चित्तोत्पादेन
देयधर्मपरित्यागेन चैवंविधानां गुणानां लाभी स्यामेवंविधं शास्तारमारागयेयं मा विरा-
गयेयमेवंविधेन चूडायां बद्धेन[4] मातुः[5] कुक्षेर्निर्गच्छेयमिति ॥

भगवानाह । किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन अन्तधूर्त आ- 10
सीदयं स[6] सूर्यः । यत्तेन[7] विपश्यिनः स्तूपे रत्नं समारोपितं तेनास्य शिरसि मणिरत्नं प्रा-
दुर्भूतं तेनैव हेतुना अभिरूपो दर्शनीयः प्रासादिको ऽर्हत्त्वं च साक्षात्कृतम् । इति हि भिक्षव
एकान्तकृष्णानां[8] <कर्मणा>मेकान्तकृष्णो विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमि-
श्राणां व्यतिमिश्रस्तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि
चैकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम् ॥ 15

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

1) MS °श्चतुर°.
2) Anusvāra wanting in MS.
3) So MS. Cp. वर्षस्थले (sic) Divy. 244, 13.
4) MS वुद्धेन.
5) Ex conject.; MS मात्त(P मात)कुक्षैर्नि(C क्षैनि)र्ग°.
6) MS सः.
7) MS यंतेन (P यतेन).
8) B एकान्तकृष्णानामे(D °नांमे)कान्तकृष्णो, P fills up the gap.

## मल्लपताकेति[1] ७० ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थ[65b]वाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो[2] बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारणां सश्रावकसङ्घः कपिलवस्तुनि विहरति न्यग्रोधारामे। कपिलवस्तुन्यन्यतमः[3] शाक्य आढ्यो महाधनो महाभोगो विस्तीर्णविशालपरिग्रहो वैश्रवण‹धन›[4]समुदितो वैश्रवणधनप्रतिस्पर्धी। तेन सदृशात्कुलात्कलत्रमानीतम्। स तया सार्धं क्रीडति रमते परिचारयति। तस्य क्रीडतो रममाणस्य परिचारयतः पुत्रो जातो अभिरूपो दर्शनीयः प्रासादिको[5]ऽतिक्रान्तो मानुषं वर्णमसंप्राप्तश्च दिव्यं वर्णम्। यदासौ कुमारो जातस्तदा देवताभिर्दिव्याः पताकाः समन्तत उच्छ्रापिता दिव्यानि वाद्यभाण्डानि पराहतानि दिव्यानि चोत्पल[6]कुमुदपद्मपुण्डरीकमान्दारकाणां[7] पुष्पाणि क्षिप्तानि सर्वं च कपिलवस्तु[8] नगरं यशसा आपूरितं सर्वगृहेषु चास्य नाम्ना पताका उच्छ्रापिताः॥ तस्य ज्ञातो ज्ञातिमहं कृत्वा नामधेयं व्यवस्थाप्यते किं भवतु दारकस्य नामेति। ज्ञातय ऊचुः।

---

1) Ex conject.; MS मल्लपताक इति. Cp. also the *uddāna supra*, p. 345 n. 1.

2) B °भ्यर्थितो, D corr. Cp. *supra*, p. 371 n. 1.

3) B कपिलवास्तु°, D corr.

4) D fills up the gap.

5) MS प्रासादिक अति° (D °काअति°).

6) B चोत्पल, D corr.

7) Sic B. D °रवाणां. Cp. *supra*, p. 292 n. 3.

8) B कपिलवास्तु, D corr.

यस्मादस्य जातस्य यशसा[1] सर्वलोक आपूरितस्[2]तस्माद्भवतु दारकस्य विदितयशा[3] इति नामेति ॥ विदितयशा[3] दारको ऽष्टाभ्यो[4] धात्रीभ्यो दत्तो द्वाभ्यामंसधात्रीभ्यां[5] द्वाभ्यां क्षीरधात्रीभ्यां द्वाभ्यां मलधात्रीभ्यां द्वाभ्यां क्रीडनिकाभ्यां धात्रीभ्याम् । सो ऽष्टाभिर्धात्रीभिरुन्नीयते वर्ध्यते[6] क्षीरेण दध्ना नवनीतेन सर्पिषा सर्पिर्मण्डेनान्यैश्चोत्तप्तोत्तप्तैरुपकरणविशेषैराशु वर्धते ह्रदस्थमिव पङ्कजम् । स च श्राद्धो भद्रः कल्याणाशय आत्महितपरहितप्रतिपन्नः कारुणिको महात्मा धर्मकामः प्रजावत्सलः ॥ 5

यावदपरेण समयेन न्यग्रोधारामं गतः । अथासौ ददर्श बुद्धं भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः समलङ्कृतमशीत्या चानुव्यञ्जनैर्विराजितगात्रं व्यामप्रभालङ्कृतं सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकं सहदर्शनाच्चानेन भगवतो ऽन्तिके चित्तं प्रसादितं प्रसादजातश्च भगवत्पादाभिवन्दनं कृत्वा पुरस्तान्निषण्णो धर्मश्रवणाय । तस्मै 10 भगवता आशयानुशयं[7] धातुं प्रकृतिं च ज्ञात्वा तादृशी चतुरार्यसत्यसंप्रतिवेधिकी[8] धर्मदेशना[9] कृता यां श्रुत्वा विदितयशसा दारकेण विंशतिशिखरसमुद्गतं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्वा स्रोतापत्तिफलं साक्षात्कृतम् ॥ स दृष्टसत्यः श्रमणब्राह्मणकृपणवनीपकेभ्यो दानप्रदानानि दत्वा मातापितरावनुज्ञाप्य भगवच्छासने प्रव्रजितः ॥ तेन युज्यमानेन

---

1) B यश्रोसा, CD corr.

2) Ex conject.; MS आपूरितं. It would be possible to correct also आपूरि, there is, however, no other instance in this work of an aorist in *i*.

3) Ex conject.; MS °यशसा. Cp. *infra*, l. 12, the instrum. विदितयशसा. The paraphrase of this avad. in A ç o k ā v. (f. 247 b 8—255 a 2) calls the child sometimes *Viditayaçasa* (e. g. f. 249 b 3, 4 and 7), sometimes *Viditayaças* (f. 253 a 7).

4) MS °रकः । अष्टा°.

5) MS °भ्यांमत्स°.

6) MS वर्द्धते.

7) B °शयधातुं, P corr.

8) B °धिकीं, D corr.

9) MS °शनां.

घटमानेन व्यायच्छमानेनेदमेव पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः शतनपतनविकिरणविध्वंसनधर्मतया पराहत्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम् ।
[1]अर्हन्संवृत्तस्त्रैधातुकवीतरागः समलोष्टकाञ्चन आकाशपाणितलसमचित्तो वासीचन्दनकल्पो विद्याविदारिताण्डकोशो विद्याभिज्ञाप्रतिसंवित्प्राप्तो भवलाभलोभसत्कारपराङ्मुखः सेन्द्रोपेन्द्राणां देवानां पूज्यो मान्यो ऽभिवाद्यश्च संवृत्तः । स याचितचीवरं परिभुङ्क्ते अल्पमयाचितं[2] याचितपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारान्परि[3]भुङ्क्ते अल्पमया[4]चितम्[2] ॥

भिक्षवः संशयजातास्सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः । कानि भदन्त विदितयशसा कर्माणि कृतानि येन जातमात्रस्य देवताभिः पताका उच्छ्रापिता यशसा च सर्वलोक आपूर्णः प्रव्रज्यं[5] चार्हत्त्वं साक्षात्कृतमिति ॥ भगवानाह । विदितयशसैव भिक्षवः <पूर्वमन्यासु जातिषु> कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि । विदितयशसा कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति । न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये [66a] पृथिवीधातौ विपच्यन्ते [6]नाब्धातौ न तेजोधातौ न वायुधातावपि[7] तूपात्तेष्वेव स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च ।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि ।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ॥

---

1) BCP °र्हत्संवृ°, D °र्हसंवृ°.

2) Ex conject.; MS °याचितः. Cp. Feer, p. 257, 3 foll.

3) Ex conject.; MS °परिष्काराणां परि°.

4) MS अल्पमाचितः.

5) MS प्रव्रज्या.

6) B नाब्धाधौ, DP corr.

7) Cp. *supra*, p. 74 n. 9.

भूतपूर्वं भिक्षवो ऽतीते ऽध्वन्येकनवते कल्पे विपश्यी नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान्। स बन्धुमतीं राजधानीमुपनिश्रित्य विहरति। यावद्विपश्यी सम्यक्संबुद्धः सकलं बुद्धकार्यं कृत्वेन्धनक्षयादिवाग्निर्निरुपधिशेषे निर्वाणधातौ परिनिर्वृतस्तस्य राज्ञा बन्धुमता शरीरे शरीरपूजां कृत्वा समन्तयोजनश्चतू[1]रत्नमयः स्तूपः प्रतिष्ठापितः क्रोशमु- 5 च्चत्वेन यत्रानेकानि प्राणिशतसहस्राणि कारान्कृत्वा स्वर्गमोक्षपरायणानि भवन्ति ॥ यावद्राज्ञा बन्धुमता स्तूपमहः कारितस्तत्र च स्तूपमहे वर्तमाने [2]मल्लानां मध्ये पताका उच्छ्रापिता। यावद्राजमल्लेन राजमल्लो निहतः। ततस्तेन मल्लपताका आसादिता। स तामादायानेकप्राणिशतसहस्रपरिवृतो नाना विचित्रै[3]र्वा‹द्यै›र्वा‹द्य›मानैर्येन विपश्यिनः स्तूपस्तेनोपसंक्रान्तः। उपसंक्रम्य [4]तथा‹गत›गुणाना‹म›नुस्मर[5]णं कृत्वा तां पताकां स्तूप- 10 यष्ट्यां बद्ध्वा प्रणिधानं कृतवान्। अहमप्येवंविधानां गुणानां लाभी स्यामेवंविधमेव शास्तारमारागयेयं मा विरागयेयमिति॥

भगवानाह। किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन मल्ल आसीदयं स विदितयशा[6]। यदनेन विपश्यिनः स्तूपे [7]काराः कृतास्तेन संसारे ऽनन्तं सुखमनुभूतवांस्तेनैव हेतुना इदानीमर्हत्वं साक्षात्कृतम्। इति हि भिक्षव एकान्तकृष्णानां कर्मणामेका- 15 न्तकृष्णो विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रस्तस्मात्तर्हि

1) MS °श्चतुर°.

2) Ex conject.; MS मल्लामामध्ये (D °मधे). In Açokāv. this is thus related: सपताको ध्वजो मल्लैरुच्छ्रापितो जया(read: या)र्थिभिः (f. 254 a 5).

3) Cp. *supra*, p. 122, 2. 163, 7, and, concerning नाना, p. 365 n. 5.

4) D fills up the gap.

5) Ex conject.; MS गुणाननुस्मरणं.

6) MS विदितयशसा.

7) Ex conject.; MS काराकृतानेन संसारे.

भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमनन(1)स्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्(2) ॥

---

1) D has the missing akṣara.

2) After this, B and its copies, except D, have this colophon: चित्रावदानो नाम सप्तमो उदानगाथा (sic) समाप्ता ॥.



# अवदानशतकम्

## अष्टमो वर्गः ।

### सुप्रभेति[1] ७१ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुड- 5 किन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयना- सनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपि- ण्डदस्यारामे । श्रावस्त्यामन्यतमः श्रेष्ठी आढ्यो महाधनो महाभोगो विस्तीर्णविशालप- रिग्रहो वैश्रवणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी । तेन सदृशात्कुलात्कलत्रमानीतम् । स तया सार्धं क्रीडति रमते परिचारयति । तस्य क्रीडतो रममाणस्य परिचारयतः पत्नी 10 आपन्नसत्त्वा संवृत्ता । साष्टानां वा नवानां वा मासानामत्ययात्प्रसूता । दारिका जाता अभिरूपा दर्शनीया प्रासादिका दिव्यालङ्कारभूषिता मणिरत्नेन कण्ठे आबद्धेन तस्माच्च प्रभा निर्गच्छति यया सर्वा श्रावस्ती अवभासते ॥ तस्या ज्ञातौ ज्ञातिमहं कृत्वा नामधेयं व्यवस्थाप्यते किं भवतु दारिकाया नामेति । ज्ञातय ऊचुः । यस्मादनया जातमात्रया मणिरत्नावभासेन सर्वा श्रावस्ती अवभासिता तस्माद्भवतु दारिकायाः सुप्रभेति नामेति ॥ 15 सा सुप्रभा दारिका अष्टाभ्यो धात्रीभ्यो दत्ता द्वाभ्यामंसधात्रीभ्यां[2] द्वाभ्यां क्षीरधात्रीभ्यां

---

1) In MS there precedes the *uddāna* of this *varga*, which is beset with errors: उद्दानं सुप्रा [read: सुप्रभा] सुप्रिया चैव शुक्ला सोमां [read: °मा] तथापरा <।> कुवलया (sic) सुन्दरो चैव मुक्ती (sic) चैव कचंगला <।> क्षेमा विरूपा च वर्गो भवति समुदितः (sic). The last pāda is defective.

2) MS °भ्यांमत्स°.

द्वाभ्यां मलधात्रीभ्यां द्वाभ्यां क्रीडनिकाभ्यां धात्रीभ्याम् । साष्टाभिर्धात्रीभिरुन्नीयते[1] वर्ध्यते[2] क्षीरेण [66 b] दध्ना नवनीतेन सर्पिषा सर्पिमण्डेनान्यैश्चोत्तप्तोत्तप्तैरुपकरणविशेषैराशु वर्धते ह्रदस्थमिव पङ्कजम् । सा दारिका आढ्या भद्रा कल्याणाशया आत्महितपरहितप्रतिपन्ना । तस्या[3] ये ये याचनका आगच्छन्ति तेभ्यस्तेभ्यः कण्ठादलङ्कारमवमुच्य[4]
5 प्रयच्छति दत्ते च पुनरलङ्कारः प्रादुर्भवति ॥

यावदसौ दारिका क्रमेण महती संवृत्ता तदा तस्या बहवो याचनका आगच्छन्ति राजपुत्रा अमात्यपुत्राः श्रेष्ठिपुत्राश्च । तैरुपहूयमाणाः पिता चास्याः[5] करे कपोलं दत्त्वा चिन्तापरो व्यवस्थितः । यद्येकस्मै[6] दास्यामि अन्ये मे अमित्रा भविष्यन्तीति ॥ यावदसौ दारिका पितरं चिन्तापरमवेक्ष्योवाच । तात किमसि चिन्तापर इति । तेन सो ऽर्थो विस्तरेण
10 समाख्यातः[7] ॥ दारिका कथयति । तात न ते शोकः कर्तव्यः स्वयमेवाहं सप्तमे दिवसे स्वयंवरमवतरिष्यामीति ॥ ततः श्रेष्ठी[8] राज्ञः प्रसेनजितो निवेद्य श्रावस्त्यां घण्टावघोषणं कारयामास । सप्तमे दिवसे सुप्रभा दारिका स्वयंवरमवतरिष्यति येन वो यत्करणीयं स तत्करोत्विति ॥

ततः सप्तमे दिवसे सुप्रभा दारिका रथाभिरूढा काषायं ध्वजमुच्छ्राप्य[9] बुद्धं भगवन्तं

---

1) MS सोष्टा°.

2) MS वर्द्धते.

3) MS तस्मायेये (D तस्मादयेये).

4) B °कालमव°, D corr.; again on the next line B has अलङ्कारः, but D (and P) °कालः.

5) MS चास्यः (D चास्य).

6) MS यद्येकस्मै (D यद्येकास्मिं, P येयंकस्मै).

7) B °ख्याता or ख्यात ।, DP corr.

8) BD श्रेष्टि, P श्रेष्ठि.

9) B काषायं ध्वंध्वजमुच्छ्राय, DP omit the superfluous ध्वं, but all have °च्छ्राय — even the paraphrast of the Kalpadrumāv. — instead of °च्छ्राप्य.

चित्रपटे[1] लेखयित्वा अभिष्टुवती वीथीमवतीर्णा ॥ सा तत्र राजपुत्रैरमात्यपुत्रैः श्रेष्ठिपुत्रैश्च सोत्कण्ठोद्वीक्ष्यमाणा विचित्राभिः कथाभिः संज्ञप्योवाच[2]। सर्वथाहं न केनचिदंशेन भवतां परिभवं करोमि[3] केवलं तु नाहं कामेनार्थिनी बुद्धं शरणं गतास्मि तस्य सकाशे प्रव्रजिष्यामीति। ततस्ते निर्भर्त्सिताः[4] प्रतिनिवृत्ताः ॥ सुप्रभापि दारिका भगवत्सकाशमुपसंक्रम्य भगवतः पादाभिवन्दनं कृत्वा पुरस्तान्निषण्णा धर्मश्रवणाय। तस्या भगवता आशयानुशयं धातुं प्रकृतिं च ज्ञात्वा तादृशी चतुरार्यसत्यसंप्रतिवेधिकी धर्मदेशना कृता यां श्रुत्वा सुप्रभया दारिकया विंशतिशिखरसमुद्गतं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रोतापत्तिफलं साक्षात्कृतमभिनिर्हारश्च[5] कृतः। अथ सुप्रभा दारिका उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा येन भगवांस्तेनाञ्जलिं प्रणमय्य[6] भगवन्तमिदमवोचत्। लभेयाहं भदन्त स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुणीभावं चरेयमहं भगवतो ऽन्तिके ब्रह्मचर्यमिति। ततो भगवान्संलक्षयति। अनया अस्मच्छासने[7] महद्विनेयाकर्षणं[8] कर्तव्यमिति। ततो भग-

---

1) Ex conject.; MS चित्रपटो.

2) The paraphrast has changed this into विज्ञप्योवाच (K., f. 51a 4), but *saṃjñapya* is the proper word here with the meaning of 'conciliating', cp. Divy. 54, 22.

3) Ex conject.; MS करोति केवलं तु नाहं (DP माहं) कामेन चार्थिनी.

4) Visarga wanting in MS.

5) **Feer** surmises (p. 262 n.) that the syllable *jñā* has been left out, so that the original reading should be °भि<ज्ञा>निर्हारश्च कृतः, pointing out that this very term recurs farther on in avad. nr. **79.** But as the paraphrast of the **Kalpadrumāv.** renders this passage of our tale in this çloka

साक्षात्कृत्वाभिनिर्हारः कृतो बुद्धप्रभावतः (K. f. 52a 1),

I have retained the reading of MS, supposing *abhinirhāra* may be the elliptical expression of «acquisition of *ṛddhi* or magical power». Cp. Ind. to **Mhv.**, s. v. *abhinirharati*, and Ind. II to **Çikṣāsamuccaya**, s. v. *abhinirhāra*, and °*hṛta*.

6) The causative has the value of its primitive (स्वार्थे णिच्). Cp. Divy. 463, 22 and *supra*, p. 347, 14. D has here प्रणाम्य.

7) Ex conject.; MS अस्मिच्छा°.

8) Anusvāra wanting in MS.

वतोक्ता गच्छ दारिके पर्षदमवलोकयेति ॥ ततः सुप्रभा दारिका जेतवनान्निर्गत्य[1] तत्रागता। तत्रैकैकस्यैवं भवति बलेनैनां हराम इति। ते[2] तामाक्रमितुमारब्धाः। ततः सुप्रभा दारिका तै[3]रुपक्रम्यमाणा विततपक्ष इव हंसराजो गगणतलमभ्युद्गम्य विचित्राणि प्रातिहार्याणि दर्शयितुमारब्धा। आशु पृथग्जनस्य ऋद्धिरा[4]वर्जनकरी ॥ ततस्ते[5] तदत्यद्भुतं देवमनुष्यावर्जनकरं प्रातिहार्यं दृष्ट्वा उद्दण्डरोमाणो मूलनिकृत्ता[6] इव द्रुमाः पादयोर्निपत्य विज्ञापयितुमारब्धाः। अवतरावतर भगिनि यैते त्वया धर्माः[7] साक्षात्कृता अस्थानमेतद्यत्त्वं कामान्परिभुञ्जीथा इति ॥ ततः सुप्रभा दारिका गगणतलादवतीर्य जनकायस्य पुरस्तात्स्थित्वा तथाविधां धर्मदेशनां कृतवती यां श्रुत्वानेकैः प्राणिशतसहस्रैः सत्यदर्शनं कृतम् ॥ ततो भगवता महाप्रजापत्याः[7] संन्यस्ता। ततस्तया प्रव्राजिता उपसंपादिता[8] च ॥ तया युज्यमानया घटमानया व्यायच्छमानयेदमेव पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः शतनपतनविकिरणविध्वंसनधर्मतया पराहत्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्। अर्हन्ती संवृत्ता त्रैधातुकवीतरागा समलोष्टकाञ्चना आकाशपाणितलसमचित्ता

---

1) Ex conject.; MS जेतवनान्निर्गत्य साचागतात्रैकै°. The complex साचागता must be a corrupted reading. My correction has been suggested by the parallel passage in K. (f. 52a):

जेतवनाद्बहिः प्रागात्पर्षदमवलोकितुम् ॥
तत्रायातां जना दृष्ट्वा कामिनो दर्पमानिनः।
बलेनैनां हरिष्याम इत्याक्रमितुमारभन् ॥

2) Ex conject., see the foregoing note; MS तां प्राक्रमितुमारब्धास्ततः.

3) MS दारिकास्तैरुप°.

4) MS ऋद्धिराजवर्जन°. Cp. Divy., 133, 9. 192, 8.

5) Ex conject.; MS तमत्यद्भुतं. Cp. K., f. 52b 6, प्रातिहार्यं तदिदं महदद्भुतं.

6) MS °कृता (D °कृत्ता).

7) Visarga wanting in MS.

8) MS उपसंप्रादिता.

वासीचन्दनकल्पा विद्याविदारिताण्ड[67 a]कोशा विद्याभिज्ञाप्रतिसंवित्प्राप्ता भवलाभलोभसत्कारपराङ्मुखी[1] सेन्द्रोपेन्द्राणां देवानां पूज्या मान्याभिवाद्या च संवृत्ता ॥

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः । कानि भदन्त सुप्रभया दारिकया कर्माणि कृतानि येनाभिरूपा दर्शनीया प्रासादिका मणिरत्नं च कण्ठे प्रादुर्भूतं[2] प्रव्रज्य चार्हत्त्वं[3] साक्षात्कृतमिति ॥ भगवानाह । सुप्रभयैव भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि । सुप्रभया कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति । न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ[4] न तेजोधातौ न वायुधातावपि[5] तूपात्तेष्वेव स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च ।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि ।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि एकनवते कल्पे विपश्यी नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान् । स बन्धुमतीं राजधानीमुपनिश्रित्य विहरति । यावद्विपश्यी सम्यक्संबुद्धः सकलं बुद्धकार्यं कृत्वेन्धनक्षयादिवाग्निर्निरुपधिशेषे निर्वाणधातौ परिनिर्वृतस्तस्य राज्ञा बन्धुमता शरीरे शरीरपूजां कृत्वा समन्तयोजनश्चतूरत्नमयः स्तूपः प्रतिष्ठापितः क्रोशमुच्चत्वेन । या बन्धुमतो राज्ञो ऽग्रमहिषी[6] वृद्धीभूता तया विचित्राण्याभरणानि शरीरादव-

---

1) This uncommon form of the feminine — cp. Pāṇini IV, 1, 54 — is found throughout, wheresoever this stereotyped passage occurs in this varga.

2) B प्राडुभूतं, DCP corr.

3) MS प्रव्रज्य चा(P रा)र्हत्वं च सा°.

4) B नाब्धाधौ, DP corr.

5) MS °धातौ अपि तूपात्ते° (D भूयात्ते°). Cp. *supra*, p. 74 n. 9.

6) MS राज्ञः अ°.

मुच्य तत्र स्तूपे दत्तानि। ततः पादयोर्निपत्य प्रणिधानं कृतवती। अनेन कुशलमूलेन चित्तोत्पादेन देयधर्मपरित्यागेन चार्हत्त्वं प्राप्नुयामिति॥

भगवानाह। किं मन्यध्वे भिक्षवो या सा तेन कालेन तेन समयेन राज्ञो बन्धुमतो अग्रमहिषी आसीदियं सा सुप्रभा। यदनया विपश्यिनः स्तूपे विचित्राण्याभरणानि समारोपितानि तेनाभिरूपा दर्शनीया प्रासादिका सर्वाङ्गप्रत्यङ्गोपेता संवृत्ता। यत्प्रणिधानं[1] कृतं तेनेदानीमर्हत्त्वं साक्षात्कृतम्। इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रस्तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम्॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्॥

---

1) MS यन्प्रणि°.

## सुप्रियेति ७२ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्डदस्यारामे । तेन खलु समयेनानाथपिण्डदस्य गृहपतेः पत्नी आपन्नसत्त्वा संवृत्ता । साष्टानां वा नवानां वा मासानामत्ययात्प्रसूता । दारिका जाता अभिरूपा दर्शनीया प्रासादिका सर्वाङ्गप्रत्यङ्गोपेता श्रावस्त्य(1)धिवासिनो जनकायस्यातीव प्रिया । तस्या ज्ञातौ ज्ञातिमहं कृत्वा नामधेयं व्यवस्थाप्यते किं(2) भवतु दारिकाया नामेति । ज्ञातय ऊचुः । यस्मादियं प्रिया सर्वजनस्य तस्माद्भवतु दारिकायाः सुप्रियेति नामेति ॥ जातिस्मरा जातमात्रा गाथां भाषते ।

दत्तं हि दानं बहु (3)वाल्पकं वा ।
विस्तीर्यते क्षेत्रविशेषयोगात् ।
तस्माद्धि देयं विदुषा प्रयत्नात् ।
बुद्धाय लोकेन्द्रसुरेश्वराय ॥

अथास्या मातापितरावन्ये च गृहवासिनस्तं वाक्यव्याहारं श्रुत्वा भीतास्त्रस्ताः संविग्ना

---

1) Ex conject.; MS श्रावस्त्यभित्रा° (D श्रावत्यभिर्वा°).

2) B किभवतु, DP corr.

3) Ex conject.; MS बहुकल्पकं वा. K., f. 134 a 4, where the *gāthā* is identical — except in the 4th pāda, which runs thus बुद्धाय नाथाय मुनीश्वराय — has here दत्तं हि दानं बहु चा(read: वा)ल्पकं वा.

आहृष्टरोमकूपाः कथयन्ति पिशाचीव सेयं [67b] दारिकेति ॥ सा कथयति । अम्ब नाहं पिशाची नापि राक्षसी किं तर्हि दारिका इच्छा‹मि›[1] दानानि दातुमिति ॥ ततोऽस्या मात्रा अनाथपिण्डदस्य गृहपतेर्निवेदितमेवमेषा दारिका[2] ब्रूत इति ॥ ततस्तेन गृहपतिना हृष्टतुष्टप्रमुदितेन[3] भगवानन्तर्गृहे सभिक्षुसङ्घो भोजितस्तस्याश्च नाम्ना दक्षिणादेशनं[4] कारितम् ॥

यावदसौ दारिका क्रमेण सप्तवर्षा संवृत्ता मातापितरावनुज्ञाप्य भगवच्छासने प्रव्रजिता । सा सर्वासां[5] भिक्षुणीनामिष्टा कान्ता प्रिया मनापा ॥ यावत्तत्र कालेन महादुर्भिक्षं प्रादुर्भूतं दुर्भिक्षान्तर[6]कल्पसदृशं यत्रानेकानि प्राणिशतसहस्राणि अन्नपानवियोगात्कालं कुर्वन्ति । तत्र भगवानायुष्मन्तमानन्दमामन्त्रयते स्म । गच्छानन्द मद्वचनात्सुप्रियां वद चतस्रस्ते पर्षदस्त्रैमास्यं चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारैः प्रतिपादयितव्या इति ॥ तत आयुष्मानानन्दः सुप्रियां गत्वोवाच । भगवानाह चतस्रस्ते परिषदस्त्रैमास्यं चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारैः प्रतिपादयितव्या इति । ततः सुप्रिया कृतकरपुटा भगवत आज्ञां शिरसि कृत्वा कथयत्येवमस्त्विति ॥

---

1) The insertion of the akṣ. मि is confirmed by K, f. 134b 3, तद्दानानि तथा दातुमिच्छामि सुगताय वै.

2) Ex conject.; MS ब्रुवत इति. My correction is suggested by the persuasion that the author of the Avadānaçataka proves himself too good a Sanskritist for us to charge him with the barbarism found in MS, and because the Kalpadrumāv. has in the parallel place (f. 134b 4) स्वामिन्नेषा तथा ब्रूते [ms. ब्रुते].

3) B भगवान्तगृहे. The akṣ. न, having been omitted at first, is added between the lines, but by mistake between न्त and गृ. For this reason these words have been variously corrupted in the copies of B. For the rest, cp. *supra*, p. 9, 3. 24, 7 and *infra*, p. 406, 1.

4) It is uncertain, whether B has °देशनं (so in DP) or °दशनं (so C).

5) MS सर्वेषां भिक्षुणीनामिष्टा. This lapsus calami is not found in Kalpadrumāv., where we read सर्वासां सांघिकानां च सा सुप्रिया हितंकरा । इष्टा कान्ता मनापा च (f. 138a 6).

6) B दुर्भिक्षातर°, D corr.

सुप्रिया श्रावस्तीमभिसंप्रस्थिता गोचरव्यवलोकनार्थम् । यावदेषा प्रवृत्तिरनाथपिण्डदेन श्रुता[1] । स त्वरितं सुप्रियाया अग्रतो भूतः कथयति सुप्रिये क्व गच्छसीति ॥ सा कथयति । भगवानाह त्रैमास्यं वैयावृत्यकर्मणि नियुक्तेति ॥ अनाथपिण्डद उवाच । [2]अल्पोत्सुका भव अहं [3]त्वां सर्वेण प्रवारयामीति ॥ सुप्रिया कथयति । किमत्राश्चर्यं यदि [4]तातो दृष्टसत्यः [5]प्रवारयति समन्ततो ऽन्तर्हितानि निधानान्यभिसमीक्ष्य । अहं तु दरिद्रजनस्यानुग्रहं करोमीति ॥ तथा पञ्चभिरुपासकशतैरल्पोत्सुका क्रियते मालिकया देव्या [6]वर्षाकारया [7]क्षत्रियया [8]ऋषिदत्तपुराणाभ्यां [9]स्थपतिभ्यां विशाखया मृगारमात्रा राज्ञा प्रसेनजिता । अटवीगता तत्राप्य[10]मनुष्यैर्मनुष्यवेषधा[11]रिभिः प्रवार्यते ॥ तया एवं प्रवार्यमाणया भगवान्सश्रावकसङ्घस्त्रैमास्यमुपस्थितश्चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारैस्तत्रैव च त्रैमास्ये युज्यमानघटमानव्यायच्छमानया इदमेव पञ्चगण्डकं संसा- 10

---

1) Ex conject.; MS श्रुत्वा. K., f. 139a 1, confirms the correction.

2) B अल्पात्सुका, DP corr.

3) Ex conject.; MS अहं ते. But it is said *pravārayati kañcit kenacit*, cp. *infra*, l. 8, *supra* p. 58, 3 and Divy. 116, 17.

4) Ex conject.; MS ततो. Cp. Feer, p. 266, n. 5.

5) MS here प्रचार°. As to this supernatural power of A., cp. *supra*, p. 315, 1.

6) MS चर्याकारया. I have adopted the reading of Kalpadrumāv. (f. 140a 4) and D.

7) MS क्षत्रियाया.

8) Ex conject., cp. *supra*, p. 224, n. 2; MS and K., f. 140a 4, ऋद्धिदत्त°. The Tibetan has དྲང་སྲོང་སྦྱིན་ = *Ṛṣidatta.*

9) MS स्थपितीभ्यां (D स्थापती°).

10) Ex conject.; MS तत्राभ्यामनुष्यै°. My correction is confirmed by the parallel place in Kalpadrumāv. (f. 140b 6):

तत्रापि चामनुष्यैश्च मनुष्यवेषधारिभिः ।
फलमूलैश्च पुष्पैश्च भिक्षुणी सा प्रवारिता ॥

11) MS °वेश्यधारिभिः.

रचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः शतनपतन[1]‹वि›किरणविध्वंसनधर्मतया परा-
कृत्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम् । अर्हन्ती संवृत्ता त्रैधातुकवीतरागा समलो-
ष्टकाञ्चना आकाशपाणितलसमचित्ता वासीचन्दनकल्पा विद्याविदारिताण्डकोशा वि-
द्याभिज्ञाप्रतिसंवित्प्राप्ता भवलाभलोभसत्कारपराङ्मुखा[2] सेन्द्रोपेन्द्राणां देवानां पूज्या मा-
5 न्याभिवाद्या च संवृत्ता ॥

अथ भगवांस्त्रैमास्यात्ययात्कृतचीवरो निष्ठितचीवरः समादाय पात्रचीवरं श्राव-
स्त्या राजगृहं संप्रस्थितः सार्धं श्रावकसङ्घेन । ततः सुप्रियया भगवानन्तर्मार्गे अल्पोत्सुकः
कृतः । यावदसौ ****[3] दिकामटवीमनुप्राप्तः गण्डीदेशकालो जातः पथ्यदनं च नास्ति । तया
भगवान्सश्रावकसङ्घ उपनिमन्त्रितः । ततः पात्रं वामे पाणौ प्रतिष्ठाप्योवाच प्रव्याहृत-
10 वती । यदि पुण्यानामस्ति विपाकः पात्रमेवंविधभक्ष्यभोज्यादिना परिपूर्यतेति[4] । ततो देव-

---

1) D adds the missing akṣara.

2) Cp. *supra*, p. 393 n. 1.

3) This passage is manifestly mutilated; MS यावदसौदिकामनु°. The Tibetan version has, it seems, preserved the integral form of the phrase, but it does not afford sufficient help to restore the Sanskrit text. Feer in his n. 4 on p. 267, quotes the Tibetan; *chuṅ-da* must be a typographical error for *chu-daṅ*. Mr. Thomas writes to me that whole expression is དགས་ཁུང་ཆུ་དང་ལྡན་. Now this seems to have an ambiguous interpretation. From Sarat's *Dict.* I learn that there are two words ཁུང་, one meaning 'hole', the other 'root'. Therefore, the wood may be qualified as possessing either 'a hole or cavern with water' (Feer 'une forêt où il y avait une source') or = 'having roots and water'. The lost adjective, I suppose, is the name of that forest on the way from Çrāvastī to Rājagṛha.

I hoped that the Chinese translation might settle the point. But this is not the case. As Prof. de Groot informs me, the Chinese translator has treated this passage very freely. He amplifies the miraculous occurrence, but about the place where it happened, he says only that it was «a wood».

4) Ex conject.; MS परिपूर्यतेति. Cp. the paraphrase in K., f. 141b 1: पथ्यान्नभोजनैः पात्रं परिपूर्येत सर्वशः.

तया दिव्यया सुधया[1] परिपूरितम्[2]। ततः सुप्रियया अनुपरिपाटिकया[3] सर्वस्य भिक्षुसङ्घस्य पात्राणि पूरितानि ॥ तत्र भगवान्भिक्षूनामन्त्रयते[4] स्म । एषा[5] अग्रा मे भिक्षवो भिक्षुणीनां मम श्राविकाणां कृतपुण्यानां यदुत सुप्रिया भिक्षुणी ॥

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः । कानि भदन्त सुप्रियया कर्माणि कृता‹नि› येन आढ्ये कुले जाता अभिरूपा दर्शनीया प्रासादिका अभिमता सर्वजनस्य प्रव्रज्य चार्हत्त्वं साक्षात्कृतमिति ॥ भगवानाह । सुप्रिययैव[6] भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसं[68 a]भाराणि[7] परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि । सुप्रियया कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति । न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ[8] न तेजोधातौ न वायुधातावपि तूपात्तेष्वेव[9] स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च ।

---

1) B स्वधया, perhaps with the meaning of सुधया made out of original स्वधया, as is written in D. P has सुधया. Cp. K., f. 141 b 2, तत्रत्या वनदेवता। दिव्यया सुधया तूर्णं तत्पात्रं पर्यपूरयत्.

2) MS परिपूरि(D °र)तस्ततः.

3) CDP अनुपरिघाटिकया, because the akṣ. पा being written rather indistinctly in B, admits of being read घा.

4) MS भिक्षुणामंत्रयते. Cp. *supra*, p. 329, 13.

5) In B the first two akṣaras are so confusedly written, owing partly to subsequent correction, that they seem almost unreadable; the third is म added at the bottom of the page. P has तासामग्रा मे, D तामग्रा मे. I have constituted the text conformably to the fixed style used in such declarations of superiority by the Buddha. This is confirmed by K., f. 141 b 4:

तदेषा सुप्रिया साध्वी भवत्यग्रा सुभाविनी ।
सर्वासां कृतपुण्यानां श्राविकाणां ममाश्रये ॥

6) B सुप्रियेयैव, D corr.

7) B संभावाणि, DP corr.

8) B नाब्धार्धौ, D corr.

9) Cp. *supra*, p. 74 n. 9.

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि[1]।

सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम्॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि अस्मिन्नेव भद्रके कल्पे विंशतिवर्षसहस्रायुषि प्रजायां काश्यपो नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकवि-
5 दनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान्। स वाराणसीं नगरीमुप-निश्रित्य[2] विहरति ऋषिपतने मृगदावे॥ अथ काश्यपः सम्यक्संबुद्धः पूर्वाह्णे निवास्य पात्रचीवरमादाय भिक्षुगणपरिवृतो भिक्षुसङ्घपुरस्कृतो वाराणसीं नगरीं पिण्डाय प्रा-विक्षत्। यावदन्यतरः श्रेष्ठी सपरिजन उद्यानं गतः प्रभूतं च खादनीयं भोजनीयं नी-तम्। यावत्तस्य प्रेष्यदारिकया[3] * * * *। <तया> भगवान्सश्रावकसङ्घो ऽन्तर्मार्गे दृष्टः। तस्याः[4]
10 प्रसादजाताया बुद्धिरुत्पन्ना किं[5] मां स्वामी द्विरपि दासीकरिष्यति यन्न्वहं भगवन्तं भो-जयेयमिति। ततस्तया बन्धनताडनमग<ण>यित्वा[6] भक्तपेडामुद्घाट्य[7] भगवान्सश्रावकसङ्घो विचित्रेणाहारेण[8] संतर्पितः। ततः श्रेष्ठिनः सकाशमुपसंक्रान्ता॥ यावच्छ्रेष्ठिना उक्ता दारिके क्व सा भक्तपेडेति[9]॥ सा कथयति। भगवान्मे काश्यपस्सम्यक्संबुद्धः पिण्डकेन

---

1) Cp. *supra*, p. 74 n. 13. In BCP अपि after कर्माणि is wanting.

2) MS °निसृत्य.

3) As Feer (p. 268, n. 1) surmises, a short sentence has here been lost, the translation of which is extant in the Tibetan: «Une jeune esclave s'y rendait avec une corbeille de riz cuit.» This is also attested by the paraphrase in Kalpadrumāv. (f. 142a 5) तत्रैका दारिका दासी पेडामादाय पैष्टकीं। उद्यानं प्रति गन्तुं तत्.....विनिर्ययौ. 4) Visarga wanting in MS.

5) Ex conject.; MS किं मे स्वामी etc., a syntactic impossibility.

6) Ex conject., cp. Feer, p. 268 n. 2; B °ताडतमगयित्वा with the interlineal addition of an akṣara — it is not clear which — put above ग and य, which must have been intended to represent a ण. D °मङ्गयित्वा, P °मगियत्वा.

7) Instead of पेडा, which is distinctly written in B, P has यंन्त्रा, D either यडा or यत्रा.

8) B विचित्रेणा°, D corr.

9) B भक्तभेपेडेति, but भे seems expunged. Nevertheless, this akṣ. has been copied in CDP; C °भेपेडेति, P °भयेत्रेति, D °भपडेति.

प्रतिपादितः। इति श्रुत्वा श्रेष्ठी परं विस्मयमापन्नः॥ ततस्तेन हृष्टतुष्टप्रमुदितेनोक्ता। गच्छ दारिके अद्याग्रेण त्वमदासी भव या त्वं मम सुतस्य ज्ञागर्षोति॥ सा कृतकरपुटा गृहपतिं विज्ञापितवती। अनुजानीहि मां भगवच्छासने प्रव्रजिष्यामीति। ततो ऽस्याः श्रेष्ठिना पात्रचीवरं दत्तम्। सा स्वकेन पात्रचीवरेण भगवच्छासने प्रव्रजिता॥ भगवतः काश्यपस्य प्रवचने[1] दश वर्षसहस्राणि वैयापृत्यं[2] कृतं भक्तैस्तर्पणैर्यवागूपानैर्नित्यकैर्नि-[3] 5 मित्तिकैर्दीपमालाभिः कठिनचीवरैर्दानप्रदानानि दत्त्वा प्रणिधानं कृतम्। यन्मया भगवते काश्यपाय कृच्छ्रेण समुदानीय दानप्रदानानि दत्तान्यनेनाहं कुशलमूलेन चित्तोत्पादेन देय-धर्मपरित्यागेन च भगवतः शाक्यमुनेः प्रव्रज्यार्हत्वं प्राप्नुयामिति॥

भगवानाह। किं मन्यध्वे भिक्षवो यासौ[4] प्रेष्यदारिका इयमसौ सुप्रिया। यदनया भगवान्काश्यपः पिण्डकेन प्रतिपादितस्तेन आढ्ये कुले जाता अभिरूपा दर्शनीया प्रासादिका 10 अभिमता सर्वजनस्य। यत्प्रणिधानं कृतं तेनेदानीमर्हत्वं साक्षात्कृतम्। इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रस्तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम्॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्॥ 15

---

1) Ex conject., cp. Index; MS प्रवचनैर्दश.

2) Ex conject.; MS वैयाप्रत्यं (D वैयापाप्रत्य!). By changing प्र into पृ we get वैयापृत्य, which form represents the original status of the word, because वैयावृत्य, as it is usually written (see f. i. *supra*, p. 397, 3), is a bad sanskritization of pāli or prākrit *veyyāvacca*, which is the product of skt. *vaiyāpṛtya*, the abstract noun of the partic. *vyāpṛta*.

3) Ex conject.; BC °पानैर्नत्यकः°, D °यानैनात्यकः°, P यानैर्नत्य°.

4) D inserts after यासौ the usual formula तेन कालेन तेन समयेन, which is not found in its archetype B.

## शुक्लेति ७३।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किंनरैर्महोरगैरिति देवनागयक्षासुरगरुडकिंनरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयना-
5 सनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः कपिलवस्तुनि विहरति न्यग्रोधारामे। शाक्येषु रोहिणो नाम शाक्यः प्रतिवसति आढ्यो महाधनो महाभोगो विस्तीर्णविशालपरिग्रहो वैश्रवणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी। तेन सदृशात्कुलात्कलत्रमानीतम्। स तया सार्धं क्रीडति रमते परिचा[68 b]रयति। तस्य क्रीडतो रममाणस्य परिचारयतो न पुत्रो न दुहिता। स करे कपोलं दत्त्वा चिन्तापरो व्यवस्थितः। अनेकधनसमुदितं
10 मे गृहं न मे पुत्रो न दुहिता। ममात्ययात्सर्वस्वापतेयमपुत्रकमिति[1] कृत्वा राजविधेयं भविष्यतीति। स श्रमणब्राह्मणनैमित्तिकसुहृत्संबन्धिबान्धवैरुच्यते देवताराधनं कुरुष्वेति॥ सो ऽपुत्रः पुत्राभिनन्दी शिववरुणकुबेरवासवादीनन्यांश्च देवताविशेषानायाचते। तद्यथा आरामदेवता वनदेवताश्चत्वरदेवताः शृङ्गाटकदेवता बलिप्रतिग्राहिका देवताः सहजाः सहधार्मिका नित्यानुबद्धा अपि देवता[2] आयाचते स्म। अस्ति चैष लोके
15 प्रवादो यदायाचनहेतोः पुत्रा जायन्ते दुहितरश्चेति। तच्च नैवम्। यद्येवमभविष्यदेकैकस्य[3] पुत्रसहस्रमभविष्यत्तद्यथा राज्ञश्चक्रवर्तिनः। अपि तु त्रयाणां स्थानानां संमुखीभावात्पुत्रा जायन्ते दुहितरश्च। कतमेषां त्रयाणाम्। मातापितरौ रक्तौ भवतः संनिपतितौ माता

---

1) MS °यमापुत्रमिति. Cp. *supra*, p. 13, 10. 195, 8: 276, 1.

2) MS °वतायाचते with *saṃdhir ārṣaḥ*.

3) MS has between यद्येवम and भवि° a superfluous akṣara भि.

कल्या भवति ऋतुमती गन्धर्वश्च प्रत्युपस्थितो भवत्येतेषां त्रयाणां स्थानानां संमुखीभावात्पुत्रा जायन्ते दुहितरश्च ॥

स चैवमायाचनपरस्तिष्ठति अन्यतमा च दारिका अन्यतमस्माद्देवनिकायाच्च्युत्वा तस्य[1] प्रजापत्याः कुक्षिमवक्रान्ता । तया स्वामिने निवेदितम्[2] । ततः स्वामिनोच्यते । भद्रे यदि पुत्रं जनिष्यसीत्येवं कुशलमथ दुहितरं तथैव सह त्वां निष्क्रासयामीति[3] ॥ यावदसावष्टानां वा नवानां वा मासानामत्ययात्प्रसूता । दारिका जाता अभिरूपा दर्शनीया प्रासादिका अतिक्रान्ता मानुषं वर्णमसंप्राप्ता[4] च दिव्यं वर्णं शुक्लैर्वस्त्रैः प्रावृता अनुपलिप्तै<व>[5] गर्भमलेन ॥ यावद्रोहिणेन श्रुतं प्रजापती ते प्रसूता दारिका जातेति । स कुपितः प्रविष्टः । ततो ऽस्य प्रजापत्या दिव्यवस्त्रप्रावृता दारिकोपनीता । ततो रोहिणः शाक्यो दारिकां दृष्ट्वा परं विस्मयमापन्नः ॥ तस्या जातौ जातिमहं कृत्वा नामधेयं व्यवस्थाप्यते किं भवतु दारिकाया नामेति । ज्ञातय ऊचुः । यस्मादियं शुक्लवस्त्रपरिवृता[6] जाता तस्माद्भवतु दारिकायाः[7] शुक्लेति नामेति ॥ शुक्ला दारिका अष्टाभ्यो धात्रीभ्यो दत्ता द्वाभ्यामंसधात्रीभ्यां[8] द्वाभ्यां क्षीरधात्रीभ्यां द्वाभ्यां मलधात्रीभ्यां द्वाभ्यां क्रीडनिकाभ्यां

---

1) Ex conject.; MS तस्याः (DP तस्या). Cp. *supra*, p. 196, 6 and 138, 2. *Tasya prajāpatī* = 'his wife', cp. *infra* l. 9 and often in the Pāli texts. The same fault as here is to be corrected Divy. 2, 2. 98, 21.

2) MS with dittography तया स्वामिने निवेदितः स्वामिनैवं विदितं ततः°.

3) MS निष्क्राशयामीति.

4) MS °संप्राप्तं.

5) Ex conject.; B अनु(प)लिप्तगर्भ°, D अनुपलिप्तंगर्भ°, P अनुपलिप्तेगर्भ°. That it is the child and not the clothes that is stated to have been free of dirt (cp. Feer's n. 3 on p. 271) must be inferred from the corresponding words of R. (f. 72a 1) शुक्लवस्त्रपरीतांगां (sic) गर्भमालाविलिप्तितां (sic), perhaps to read गर्भमलाविलिप्तिकां.

6) One would rather expect प्रावृता. Yet cp. R. शुक्लवस्त्रपरीतांगा.

7) Visarga wanting in MS.

8) MS °भ्यांमत्स°.

धात्रीभ्याम् । साष्टाभिर्धात्रीभिरुन्नीयते वर्ध्यते[1] क्षीरेण दध्ना नवनीतेन सर्पिषा सर्पिम-
ण्डेनान्यैश्चोत्तप्तोत्तप्तैरुपकरणविशेषैराशु वर्धते ह्रदस्थमिव पङ्कजम् । यथा यथा च शुक्ला
दारिका वर्धते तथा तथा तान्यपि वस्त्राणि वर्धन्ते न च मलिनीभवन्ति न चास्याः कायो
मलेनाभिभूयते ॥

5 यदा शुक्ला दारिका क्रमेण महती संवृत्ता तदास्या बहवो याचनका आगच्छन्ति
राजपुत्रामात्यपुत्राश्च[2] । ततस्तैरुपद्रूयमाणः पिता चास्याः करे कपोलं दत्वा चिन्तापरो
व्यवस्थितः । यद्येकस्मै[3] दास्यामि अन्ये मे अमित्रा भविष्यन्तीति ॥ यावदसौ दारिका
पितरं चिन्तापरमवेत्योवाच । तात किमसि चिन्तापर इति । तेन सो ऽर्थो[4] विस्तरेण समा-
ख्यातः ॥ दारिका कथयति । तात न ते शोकः कर्तव्यो नाहं कामेनार्थिनी भगवच्छासने
10 प्रव्रजिष्यामि अनुजानीहि मां तातेति ॥ यावदसौ मातापितरावनुज्ञाप्य भगवच्छासने
प्रव्रजिता । येनैव वस्त्रेण प्रावृता जाता तत एव परिपूर्णं पञ्चचीवरं संपन्नम् ॥ तया युज्य-[5]
मानया घटमानया व्यायच्छमानयेदमेव पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्वसं-
स्कारगतीः शतनपतनविकरणविध्वंसनधर्मतया पराहत्य सर्वक्लेशप्रहाणादर्हत्वं सा-
क्षात्कृतम् । अर्हन्ती संवृत्ता त्रैधातुकवीतरागा समलोष्टकाञ्चना आकाशपाणितलसमचित्ता
15 वासीचन्दनकल्पा विद्याविदारिताण्डकोशा विद्याभिज्ञाप्रतिसंवित्प्राप्ता भवलाभलोभ-
सत्कारपराङ्मुखा[6] सेन्द्रोपेन्द्राणां देवानां पूज्या मान्याभिवाद्या च संवृत्ता ।

भिक्षवः सं[69 a]शयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः । कानि भदन्त
शुक्लया कर्माणि कृतानि येनाढ्ये कुले जाताभिरूपा दर्शनीया प्रासादिका शुक्लवस्त्रप्रा-

---

1) MS वर्द्धते.

2) The irregular sandhi according to MS.

3) MS यद्ये°. Cp. *supra*, p. 390, 8.

4) MS सार्थो.

5) MS पूज्य°.

6) Cp. *supra*, p. 393 n. 1.

वृता प्रव्रज्य चार्हत्त्वं साक्षात्कृतमिति ॥ भगवानाह । शुक्लयैव भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि । शुक्लया कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति । न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ[1] न तेजोधातौ न वायुधातावपि तूपात्तेष्वेव[2] स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च। 5

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि[3]।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि अस्मिन्नेव भद्रके कल्पे विंशतिवर्षसहस्रायुषि प्रजायां काश्यपो नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां[4] बुद्धो भगवान्। स वाराणसीं नगरीमुपनिश्रित्य[5] विहरति ऋषिपतने[6] मृगदावे ॥ यावदन्यतरा श्रेष्ठिभार्या आढ्या भद्रा[7] कल्याणाशया केनचिदेव[8] करणीयेन ऋषिपतनं[6] गता ॥ अथासौ ददर्श बुद्धं भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः समलङ्कृतमशीत्या चानुव्यञ्जनैर्विराजितगात्रं व्यामप्रभालङ्कृतं[9] सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकं सहदर्शनाच्च भगवतः पादाभिवन्दनं कृत्वा पुरस्तान्निषण्णा धर्मश्रवणाय । ततो ऽस्या भगवता काश्यपेन धर्मो 15

1) B नाब्धाधौ, DP corr.
2) Cp. *supra*, p. 74 n. 9.
3) Cp. *supra*, p. 74 n. 13. BCP कर्माणि कल्पशतैरपि.
4) B °ष्याणा, D corr.
5) MS °निसृत्य.
6) In B °पत° corrected out of वद. Cp. *supra*, p. 250 n. 6.
7) MS भद्रकल्या°.
8) Ex conject.; MS केनचिद्देव. Cp. *supra*, p. 244, 12.
9) B व्योम° (likewise R., f. 79 a 6), P corr.

देशितः। तया लब्धप्रसादया भगवन्तं सश्रावकसङ्घमन्तर्गृहे भोजयित्वा भिक्षुसङ्घाय कठिनचीवरमनुप्रदत्तं क्रमेण च मातापितरावनुज्ञाप्य भगवच्छासने प्रव्रजिता॥

किं मन्यध्वे भिक्षवो यासौ श्रेष्ठिभार्या एषैवासौ शुक्ला भिक्षुणी। यदनया भिक्षुसङ्घाय कठिनचीवरमनुप्रदत्तं तेन शुक्लवस्त्रप्रावृता जाता। यद्ब्रह्मचर्यवासः परिपालितस्ते-
5 नेह जन्मन्यर्हत्त्वं साक्षात्कृतम्। इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रस्तस्मात्तर्हि भिक्षव एका-[1]न्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम्॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्॥

---

1) B एकानकृ°, P corr.

## सोमेति ७४।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कराराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्डदस्यारामे। श्रावस्त्यामन्यतमो ब्राह्मण आढ्यो महाधनो महाभोगो विस्तीर्णविशालपरिग्रहो वैश्रवणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी त्रयाणां वेदानां पारगः[1] संनिघण्टकैटभानां साक्षरप्रभेदानामितिहासपञ्चमानां पदशो[2] व्याकरणः। स पञ्च[3] माणवकशतानि ब्राह्मणकान्मन्त्रान्पाठयति[4]॥ तेन पुत्रहेतोः सदृशात्कुलात्कलत्रमानीतम्। स तया सार्धं क्रीडति रमते परिचारयति। तस्य क्रीडतो रममाणस्य परिचारयतः पत्नी आपन्नसत्त्वा संवृत्ता। साष्टानां वा नवानां वा मासानामत्ययात्प्रसूता। दारिका जाताभिरूपा दर्शनीया प्रासादिका सर्वाङ्गप्रत्यङ्गोपेता॥ तस्या जातौ जातिमहं कृत्वा नामधेयं व्यवस्थाप्यते किं भवतु दारिकाया नामेति। ज्ञातय ऊचुः। प्रायशो ऽस्माकं[5] पुत्रपौत्रिकया सोमनामानि

---

1) B सन्निघंटकै°, P संनिघ°, D संनिघतकै°.

2) If the reading is right, व्याकरण must signify «expounder». In the parallel place Divyāv. 619, 24 (where we have to read *padaço* as here) वैयाकरणः occurs, the better reading, it seems.

3) MS मानव°.

4) B प्राठयति, D corr.

5) New word, which means apparently 'in the line of descendants' = from generation to generation.

क्रियते भवतु दारिकायाः सोमेति[1] नाम। सोमा दारिका उन्नीयते वर्ध्यते[2] क्षीरेण दध्ना नवनीतेन सर्पिषा सर्पिमण्डेनान्यैश्चोत्तप्तोत्तप्तैरुपकरणविशेषैराशु व[69b]र्धते ह्रदस्थमिव पङ्कजम् ॥

यदा क्रमेण महती संवृत्ता सा पण्डिता व्यक्ता मेधाविनी पटुप्रचारा स्मृतिमती
5 श्रुतिधरा च। यावदस्याः पिता माणवकान्मन्त्रान्पाठयति सा श्रुतमात्रेणोद्गृह्णाति श्रुत्वा च तेषां शास्त्राणां पूर्वापरेण व्याख्यानं करोति ॥ ततोऽस्या यशसा सर्वा श्रावस्ती स्फुटा संवृत्ता तीर्थ्याश्चास्या अहन्यहनि दर्शनायोपसंक्रामन्ति तया च सह विनिश्चयं कुर्वन्ति ॥ यदा भगवाननुत्तरां सम्यक्संबोधिमभिसंबुद्धः तदा श्रावस्तीमागतः। प्रायेण ये पण्डिताः पण्डितसंख्याताः ते भगवतो दर्शनायोपसंक्रामन्ति ॥ ततस्सा[3] ‹तान्› न पश्यन्ती[4]
10 अन्तर्जनमामन्त्रयते[5]। को ऽत्र भवन्तो हेतुर्येनैतर्हि[6] शास्त्रविदो नोपसंक्रामन्तीति ॥ ते कथयन्ति। भगवान्सर्वज्ञः शाक्यमुनिर्नामेह संप्राप्तः[7] सर्वे तत्प्रवणाः[8] संवृत्ता इति। ततो बुद्ध इत्यश्रुतपूर्वं घोषं श्रुत्वास्याः[8] सर्वरोमकूपाह्रष्टाः[9] ॥ तत्र सोमा दारिका बुद्धशब्दश्रवणाद्ध-

---

1) This name *Somā* is suggestive of a Prākrit or Pāli prototype of our tale, where the girl gets the name of *Somā* = skt. *Saumyā*. According to the Ratnāvad. (f. 181a 6), she was named *Somā* because of her being सौम्या पूर्णसोमसमानना.

2) Ex conject.; MS वर्द्धते.

3) B ततस्या (with स्सा written above), out of which the copyist of D made ततस्तस्या, that of C ततस्तस्मा and that of P ततस्ता, which different results of B's correction agree in this that all of them are void of meaning here. I believe ततस्सा (the interlinear correction) is right and I have inserted तान्.

4) Ex conject.; MS पश्यति.

5) B अन्त्रजनमा°, D corr.

6) Ex conject.; B हेतुर्येनेतर्हि, P हेतुर्येनतर्हि, D हेतुर्येनैवं एतर्हि.

7) Ex conject.; BCP संप्राप्ते, D संप्रोप्तो.

8) Visarga wanting in MS.

9) The hiatus is here not observed (cp. *supra*, p. 20 n. 6). One would expect °*kūpā āhṛṣṭāḥ*. Cp. *supra*, p. 339, 8. 346, 13, where °*kūpa* is a neuter.

(1) गवत्सकाशमुपसंक्रान्ता । अथासौ ददर्श बुद्धं भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः समल-
ङ्कृतमशीत्या चानुव्यञ्जनैर्विराजितगात्रं व्यामप्रभालङ्कृतं सूर्यसहस्रातिरेकप्रभं जङ्गम-
मिव रत्नपर्वतं समन्ततो भद्रकं सहदर्शनाच्च भगवत्पादाभिवन्दनं कृत्वा पुरस्तान्निषण्णा
धर्मश्रवणाय । अथ भगवान्सोमाया दारिकाया आशयानुशयं धातुं प्रकृतिं च ज्ञात्वा तादृशीं
चतुरार्यसत्यसंप्र<ति>वेधिकीं (2) धर्मदेशनां (3) कृतवान्यां श्रुत्वा सोमया (4) विंशतिशिखरसमुद्गतं 5
सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्वा स्रोतापत्तिफलं साक्षात्कृतम् । सा दृष्टसत्या महाप्रजा-
पत्याः सकाशे प्रव्रजिता ॥ तया युज्यमानया घटमानया व्यायच्छमानया इदमेव पञ्चगण्डकं
संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतोः शतनपतनविकरणविध्वंसनधर्मतया
पराहत्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम् । अर्हन्ती संवृत्ता त्रैधातुकवीतरागा सम-
लोष्टकाञ्चनाकाशपाणितलसमचित्ता वासीचन्दनकल्पा विद्याविदारिताण्डकोशा विद्या- 10
भिज्ञाप्रतिसंवित्प्राप्ता भवलाभलोभसत्कार (5) पराङ्मुखा सेन्द्रोपेन्द्राणां देवानां पूज्या मान्या-
भिवाद्या च संवृत्ता ॥ यदा भगवता भिक्षुभ्य आज्ञा दत्ता यूयमेव भिक्षवो ऽन्वर्धमासं प्रा<ति>-
मोक्षसूत्रोद्देशमुद्दिशतेति तदा महाप्रजापत्या उद्दिशतु भगवान्प्रातिमोक्षमुद्दिशतु सुगतः
प्रातिमोक्षमिति (6) ॥ भगवानाह । न हि भिक्षुण्यस्तथागता अर्हन्तः सम्यक्संबुद्धाः पदशो
धर्ममुद्दिशन्ति । यदि युष्माकं काचिदुच्छहते (7) सकृदुक्तं धारयितुमेवमहमुद्दिशेयमिति (8) ॥ 15

---

1) B °गवन्सका°, D corr.

2) P adds the missing akṣara.

3) B °शना, D corr.

4) Ex conject.; MS सोमा.

5) B सत्काय°, D corr.

6) It is strange that the verb of the main sentence is wanting. Perhaps उक्तम् or some similar word has dropped.

7) Note the prākritic form *ucchahate* = *utsahate*. Cp. *ucchāha* apud Pischel, *Gramm. der Prākrit-Sprachen*, p. 225, 2, and pāli *ucchaṅgo*.

8) B with dittography एवमहमहमुद्दि°, D corr. Or was the genuinous wording अहं स्वयमुद्दि°?

तेन खलु समयेन सा भिक्षुणी तस्यामेव पर्षदि संनिषण्णा संनिपतिता। अथ सा भिक्षुणी उत्थायासनाद्येन भगवांस्तेनाञ्जलिं प्रणमय्य(1) भगवन्तमेतदवोचत्। उद्दिशतु भगवान्प्रातिमोक्षमुद्दिशतु सुगतः प्रातिमोक्षमहं सकृदुक्तं धारयिष्ये॥ ततो भगवता विस्तरेणोद्दिष्टः सोमया सकृदुक्तो धारितः(2)॥ तत्र भगवान्भिक्षूनामन्त्रयते स्म। एषाग्रा मे भिक्षवो 5 भिक्षुणीनां मम श्राविकाणां बहुश्रुतानां श्रुतधरीणां यदुत सोमा भिक्षुणी॥

भिक्षवः संशयजातास्सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। कानि भदन्त सोमया भिक्षुण्या कर्माणि कृतान्युपचितानि येनाढ्ये कुले जाताभिरूपा दर्शनीया प्रासादिका श्रुतिधरा च संवृत्तेति॥ भगवानाह। सोमयैव भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि। सोमया 10 कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति। न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ(3) न तेजोधातौ न वायुधातावपि तूपा(4)त्तेष्वेव स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम्॥

15 भूतपूर्वं भिक्षवो ऽतीते [70 a] ऽध्वन्यस्मिन्नेव भद्रके कल्पे विंशतिवर्षसहस्रायुषि प्रजायां काश्यपो नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान्। स वाराणसीं नगरीमुपनिश्रित्य(5) विहरति ऋषिपतने(6) मृगदावे॥ यावदन्यतरा ब्राह्मणदारिका भगवतः काश्य-

---

1) Cp. *supra*, II, p. 3 n. 6.

2) MS वारितः (D चा°).

3) B नाब्धाधौ, DP corr.

4) Cp. *supra*, p. 74 n. 9.

5) MS °निसृत्य.

6) In B °पत° has been corrected out of °वद°. Cp. *supra*, p. 250 n. 6; 338 n. 2.

पस्य शासने प्रव्रजिता। तया तत्रोद्दिष्टं पठितं स्कन्धकौशलं प्रतीत्यसमुत्पादकौशलं स्थानास्थानकौशलं च कृतं न तु शकितं[1] नैष्ठिकं ज्ञानमुत्पादयितुं यस्याश्चोपाध्यायिकायाः सकाशे प्रव्रजितासीत्सा भगवता काश्यपेन श्रुतधरीणामग्रा[2] निर्दिष्टा। ततः सोमया भिक्षुण्या मरणकाले प्रणिधानं कृतम्। यथा मे उपाध्यायिका श्रुतधरीणामग्रा[2] निर्दिष्टा एवमहमप्यनागते ऽध्वनि यो ऽसौ भगवता काश्यपेनोत्तरो नाम माणवो[3] व्याकृतो[4] भवि- 5
ष्यसि त्वं मानववर्षशतायुषि प्रजायां शाक्यमुनिर्नाम तथागतो ऽर्हन्सम्यक्संबुद्ध इति तस्य शासने प्रव्रजिता भगवता शाक्यमुनिना श्रुतिधरीणामग्रा निर्दिश्येय[5]॥

भगवानाह। किं मन्यध्वे भिक्षवो यासौ ब्राह्मणदारिका ग्रामीदियं सा सोमा भि-क्षुणी। यदनया प्रणिधानं कृतं तेन श्रुतिधरीणामग्रा निर्दिष्टा। यदनया तस्योद्दिष्टं पठितं स्वाध्यायितं तेनेदानीमर्हत्वं साक्षात्कृतम्। इति हि भिक्षव एकान्तकृष्णानां 10
कर्मणामेकान्तकृष्णो विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रस्त-स्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव कर्म-स्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम्॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्॥

---

1) Ex conject.; MS शक्कितं (P शक्तितं).

2) MS श्रुतधारी°, but *infra*, l. 7 and 9 श्रुतिधरी°. In the corresponding places R has श्रुतधराणां (e. g. f. 189b 6. 190a 4).

3) Cp. *supra*, p. 239, 7; MS मानवो.

4) MS व्याकृते.

5) Ex conject.; MS निर्दिष्टेयं (D निर्दिष्टायं).

## कुवलयेति ७५ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः[1] पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्ला-
5 नप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घो राजगृहमुपनिश्रित्य[2] विहरति वेणुवने कल-न्दकनिवापे। तेन खलु समये<न>[3] राजगृहे नगरे गिरिवल्गुसमागमो नाम पर्व[4] प्रत्युपस्थि-तम्। तत्र[5] सर्वेभ्यः षड्भ्यो महानगरेभ्यो जनकायस्संनिपतति ॥ यावद्दक्षिणापथान्नटाचार्य आगतः। तस्य दुहिता कुवलया नामाभिरूपा दर्शनीया प्रासादिका सर्वाङ्गप्रत्यङ्गोपेता। सा रूपयौवना[6]रोग्यमदमत्ता। यदा रङ्गमध्य[7]मवतरति तदा सर्वप्रेक्षकैः सोत्कण्ठैरुद्वीक्ष्यते
10 ये चाप्रतिसंख्यानबहुलास्तेषां मनांस्याकर्षति ॥ तत्र यदा पर्व प्रत्युपस्थितं भवति तदा पूरणप्रभृतयः[8] <स>पर्षत्का[9] उपसंक्रामन्ति ॥ ततः कुवलया दारिका जनकायमुवाच। अस्ति

---

1) B °मात्रैधनि°, D corr.

2) MS °निसृत्य.

3) D adds the wanting akṣara.

4) B पर्वत or पर्वतं, CDP पर्वत. The interlinear correction पर्व having been added in B in a wrong place, the copyists of that MS neglected or misunderstood it, *vide* the following note. Cp. *supra*, p. 121, 10.

5) Ex conject.; B सर्वभ्यः (पर्व) षभ्यो महाजेनगरेभ्यो, the sign above ज denotes cancellation. In C this is copied as follows सर्वभ्यः षचषभ्यों महाजेनगरेभ्यो; D सर्वे-भ्यः पञ्चषड्यो महाराजेनगरेभ्यो; P सवेभ्यः + a gap of two akṣaras + षभ्याजेनगरेभ्यो.

6) MS यौवणा°.

7) Ex conject.; MS °मध्यामवतरति.

8) प्रभृतयः, D corr.

9) Ex conject.; MS पर्षद्वा (D पर्य्यङ्का). The Tibetan translator passes over this word.

भवन्तो राजगृहे नगरे कश्चिन्मनुष्यभूतो यो मे रूपेण समो विशिष्टतरो वेति ॥ जनकायेनोक्ता(1)। अस्ति श्रमणो गौतमः सपरिवार इति ॥ कुवलयोवाच। किमसौ मनुष्यभूतो ऽथ देव इति ॥ मनुष्यभूतः स तु सर्वज्ञ इति ॥

ततस्तद्वचनमुपश्रुत्य कुवलया सर्वालङ्कारभूषिता भगवत्सकाशमुपसंक्रान्ता। उपसंक्रम्य भगवतः पुरस्तात्स्थित्वा नृत्यति गायति वादयते स्त्रीलिङ्गानि स्त्रीचिह्नानि स्त्रीनिमित्तानि चोपदर्शयति। ये सरागा भिक्षवस्ते तया संभ्रामिताः(2) ॥ ततो भगवा(3)न्रागबहुलानां भिक्षूणां विनयनार्थं(4) कुवलयायाश्च रूपयौवनमदापनयनार्थं तद्रूपानृद्ध्यभिसंस्कारानभिसंस्कृतवान्येन कुवलया जीर्णा वृद्धा पलितशिरस्का खण्डदन्ता कुब्जगोपानसीवक्रा(5) निर्मिता। तत्कालसमनन्तरमेव कुवलयाया(6) आत्मानं बीभत्समभिवीक्ष्य यो ऽसौ रूपयौवनमदः स(7) प्रतिविगतः रागबहुलाश्च भिक्षवः संविग्नाः ॥ ततः कुवलया अपगतमदा भगवतः पादौ शिरसा वन्दित्वा भगवन्तं विज्ञापितवती। साधु [70b] मे भगवांस्तथा धर्मं

---

1) MS °येनोक्ताः.

2) Ex conject.; BCP संत्रामिता, in D it is written संत्रासिता, the same correction is proposed by Feer (p. 281, n. 2); yet not *saṃtrāsayati* but some verb significative of perplexity and disturbance being wanted, I think the author of our text wrote *saṃbhrāmitāḥ*, the proper verb in the case. The Tibetan translation ཅི་བྱ་བ་གཏོལ་མེད་པར་གྱུར་ཏེ་ is calculated to confirm the proposed emendation.

3) Ex conject.; MS भगवता रा°.

4) B विनेयना°, D corr.

5) Ex conject., MS °गोपानसवक्रा. This epithet is of regular occurrence in Buddhistic texts, when describing a decrepit old man or woman. Cp. Lalitavistara (ed. Lefm.) 188, 1 पलितकेशः कुब्जो गोपानसीवक्रो विभग्नः etc., likewise Kāraṇḍavyūha (ed. Calc. 1873), p. 48 जीर्णो वृद्धो महल्लकः कुब्जो गोपानसीवक्रो विभग्नो (so to read) etc.; Mhv. II, 150, 19; Dhammapada 315.

6) BCP कुवलायाया, D कुवलया.

7) MS संप्रतिविगतः. Cp. *supra*, I, 163, 13.

देशयतु [1] यथाक्रमस्मात्पूतिकडेवरादल्पकृच्छ्रेण [2] परिमुच्येयेति ॥ अथ भगवान्कुवलयाया-
स्तेषां चावीतरागाणां भिक्षूणामाशयानुशयं [3] [4] धातुं प्रकृतिं च ज्ञात्वा तथाविधां धर्मदेशनां
कृतवान्यां श्रुत्वा कैश्चिद्विंशतिशिखरसमुद्गतं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रोताप-
त्तिफलं साक्षात्कृतं कैश्चित्सकृदागामिफलं कैश्चिदनागामिफलं कैश्चित्प्रव्रज्य सर्वक्लेश-
5 प्रहाणादर्हत्त्वं साक्षात्कृतं कुवलयापि लब्धप्रसादा भगवत्सकाशे प्रव्रजिता ॥ तया युज्य-
मानया घटमानया व्यायच्छमानया इदमेव पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्व-
संस्कारगतीः [5] शतनपतनविकिरणविध्वंसनधर्मतया पराहत्य सर्वक्लेशप्रहाणादर्हत्त्वं सा-
क्षात्कृतम् । अर्हन्ती संवृत्ता त्रैधातुकवीतरागा समलोष्टकाञ्चना आकाशपाणितलसम-
चित्ता वासीचन्दनकल्पा विद्याविदारिताण्डकोशा विद्याभिज्ञाप्रतिसंवित्प्राप्ता भवला-
10 भलोभसत्कारपराङ्मुखा सेन्द्रोपेन्द्राणां देवानां पूज्या मान्याभिवाद्या च संवृत्ता । तैरपि
नटैस्तेन संवेगेन [6] सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम् ॥

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः । आश्चर्यं भदन्त यद्भग-
वता कुवलया नटदारिका रूपयौवनमदमत्ता जरया संवेज्य [7] यावदत्यन्तनिष्ठे निर्वाणे प्रति-
ष्ठापिता [8] इति ॥ भगवानाह । किमत्र भिक्षव आश्चर्यं यदिदानीं मया विगतरागेण विग-
15 तद्वेषेण विगतमोहेन परिमुक्तेन जातिजरा [9] व्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासैः

---

1) BP यथार्हमिस्मात्पू, D यथार्हमस्मान्पू°, C यथार्हमत्मात्पू°.

2) B °कृच्छ्रुणा, CDP corr.

3) MS भिक्षुणा°.

4) Anusvāra wanting in MS.

5) MS °गतिः.

6) Ex conject.; MS संवेशेन. The Tibetan rendering སྐྱོ་བ་རབ་བྱུང་བ་དེ་ཉིད་ confirms the correction.

7) Ex conject., cp. *infra*, p. 27, 4; BD संभेज्य, C संतैज्य, P संभेज्ये.

8) Sic, without sandhi, MS.

9) B °जारा°, DP corr.

सर्वज्ञेन सर्वाकारज्ञेन सर्वज्ञज्ञानज्ञेयवशिप्राप्तेन कुवलया दारिका रूपयौवनमदमत्ता जरया संवेद्य[1] यावदत्यन्तनिष्ठे निर्वाणे प्रतिष्ठापिता । यत्तु मयातीते ऽध्वनि सरागे‹ण› सद्वेषेण समोहेनापरिमुक्तेन जातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासैः कुवलया दारिका संवेद्य पञ्चसु व्रतप्रदेशेषु प्रतिष्ठापिता तच्छृणुत साधु च सुष्ठु च मनसि कुरुत भाषिष्ये ॥ 5

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि वाराणस्यां नगर्यां ब्रह्मदत्तो नाम राजा राज्यं कारयति ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं चाकीर्णबहुजनमनुष्यं च प्रशान्तकलिकलहडिम्बडमरं तस्कररोगापगतं[2] शालीक्षुगोमहिषीसंपन्नं प्रियमिवैकपुत्रकं राज्यं कारयति । यावदसौ राजा देव्या सह क्रीडति रमते परिचारयति । तस्य क्रीडतो रममाणस्य परिचारयतः कालान्तरेण देवी आपन्नसत्त्वा संवृत्ता । साष्टानां वा नवानां वा मासानामत्ययात्प्रसूता । 10 दारको जातो[3] ऽभिरूपो दर्शनीयः प्रासादिको गौरः कनकवर्णश्छत्त्राकारशिराः[4] प्रलम्बबाहुर्विस्तीर्णललाट उच्चघोषणः[5] संगतभ्रूस्तुङ्गनासस्सर्वाङ्गप्रत्यङ्गोपेतः ॥ तस्य जातौ जातिमहं कृत्वा नामधेयं व्यवस्थाप्यते किं भवतु दारकस्य नामेति । ज्ञातय ऊचुः । यस्मादस्य पिता काशिराजो[6] ऽयं चाभिरूपो दर्शनीयः प्रासादिकस्तस्माद्भवतु दारकस्य काशिसुन्दर इति नाम ॥ काशिसुन्दरो दारको[6] ऽष्टाभ्यो धात्रीभ्यो दत्तो द्वाभ्यामंसधात्रीभ्यां[7] 15 द्वाभ्यां क्षीरधात्रीभ्यां द्वाभ्यां मलधात्रीभ्यां द्वाभ्यां क्रीडनिकाभ्यां धात्रीभ्याम् । सो ऽष्टाभिर्धात्रीभिरुन्नीयते वर्ध्यते[8] क्षीरेण दध्ना नवनीतेन सर्पिषा सर्पिमण्डेनान्यैश्चोत्तप्तोत्तप्तै-

1) Ex conject.; BC संभु(or जु)ज्यते, DP संयुज्यते. Cp. l. 4.

2) B तस्तर°, D corr.

3) MS जातः अभि°.

4) Ex conject., cp. *supra*, I, 121, 1. 135, 6. 197, 10; MS °शिरसा (D °शिरसि)

5) I have altered nothing, cp. *supra*, my ann. 2 on I, p. 121; घोषणः may be the result of the blending of the two readings, घोणः and घोषः.

6) MS °राज अयं, and दारक अ°.

7) MS द्वाभ्यांमत्स°.

8) MS वर्द्धते.

रूपकरणविशेषैराशु वर्धते ह्रदस्थमिव पङ्कजम् ॥ यदा महान्संवृत्तस्तदा यौवराज्ये ऽभि-षिक्तः ॥ सो ऽनेकदोषदुष्टमनर्थमूलं राज्यं विदित्वा ऋषिषु प्रव्रजितः । स च हिमवत्कन्दरे प्रतिवसति फलमूलाम्बुभक्तो ऽजिनवल्कलधारी अग्निहोत्रिकः ॥ यावदपरेण समयेन फलानाम‹र्थम›न्यतरं पर्वतकन्दरमुनप्रवृत्तः ॥ यावत्तत्र किन्नरदारिका ऋषिकुमारं दृष्ट्वा संरक्ता नृत्यति गायति वादयति स्त्रीचिह्नानि स्त्रीनिमित्तानि स्त्रीविक्रीडितान्युपदर्शयति ॥ यावत्काशिसुन्दरेण ऋषिणा तस्या दारिकाया धर्मदेशना दत्ता[3] । जीर्णासि भगिनि प्रथमस्ते स्वरो मधुरः स्निग्धश्च पश्चिमस्ते जर्जरीभूत इ[71a]ति । ततस्तेन तस्या धर्मदेशना कृता यां श्रुत्वा किन्नरकन्याया यो ऽभूद्रूपमदः स प्रतिविगतः । तया प्रसादजातया प्रणिधानं कृतम् । यस्मिन्समये ऽनुत्तरां सम्यक्संबोधिमभिसंबुध्येथास्तदा ते ऽहं श्राविका स्यामिति ॥

[1] (at महान्संवृत्त), [2] (at फलाना°)

भगवानाह । किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन ऋषिकुमारो बभूवाहं सः । किन्नरकन्या इयमेव कुवलया ॥ भिक्षवो बुद्धं भगवन्तं पृच्छन्ति । कानि भदन्त कुवलयया कर्माणि कृतानि येनाभिरूपा दर्शनीया प्रासादिका संवृत्ता कानि कर्माणि कृतानि येनार्हत्त्वं साक्षात्कृतमिति ॥ भगवानाह । कुवलययैव भिक्षवः पूर्वमन्यासु जातिषु

---

1) MS महासंवृ°.

2) One word meaning «in order to procure himself», e. g. आहरणाय or simply अर्थम् is here wanting. In fact, above the last akṣara of फलाना B has the sign it commonly uses to refer to a marginal correction or addition, but the scribe forgot, it seems, to write it down. The Tibetan has here the particle ཕྱིར་ expressive of purpose.

3) B धर्मदेशना, after which a marginal addition inserts two akṣaras, which I read दत्ता, as did the copyists of D and P, that have धर्मदेशनादत्ता (C धर्मदेशनात्ता). It is possible that there is here something vicious in our text, as the utterance of Kāçisundara is not sufficiently accounted for by what precedes. Yet the Tibetan is here in plain accordance with MS; བུ་མོ་དེ་ལ་ཆོས་པ་བཤད་དོ must be the translation of something like तस्या दारिकाया धर्मो देशितः. Cp. Feer, p. 283, 2.

कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यं-भावीनि। कुवल‹य›या कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति। न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ न तेजोधातौ न वायु-धातावपि [1]तूपात्तेष्वेव स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम्॥

[2]भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि चत्वारिंशद्वर्षसहस्रायुषि प्रजायां क्रकुच्छन्दो नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान्। स शोभावतीं राजधानीमुपनिश्रित्य[3] विहरति॥ यावद्दक्षिणापथादन्यतरो नटाचार्य आगतः। तत्र शोभेन राज्ञा भगवतः सकाशात्सत्यदर्शनं [4]कृत्वा नटाचार्याणामाज्ञा दत्ता बौद्धं नाटकं मम पुरस्तान्नाटयितव्यमिति। तैराज्ञा शिरसि प्रतिगृहीता एवं [5]भदन्तेति॥ ततः सर्वनटैर्बौद्धं नाटकं विचार्य मुनिनिर्जितं कृतम्[6]। याव-

---

1) Cp. *supra*, I, p. 74, n. 9.

2) Since the monks asked the Lord concerning the merit of Kuvalayā in a previous existence, and the Lord answers by telling the merit of the dancer-actors, the conclusion seems unavoidable that either our text is here somehow altered or that the author of the Avadānaç. has written inaccurately here. It may be that the story of Kuvalayā's former merit has been lost together with the question of the monks कानि भदन्त नटैः कर्माणि कृतानि etc., owing to some mistake of the copyist of our archetype. Yet the Tibetan translation is here in perfect accordance with our text.

3) MS °निसृत्य.

4) Ex conject.; MS कृतं.

5) Another instance of carelessness. Instead of भदन्तेति the author ought to have put देवेति or महाराजेति. Likewise आचार्याणाम् instead of आचार्यस्य is strange.

6) Ex conject.; MS विचार्यमुपनिर्जितं कृतं. The text, unmeaning as it has come down to us, becomes clear and gets a proper expression by eliminating the akṣara प and replacing it by नि. The actors composed a piece named *Muni-nirjitam* 'the Muni's complete victory'. Cp. Māra's nāṭaka Divy. 357, 15.

राज्ञो ऽमात्यगणपरिवृतस्य पुरतो नटा नाटयितुमारब्धाः[1]। तत्र नटाचार्यः स्वयमेव बुद्ध-
वेषेणावतीर्णः परिशिष्टा[2] नटा भिक्षुवेषेण[3]। ततो राज्ञा हृष्टतुष्टप्रमुदितेन नटाचार्यप्रमुखो
नटगणो महता धनस्कन्धेनाच्छादितः॥ ततस्ते भगवच्छासने लब्धप्रसादा दानप्रदानानि
दत्त्वा सम्यक्प्रणिधानं चक्रुः। अनेन वयं कुशलमूलेन चित्तोत्पादेन देयधर्मपरित्यागेन च
5 अनागतान्बुद्धानारागयेम[4] मा विरागयेमेति॥

किं मन्यध्वे भिक्षवो ये ते नटा इमे ते कुवलयाप्रमुखा यैरेभिस्तत्र प्रणिधानं कृतं
तेनेदानीमर्हत्त्वं साक्षात्कृतम्। इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो वि-
पाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रस्तस्मात्तर्हि भिक्षव एका-
न्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीय इत्येवं
10 वो भिक्षवः शिक्षितव्यम्॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्[5]॥

---

1) Ex conject.; MS यावद्राज्ञा अमात्यगणपरिवृता नटं नाटयितुमारब्धः. Here नटं is inexplicable, since it would be absurd to take it for a synonym of नाटकं. Further it is impossible in this context to think of the king and his ministers acting themselves (cp. Feer p. 283, n. 3) and the Tibetan version རྒྱལ་པོ་འདི་བློན་པོ་འདི་ཚོགས་དང་བཅས་པ་འདི་མདུན་དུ་ etc. points to some reading of the original of this meaning: «the king, surrounded by his ministers, *being present*, the actors commenced their representation». For this reason I am sure we have to read नटा नाटयितुमारब्धाः. — *Ābaddhaḥ*, mentioned by Feer l. l., is a bad reading of P, the other MSS have *ārabdhaḥ*.

2) B °शिष्टो, DP °श्रिष्टो.

3) MS भिक्षुवेशेन, but in the foregoing बुद्धवेषेणा° (P °वेषणा°).

4) Ex conject.; MS °रागयेयं मा विरागयेयमिति.

5) B has, after the conclusion of this tale, a reference to a marginal addition ज्ञातकमधनि. C and P put this lemma in the context before the title of the next avadāna, the copyist of D neglected it. Cp. the remark of Feer (p. 284), who judges rightly of this point.

Cf. S. d'Oldenburg, Zapiski IV. 393—394 (on the «*bauddhaṃ nāṭakam*»).

---

## काशिकसुन्दरीति ७६ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिस्सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घो वाराणस्यां विहरति ऋषिपतने मृगदावे । 5
वाराणस्यां नगर्यां राजा ब्रह्मदत्तो राज्यं कारयति ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं चाकीर्णबहुजनमनुष्यं च[1] प्रशान्तकलिकलहडिम्बडमरं तस्कर[2]रोगापगतं शालीक्षुगोमहिषीसंपन्नं प्रियमिवैकपुत्रकं राज्यं पालयति ॥ यावदसौ राजा देव्या सह क्रीडति रमते परिचारयति । तस्य क्रीडतो रममाणस्य परिचारयतः कालान्तरेण देवी आपन्नसत्त्वा संवृत्ता । साष्टानां वा नवानां वा मासानामत्ययात्प्रसूता । दारिका जाता अभिरूपा दर्शनीया प्रासा- 10
दिका सर्वाङ्गप्रत्यङ्गोपेता ॥ तस्या ज्ञातौ ज्ञातिमहं कृत्वा नामधेयं व्यवस्थाप्यते किं भवतु दारिकाया नामेति । ज्ञातय ऊचुः । यस्मादियं काशिराजस्य दुहिता सुरूपा च तस्माद्भवतु दारिकायाः काशिसुन्दरीति नामेति । काशिसुन्दरी[3] दारिका अष्टाभ्यो धात्रीभ्यो [71 b] दत्ता द्वाभ्यामंस[4]धात्रीभ्यां द्वाभ्यां क्षीरधात्रीभ्यां द्वाभ्यां मलधात्रीभ्यां द्वाभ्यां क्रीडनिकाभ्यां धात्रीभ्याम् । साष्टाभिर्धात्रीभिरुन्नीयते वर्ध्यते[5] क्षीरेण दध्ना 15

---

1) B °ष्यंचचप्र°, CDP corr.

2) B तस्करोरो°, D corr.

3) B °सुदरीति नाँदा° [the sign " denotes expunction] C °सुन्दरीतिदा°, D and P corr.

4) MS °भ्यांमत्स°.

5) MS वर्द्धते, as usual.

नवनीतेन सर्पिषा सर्पिमण्डेनान्यैश्चोत्तप्तोत्तप्तैरुपकरणविशेषैराशु वर्धते ह्रदस्थमिव पङ्कजम् ॥

यदा काशिसुन्दरी दारिका क्रमेण महती संवृत्ता तदा प्रातिसीमैः षड्भी राजभी राज्ञो ब्रह्मदत्तस्य दूतसंप्रेषणं कृतम् । [1]श्रुतमस्माभिर्यथा तव दुहिता जातेति [2]तदर्हस्य-
5 स्माकं पुत्राणामन्यतरस्मै अनुप्रदातुमिति ॥ ततो राजा शोकागारं प्रविश्य करे कपोलं दत्वा चिन्तापरो व्यवस्थितश्चिन्तयति । [3]यद्येकस्मै दास्यामि अपरेण मे सह विरोधो भविष्यतीति ॥ काशिसुन्दरी [4]दारिका सर्वालङ्कारविभूषिता पितुः सकाशमुपसंक्रान्ता । तया पिता शोकार्तो दृष्टः पृष्टश्च तात किमर्थं शोकः क्रियत इति । पित्रास्या यथाभूतं समाख्यातम् ॥ ततः काशिसुन्दरी पितरमुवाच । क्रियतां तात प्रातिसीमानां राज्ञां दूतसं-
10 प्रेषणं सप्तमे दिवसे काशिसुन्दरी दारिका स्वयंवरमवतरिष्यति येन वो यत्करणीयं स तत्करोत्विति ॥ यावत्सप्तमे दिवसे [5]षट् प्रातिसीमा राजानस्संनिपतिताः । काशिसुन्दर्यपि रथमभिरुह्य [6]काषायं ध्वजमुच्छ्राप्य [7]बुद्धपटं हस्तेन गृहीत्वा राजसभां गत्वोवाच । शृण्वन्तु भवन्तः प्रातिसीमा राजानो नाहं भवतां रूपयौवनकुलभोगैश्वर्यं तुलयामि अपि तु नाहं

---

1) Ex conject.; MS श्रुतास्मा°.

2) It looks strange that the messengers of the six kings at the time when the girl had grown up deliver their message in such terms as would rather be appropriate to the time of her being just born.

3) MS यद्येक°. Cp. *supra*, p. 2, 8.

4) B का° (दा above), hence C कारिका. — The same fault recurs below (l. 10), where D has कारिका instead of दारिका (B).

5) B seems to have षप्रा°; DP षत्प्रा°.

6) MS काशायं.

7) Ex conject.; MS °च्छ्राय.

कामैरर्थिनी य एष एव[1] मे भगवान्बुद्धः पटे लिखितस्तस्याहं[2] श्राविका अस्य शासने प्रव्रजिष्यामीति ॥

यावदृषिपतनं गत्वा भगवतः पादाभिवन्दनं कृत्वा भगवन्तमिदमवोचत्। लभेयाहं भदन्त स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावं चरेयमहं भगवतो ऽन्तिके ब्रह्मचर्यमिति। ततो भगवता महाप्रजापत्यां संन्यस्ता। ततस्तया प्रव्राजिता उपसंपादिता च ॥ तया 5 युज्यमानया घटमानया व्यायच्छमानया इदमेव पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः शतनपतनविकिरणविध्वंसनधर्मतया पराहत्य सर्वक्लेशप्रहाणादर्हत्वं साक्षात्कृतम्। अर्हन्ती[3] संवृत्ता त्रैधातुकवीतरागा समलोष्टकाञ्चनाकाशपाणितलसमचित्ता वासीचन्दनकल्पा विद्याविदारिताण्डकोशा विद्याभिज्ञाप्रतिसंवित्प्राप्ता भवलाभलोभ-सत्कारपराङ्मुखा सेन्द्रोपेन्द्राणां देवानां पूज्या मान्याभिवाद्या च संवृत्ता ॥ ततस्ते राजपु- 10 त्रास्तस्या रूपयौवनशोभां समनुस्मृत्य रागमदमत्ताः प्रव्रजितामपि प्रार्थयितुं प्रवृत्ताः। सा तैः प्रार्थ्यमाना विततपक्ष इव हंसराजो गगणतलमभ्युद्गम्य विचित्राणि प्रातिहार्याणि विदर्शयितुमारब्धा[4]। आशु पृथग्जनस्य ऋद्धिरावर्जनकरी। ततस्ते राजपुत्रा अत्यद्भुतं देव-मनुष्यावर्जनकरं प्रातिहार्यं दृष्ट्वा आहृष्टरोमकूपाः पादयोर्निपत्य क्षमापयितुमारब्धाः। मर्षय भगिनि यथैते त्वया धर्माः साक्षात्कृता अस्थानमेतद्यत्त्वं कामान्परिभुञ्जीथा[5] इति। 15 ततः काशिकासुन्दरी गगणतलादवतीर्य जनकायस्य पुरस्तात्स्थित्वा तथाविधां धर्मदेशनां कृतवती <यां> श्रुत्वानेकैः प्राणिशतसहस्रैर्महान्विशेषो[7] ऽधिगतः ॥

---

1) In B the akṣaras षए are unreadable, owing to their being hidden under a blot. C leaves them out; DP एषएव.

2) Ex conject.; MS लिखित अस्या.

3) B °र्हन्ती, P corr.

4) MS °लब्धा.

5) MS °भुञ्जीथा (D °भ्यञ्जीथा).

6) B here गगन°.

7) MS °र्महाविशेषोविगतस्ततो.

ततो भिक्षवस्संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। कानि भदन्त काशिसुन्दर्या कर्माणि कृतानि येनैवमभिरूपा[1] दर्शनीया प्रासादिका प्रव्रज्य चार्हत्त्वं साक्षात्कृतमिति॥ भगवानाह। काशिसुन्दर्यैव भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि। काशिसुन्दर्या 5 कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति। न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ न तेजोधातौ न वायुधातावपि तूपात्तेष्वेव[2] स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम्॥

10 भूतपूर्वं भिक्षवो ऽतीते ऽध्वन्यस्मिन्नेव भद्रके कल्पे त्रिंशद्वर्षसहस्रायुषि प्रजायां कनकमुनिर्नाम तथागतो ऽर्हन्सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुष[72a]दम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान्। * * * * *[3]। यावत्तत्रान्यतरा राजदुहिता आढ्या भद्रा कल्याणाशया आत्महितपरहितप्रतिपन्ना। तया विहारं कारयित्वा सर्वोपकरणैः परिपूर्य भगवते <स>श्रावकसङ्घाय प्रतिपादितः 15 कनकमुनौ[4] च सम्यक्संबुद्धे प्रव्रज्य दश वर्षसहस्राणि मैत्री भाविता॥

---

1) Ex conject.; MS येनैवाभि°. Cp. *supra*, I, p. 348, 8 and 369, 6.

2) Cp. *supra*, I, p. 74 n. 9.

3) Here a sentence is wanting, which contained the name of the place, where Kanakamuni stayed, and to which तत्र must refer. The gap must also have existed in the mss. used by the Tibetan translator, for that translation is in close correspondence with our text. To *yāvat tatrānyatarā rājaduhitā* answers དེ་ནས་རེ་ཞིག་དེ་ན་རྒྱལ་པོ་བུ་མོ་.

4) B काश्यपे (कनकमुनौ written above); CP (in D there is a gap) copied the correction. That the blunder is an old one, appears from the Tibetan translation, see Feer, p. 286, n.

किं मन्यध्वे भिक्षवो[1] या सा राजाङ्किता इयं सा कान्तिसुन्दरी दारिका[2]। यदनया विहारः प्रतिपादितस्तेनाभिरूपा दर्शनीया प्रासादिका संवृत्ता। यत्कनकमुनौ[3] भगवति प्रव्रज्य दश वर्षसहस्राणि मैत्री भाविता तेनेदानीमर्हत्त्वं साक्षात्कृतम्। इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रस्तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशु- 5
क्लेष्वेव कर्मस्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम्॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्॥

---

1) MS भिक्षव.

2) B का° (with दा written above).

3) B यत्काश्यपे with a reference to the upper margin, where is put the correction कनकमुनौ, which is accordingly copied in CD (यत्कनकमुनौ), whereas the copyist of P overlooked the correction.

## मुक्तेति ७७ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्डदस्यारामे। श्रावस्त्यां पुष्यो नाम श्रेष्ठी आढ्यो महाधनो महाभोगो विस्तीर्णविशालपरिग्रहो वैश्रवणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी। तेन सदृशात्कुलात्कलत्रमानीतम्। स तया सार्धं क्रीडति रमते परिचारयति। तस्य क्रीडतो रममाणस्य परिचारयतः कालान्तरेण पत्नी आपन्नसत्त्वा संवृत्ता। साष्टानां वा नवानां वा मासानामत्ययात्प्रसूता। दारिका जाता अभिरूपा दर्शनीया प्रासादिका मुक्तामालया शिरसि बद्धया॥ तस्या[1] ज्ञातो ज्ञातिमहं कृत्वा नामधेयं व्यवस्थाप्यते किं भवतु दारिकाया नामेति। ज्ञातय ऊचुः। यस्मादस्या जातमात्राया मुक्तामाला शिरसि प्रादुर्भूता तस्माद्भवतु दारिकाया मुक्तेति नाम॥ मुक्ता दारिका अष्टाभ्यो धात्रीभ्यो दत्ता द्वाभ्यामंस[2]धात्रीभ्यां द्वाभ्यां क्षीरधात्रीभ्यां द्वाभ्यां मलधात्रीभ्यां द्वाभ्यां क्रीडनिकाभ्यां धात्रीभ्याम्। साष्टाभिर्धात्रीभिरुन्नीयते वर्ध्यते[3] क्षीरेण दध्ना नवनीतेन सर्पिषा सर्पिमण्डेनान्यैश्चोत्तप्तोत्तप्तैरुपकरणविशेषैराशु वर्धते ह्रदस्थमिव पङ्कजम्॥

यावन्मुक्ता दारिका क्रमेण महती संवृत्ता। तस्याः[4] सा मुक्तमाला अवतारिता पुनः

---

1) MS तस्य.

2) MS द्वाभ्यांमत्स° (P द्वाभ्यामत्स°).

3) MS वर्द्धते. — B क्षीरणा, DP corr.

4) Visarga wanting in MS.

प्रादुर्भवति । ततः सा दारिका कृपण[1]वनीपकान्दृष्ट्वा भोगसंविभागं[2] करोति ॥ यदा च प्रदेया संवृत्ता तदा तस्या बहवो याचनका आगच्छन्ति राजपुत्रा अमात्यपुत्राः श्रेष्ठिपुत्राश्च । ततो ऽस्याः पिता शोकागारं प्रविश्य करे कपोलं दत्त्वा चिन्तापरो व्यवस्थितश्चिन्तयति । यद्येकस्मै[3] दास्यामि अन्ये मे ऽमित्रा भविष्यन्तीति ॥ ततो ऽसौ दारिका पितरं विज्ञापया-मास । तात किमर्थं शोकः क्रियत इति । तेन यथावृत्तं सर्वं तत्समाख्यातम् । ततो दारिका 5 कथयति । तात नाहं कामैरर्थिनी भगवच्छासने प्रव्रजिष्यामीति ॥ यावदनाथपिण्डदस्य सुप्रियो नाम कनीयःपुत्रस्तेन पिता विज्ञप्तः । ममार्थमेतां दारिकां याचस्वेति । ततो ऽनाथपिण्डदेन पुष्यस्य गृहपतेर्दूतसंप्रेषणं कृतम् । दीयतां मुक्ता दारिका मम पुत्राय' एवं कृतं साम्बन्धिकं[4] यावज्जीवसुख्यं कृतं च भविष्यतीति ॥ ततः पुष्येण गृहपतिना स्वस्यां दुहितरि सो ऽर्थो निवेदितः । सा कथयति । समयतो[5] यदीन्द्रियाणां परिपाकान्मया सह 10 भगवच्छासने प्रव्रजति[6] एवमहं तं भर्तारं[7] वरयामीति । तेन तथैव[8] कृतम् ॥ यावदुभावेव[9] गृहान्निष्क्रम्य भगवच्छासने प्रव्रजितौ । ताभ्यां युज्यमानाभ्यां घटमानाभ्यां व्यायच्छमा-

---

1) B पनीपकां दृष्ट्वा, DP वनी°.

2) In B the last but one akṣara of संविभागं is somewhat difficult to be read; accordingly it has been variously corrupted in D (संविभग्नं) and C (संवियोगं), P has the right reading.

3) MS यद्ये°, as usual.

4) Ex conject.; MS सावन्धकं. I write *sāmbandhika*, because firstly this (not *sāmbandhaka*) is instanced, see PW *s. v.*, and secondly the word must be a derivate from *sambandhin*, not *sambandha*.

Query: कृते साम्बन्धिके.

5) Ex conject.; MS समेयतः यदिन्द्रि°. As to समयतः «under this condition» cp. e. g. Mṛcchakaṭī ed. Godabole 1896, p. 52, l. 469.

6) Ex conject.; MS प्रव्रजित.

7) MS भत्तारं (D भट्टारं).

8) MS तथैवं कृतं.

9) Ex conject.; MS यावदुभोतेन.

नाभ्यामिदमेव पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः शतनपतनवि-
करणविध्वंसनधर्मतया पराहत्य सर्वक्लेशप्रहाणा[72b]दर्हत्त्वं साक्षात्कृतम् । अर्हन्तौ
<संवृत्तौ> त्रैधातुकवीतरागौ समलोष्टकाञ्चनावाकाशपाणितलसमचित्तौ वासीचन्दनकल्पौ
विद्याविदारिताण्डकोशौ विद्याभिज्ञाप्रतिसंवित्प्राप्तौ भवलाभलोभसत्कारपराङ्मुखौ से-
5 न्द्रोपेन्द्राणां देवानां पूज्यौ मान्यावभिवाद्यौ च संवृत्तौ ॥

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः । कानि भदन्त मुक्तया
कर्माणि कृतानि येन मुक्तामालया[1] शिरस्याबद्धया प्रव्रज्य चार्हत्त्वं साक्षात्कृतमिति ॥ भग-
वानाह । मुक्तयैव भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि
परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि । मुक्तया कर्माणि कृतान्युपचितानि
10 को ऽन्यः प्रत्यनुभविष्यति । न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ
विपच्यन्ते नाब्धातौ[2] न तेजोधातौ न वायुधातावपि तूपात्तेष्वेव[3] स्कन्धधात्वायतनेषु कर्माणि
कृतानि विपच्यन्ते शुभान्यशुभानि च ।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि[4] ।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ॥

15 भूतपूर्वं भिक्षवो ऽतीते ऽध्वन्यस्मिन्नेव भद्रके कल्पे विंशतिवर्षसहस्रायुषि
प्रजायां काश्यपो नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकवि-
दनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान् । स वाराणसीं नगरीमुप-
निश्रित्य[5] विहरति ऋषिपतने मृगदावे । यावदन्यतमः[6] सार्थवाहः स महासमुद्रमवतीर्णः ।

---

1) MS मुक्तयामालया.
2) B नाब्धाधौ, DP corr.
3) Cp. *supra*, I, p. 74 n. 9.
4) Cp. *supra*, I, p. 74 n. 13; in BCP कल्प is left out here.
5) MS °निसृत्य.
6) MS °तमोसार्थ°.

ततः स्वस्ति सुसिद्धयानपात्र आगतः। ततस्तेन मुक्ताहारः परमशोभन आनीतः। तस्य च भार्या अभिरूपा दर्शनीया प्रासादिका। तेन तस्याः शिरसि बद्धा॥

वाराणस्यामन्यतमो गृहपतिः श्राद्धो भद्रः कल्याणाशय आत्महितपरहितप्रतिपन्नः कारुणिको महात्मा धर्मकामः। तस्य बुद्धिरुत्पन्ना। यन्वहं छन्दकभिक्षणं[1] कृत्वा भगवतः काश्यपस्य शासने पञ्चवार्षिकं कुर्यामिति॥ तेन राज्ञः कृकिणो निवेदितमिच्छाम्यहं छन्दकभिक्षणं समादाप्य भगवतः पञ्चवार्षिकं कर्तुमिति। राज्ञा एवमस्त्विति समनुज्ञातः[2]॥ अथासौ गृहपतिर्हस्तिस्कन्धारूढो वाराणस्यां नगर्यां रथ्यावीथीचत्वरशृ[3]ङ्गाटकेषु च्छन्दकभिक्षणं याचितुं[4] प्रवृत्तः। यावत्सार्थवाहभार्या मुक्ताहारं शिरसो ऽवमुच्य तस्मिंश्छन्दकभिक्षणे दत्तवती॥ यावत्सार्थवाह आगतस्तं मुक्ताहारं शिरसो ऽपनीतं[5] दृष्ट्वा पृष्टवान्। भद्रे[6] क्वासौ मुक्ताहार इति॥ ततस्तयोक्तमार्यपुत्र[7] प्रीतिं जनय प्रसादमुत्पादय भगवच्छासने छन्दकभिक्षणे दत्त इति॥ यावत्सार्थवाहेन पुष्कलेन[8] मूल्येन निष्क्रीय तस्यै पत्न्यै दत्तः। सा नेच्छति पुनस्तं ग्रहीतुं[9] परित्यक्तो मे इति॥ स्वामिनोच्यते। भद्रे मया प्रभूतेन हिरण्यसुवर्णेनायं क्रीतः कस्मान्नेच्छसीति॥ ततो ऽसौ दारिका तं गृहीत्वा

---

1) MS here °भिनुणं, but further on B has the right orthography throughout. D and P have *u* in the penultima everywhere. Cp. *supra*, I, p. 313 n. 2.

2) Ex conject.; MS is here utterly corrupt, instead of समनुज्ञातः — to which answers བསྔོའི in the Tibetan — it has रा(or रो)ज्ञस्तस्तुतः. In D this has become राज्ञस्तःततः, in C राज्ञस्ते(or स्थे)स्ततः, in P राज्ञस्ततः.

3) MS चवरे°.

4) B याचितुं, CDP corr.

5) Ex conject.; MS शिरस्यपनीतं (P शिरसाप°).

6) B भद्र, D corr.

7) B ततस्तयोकुमार्यपुत्र (with क्त written above). The copyist who wrote C understood the correction, those of D and P not so.

8) B पुस्कलेन, D corr.

9) MS गृहीतुं.

प्रभूतं पुष्पसंचयं कृत्वा गन्धमाल्यानि च गृहीत्वा ऋषिपतनं गता[1] । ततो गन्धकुट्यां[2] गन्धप्रलेपं कृत्वा पुष्पैराकीर्य मुक्ताहारं भगवतो मूर्ध्नि क्षिप्तवती[3] । <स> सहसा भगवतः काश्यपस्य मूर्धनि स्थितः[4] ॥ ततः प्रसादजातया प्रणिधानं कृतम् । अहमप्येवंविधानां गुणानां लाभिनी[5] स्यामेवंविधमेव शास्तारमारागयेयं मा विरागयेयमिति ॥

5 किं मन्यध्वे भिक्षवो यासौ तेन कालेन तेन समयेन सार्थवाहभार्या इयं सा मुक्ता । यदनया भगवति काश्यपे काराः कृतास्तेनाभिरूपा दर्शनीया प्रासादिका मुक्ताहारश्चास्याः शिरसि प्रादुर्भूतस्तेनैव हेतुनेदानीमर्हत्वं साक्षात्कृतम् । इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रस्त-स्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव कर्म-
10 स्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमनसस्ते भि[73 a]क्षवो भगवतो भाषितमभ्यनन्दन् ।

---

1) MS गतस्ततो.

2) It is somewhat doubtful, whether B has °कुट्यां or °कुटां; D °कूटां, P °कुट्टां.

3) B क्षोप्त°, DP corr.

4) Cp. the Tibetan version: མུ་ཏིག་ཕྲེང་བ་ནི་བཅོམ་ལྡན་འདས་ཀྱི་དབུ་ལ་བོར་ནས་བཅོམ་ལྡན་འདས་འོད་སྲུང་གི་དབུ་ལ་གནས་པར་གྱུར་ཏེ॥

5) MS, without the necessary ūha, लाभी.

## कचङ्गलेति[1] ७८।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुड-किन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयना-सनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः कचङ्गलायां विहरति काचङ्गलीये वन- 5
षण्डे। तस्यां कचङ्गलायां कचङ्गला नाम वृद्धा। सा घटमादायो[2]दकार्थिनी कूपमुपसृप्ता[3] ॥ तत्र भगवानायुष्मन्तमानन्दमामन्त्रयते। गच्छानन्द एतस्यां वृद्धायां कथय भगवांस्तृषितः पानीयमनुप्रयच्छस्वेति[4]। सा आनन्देनोक्ता कथयति। अहं स्वयमेवा[5]नेष्यामीति ॥ याव-त्कचङ्गला पानीयघटं[6] पूरयित्वा भगवतः सकाशं गता। ददर्श कचङ्गला बुद्धं भगवन्तं द्वात्रिं-शता महापुरुषलक्षणैः समलङ्कृतमशीत्या चानुव्यञ्जनैर्विराजितगात्रं व्यामप्रभालङ्कृतं 10
सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकम्। सहदर्शनादस्याः पुत्रस्नेहः समुत्पन्नः[7] स्तनाभ्यां क्षीरधाराः प्रसुताः। सा [8]ऊर्ध्वबाहुः पुत्र पुत्रेति भगवन्तं परिष्वक्तु-मारब्धा। भिक्षवस्तां वारयन्ति[9] ॥ भगवानाह। मा यूयं भिक्षव इमां वृद्धां वारयत[10]। तत्कस्य हेतोः।

---

1) B कवङ्ग°. It is not clear whether कचङ्ग° or कवङ्ग° is written in B, but further on the च is, as a rule, distinctly written. Yet l. 5 B has कवङ्गलायां.

2) In MS no sandhi here.

3) Ex conject.; MS °सृष्टा. The same corruption *supra*, I, p. 224 n. 3.

4) Ex conject.; MS °यच्छतेति (D has °यच्छसेति).

5) I have adopted the correction of D; B स्वयमेवने°.

6) B °घंटं, D corr.

7) Ex conject.; MS पुत्रस्नेहमुत्पन्नस्तनाभ्यां (D °स्तेनाभ्यां).

8) D °हूः, B °हुः. All MSS ऊर्ध°.

9) MS धारयन्ति.

10) Ex conject.; MS धारयतस्तत्कास्य.

पञ्च जन्मशतान्येषा मम माता आसीन्निरन्तरम्[1]।
इयं मे पुत्रस्नेहेन गात्रेषु समश्लिषत[2]॥ १
सचेदेषा निवार्येत मम गात्रेषु श्लेषणात्।
इदानीं रुधिरं उष्णं कण्ठादस्याः स्रवेत्क्षणात्[3]॥ २
5 कृतज्ञतामनुस्मृत्य दृष्ट्वेमां पुत्रलालसाम्।
कारुण्याद्गात्रसंश्लेषं[4] ददामि अनुकम्पया[5]॥ ३

यावदसौ पुत्रस्नेहं विनोद्य भगवतः पुरस्तान्निषण्णा धर्मश्रवणाय। भगवता चास्या आशयानुशयं धातुं प्रकृतिं च ज्ञात्वा तादृशी चतुरार्यसत्यसंप्रतिवेधिकी धर्मदेशना कृता यां श्रुत्वा कचङ्गलया[6] विंशतिशिखरसमुद्गतं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रोताप-
10 त्तिफलं साक्षात्कृतम्॥ सा दृष्टसत्या गाथा[7] भाषते।

यत्कर्तव्यं ‹हि› पुत्रेण मातुर्दुष्करकारिणा[8]।
तत्कृतं भवता[9] मह्यं चित्तं मोक्षपरायणम्॥ ४
दुर्गतिभ्यः समुद्धृत्य स्वर्गे मोक्षे च ते अहम्[10]।
स्थापिता सर्वयत्नेन विशेषः सुमहान्कृतः॥ ५

---

1) The second pāda of this çloka is disturbed. The simplest way to restore the verse would be reading ममाम्बासीन्निरन्तरम्.

2) Ex conject.; MS समाश्लिषत्त (D °षत). The correction (cp. Pāṇini, 3, 1, 46) restores the proper tense from a syntactic point of view; as to the scansion of the fourth pāda, and of *gātreṣu çleṣanāt*, cp. Bendall's *Introduction* to Çikṣāsamuccaya, p. XIX.

3) MS श्र°, likewise *supra* (p. 41, 12) प्रश्रुताः (D प्रसूताः).

4) Ex conject.; MS कारुण्यां.

5) I have resolved the sandhi according to the exigencies of the metre; MS ददाम्यनु°. 6) B कवंग°.

7) गाथा instead of गाथे may be due to the author's negligence.

8) Ex conject.; MS मातुरं दुस्क°. Cp. *supra*, I, p. 204, 16. There it was the parents that were called *duṣkarakārakau*, here it is the son who returned to his mother such a reward for her love as is difficult to be bestowed by anybody but the Lord. Cp. Feer, p. 291 n. 1.

9) Ex conject.; MS भगवता. 10) Ex conject.; MS स्वर्गमोक्षे च ते ऽहम्.

यावदसौ स्वामिनमनुज्ञाप्य भगवच्छासने प्रव्रजिता । तया युज्यमानया घटमानया व्यायच्छमानया इदमेव पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः शतन-पतनविकिरणविध्वंसनधर्मतया पराहत्य सर्वक्लेशप्रहाणादर्हत्वं साक्षात्कृतम् । अर्हन्ती संवृत्ता त्रैधातुकवीतरागा समलोष्टकाञ्चनाकाशपाणितलसमचित्ता वासीचन्दनकल्पा वि-द्याविदारिताण्डकोशा विद्याभिज्ञाप्रतिसंवित्प्राप्ता भवलाभलोभसत्कारपराङ्मुखा सेन्द्रो- 5 पेन्द्राणां देवानां पूज्या मान्याभिवाद्या च संवृत्ता ॥ यदा भगवान्भिक्षुणीनां संक्षेपेणोद्दिश्य प्रतिसंलयनाय प्रविशति तदा कचङ्गला भिक्षुणीनां व्याकरोति ॥ तत्र भगवान्भिक्षूनाम-न्त्रयते स्म । एषाग्रा मे भिक्षवो भिक्षुणीनां मम श्राविकाणां सूत्रान्तविभागकर्त्रीणां[1] यदुत कचङ्गला भिक्षुणीति ॥

भिक्षवः संशयजाताः सर्वसंश‹य›च्छेत्तारं[2] बुद्धं भगवन्तं पप्रच्छुः । किं भदन्त कचङ्ग- 10 लया कर्म कृतं येन वृद्धा प्रव्रजिता किं कर्म कृतं येन भगवान्पश्चिमगर्भवासे न धारितः प्रव्रज्य [3]चार्हत्वं साक्षात्कृतं सूत्रान्तविभागकर्त्रीणां[1] चाग्रा निर्दिष्टा इति ॥ भगवा-नाह । [4]कचङ्गलयैव भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि । कचङ्गलया कर्माणि कृतान्युपचि-तानि को ऽन्यः प्रत्यनुभविष्यति । न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवी- 15 धातौ विपच्यन्ते [5]नाब्धातौ न तेजोधातौ न वायुधातावपि [6]तूपात्तेष्वेव स्कन्धधात्वायतने‹षु›[7] कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च ।

---

1) Ex conject.; MS °कर्तृणां.

2) DP add the missing akṣara.

3) B वार्ह°, D corr.

4) MS कचंगलैव (D कचिङ्गिलैव).

5) B नाव्धाधौ, DP corr.

6) Cp. *supra*, I, p. 74 n. 9.

7) D adds the missing akṣara.

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि ।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ॥

भूतपूर्वं भि[73b]क्षवो ऽतीते ऽध्वनि बोधिसत्त्वचर्यायां वर्तमानस्यैषा मे पञ्च जन्म-
शतानि माता आसीन्निरन्तरं यदाहं प्रव्रजितुमिच्छामि तदा ममैषा वारयति[1] । तस्य
5 कर्मणो विपाकेन वृद्धा प्रव्रजिता । दानं ददतो मे दानान्तरायो ऽनया[2] कृतः । तेन दरिद्रा
संवृत्ता । किं त्वनया नैवंविधानि महेशाख्यसंवर्तनीयानि कर्माणि कृतानि यथा महामाया[3]
‹कृत›वती । तेनाहमनया पश्चिमे न धारितः ॥ भूयः काश्यपे भगवति प्रव्रजिता आसीत् ।
तत्रानया शैक्षाशैक्षा[4] भिक्षुण्यो दासीवादेन समुदाचीर्णाः । तेन दासी संवृत्ता । यत्तत्रानया
पठितं स्वाध्यायितं[5] स्कन्धकौशलं प्रतीत्यसमुत्पादकौशलं स्थानास्थानकौशलं च कृतं
10 तेनेदानीमर्हत्वं साक्षात्कृतं सूत्रान्तविभागकर्त्रीणां[6] चाग्रतायां निर्दिष्टा । इति हि भिक्षव
एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां
व्यतिमिश्रस्तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशु-
क्लेष्वेव कर्मस्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

1) MS धारयति (D राधयति).
2) MS °रायानया.
3) MS महामाया व (ती above व) (or च)तेनाहं.
4) MS शैक्ष्याशैक्ष्यो (D शैष्याशैष्यो).
5) MS °ध्यायितां (D °ध्यायतां).
6) MS कर्तॄणां.

## देमेति ७९ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्डदस्यारामे । तेन खलु समयेन राजा प्रसेनजित्कौशलो राजा च ब्रह्मदत्त उभावप्येतौ परस्परविरुद्धौ ॥ यावद्राजा प्रसेनजित्कौशलः[1] स्वविषयपर्यन्तं गत्वा काष्ठवाटं[2] बद्धावस्थितो राजा ब्रह्मदत्तश्च ‹च›तुरङ्गबलकायं संनाह्य हस्तिकायमश्वकायं[3] रथकायं पत्तिकायं नद्याः कूले काष्ठवाटं बद्धावस्थितः ॥ यावद्राज्ञा[4] प्रसेनजित्कौशलेन[5] तत्रैवाग्रमहीषी नीता । स तया सार्धं क्रीडति रमते परिचारयति । ब्रह्मदत्तो ऽपि देव्या सह क्रीडति रमते परिचारयति । येनैकदिवस एव राज्ञः प्रसेनजित्कौशलस्य[6] दुहिता जाता ब्रह्मदत्तस्य पुत्रः ॥ यावदुभयोरपि राज्ञोः[7] स्कन्धावारे * * * * * * * * * * * * * * * * * * * * * * * * * * ‹ब्रह्मदत्तस्य स्कन्धावारे›[8] प्रवर्तते येनायमेवंविध उत्सव इति । तैराख्यातं

1) Ex conject.; MS °शलस्यविष°.

2) MS काष्ठ (P काष्ट) पटं; cp. l. 9.

3) Anusvāra wanting in MS.

4) MS यावद्राजा.

5) Cp. *supra*, I, p. 56 n. 8.

6) B °जित्कोश°, DP corr.

7) MS राज्ञो स्क°.

8) The obvious gap in the text did not yet exist in the manuscripts used by the Tibetan translator. Feer, p. 293 has put this suppletion from the Tibetan between brackets. «Il y eut alors [de bruyantes réjouissances à la cour des deux rois,

राज्ञो ब्रह्मदत्तस्य पुत्रो जात इति। ब्रह्मदत्तेनापि तथैव[(1)] पृष्टम्। कथयन्ति[(2)] राज्ञः प्रसेन-
जितो दुहिता[(3)] जातेति॥ ततो राज्ञा ब्रह्मदत्तेन राज्ञः प्रसेनजितो[(4)] दूतसंप्रेषणं कृतम्।
श्रुतं मया यथा तव दुहिता जातेति दिष्ट्या वर्धसे अस्माकमपि पुत्रो जातः किं तु दीय-
तामेषा दारिका मम पुत्राय एवं कृते[(5)] सांबन्धिके यावज्जीवं वैरोत्सर्गः कृतो भविष्यतीति।
5 राज्ञा प्रसेनजिता[(6)] प्रतिज्ञातमेवं भवत्विति॥ ततस्ताभ्यां परस्परं प्रीतौ कृतायां नेमे[(7)] जाते
राज्ञा ब्रह्मदत्तेन दारकस्य जातौ जातिमहं कृत्वा नामधेयं व्यवस्थापितं नेमिकर[(8)] इति। राज्ञा
प्रसेनजिता कौशलेन दारिकाया जाताया जातिमहं कृत्वा नेमेति नामधेयं कृतम्। तावुभा-
वप्युन्नीतौ वर्धितौ। यावत्क्रमेण महान्तौ[(9)] ‹संवृत्तौ›॥

अथ स दारको दारिकाया हारार्धहार[(10)]*मालांवघ्नन् कण्ठेमणीन्प्रेषयति यदासौ दा-

---

on fit des dons aux mendiants. Or, le roi Prasenajit fit à ses gens cette question: «Que se passe-t-il donc à la cour de Brahmadatta] qu'on fasse une telle fête.»» If is plain that «la cour» *apud* Feer corresponds with *skandhāvāre*; the «mendiants» are styled in the Tibetan version སློང་བ་རྣམས་.

1) B तथैवं, D corr.

2) Ex conject.; MS कथयति.

3) B जातति, it seems, C जातेपि, DP जातेति.

4) MS दूतसंप्रे°.

5) Ex conject., cp. *supra*, p. 37 n. 4; MS सावन्धके.

6) Ex conject.; MS प्रतिज्ञात एवं.

7) MS नमे.

8) MS नेमंकरमिति (in B it is written in margine).

9) MS महन्तौ.

10) The tradition is here utterly corrupted. MS °मालांवघ्नन्कण्ठेगुणाँन्प्रेषयति, the signs put above the akṣ. गुणा signify the expunction of them, and the correction दूता, with reference to these signs, is found at the bottom of the page. This has been differently understood in B's copies; C °कण्ठेगुणाद्दूतांप्रेषयति, D °वघ्नक-ण्ठेन्प्रेषयति leaving out the rest, P °वघ्नन् कण्ठेगुणावृतान्प्रेषयति. In the Tibetan it is narrated that the prince sent to his bride a necklace (རྡོ་སྒྲབ་), an ornament

रिका महती संवृत्ता। तया ते पृष्टाः कुत एतानि प्राभृतान्यागच्छन्ति। प्रेष्यैर्विस्तरेण[(2)] स[(3)]
वृत्तान्त आवेदितः। श्रुत्वा च पितरं विज्ञापयामास। तात नाहं कामैरर्थिनी भगवच्छासने
प्रव्रजिष्यामि अनुजानीहि मां तातेति॥ राजा कथयति। नैतद्दारिके शक्यं मया कर्तुं
यस्मात्तव जन्मनि मम क्षेमं जातमिति॥ ततो राज्ञा प्रसेनजिता कौशलेन[(4)] राज्ञो ब्रह्मदत्तस्य
[(5)]दूतसंप्रेषणं कृतम। एषा मे[(6)] दारिका प्रव्रजितुमिच्छति' आगत्यैनां गृहाणेति। यावद्राज्ञा 5
ब्रह्मदत्तेन दिवसः प्रतिगृहीतः सप्तमे ऽहनि आगच्छामीति यत्ते कृत्यं वा करणीयं वा[(7)]
तत्कुरुष्वेति॥ एष वृत्तान्तः [74a] क्षेमया दारिकया श्रुतः सप्तमे दिवसे विवाहो भविष्य-
तीति। ततः क्षेमा भीता त्रस्ता संविग्ना आहृष्टरोमकूपा शरणपृष्ठमभिरुह्य जेतवनाभि-
मुखी बुद्धं भगवन्तमायाचितुं प्रवृत्ता। आह च।

[(8)]कृपकरुणाविहारो ध्यायमानो महर्षिः 10
प्रशमदमविधिज्ञः पापहः[(9)] शान्तचित्तः।

---

of pearls (སེ་མོ་དོ), earrings (རྣ་ཆ), neck-ornaments (མགུལ་རྒྱན་རྣམས་). From this we may infer that दूता is a wrong correction of गुणा. I have put into the text कण्ठमणीन् by conjecture, but I have not ventured to propose anything instead of the corrupt मालावघ्नन् of MS, which must contain the equivalent of the Tibet. word for 'ear-rings'.

1) MS प्राभृत्यान्या° (D प्रभृ°).

2) B प्रेष्यैवि°, D corr.

3) B संवृत्तान्त, P corr.

4) B कोशलेन, D corr.

5) MS दूतंसंप्रे°.

6) Ex conject.; MS कृतमेवमेषा(D °षां) दारिका.

7) BD °णीयम्वा.

8) Ex conject.; MS कृपाकरुणाविहारा. I translate the first pāda thus: 'the great *ṛṣi*, who meditates and is the dwelling-place of pity and commiseration'. The Tibetan equivalent is in close accordance: སྙང་སྡོང་ཆེན་པོ་ཐུགས་རྗེ་ཐུགས་རྗེ་གནས་པ་བསམ་གཏན་མཛད་. Shortening the final syllables of *kṛpā* and *karuṇā* does not exceed the limits of allowed poetical license.

9) B पापकः, but the akṣara क has been corrected into ह; hence C पापकः-हशान्त°, D पापकहः शान्त°, P पापहकशान्त°.

मम विधिवदपायान्मोचय त्वं हि नाथः[1]

[2]शरणमुपगताहं लोकनाथं ह्यनाथा ॥

अत्रान्तरे नास्ति किंचिद्बुद्धानां भगवतामज्ञातमदृष्टमविदितमविज्ञातम् । धर्मता खलु बुद्धानां भगवतां महाकारुणिकानां लोकानुग्रहप्रवृत्तानामेकारक्षाणामेकवीराणामद्वितीयानामद्वयवादिनां शमथविपश्यनाविहारिणां [3]त्रिदमथवस्तुकुशलानां चतुरोघोत्तीर्णानां [4]चतुर्ऋद्धिपादचरणतलसुप्रतिष्ठितानां पञ्चाङ्गविप्रहीणानां पञ्चगतिसमतिक्रान्तानां षडङ्गसमन्वागतानां षट्पारमितापरिपूर्णानां सप्तबोध्यङ्गकुसुमाढ्यानामष्टाङ्गमार्गदेशिकानां नवानुपूर्वसमापत्तिकुशलानां दशदिक्समापूर्णयशसां दशशतवशवर्तिविशिष्टानां [5]त्री रात्रेस्त्रिर्दिवसस्य बुद्धचक्षुषा लोकं व्यवलोक्य ज्ञानदर्शनं प्रवर्तते । को हीयते को वर्धते कः कृच्छ्रप्राप्तः कः संकटप्राप्तः कः संबाधप्राप्तः को ऽपायनिम्नः को ऽपायप्रवणः को ऽपायप्राग्भारः कमहमपायादुद्धृत्य स्वर्गे मोक्षे च प्रतिष्ठापयेयं कस्यानवरोपितानि कुशलमूलान्यवरोपयेयं कस्यावरोपितानि परिपाचयेयं कस्य परिपक्वानि विमोचयेयम् । आह च ।

अप्येवातिक्रमेद्वेलां सागरो मकरालयः ।

न तु वैनेयवत्सानां बुद्धो वेलामतिक्रमेत् ॥

---

1) Ex conject.; MS त्वं हि नाथ.

2) Ex conject.; MS शरणमुपगतार्हत्वं नाथो ह्यनाथानां, manifestly corrupted and unmetrical. I am not sure of my restitution of लोकनाथं, of which I do not find the equivalent in the Tibetan, unless སྐྱབས་ may be considered as such; but that the 4th pāda concludes with ह्यनाथा seems almost certain from the Tibetan rendering མགོན་མེད་བདག་གི་ཚུལ་ལ་པ.

3) Before this epitheton MS has त्रिदमथविपश्यनाविहारिणां, a manifest dittography.

4) B चतुर्ऋद्धिद्धिपाद°, D corr.

5) MS त्रिरात्रेःत्रि°.

अथ भगवान्क्षेमाया विनयकालमवेत्य ऋद्ध्या उपसंक्रान्तः । उपसंक्रम्य तादृशी चतुरार्यसत्यसंप्रतिवेधिकी धर्मदेशना कृता यां श्रुत्वा क्षेमया अनागामिफलं प्राप्तमभिज्ञा-निर्हारश्च ॥ अथ क्षेमा अतिक्रान्तकामधातौ लब्धप्रतिष्ठा[1] * * * * ॥

यावत्सप्तमे दिवसे विवाहकाले संप्राप्ते प्रत्युपस्थिते राजकुमारे अनेकजनशतस-ह्वाये वेदीमध्यगतायां[2] ब्राह्मणेन पुरोहितेन लाजा घृतसर्पिषानुप्रदत्ताः[3] । ततो दारक- 5
दारिकाहस्तसंश्लेषणे क्रियमाणे क्षेमा पश्यतामनेकेषां प्राणिशतसहस्राणां विततपक्ष इव हंसराजो गगनतलमभिरुह्य विचित्राणि प्रातिहार्याणि विदर्शयितुमारब्धा ॥ ततो राजा प्रसेनजित्कौशलो[4] राजा च ब्रह्मदत्तः क्षेमङ्करश्च राजकुमारो ऽन्ये च कुतूहलाभ्यागताः[5] सत्त्वा विस्मयमुपगताः पादयोर्निपत्य विज्ञापयितुमारब्धाः । मर्षय भगिनि य एते त्वया धर्माः[6] साक्षात्कृता अस्थानमेतद्यत्त्वं[7] कामान्परिभुञ्जीथा इति ॥ अथ क्षेमा गगनतलादवतीर्य 10

---

1) Ex conject.; MS लब्धप्रतिष्ठिता यावत्सप्तमे manifestly defective. A few words before यावत्सप्तमे are lost, it seems. The Tibetan renders the phrase thus: གཉེན་པོ་ཐོབ་ནས་ (= *labdhapratiṣṭhā*) འཇིགས་པ་མེད་པ་ལ་ གནས་པར་གྱུར་ཏེ, which is translated by Feer, p. 295, 6, as follows: «et, ayant trouvé un appui, fut désormais à l'abri de la crainte».

2) Perhaps to read °गतायाः.

3) Feer who (p. 295, 10) translates «le beurre clarifié, les grains de sénevé» must have read सर्षपाः instead of सर्पिषा; perhaps he follows the Tibetan. If this view is right, सर्पिषा would be a corruption of सर्षपाः. But it must be acknowledged, grains of mustard, though of frequent occurrence in Indian ritual, are never mentioned in the books of ritual with regard to the marriage ceremony (see Çāṅkhāyana Gṛhyas. 1, 13, 15, Pāraskara Gṛhyas. 1, 6, 1, Gobhila II, 1, p. 9 ed. Knauer). On the other hand, the reading of MS combines, in a somewhat strange manner, the two slightly different kinds of *ājya* into the compound *ghṛta-sarpiḥ*. Yet, after all, such a karmadhāraya (*ghṛta* + *sarpis*) is as well admissible as 'clarified butter' 'zerlassene Butter' are in English and German. For this reason I have retained the reading of MS.

4) B °जित्कोशलो, D corr.

5) B कूतू°, CP corr.

6) B धर्मान्साक्षान्कृता, DP धर्मात्साक्षात्कृता.

7) MS °तद्यत्वं.

ज्ञानकायस्य पुरः स्थित्वा तथाविधां धर्मदेशनां कृतवतो यां श्रुत्वानेकैः प्राणिशतसहस्रैस्स-
त्यदर्शनं कृतम्॥ ततः क्षेमा दारिका पितरमनुज्ञाप्य भगवत्सकाशमुपसंक्रान्ता भगवता च
महाप्रजापत्याः संन्यस्ता। ततस्तया प्रव्राजिता उपसंपादिता च। तया युज्यमानया घट-
मानया व्यायच्छमानया इदमेव पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः
शतनपतनविकरणविध्वंसनधर्मतया पराहत्य सर्वक्लेशप्रहाणादर्हत्वं साक्षात्कृतम्। अर्ह-
न्ती संवृत्ता त्रैधातुकवीतरागा समलोष्टकाञ्चनाकाशपाणितलसमचित्ता वासीचन्दनकल्पा
विद्याविदारिताण्डकोशा विद्याभिज्ञाप्रतिसंवित्प्राप्ता भवलाभलोभसत्कारपराङ्मुखा से-
न्द्रोपेन्द्राणां देवानां पूज्या मान्याभिवाद्या च संवृत्ता। तत्र भगवान्भिक्षूनामन्त्रयते स्म।
एषा ऽग्रा मे भिक्षवो भिक्षुणीनां मम श्राविकाणां महाप्राज्ञानां[1] महाप्रतिभानां यदुत क्षेमा
भिक्षुणी॥

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। कानि भदन्त क्षेमया
कर्माणि कृतानि येन महाप्राज्ञानां[1] महाप्रतिभानामग्रा निर्दिष्टा॥ भगवानाह। क्षेमयैव
भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्यया-
न्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि। क्षेमया कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्य-
नुभविष्यति। न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते[2] नाब्धा-
तौ न तेजोधातौ न वायुधातावपि तूपात्तेष्वेव[3] स्कन्धधात्वायतनेषु कर्माणि कृतानि वि-
पच्यन्ते शुभान्यशुभानि च।

न प्रण[74 b]श्यन्ति कर्माणि कल्पकोटिशतैरपि।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम्॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वन्यस्मिन्नेव भद्रके कल्पे विंशतिवर्षसहस्रायुषि

---

1) So MS. There is no sufficient reason to change this into महाप्रज्ञानां. Cp. the instances in PW, IV, 1168 s. v. प्राज्ञ a).

2) B नाब्धाधौ, DP corr.

3) Cp. *supra*, I, p. 74 n. 9.

प्रजायां काश्यपो नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोक-
विदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो[1] भगवान्। स वाराणसीं नगरी-
मुपनिश्रित्य[2] विहरति ऋषिपतने मृगदावे। यावत्तत्रान्यतरा[3] श्रेष्ठिदुहिता भगवतः काश्य-
पस्य शासने प्रव्रजिता। तया भगवतः काश्यपस्य शासने दानप्रदानानि दत्तानि द्वादश
वर्षसहस्राणि च ब्रह्मचर्यवासः परिपालितो न च कश्चिद्गुणगणो ऽधिगतो यस्यास्तूपाध्या- 5
यिकायाः सकाशे प्रव्रजिता आसीत्सा भगवता काश्यपेन प्रजावती<नामया> निर्दिष्टा। तत-
स्तया प्रणिधानं कृतम्। यथैषा[4] उपाध्यायिका प्रजावतीनामया निर्दिष्टा एवमहमप्य-
नागते ऽध्वनि यो ऽसौ भगवता काश्यपेन उत्तरो नाम माणवो व्याकृतो भविष्यसि त्वं मा-
नववर्षशतायुषि प्रजायां शाक्यमुनिर्नाम तथागतो ऽर्हन्सम्यक्संबुद्ध इति तस्याहं शासने
प्रव्रजित्वा[5] प्रजावतीनामया भवेयमिति॥ 10

भगवानाह। किं मन्यध्वे भिक्षवो यासौ[6] तेन कालेन तेन समयेन श्रेष्ठिदुहिता इयं
सा क्षेमा भिक्षुणी। यत्तया दानानि प्रदत्तानि तेनाढ्ये कुले प्रत्याजाता। यत्तया द्वादश वर्ष-
सहस्राणि ब्रह्मचर्यवासः परिपालितस्तेनेदानीमर्हत्त्वं साक्षात्कृतम्। इति हि भिक्षव एका-
न्तकृष्णानां कर्मणामेकान्तकृष्णो विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्य-
तिमिश्रस्तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्ले- 15
ष्वेव कर्मस्वाभोगः[7] करणीय इत्येवं वो भिक्षवः शिक्षितव्यम्॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्॥

---

1) B बुद्धा, D corr.
2) MS °निसृत्य.
3) B °रा ऽश्रे°. Hence C and P °राः श्रे°, D °रो श्रे°.
4) Ex conject.; MS यथैका.
5) Cp. *supra*, I, 222, 6 and 299 n. 6.
6) Ex conject.; MS यासा.
7) B °भोगकर°, D corr.

---

## विरूपेति ८० ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः
श्रेष्ठिभिस्सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकि-
न्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्ला-
5 नप्रत्ययभैषज्यपरिष्काराणां[1] सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्डद-
स्यारामे। तेन खलु समये[2]<न> प्रसेनजित्कौशलो[3] राज्यं कारयति ऋद्धं च स्फीतं च क्षेमं च
सुभिक्षं चाकीर्णबहुजनमनुष्यं च प्रशान्तकलिकलहडिम्बडमरं तस्कररोगापगतं शालीक्षु-
गोमहिषीसंपन्नं प्रियमिवैकपुत्रकं राज्यं पालयति। यावत्स राजा अन्यतमया देव्या सह
क्रीडति रमते परिचारयति। तस्य क्रीडतो रममाणस्य परिचारयतः पत्नी आपन्नसत्त्वा
10 संवृत्ता। सा अष्टानां वा नवानां वा मासानामत्ययात्प्रसूता। दारिका जाता अष्टादशभि-
र्दौर्वर्णिकै[4]रङ्गैः समन्वागता। तस्या[5] जातौ जातिमहं कृत्वा विरूपेति नामधेयं व्यवस्था-

---

1) B परिस्का°, DP corr.

2) D adds the wanting akṣara.

3) B कोशलो, D corr.

4) MS दौवर्णि° (P दौवर्णि°, D सौवर्ष°).

A gloss, on f. 258 b at the bottom, of **A ç o k ā v.** (tale 20 of which contains a paraphrase of this story of Virūpā) enumerates the eighteen characteristics of ugliness, as follows: पिंगलाक्षी कूपगंड लंबोष्ठ ऊर्ध्वकेश ह्रस्वललाट सिंहभ्रू पुष्पि-तनख प्रविरलदंत दंतुर अतिदीर्घ अतिह्रस्ववाक्क तवगूथल (?) अतिकृष्ण वह्नाशी (sic) विकटपाद अतिगौर खरालाप अतिकर्कशांग। एतान्यष्टादश लक्षणानि. Of these eighteen adjectives seventeen are easy to understand; the twelfth is manifestly corrupted. It may perhaps intend to signify the 'goose-skin'.

5) B तस्य, P corr.

प्यते[1] ॥ यदा क्रमेण महती संवृत्ता यदा यस्मै प्रदीयते स तां विद्रूपेति कृत्वा न प्रतिगृ-
ह्णाति ॥

यावद्दक्षिणापथाद्गङ्गो[2] नाम सार्थवाहो ऽभ्यागतो विस्तीर्णविभवः । ततो राज्ञः
प्रसेनजितो बुद्धिरुत्पन्ना । अयं गङ्गसार्थवाह एतस्या दोषेष्वनभिज्ञो यन्न्वहमस्मै दास्या-
मीति ॥ ततो राज्ञा रात्रौ संप्राप्तायां भग्ने चत्वुष्पथे गङ्गं[3] दूतेनाह्वाप्य सा दारिका सर्वा- 5
लङ्कारविभूषिता भार्यार्थे दत्ता ॥ गङ्गाय *गङ्गरस्था* गङ्गरस्थेति संज्ञा प्रादुर्भूता[4] ॥

यावद्गङ्गेन सार्थवाहेन द्वितीये दिवसे प्रभातायां रजन्यां सा दारिका दृष्टा[5] परमबी-
भत्सा[6] । यां दृष्ट्वा राजापेक्षया न शक्नोत्यवमोक्तुं स्वगृहे धारयति ॥

यावद्गङ्गः सार्थवाहः कस्मिंश्चित्पर्वण्युपस्थिते गोष्ठिकानां मध्यं गतः । गोष्ठिकैश्च
क्रियाकारः कृतः सह भार्यया अमुकमुद्यानं यो न यास्यति स गोष्ठिकानां पञ्च पुराणश- 10
तानि दण्डमनुप्रदास्यतीति ॥ ततो गङ्गः स्वगृहमागत्य शोकागारं प्रविश्य करे कपोलं

---

1) In Tibetan the name given to the ugly girl is not *Virūpā*, but *Rasthā* ར་སྠ.

2) MS दक्षिणापथा°.

3) Ex conject.; MS गङ्गो.

4) On this phrase, whose meaning by itself is not clear owing to its brevity, and which, for this reason, may be defective cp. Feer's note 2 on p. 298 and note 2 on p. 297. The paraphrast who composed the Açokāv. gives this account of the nickname. (Her father's purohita speaks)

गंगस्य रतिभोगार्थे केवलं स्थीयके[read: ते] यतः ।
तेन त्वं गंगरस्थेति नाम्ना संप्रथिता भव ॥

The Tibetan translator rendered the sentence so that it conveys the bearing: «as Rasthā became Gaṅga's (wife) she got from that time the nickname of Gaṅgarasthā» དེ་ནས་ར་སྠ་གང་ག་ལ་བྱིན་ནས། གང་ག་ར་སྠ་ཞེས་བྱ་བའི་མིང་བྱུང་བར་གྱུར་ཏེ. Cp. *supra*, n. 1.

5) MS दृष्ट्वा.

6) Feer, p. 298 n. 3: «Le tibétain ajoute qu'il en eut peur. Un mot aurait-il été oublié dans le manuscrit népalais?». I do not think so. The Tibetan translator will have rendered °*bībhatsā* by a paraphrase.

कृत्वा चिन्तापरो व्यवस्थितः। तस्य बुद्धिरुत्पन्ना। वरमहं दण्डं दद्यां न चाहमेतामेतेषां दर्शयेयं सहदर्श[75a]नाच्चावगीतो[1] भविष्यामीति॥ अथ गङ्गो द्वारं बद्ध्वा पञ्च पुराणशतानि दण्डं गृहीत्वा गोष्ठिकानां मध्यं गतः॥ ततो दारिकाया महद्दौर्मनस्यमुत्पन्नम्। किं ममानेनैवंविधेन जीवितेन यत्र मे न च स्वामिचित्तं सुखितं न चाहं किमत्र प्राप्तकालमात्मानं
5 घातयिष्यामीति॥ ततो रज्जुं गृहीत्वा अवरकं प्रविष्टा उद्बन्धनहेतोः॥

अत्रान्तरे नास्ति किंचिद्बुद्धानां भगवतामज्ञातमदृष्टमविदितमविज्ञातम्। धर्मता खलु बुद्धानां भगवतां महाकारुणिकानां लोकानुग्रहप्रवृत्तानामेकारक्षाणां शमथविपश्यनाविहारिणां त्रिदमथवस्तुकुशलानां चतुरोघोत्तीर्णानां चतुर्ऋद्धिपादचरणतलसुप्रतिष्ठितानां पञ्चाङ्गविप्रहीणानां पञ्चगतिसमतिक्रान्तानां षडङ्गसमन्वागतानां षट्पारमितापा-
10 रिपूर्णानां सप्तबोध्यङ्गकुसुमाढ्यानामष्टाङ्गमार्गदेशिकानां नवानुपूर्वसमापत्तिकुशलानां दशबलबलिनां दशदिक्समापूर्णयशसां दशशतवशवर्तिप्रतिविशिष्टानां त्री रात्रेस्त्रिर्दिवसस्य[2] बुद्धचक्षुषा लोकं व्यवलोक्य ज्ञानदर्शनं प्रवर्तते। को हीयते को वर्धते कः कृच्छ्रप्राप्तः कः संकटप्राप्तः कः संबाधप्राप्तः कः कृच्छ्रसंकटसंबाधप्राप्तः को ऽपायनिम्नः को ऽपायप्रवणः को ऽपायप्राग्भारः कमहमपायादुद्धृत्य स्वर्गे मोक्षे च प्रतिष्ठापयेयं कस्यानवरो-
15 पितानि कुशलमूलान्यवरोपयेयं कस्यावरोपितानि परिपाचयेयं कस्य परिपक्वानि विमोचयेयम्। आह च।

> अप्येवातिक्रमेद्वेलां सागरो मकरालयः।
> न तु वैनेयवत्सानां बुद्धो वेलामतिक्रमेत्॥

ततो भगवता जेतवनावस्थितेन कनकवर्णा प्रभा उत्सृष्टा यया तद्गृहं सूर्यसहस्रेणे-

---

1) B °नाच्चावनीतो (गो above नी); this has become in C नाच्चावनागीतो, in D नाच्चावतीतो, in P नाचावनीतो.

2) MS त्रिरात्रेःत्रिर्दि°.

(1)वावभासितमृद्धा चोपसंक्रम्य तद्गलाद्बन्धनमवमुच्य दारिकां समाश्वासितवान्॥ (2)षण्णां स्थानानामाश्चर्याद्भुतो लोके प्रादुर्भावः। तथागतस्य तथागतप्रवेदितस्य(3) धर्मविनयस्य मनुष्यत्वस्य आर्यायतने (4)प्रत्याजात‹त्वस्ये›न्द्रियैरविकलत्वस्य कुशलधर्मच्छन्दकस्य आश्चर्याद्भुतो लोके प्रादुर्भावः॥ ततो भगवता तस्या दारिकायास्तथाविधा धर्मदेशना कृता यां श्रुत्वा विंशतिशिखरसमुद्गतं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रो(5)तापत्तिफलं साक्षात्कृतम्। ततो लब्धप्रसादया भगवान्भक्तेन प्रतिपादितः पटेन चाच्छादितः। ततो दारिकाया अपगता अलक्ष्मीर्लक्ष्मीः(6) प्रादुर्भूता देवकन्येव (7)चावरकमवभासमाना स्थिता। भगवानपि प्रक्रान्तः॥

ततो गो(8)ष्ठिकानां बुद्धिरुत्पन्ना। नूनमस्य भार्या परमदर्शनीया संवृत्ता' स एष ईर्ष्या-

---

1) Ex conject.; MS °सक्रमेणैवाव°.

2) This passage which contains the enumeration of the six states, the combined manifestation of which may be called a miracle, bears a striking appearance to a scholion that has crept into the text. If so, the interpolation must be an old one, for the Tibetan fully agrees with the original Sanskrit. The paraphrast (Açokāvadāna) passes over this topic.

3) I am not sure, whether B has प्रवेदितस्य or प्रवदितस्य; D has the former reading, P the latter one, C प्रवादितस्य.

4) Ex conject.; MS प्रत्याजातेन्द्रियै°. The Tibetan confirms the emendation. «The being born in the land of the Āryas» is thus expressed: འཕགས་པ་གནས་པར་སྐྱེ་བ་དང་།, «the intactness of all the organs of sense» thus: དབང་པོ་ཚང་བ་དང་།, where དབང་པོ is doubtless employed to render इन्द्रिय 'organ of sense'; cp. དབང་པོ 'witness' (*apud* Jäschke and Sarat). Feer (p. 299 n. 2) has misunderstood this passage.

5) Sandhi in MS, which spells here श्रोता°.

6) Visarga wanting in MS.

7) Ex conject., MS कन्येव अववरकमव° (D °अवचरकं अत्र°).

8) MS गोष्ठिकानां. As Boehtlingk rightly states (PWK II, 185), *gauṣṭhika*, not *goṣṭhika* is the correct form of the word, cp. also Pāṇini, 4, 4, 43. But,

प्रकृतिर्दण्डमुत्सहते दातुं न च तां दर्शयितुमिच्छति । यन्नु वयमेनं विरूढैर्मद्यैः पाययित्वा (1) ताडमादाय गृहमस्य गत्वा भार्यां पश्येमेति ॥ ततस्तैस्तं (2) घनघनेन विरूढमद्येन पानेन क्षीवं (3) कृत्वा ताडमपहृत्य (1) गृहं गत्वा द्वारमवमुच्य (4) दारिका दृष्टा । ततो दृष्ट्वा परं विस्मयमुपगताश्चिन्तयन्ति । स्थाने ऽसौ न दर्शयत्यस्माकमिति ॥ ततस्ते पुनरागत्य मद्यवशात्सुप्तमु- (5)

5 त्थाप्योचुः । लाभास्ते गङ्ग सुलब्धा यस्य ते एवंविधा दर्शनीया दारिकेति ॥ ततो गङ्गो भूयस्या मात्रया दुःखी दुर्मनाः संवृत्तः । दण्डः (6) स्वयं मया दत्तो ऽहं चावगीतो जात इति ॥ ततो दुर्मनाः (7) स्वगृहमागतः । द्वारमवमुच्य तां भार्यां दृष्टवान्वनदेवतामिव कुसुमितमध्ये (8) ऽतीव विभ्राजमानाम् । ततः पृच्छति भद्रे किमेतत् ' किं कृतो रूपविशेष इति ॥ ततस्तया यथावृत्तं स्वामिने समाख्यातम् । श्रुत्वा तेनापि भगवति श्रद्धा प्रतिलब्धा ॥

10 यावदसौ दारिका क्रमेण भर्तारमनुज्ञाप्य भगवच्छासने प्रव्रजिता । तया युज्यमानया घटमानया व्यायच्छमानया इदमेव पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारग-

---

save this one instance, MS has everywhere गोष्ठिक, likewise the Açokāv., and I suppose the author of Avadānaç. used this incorrect form. For an epigraphical instance of गौष्ठिक see S. Lévi, *Journal Asiat.*, 1904 Sept.-Oct., p. 230.

1) Ex conject.; MS ताडनादाय, and ताडनापहृत्य. *Tāḍa* must mean 'key', cp. Divyāv. 577, 21. 27 *tāḍaka* and PW, III, s. v. तालक 3) «Thürschloss». In Açokāv. ताड means 'lock' in this line, which is the paraphrase of *infra* l. 3 ताडमपहृत्य etc.:

ततस्ते गोष्ठिकास्तस्य गृहीत्वा ताडमोचनं (f. 260a 4).

2) Ex conject.; MS ततस्तेतं.

3) Ex conject.; MS त्तीपां (D त्तीनं). Cp. Açokāv., f. 260a 3, तं गङ्गं भोज्ननैर्मद्यैः क्षीवं कृत्वात्यमोहयन्.

4) MS द्वारानवमुच्य.

5) Ex conject.; MS मद्यतृषात्सुप्त°.

6) Ex conject.; MS दण्डस्वंमया (D ददस्वं—, P दण्डस्व—). Cp. Açokāv. f. 260a 7 दण्डं स्वयं मया दत्तमवगी(cod. ती)तो भवामि च.

7) Visarga wanting in MS.

8) Ex conject.; MS कुसुमिते मध्ये. I accept कुसुमित = 'flowerbrightness of spring', cp. PW, V, 1314 s. v.

तीः शतनपतनविकरणाविध्वंसनधर्मतया पराहत्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्। अर्हन्ती संवृत्ता त्रैधातुकवीतरागा समलोष्टकाञ्चना आकाशपाणितलसमचित्ता वासीचन्दनकल्पा विद्याविदारिताण्डकोशा[1] विद्याभिज्ञाप्रतिसंवित्प्राप्ता भवलाभलोभसत्कार[75 b]-पराङ्मुखा सेन्द्रोपेन्द्राणां देवानां पूज्या मान्याभिवाद्या <च>[2] संवृत्ता ॥

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। किं भदन्त गङ्गरस्थया 5 कर्म कृतं येनाढ्ये कुले जाता किं कर्म कृतं येन विद्रूपा संवृत्ता प्रव्रज्य[3] चार्हत्त्वं साक्षात्कृतमिति ॥ भगवानाह। गङ्गरस्थयैव भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि। गङ्गरस्थया कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति। न भिक्षवः कर्माणि कृतानि बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ[4] न तेजोधातौ न वायुधातावपि तूपात्तेष्वेव[5] 10 स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि वाराणस्यां नगर्यामन्यतमा श्रेष्ठिभार्या चण्डा रभसा कर्कशा। असति बुद्धानामुत्पादे प्रत्येकबुद्धा लोक उत्पद्यन्ते हीनदीनानुकम्पकाः 15 प्रान्तशयनासनभक्ता एकदक्षिणीया लोकस्य। यावदन्यतरः प्रत्येकबुद्धस्तद्गृहं[6] प्रविष्टो विद्रूपः। स तया बह्व परिभाष्य गृहान्निष्कासितः केनायं विद्रूपो मम गृहे प्रवेशित

---

1) MS °कोशो.

2) D adds the wanting akṣara.

3) B प्रव्रज्या, P corr.

4) B नाव्धाधौ, DP corr.

5) Cp. *supra*, I, p. 74 n. 9.

6) B °स्तगृहं, above त some significant mark has been deleted, probably the anusv., P °स्तेगृहं, D corr.

इति । ततः प्रत्येकबुद्धस्तस्यानुग्रहार्थं[1] विततपक्ष इव हंसराजो गगणतलमभ्युद्गम्य वि-
चित्राणि ‹प्रातिहार्याणि›[2] विदर्शयितुमारब्धः । ततः श्रेष्ठिभार्यया विप्रतिसारजातया * *
* * *[3] ॥ यावदसौ क्षमितः[4] पिण्डकेन ‹प्रतिपादितश्च› प्रणिधानं ‹च› कृतम्[5] । यन्मया
प्रत्येकबुद्धः परिभाषितो मा अस्य कर्मणो विपाकमनुभवेयमेवंविधानां च धर्माणां लाभि-
5 नी स्यां प्रतिविशिष्टतरं ‹च› शास्तारमारागयेयमिति ॥

किं मन्यध्वे भिक्षवो यासौ श्रेष्ठिभार्या इयमसौ गङ्गरस्था । यदनया प्रत्येकबुद्धः

---

1) So MS. As to the irregular sandhi, cp. *supra*, I, 20 n. 6.

2) I have inserted the lost word conformably to the other occurrences of this commonplace, see f. i. *supra*, I, p. 122, 10. 136, 9. II, 4, 3 and Divy. 49, 19. Moreover Açokāv. (f. 262a 4) narrates this exploit of the Pratyekabuddha likewise: विचित्राणि प्रातिहार्याण्यदर्शयत्.

3) A few words have here been lost, which I denote by italicising their equivalent in Feer's translation (p. 300, 26): «Alors l'épouse du Çreṣṭhi éprouva du repentir, *si bien que disant 'Pardonne!' elle lui offrit des aumônes.*» Thus he rendered the Tibetan དེ་ནས་ཚོང་དཔོན་གྱི་ཆུང་མ་འགྱོད་པ་སྐྱེས་ནས་དེ་ལ་གཟོད་པས་གསོལ་ཏེ། But the paraphrast (Açokāv. f. 262a 4) developes the episode thus:

तानि सा प्रमदा दृष्ट्वा विप्रतीसारिताशया ।
सहसा साञ्जलिर्नत्वा प्रार्थयत्तं समादरात् ॥
तत्क्षमस्व महाभाग यन्मया प्रकृतं त्वयि ।
अवतरस्व प्रसीदात्र पिण्डं दास्यामि ते गुरो ॥

The lines 2—4, in the last of which pronounce *otarasva*, contain the elaborated content of the missing portion of Avadānaç.

4) Visarga wanting in MS.

5) Cp. Açokāv., f. 262a 5, proximate to the passage quoted in n. 3.

तयेत्यभ्यर्थिते सो ऽपि प्रत्येकसुगतस्ततः ।
पक्षिवच्च तथाकाशादवतीर्यासने ऽविशत् ॥
तमासनसमासीनं दृष्ट्वा सा प्रमदा मुदा ।
अभ्यर्च्य श्रद्धया तस्मै पिण्डपात(ms. त्र)मढौकयत् ॥

पिण्डकेन प्रतिपादितस्तस्य[1] कर्मणो विपाकेनाद्ये राजकुले प्रत्यागता। यद्विद्रूपावेन[2] समुद्राचर्य गृहान्निष्कासितस्तेन विद्रूपा संवृत्ता। भूयः काश्यपे भगवति प्रव्रजिता ग्रासीत्। तत्रानया पठितं स्वाध्यायितं स्कन्धकौशलमायतनकौशलं प्रतीत्यसमुत्पादकौशलं स्थानास्थानकौशलं कृतं ब्रह्मचर्यवासश्च परिपालितः। तेनेदानीमर्हत्त्वं साक्षात्कृतम्। इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रस्तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम्॥ 5

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्[3]॥

---

1) B प्रतिपातितस्त°, D corr.

2) Cp. Açokāv., f. 262 b 1, यद्विद्रूपावेन यतिर्निष्कासितो मया.

3) After the conclusion of this avad., MS has this colophon: इत्यवदानशतकेऽष्टम्युद्दानगाथा समाप्ता॥ ८०॥

## नवमो वर्गः।

### [1]समुद्र इति ८१।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिस्सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकि-
5 न्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्ला-नप्रत्ययभैषज्यपरिष्काराणां[2] सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्डद-स्यारामे। श्रावस्त्यामन्यतमस्सार्थवाहस्तेन सदृशात्कुलात्कलत्रमानीतम्। स तया सार्धं क्रीडति रमते परिचारयति। तस्य क्रीडतो रममाणस्य परिचारयतो[3] बुद्धिरुत्पन्ना याव-दहं युवा तावद्धन[4]संचयं करोमि पश्चाद्वृद्धावस्थायां सुखं परिभोक्ष्ये इति॥ ततस्सार्थवाहः

---

1) The uddāna of the 9th varga, which precedes in MS, is somewhat disturbed; one title, that of avad. nr. 88 (कप्फिण), is wanting and the metre is partly perverted. It runs thus: उद्दानं समुद्रः सुमनाश्चैव हिरण्यपाणि[a]स्त्रिपिटेन च यशोमित्रोपपादौ च शोभितः [here five syllables are wanting, containing the name of Kapphiṇa]। भद्रिको राष्ट्रपालश्च वर्गो भवति समुद्दितः॥

(a) Read: हिरण्यस्त्रिपिटेन च, metri causa.

2) B परिस्काराणां, D corr.

3) MS परिचारयतः तस्य बुद्धिरु°, but तस्य is here superfluous in consequence of the habit of Buddhists of filling up the groundwork of their tales with the same standing phrases which they insert at each fresh occurrence of the same situation.

4) Ex conject.; B तावद्दह्(out of द)नसंचयं, the sign " signifies cancelling. Hence DP तावदहं न संचयं करोमि, cp. Feer, p. 304 n.; C still worse corrupted. Cp. Kalpadrumāv. nr. 9 (f. 54b 7), which paraphrases this as follows:

यावद्युवा गृहे स्थित्वा न करोमि धनार्जनम्।
पश्चाद्वृद्धो भवेयं हि किं भोक्ष्ये ऽहं सुखं तदा॥

पञ्चवणिक्[1]शतपरिवारो [2]यानपात्रमादाय भार्यासहायो महासमुद्रमवतीर्णः ॥ यावदस्य प्रजापती आपन्नसत्त्वा जाता। यावत्तत्रैव समुद्रमध्ये प्रसूता। दारको जातो[3] ऽभिरूपो दर्शनीयः प्रासादिकः। तस्य जातौ जातिमहं कृत्वा नामधेयं व्यवस्थापितं यस्मात्समुद्रमध्ये जातस्तस्मात्समुद्र इति नाम[4] ॥ यावदसौ सार्थवाहः स्वस्तिक्षेमाभ्यां संसिद्धयानपात्रो महासमुद्रात्प्रत्यागतः ॥ 5

यदा समु[76 a]द्रो दारको महान्संवृत्तस्तदा पित्रा सार्थवाहत्वे प्रतिष्ठाप्य पञ्चवणिक्[1]शतपरिवारो महासमुद्रं[5] संप्रेषितः। सो ऽनुपूर्वेण चञ्चूर्यमाणो ग्रामनगरनिगमराष्ट्र[6]-राजधानीपट्ट[7]नान्यवलोकयन्समुद्रतीरमनुप्राप्तः ॥ स पञ्चभिः पुराणशतैर्वहनं भृत्वा[8] पञ्च पौरुषेयान्गृहीत्वा[9] आहारं नाविकं कैवर्तं कर्णधारं च[10] ⟨त्रिरपि⟩ घण्टावघोषणं कृत्वा

---

1) MS °वणिच्छत°.

2) Between परिवारः and यानपात्र° MS has four akṣaras, which are to be read सहामुद्रं, it seems, the second being somewhat uncertain. Probably they are the corrupted remnant of a dittography, महासमुद्रम् follows immediately, and it would be far-fetched to suppose the adj. माहासमुद्रं is intended = 'a vessel to make a sea-journey, a sea-ship'.

3) MS जातः। अभि°.

4) Probably there is something lost here, the full sentence must be नामास्य भवत्विति or the like. From यस्मात् to नाम is written in B as a marginal addition.

5) Anusvāra wanting in MS.

6) B रोष्ट्र, DP corr.

7) Ex conject., according to the parallel passage, *supra*, I, p. 200, 4; MS °राजधनीषुपट्ट°.

8) Ex conject., cp. *supra*, I, p. 200, 5; MS कृत्वा. The same clerical error is found in the parallel passage in K (f. 59 b 4).

9) MS °षेयागृहीत्वा.

10) Here the same applies, as is discussed *supra*, I, p. 200, n. 6. The insertion of त्रिरपि is suggested both by the parallel passage quoted and by Feer's translation 'après trois sonneries de cloches', cp. his p. 305 n. 1, where 'sanscrit'

महासमुद्रमवतीर्णः ॥ ततस्तेषां समुद्रमध्यगतानां कालिकावातेन तद्वहनमितश्चामुतश्च परिभ्राम्यते। समुद्रश्च सार्थवाहस्तीर्थिकाभिप्रसन्नः। सो[1] ऽकालमृत्युभयभीतः षट् शास्तृना-याचितुं[2] प्रवृत्तः। तथापि तद्वहनं वायुना भ्राम्यत एव[3]। यावदन्ये वणिजो देवतासहस्रा-एयायाचितुं प्रवृत्ता आहुश्च[4]।

5 शिववरुणकुबेरा[5] वायुरग्निर्महेन्द्रो
[6]भुवि च तुविमघो ‹यो› विश्वदेवो महर्षि-।

---

is to be read for 'tibétain'. On the other hand, घण्टावघोषणां which our text has here, should probably also be restored *supra*, I, p. 200, 6. — As to the five *pauruṣeyās* specified both in avad. nr. 36 and here, cp. also Beal's translation of Fo-pan-hhiṅ-tsi-kiṅ (Bunyiu Nanjio's *Catalogue*, nr. 680) 'The Romantic Legend of Sâkya Buddha' p. 332.

1) B सो, somewhat indistinctly. A sec. manus has put above it सा, which is, accordingly, the reading of DCP.

2) MS °याषितुं.

3) Ex conject.; MS भ्राम्यते एवं.

4) MS आह च.

The metrical portion that follows is a mālinī-strophe in an miserably damaged condition. It is the counterpart of the aupacchandasika-strophe in Divy. 41, 16 foll., which I have tried to emend in *W. Z.*, XVI, 109. In K's paraphrase the tempest, the perilous situation of the merchants, and the prayers of the crew to an immense number of deities are spun out at length, but our mālinī verses are passed over. I have ventured to restore the stanza, as best I could, by conjecture.

5) Ex conject.; MS °कुवेर.

6) Ex conject.; B भुविचतुविसघोविश्व°, the first akṣara is somewhat indistinct, in C it has been copied तु, in D भु, in P त्र. That भुवि is right, appears from the Tibetan, where ས་ལ་གནས་ answers to it. The being invoked in pāda *b* is a Nāga according to the acceptation of the Tibetan translator who names this terrestrial deity ཀླུ. At all events, it is designated by some rhetorical periphrasis the exact meaning of which is not certain. Though *tuvimagha* is Vedic, not classical, there are such strong indications for that epithet being used here to denote Viçvadeva — in the Veda it is applied to Indra and the Maruts — that I have put it into the text. Nor would this be the only Vedism in Buddhistic Sanskrit.

वयमिह मरणार्ता वः प्रपन्नाः स्म शीघ्रं[1]

व्यसनमिदमुपेतं त्रातुमिच्छन्तु सार्धम्[2]॥

ततस्तेषामेवमपि परिदेवमानानां नास्ति कश्चित्त्राता ॥ यावत्तत्रान्यतम उपासक‹ः स›- मारूढः। स उवाच। किं वो भवन्तः षट् क्शास्तार[3] अन्ये च देवताः करिष्यन्ति। बुद्धं भग- वन्तं प्रत्यन्तदेवतं[4] भावेन शरणं प्रपद्यध्वं स वस्त्राता भविष्यतीति। ततः समुद्रप्रमुखाणि 5 पञ्च वणिक्छतानि[5] एकरवेण भगवन्तं शरणं प्रपन्नानि॥

अत्रान्तरे नास्ति किंचिद्बुद्धानां भगवताम‹ज्ञातम›दृष्टमविदितमविज्ञातम्। धर्मता खलु बुद्धानां भगवतां महाकारुणिकानां लोकानुग्रहप्रवृत्तानामेकारक्षाणां शमथविपश्य-

---

1) Ex conject.; MS मरणार्तास्त्रास्ततः प्रसन्नास्म शीघ्रं, with two syllables too many and without any proper meaning. My emendation is supported by the Tibetan, cp. the following note.

2) I greatly doubt the genuineness of *icchantu*, for which one would rather expect *arhantu*; the Tibetan translator has rendered this fourth pāda too freely to throw light on this point. I give here from the Kanjur the Tibetan counterpart of the metrical prayer in full.

pāda *a*: གུ་ལང་ཆུ་ལྷ་ཀུ་བེ་ར་དང་རླུང་ལྷ་མེ་ལྷ་དབང་ཆེན་དང་།

pāda *b*: དྲང་སྲོང་སྣ་ཚོགས་ལྷ་དང་ས་ལ་གནས་པའི་ཀླུ་མཛེ་དེ་དག་ལ།

pāda *c*: བདག་ཅག་དད་པ་ལགས་ཀྱིས་བདག་ཅག་འི་ངན་འཆི་བ་འི་གནོད་བྱུང་ ལགས།

pāda *d*: མྱུར་དུ་སྡུག་པ་སྡུ་ལ་འདི་དག་བསལ་ཏེ་འདྲེན་པོ་རྣམས་ན་བསྐྱབ (reading somewhat uncertain) 'པར་གསོལ॥

3) B पट्क्शासारः, a corruption easy to correct but which has greatly perturbed the copyists. The scribe of C wrote प + gap of one akṣ. + सारं, that of D पश्यासार, that of P यघासारं, which occasioned Feer's note 4 on p. 305. — The masc. अन्ये देवताः (sic) is found in MS.

4) Sic MS. Cp. the foregoing note. D has here °देवतद्धात्रेन.

5) MS °णिच्छतानि, cp. *supra*, p. 61 n. 1. In the sequel the word is spelt without fault.

नाविकारिणां त्रिदमथवस्तुकुशलानां चतुरोघोत्तीर्णानां चतुर्ऋद्धिपादचरणतलसुप्रतिष्ठि-
तानां पञ्चाङ्गविप्रहीणानां पञ्चगतिसमतिक्रान्तानां षडङ्गसमन्वागतानां षट्पारमिताप-
रिपूर्णानां सप्तबोध्यङ्गकुसुमाढ्यानामष्टाङ्गमार्गदेशिकानां नवानुपूर्वसमापत्तिकुशलानां <द-
शबलबलिनां> दशदिक्समापूर्णयशसां दशशतवशवर्तिप्रतिविशिष्टानां [1]त्री रात्रेस्त्रिर्दिव-
5 सस्य बुद्धचक्षुषा लोकं व्यवलोक्य ज्ञानदर्शनं प्रवर्तते । को हीयते को वर्धते कः कृच्छ्र-
प्राप्तः कः संकटप्राप्तः कः संबाधप्राप्तः कः कृच्छ्रसंकटसंबाधप्राप्तः को ऽपायनिम्नः को ऽपा-
यप्रवणः को ऽपायप्राग्भारः कम[2]<हम>पायादुद्धृत्य स्वर्गे मोक्षे च प्रतिष्ठापयेयं कस्यानव-
रोपितानि कुशलमूलान्यवरोपयेयं कस्यावरोपितानि परिपाचयेयं कस्य परिपक्वानि वि-
मोचयेयम् । आह च ।

10 अप्येवातिक्रमेद्वेलां सागरो मकरालयः ।
न तु वैनेयवत्सानां बुद्धो वेलामतिक्रमेत् ॥

यावद्भगवता जेतवनावस्थितेन सूर्यसहस्रातिरेकप्रभाः[3] कनकवर्णा मरीचय उत्सृष्टा
यैस्ते[4] वणिजः समन्तादवभासिताः[5] कल्पसहस्रपरिभाविताश्चांशव उत्सृष्टा यैः प्रह्लादिताः
कालि[6]कावातश्च प्रत्यागतः ॥

15 यावत्समुद्रः स्वस्तिक्षेमाभ्यां संसिद्धयानपात्रः प्रत्यागतस्तेनैव मरणसंवेगेन दान-
प्रदानानि दत्त्वा बन्धुजनं समाश्वास्य [7]श्रमणब्राह्मणकृपणवनीपकान्संतर्प्य पञ्चवणिक्छ-

---

1) MS त्रिरात्रेस्त्रिर्दिव°.

2) P fills the gap.

3) Ex conject., cp. the parallel passage *supra*, I, p. 31, 8; MS °कप्रभकनक°, where भ is written between the lines (D °कप्रभःकनक°). For परिभाविताश्चांशव (l. 13) one would likewise expect °विताश्च मैत्र्यंशव. Feer has indeed, «il lança aussi des rayons d'amour» (p. 306, 8).

4) MS यैस्तैर्वणिजः.

5) B °भाषिताः, D corr. Cp. *supra*, I, 189, n. 8.

6) B कालिकवा°, D corr., cp. *supra*, p. 62, 1 and Divy. 41, 11. 42, 10. 229, 24.

7) MS ब्रह्मणब्राह्मण°.

तपरिवारो भगवच्छासने प्रव्रजितः ॥ तेन युज्यमानेन घटमानेन व्यायच्छमानेनेदमेव पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः शतनपतनविकरणविध्वंसनधर्मतया पराहत्य सर्वक्लेशप्रहाणादर्हत्वं साक्षात्कृतम् । अर्हन्संवृत्तस्त्रैधातुकवीतरागः समलोष्टकाञ्चन आकाशपाणितलसमचित्तो वासीचन्दनकल्पो विद्याविदारिताण्डकोशो विद्याभिज्ञाप्रतिसंवित्प्राप्तो भवलाभलोभसत्कारपराङ्मुखः सेन्द्रोपेन्द्राणां देवानां पूज्यो मान्यो ऽभिवाद्यश्च संवृत्तः ।

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः । आश्चर्यं भदन्त यद्भगवता इमानि समुद्रप्रमुखानि पञ्च वणिक्छतानि इष्टेन जीवितेनाच्छादितानि व्यसनात्परित्रातानि[1] अत्यन्तनिष्ठे ‹च› निर्वाणे प्रतिष्ठापितानीति ॥ भगवानाह । किमत्र भिक्षव आश्चर्यं यदिदानीं मया विगतरागेण विगतद्वेषेण विगतमोहेन परिमुक्तेन जातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासैः इमानि समुद्रप्रमुखानि पञ्च वणिक्छतानि इष्टेन जीवितेनाच्छादितानि व्यसनात्परित्रातानि अत्यन्तनिष्ठे च निर्वाणे प्रतिष्ठापितानि । यत्तु[2] मयातीते ऽध्वनि सरागेण सद्वेषेण समोहेनापरिमुक्तेन जातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासैः इमे[3] वणिजः परित्रातास्तच्छृणुत साधु च सुष्ठु च मनसि कुरु‹त› भाषि[76 b]ष्ये ॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वन्य‹न्य›तमस्मिन्समुद्रतीरे पञ्चाभिज्ञ ऋषिः प्रतिवसति कष्टतपा[4] मूलफलाम्बुभक्षो ऽजिनवल्कलवासी अग्निहोत्रकः । स च कारुणिको महात्मा धर्मकामः प्रजावत्सलो व्यसनगतानां परित्राता ॥ यावद्वाराणस्यां पञ्च वणिक्छतानि

---

1) Ex conject.; MS व्यसनार्थपरि°.

2) MS यत्तु.

3) Ex conject.; MS इदंमेवँणिजः, the sign ◡ refers to the akṣaras यानेव added at the bottom of the page. I take them for a false correction and think we have only to cancel the akṣ. दं, then all is right. Of B's copies C has इदंमेयानेवणिजः, P इदमेयानेववणिजः, D इदंमेवणिजः, overlooking the foot-correction.

4) Ex conject.; BC कष्टतपा, DP कष्टतया.

समुद्रमवतर्तुकामानि । तान्यनुपूर्वेण चङ्क्रम्यमाणानि समुद्रतीरमनुप्राप्तानि । तमृषिं दृष्ट्वा प्रसादजातानि पादयोर्निपत्य विज्ञापयितुमारब्धानि । यद्यस्माकं भगवन्समुद्रमध्यगतानां किंचिद्व्यसनमुत्पद्येत भगवता तावदेते परित्रातव्या इति । तेनाधिवासितमेवं भवत्विति ॥ ततस्ते वणिजो रत्नान्यादाय जम्बुद्वीपाभिमुखाः संप्रस्थिताः । यावत्कालिकया रात्रस्या 5 संत्रासितुमारब्धाः[1] । ततस्तेन ऋषिणा परित्राताः ॥ ततः संसिद्धयानपात्राः प्रत्यागता ऋषिसमीपमुपगम्योचुः । भो महर्षे अनेन दुष्करेण व्यवसायेन कारुण्यभावाच्च[2] किं प्रार्थयस इति ॥ तेनोक्तम् । अन्धे लोके ऽनायके बुद्धो भूयासमतीर्णानां[3] सत्त्वानां तारयिता अमुक्तानां मोचयिता अनाश्वस्तानामाश्वासयिता अपरिनिर्वृतानां परिनिर्वापयितेति ॥ तैरुक्तम् । यदा त्वं बुद्धो भवेस्तदास्मानपि समन्वाहरेथा इति ॥ ऋषिराह । एवमस्त्विति ॥

10 किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन ऋषिरासीदहं सः । ये ते वणिज इमे ते समुद्रप्रमुखास्तदाप्येते मया परित्राताः । भूयः काश्यपे भगवति प्रव्रजिता बभूवुः । तत्रैभिरिन्द्रियपरिपाकः कृतस्तेनेदानीमर्हत्त्वं साक्षात्कृतम् । इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रस्तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि <च> एका-15 न्तशुक्लेष्वेव कर्मस्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

1) Cp. *supra*, I, 95 n. 9.

2) Ex conject.; MS कारुण्यभावाथ (P °वार्थ).

3) B भूयामम°, D corr.

---

## सुमना इति ८२ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुड-किन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयना-सनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपि- 5 ण्डदस्यारामे । श्रावस्त्यामन्यतमो गृहपतिराढ्यो महाधनो महाभोगो विस्तीर्णविशाल-परिग्रहो वैश्रवणधनसमुदितो ‹वैश्रवणधनप्रतिस्पर्धी›। तेन सदृशात्कुलात्कलत्रमानीतम्। स तया सार्धं क्रीडति रमते परिचारयति । तस्य क्रीडतो रममाणस्य परिचारयतः पुत्राः प्रजायन्ते च म्रियन्ते च[1]॥ तस्मिंश्च गृहे स्थविरो[2] ऽनिरुद्धः कुलोपगतः । ततो गृहपतेरियं बुद्धिरुत्पन्ना । अयं स्थविरानिरुद्धो विपाकमहेशाख्यः[3] । एतं तावदायाचिष्ये यदि मे 10 पुत्रो जायते अस्य पश्चाच्छ्रमणं दास्यामीति ॥ ततो गृहपतिना स्थविरानिरुद्धो ऽन्तर्गृहे भक्तेनोपनिमन्त्रितः । ततः पिण्डकेन प्रतिपाद्यायाचितः स्थविर यदि मे पुत्रो जातो जी-

---

1) MS **मृयन्ते च**. A similar misfortune see *supra*, I, p. 195, 6.

2) I assume that *kulopagata* means that Aniruddha was a constant visitor of the family to which our householder belonged. — P has here, too, स्थविरानि°, as is written in MS throughout in the sequel.

3) So MS. I have altered nothing, though the expression is extremely concise; *vipākamaheçākhya* denotes one who has obtained high powers in consequence of the maturing of his Karma. Feer translates (p. 310, 1) «grandement renommé par les mérites qu'il a mûris» (རྣམ་པར་སྨིན་པ). In Kalpadrum. nr. 18, the paraphrase of our avadāna, there is nothing found corresponding to विपाक: f. 145b 8 अनिरुद्धो महेशाख्य आयुष्मान्भिक्षुरायया.

वति स्थविरस्य पश्चाच्छ्रमणं दास्यामीति ॥ स्थविरानिरुद्धेनोक्तमेवमस्तु किं[1] तु स्मर्तव्या ते प्रतिज्ञेति ॥

यावदपरेण समयेन पत्न्या सार्धं क्रीडति रमते परिचारयति । तस्य क्रीडतो रमनाणस्य परिचारयतः पत्नी आपन्नसत्त्वा संवृत्ता । तस्याः कायात्सुरभिर्गन्धः[2] प्रवाति । याव5 न्नवानां मासानामत्ययात्प्रसूता । दारको जातो अभिरूपो दर्शनीयः प्रासादिको दिव्यसुमनःकञ्चिकया प्रावृतः[3] । तस्य जातौ जातिमहं कृत्वा सुमना इति नामधेयं व्यवस्थापितम् । ततः स्थविरानिरुद्धमन्तर्गृहे[4] भक्तेनोपनिमन्त्र्य स दारको निर्यातितः । ततः स्थविरानिरुद्धेनास्मै काषायाणि दत्तानि आशीर्वादश्च[5] दीर्घायुर्भवत्विति ॥

यदा सप्तवर्षो जातस्तदा मातापितृभ्यां स्थविराय दत्तः । ततः स्थविरानिरुद्धेन
10 प्रव्राज्य[6] मनसिकारो दत्तः । तेन युज्यमानेन घटमानेन व्यायच्छमानेनेदमेव[7] पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः शतनपतनविकरणविध्वंसनधर्मतया पराहत्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम् । अर्हन्संवृत्तस्त्रैधातुकवीतरागः[8] [77a] समलोष्टकाञ्चन आकाशपाणितलसमचित्तो वासीचन्दनकल्पो विद्याविदारिताण्डकोशो[9] विद्याभिज्ञाप्रतिसंवित्प्राप्तो भवलाभलोभसत्कारपराङ्मुखः सेन्द्रोपेन्द्राणां देवानां पूज्यो मान्यो ऽभिवाद्यश्च

---

1) B कितु, DP corr.

2) MS सुरभिगन्धः.

3) Ex conject.; MS प्रावृतया. Feer, p. 310, 10 (cp. his notes 2 and 3) translates «couvert d'un duvet de sumanâ divin». In the later reference to this miracle (*infra*, p. 70, 8) we find somewhat different words दिव्यया च सुमनसां कञ्चुकया. There all MSS have कञ्चुकया, here B has कञ्चिकया, DP कञ्चकया. The Tibetan rendering of *kañcikā* or *kañcukā* is ཀ་འུ་ཅུད་.

4) B स्थविराणि°, D corr.

5) B आशीवाद°, D corr.

6) Ex conject.; MS प्रव्रज्या.

7) B °दमेवं, DP corr.

8) MS °कृतमर्हत्संवृ° (D °कृतमर्हत्वंसंवृ°).

9) B °काषो, D corr.

संवृत्तः । स च तीक्ष्णेन्द्रियो यदा[1] पांसुकूलं प्रतिसंस्करोति तदा एकैकस्मिन् सूचीप्रदेशे[2] अष्टौ विमोक्षान्समापद्यते च[3] व्युत्तिष्ठते च ॥

यावदपरेण समयेन स्थविरानिरुद्धेनोक्तो[4] गच्छ पुत्रक नद्या अजिरवत्या उदकमानयेति । ततः सुमनाः श्रमणोद्देशो[5] घटमादायाजिरवतीमवतीर्णः । तत्र[6] स्नात्वा उदकस्य घटं पूरयित्वा विहायसं प्रस्थितः[7] । अग्रतो घटो गच्छति ततः[8] सुमनाः श्रमणोद्देशः ॥ तस्मिंश्च समये भगवान्प्रतिसंलयनाद्व्युत्थाय चतसृणां पर्षदां धर्मं देशयति । तत्र भगवानायुष्मन्तं शारिपुत्रमामन्त्रयते । इमं पश्य शारिपुत्र श्रमणोद्देशमागच्छन्तमुदकस्य घटं पूरयित्वा स्मृतिमन्तं सुसमाहितेन्द्रियम् ।

[9] छित्वा रागं च द्वेषं च अभिध्यां च विरागयन् ।
‹सं›धारयन्निमं देहं शोभते उदकहारकः ॥

---

1) MS यान्सु° (D यात्सु°).

2) MS शूची°.

3) Ex conject.; MS समापद्यतेवव्युत्तिष्ठते च. I do not agree with Feer's translation (p. 310, 25) «il atteignait les huit délivrances et s'élevait (jusqu'à elles)». The meaning of the phrase is this: «with each stitch of the needle, he at once attained by meditation the 8 *vimokṣās* and from that meditation came back to his sewing». For the *vimokṣās* see Dharmasaṃgraha LIX.

4) B स्थविराणि°, D corr.

5) B श्रवणो° throughout, and likewise its copies, only D has श्रमणो° except the first time.

6) Ex conject.; B °वतीर्षस्तंस्नात्वा, hence P °र्णास्ततस्नात्वा, D °र्णास्तंस्नात्वा. Cp. K., f. 150 a 6 तत्र नद्यां स्वयं स्नात्वा पूरयित्वाम्बुना घटं.

7) I have followed D's correction, B प्रतिस्थः. It might also be thought of प्रतस्थे.

8) MS ततो.

9) K., f. 150 a 8, keeps in its paraphrase this çloka with but a few slight variations:

छित्वा रणं च रागं च अभिधां (sic) च विरागयन् ।
संधारयन्निमं देशं (sic) शोभते जलहारकः ॥

From this I have supplied the first syllable in the second line of our text, which

यदा भगवता सुमनाः श्रमणोद्देशो भिक्षुसङ्घस्य पुरस्तात्स्तुतः प्रशस्तश्च तदा भिक्षूणां संदेहो जातः। कानि भदन्त सुमनसा कर्माणि कृतान्युपचितानि येनाभिरूपो दर्शनीयः प्रासादिको दिव्यया च सुमनसां[1] कञ्चुकया प्रावृतो जातस्तोद्दणेन्द्रियो[2] ऽर्हत्त्वं च प्राप्तमिति[3]॥ सुमनसैव भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि
5 परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि। सुमनसा तानि कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति। न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ[4] न तेजोधातौ न वायुधातावपि[5] तूपात्तेष्वेव स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि।
10 सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम्॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि एकनवते कल्पे विपश्यी[6] नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान्। स बन्धुमतीं राजधानीमुपनिश्रित्य[7] विहरति॥ यावदन्यतमः सार्थवाह-

---

is missing in MS. In B अभिध्यां was not written at the outset, but अभिध्यां; now the last akṣara has been blotted out and a sign put above it that refers to the marginal correction ध्यां. Yet C and P have ध्यां, D alone has ध्यां. *Abhidhyā* is a synonym of *lobha*, cp. Buddhacarita II, 44, Mhv. III, 52, 7 and *abhidhyālu* Divy., 301, 24. Again, the Tibetan translation points not to the reading अभिध्यां, but to अविद्यां, see Feer, p. 311, n. 3, whether the translator used bad manuscripts or, what is more likely, did not understand the word *abhidhyā*.

1) Ex conject.; MS सुमनस्यांकंचुकया, cp. *supra*, p. 68 n. 3.

2) MS °क्षणेन्द्रियार्ह°. K., f. 150b 4, adds this question, why he बाल्ये प्रव्रजितो भूत्वा सातादर्हत्त्वमवत्यपि.

3) In the following भगवानाह। the regular introduction of this commonplace seems to have been wanting in the mss. of the Tibetan translator, too.

4) B °ब्धाधौ, DP corr.

5) Cp. *supra*, I, p. 74, n. 9.

6) Cp. *supra*, I, p. 137 n. 7.

7) MS °निसृत्य.

स्तस्य तरुणावस्थायां प्रव्रज्याचित्तमुत्पन्नम्। तेन न शकितं[1] प्रव्रजितुम्। यदा वृद्धो भूत-
स्तदा तस्य विप्रतिसारो जातो न मे शोभनं कृतं यदहं भगवच्छासने न प्रव्रजित इति।
ततस्तेन केशनखस्तूपे सुमनःपुष्पारोपणं कृतं विपश्यी च सम्यक्संबुद्धः सश्रावकसङ्घः पि-
ण्डकेन प्रतिपादितः। ‹ततस्तेन›[2] पादयोर्निपत्य प्रणिधानं कृतम्। अनेनाहं कुशलमूलेन
चित्तोत्पादेन देयधर्मपरित्यागेन चानागतान्सम्यक्संबुद्धानारागयेयं[3] यस्य[4] च शासने प्रव्रजेयं 5
तत्र दहरावस्थायामार्यधर्मानधिगच्छेयमिति॥ भूयः काश्यपे भगवति प्रव्रजितो बभूव।
तत्रानेन दश वर्षसहस्राणि ब्रह्मचर्यावासः परिपालितः। तेनेदानीमर्हत्त्वं साक्षात्कृतम्।
इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाक एकान्तशुक्लानामेकान्तशुक्लो
व्यतिमिश्राणां व्यतिमिश्रस्तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमि-
श्राणि चैकान्तशुक्लेष्वेव[5] कर्मस्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम्॥ 10

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्॥

---

1) Ex conject., cp. my *Sanskrit Syntax* § 387 R.; MS शक्तितं or शक्कितं.

2) I have filled up the small gap by conjecture; Feer, p. 312,4 «après quoi, il tomba à ses pieds», K., f. 151 b 1 ततश्च भगवत्पादौ नत्वा प्रणिदधे तथा.

3) The Tibetan translator must have read आरागयेयं न च विरागयेयं, cp. *supra*, p. 30, 5. 40, 4.

4) Ex conject.; MS तस्य. My correction is one of more possibilities; येषां or यत्र would do also.

5) B °केष्वव, DP corr.

## हिरण्यपाणिरिति ८३ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रे-
ष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकि-
न्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्ला-
5 नप्रत्ययभैषज्यपरिष्काराणां[1] सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्डद-
स्यारामे । श्रावस्त्यामन्यतमो गृहपतिराढ्यो[2] महाधनो महाभोगो विस्तीर्णविशालपरि-
ग्रहो वैश्रवणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी । [77 b] न[3] चास्य पुत्रो न दुहिता । स
करे कपोलं दत्त्वा चिन्तापरो व्यवस्थितः[4] । अनेकधनसमुदितं[5] मे गृहं न मे पुत्रो न दुहिता ।
ममात्ययात्सर्वस्वापतेयमपुत्र<क>मिति[6] कृत्वा राजविधेयं भविष्यतीति । स श्रमणब्राह्मण-
10 सुहृत्संबन्धिबान्धवैरुच्यते देवताराधनं कुरुष्वेति ॥ अस्ति चैष लोके प्रवादो यदायाच-
नहेतोः पुत्रा जायन्ते दुहितरश्चेति । तच्च नैवम् । यद्येवमभविष्यदेकैकस्य पुत्रसहस्रमभ-
विष्यत्तद्यथा राज्ञश्चक्रवर्तिनः । अपि तु त्रयाणां स्थानानां संमुखीभावात्पुत्रा जायन्ते
दुहितरश्च । कतमेषां त्रयाणाम् । मातापितरौ रक्तौ भवतः संनिपतितौ माता कल्या
भवति ऋतुमती गन्धर्वश्च प्रत्युपस्थितो भवति । एतेषां त्रयाणां स्थानानां संमुखीभावा-

---

1) B परिस्का°, DP corr.

2) MS गृहपति आ°.

3) MS ते[77 b]न चास्य, as if तेन introduced the standing phrase commemorative of the householder's marriage etc. But this passage is wanting here, as appears not only from the Tibetan, but also from the periphrase in Ratnāv., nr. 10 (f. 81 b 1).

4) B °स्थित अ° and *infra*, l. 12 °वर्त्तिन अपि.

5) MS समुदितो (D °दितः).

6) MS °पतेयमापुत्रमिति.

त्पुत्रा जायन्ते दुहितरश्च ॥ स चैवमायाचनपरस्तिष्ठ<त्य>न्यतमश्च सत्त्वो ऽन्यतमस्माद्देव-
निकायाच्च्युत्वा [1] तस्य प्रजापत्याः कुक्षिमवक्रान्तः । पञ्चावेणिका धर्मा एकत्ये पण्डितजा-
तीये मातृग्रामे । कतमे पञ्च । रक्तं पुरुषं जानाति विरक्तं <पुरुषं> जानाति । कालं जानाति
ऋतुं जानाति । गर्भमवक्रान्तं जानाति । यस्य सकाशाद्गर्भो ऽवक्रामति [2] तं जानाति । दारकं
जानाति दारिकां जानाति । सचेद्दारको भवति दक्षिणं कुक्षिं निश्रित्य [3] तिष्ठति ॥ सा　5
आत्तमनाः [4] स्वामिन आरोचयति । दिष्ट्यार्यपुत्र वर्धसे आपन्नसत्त्वास्मि संवृत्ता यथा च मे
दक्षिणं कुक्षिं निश्रित्य [3] तिष्ठति नियतं दारको भविष्यतीति । सो ऽप्यात्तमनाः [5] पूर्वकायम-
भ्युन्नमय्य दक्षिणं बाहुमभिप्रसार्य उदानमुदानयति । अप्येवाहं चिरकालाभिलषितं पुत्रमुखं
पश्येयं जातो मे स्यान्नावजातः कृत्यानि मे कुर्वीत भृतः प्रतिबिभृयाद्दायाद्यं [6] प्रतिपद्येत
कुलवंशो मे चिरस्थितिकः स्यादस्माकं चाप्यतीत [7] कालगतानामल्पं वा प्रभूतं वा दानानि　10
दत्त्वा पुण्यानि कृत्वा<स्माकं नाम्ना> दक्षिणामादेक्ष्यते [8] । इदं तयोर्यत्रतत्रोपपन्नयोर्गच्छतोर-
नुगच्छत्विति । आपन्नसत्त्वां चैनां विदित्वोपरिप्रासादतलगतामयन्त्रितां [9] धारयति शीते
शीतोपकरणैरुष्णे [10] उष्णोपकरणैर्वैद्यप्रज्ञप्तैराहारैर्नातितिक्तैर्नात्यम्लैर्नातिलवणैर्नातिम-
धुरैर्नातिकटुकैर्नातिकषायैस्तिक्ता [11] म्ललवणमधुरकटुककषाय [11] विवर्जितैराहारैर्हारार्धहार-

---

1) Ex conject., cp. *supra*, I, p. 14 n. 4, p. 196, 6; MS तस्याः.

2) MS °र्भामवक्रामति.

3) MS निसृत्य.

4) Visarga wanting in MS.

5) MS °त्तमनापूर्वका°.

6) MS °भृयाद्दाया°.

7) MS चात्यतीत°.

8) B देक्ष्येते, D corr.

9) Anusvāra wanting in MS.

10) MS °रुष्णे.

11) In MS this is wholly corrupt; MS has °कषायैर्नात्यम्ललवण°. After तिक्त had disappeared by the depravation of the text, some copyist must have inserted that word between कटुक and कषाय where it has its place in MS.

विभूषितगात्रीमप्सरसमिव नन्दनवनविचारिणीं मञ्चान्मञ्चं पीठात्पीठमनवतरन्तीमधरां[1] भूमिम् । न चास्याः किंचिदमनोज्ञशब्दश्रवणं यावदेव गर्भस्य परिपाकाय ॥

साष्टानां वा <नवानां वा> मासानामत्ययात्प्रसूता । दारको जातो[2] ऽभिरूपो दर्शनीयः प्रासादिकः सर्वाङ्गप्रत्यङ्गोपेतः पाणिद्वये चास्य लक्षणाहतं कर्मविपाकजं दीनारद्वयम् । यदा तदपनीतं भवति तदा अन्यत्प्रादुर्भवति ॥ तस्य जातौ जातिमहं कृत्वा नामधेयं व्यवस्थाप्यते किं भवतु दार<क>स्य[3] नामेति । ज्ञातय ऊचुः । यस्मादस्य जातमात्रस्य पाणिद्वये लक्षणाहतं कर्मविपाकजं दीनारद्वयं प्रादुर्भूतं[4] तस्माद्भवतु दारकस्य हिरण्यपाणिरिति नामेति ॥ हिरण्यपाणिर्दारको ऽष्टाभ्यो धात्रीभ्यो दत्तो[5] द्वाभ्यामंसधात्रीभ्यां[6] द्वाभ्यां क्षीरधात्रीभ्यां द्वाभ्यां मलधात्रीभ्यां द्वाभ्यां क्रीडनिकाभ्यां धात्रीभ्याम् । सो ऽष्टाभिर्धात्रीभिरुन्नीयते वर्ध्यते[7] क्षीरेण दध्ना नवनीतेन सर्पिषा सर्पिर्मण्डेनान्यैश्चोत्तप्तोत्तप्तैरुपकरणविशेषैराशु वर्धते ह्रदस्थमिव पङ्कजम् ॥ स आढ्यो भद्रः[8] कल्याणाशय आत्महितपरहितप्रतिपन्नः कारुणिको महात्मा धर्मकामः प्रजावत्सलः । स यदा वीथीमवतीर्णो भवति तदा श्रमणब्राह्मणकृपणवनीपकान्दृष्ट्वा पाणिद्वयं प्रसारयति । ततो लक्षणाहतस्य हिरण्यसुवर्णस्य राशिः प्रादुर्भवति येन तान्संतर्पयति । तस्य यशसा सर्वा श्रावस्ती आपूर्णा ॥

यावद्धिरण्यपाणिर्दारको ऽपरेण समयेन जेतवनं निर्गतः । अथासौ ददर्श बुद्धं भग-

---

1) MS °रन्तीमवराभूमिं. Cp. *supra*, I, 197, 7. A variant is *adharimāṃ bhūmim*, as is found *supra*, I, 15, 6 and Divy. 99, 15.

2) MS जात अभि°.

3) D fills up the gap.

4) B प्राडुभू°, DP corr.

5) MS दत्ता.

6) MS द्वाभ्यांमत्स°, as usual.

7) Ex conject.; MS वर्द्धते.

8) B भद्रक°, D corr.

यत्तं द्वात्रिंशता महापुरुषलक्षणैः समलङ्कृतमशीत्या चानुव्यञ्जनैर्विराजितगात्रं व्यामप्र-
भा[78 a]लङ्कृतं सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकं सहदर्शनाच्चानेन
भगवतो ऽन्तिके चित्तं प्रसादितं प्रसादजातश्च भगवतः पादाभिवन्दनं कृत्वा पुरस्तान्निषण्णो
धर्मश्रवणाय। ततो ऽस्य भगवता धर्मो देशितः॥ स आयुष्मन्तमानन्दमिदमवोचत्। इच्छा-
म्यहमाचार्य भगवतः सश्रावकसङ्घस्य भक्तं कर्तुमिति। [1]स्थविरानन्देनोक्तो वत्स कार्षापणैः 5
प्रयोजनमिति। ततो हिरण्यपाणिना बुद्धप्रमुखस्य भिक्षुसङ्घस्य पुरस्तात्स्थित्वा पाणिद्वयं
प्रसार्य हिरण्यसुवर्णस्य महाराशिः [2]स्थापितो यं दृष्ट्वा सङ्घस्थविरो ऽन्ये च भिक्षवः स्थ-
विरानन्दश्च परं विस्मयमापन्नाः॥ ततो हिरण्यपाणिर्दारको बुद्धप्रमुखं भिक्षुसङ्घं भोज-
यित्वा भगवतः पुरस्तान्निषण्णो धर्मश्रवणाय। तस्य भगवता आशयानुशयं धातुं प्रकृतिं च
ज्ञात्वा तादृशी चतुरार्यसत्यसंप्रतिवेधिकी धर्मदेशना कृता यां श्रुत्वा हिरण्यपाणिदा- 10
रकेण विंशतिशिखरसमुद्गतं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा [3]स्रोतापत्तिफलं साक्षा-
त्कृतम्। दृष्टसत्यो ज्ञातीनां [4]भागसंविभागं कृत्वा [5]श्रमणब्राह्मणकृपणा[6]वनीपकान्संतर्प्य
मातापितरावनुज्ञाप्य भगवच्छासने प्रव्रजितः॥ तेन युज्यमानेन घटमानेन व्यायच्छमानेने-
[7]दमेव पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः शतनपतनविकरण-
विध्वंसनधर्मतया पराहत्य सर्वक्लेशप्रहाणादर्हत्वं साक्षात्कृतम्। अर्हन्संवृत्तस्त्रैधातुकवी- 15
तरागः समलोष्टकाञ्चन आकाशपाणितलसमचित्तो वासीचन्दनकल्पो विद्याविदारिता-
ण्डकोशो विद्याभिज्ञाप्रतिसंवित्प्राप्तो भवलाभ[8]‹लोभ›सत्कारपराङ्मुखः सेन्द्रोपेन्द्राणां देवा-
नां पूज्यो मान्यो ऽभिवाद्यश्च संवृत्तः।

1) B स्थविरो°, D corr.
2) I have adopted the correction of D. B has स्थापयितो.
3) MS श्रोताप°.
4) B भोग°, P corr.
5) B श्रवण, P corr.
6) BC पनीपकान्सं°. Cp. *supra*, p. 37 n. 1.
7) MS °दमेवं.
8) DP add the missing syllables.

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। कानि भदन्त हिरण्यपाणिना कर्माणि कृतानि येनास्य पाणिद्वये लक्षणाहतं दीनारद्वयं जातं प्रव्रज्य चार्हत्त्वं साक्षात्कृतमिति॥ भगवानाह। हिरण्यपाणिनैव भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि। 5 हिरण्यपाणिना कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यतीति। न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ न तेजोधातौ न वायुधातावपि तू[1]पात्तेष्वेव स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि।[2]
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम्॥

10 भूतपूर्वं भिक्षवो ऽतीते ऽध्वन्यस्मिन्नेव भद्रके कल्पे विंशतिवर्षसहस्रायुषि प्रजायां काश्यपो नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान्। स वाराणसीं नगरीमुपनिश्रित्य[3] विहरति ऋषिपतने मृगदावे। अथ काश्यपः सम्यक्संबुद्धः सकलं बुद्धकार्यं कृत्वेन्धनक्षयादिवाग्निर्निरुपधिशेषे निर्वाणधातौ परिनिर्वृतः। तस्य राज्ञा कृकिणा[4] शरीरे शरीरपूजां 15 कृत्वा समन्तयोजनश्चतू[5]रत्नमयः स्तूपः प्रतिष्ठापितः क्रोशमुच्चत्वेन। तत्र च स्तूपमहे वर्तमाने [6]द्यूतकरेण दीनारद्वयं तस्मिन्स्तूपे यष्ट्यां समारोपितम्। ततः पादयोर्निपत्य प्रणिधानं कृतवान्। यत्र यत्र जाये[7]यं तत्र तत्र हस्तगतेनैव सुवर्णेनेति॥

---

1) Cp. *supra*, I, p. 74 n. 9.

2) MS कर्माणिकल्पशतैरपि, the former अपि having been omitted, cp. *supra*, I, p. 74 n. 13.

3) MS °निसृत्य.

4) कृषिना in P (see Feer, p. 316, n. 1) is due to a mistake of the copyist, MS has कृकिना (sic).

5) MS चतुर°.

6) MS द्युत°. — According to Ratnāv., he made this offering to the *yaṣṭi*, when it was erected. 7) MS जायेयं.

भगवानाह। किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन द्यूतकर[1] आसी-
दयं स हिरण्यपाणिः। यदनेन स्तूपे दीनारद्वयं समारोपितं तेनास्यैवंविधो विशेषः
संवृत्तः। यत्प्रणिधानं कृतं तेनेदानीमर्हत्त्वं साक्षात्कृतम्। इति हि भिक्षव एका-
न्तकृष्णानां कर्मणामे[2]कान्तकृष्णो विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्य-
तिमिश्रस्तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्ले- 5
ष्वेव कर्मस्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम्॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्॥

---

1) MS द्युत°.

2) B कर्मणामका°, CDP corr.

# त्रिपिट इति ८४ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः [78 b] पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्डदस्यारामे । तेन खलु समयेन श्रावस्त्यां राजा प्रसेनजित्कौशलो[1] राज्यं कारयति ऋद्धं च स्फीतं च क्षेमं चाकीर्णबहुजनमनुष्यं च प्रशान्तकलिकलहडिम्बडमरं[2] तस्कररोगापगतं शालीक्षुगोमहिषीसंपन्नं प्रियमिवैकपुत्रकं राज्यं पालयति । यावदसौ देव्या सह क्रीडति रमते परिचारयति । तस्य क्रीडतो रममाणस्य परिचारयतः पत्नी आपन्नसत्त्वा संवृत्ता । अष्टानां वा नवानां वा मासानामत्ययात्प्रसूता । दारको जातः काषायवस्त्रं प्रावृत्य श्रमणवेषधारी[3] जातिस्मरश्च । स जातमात्रः पृच्छति किं भगवानिहैव श्रावस्त्यां शारिपुत्रमौद्गल्यायनकाश्यपानन्दप्रभृतयो वा महाश्रावका इति । ततो ऽस्य माता विस्मयहर्षपूर्णा कथयति । पुत्रक भगवानिहैव श्रावस्त्यां महाश्रावकाश्चेति ॥ यावदेषो ऽर्थो राज्ञः प्रसेनजितो निवेदितः । ‹पुत्रस्ते जातः›[4] काषायवस्त्रं प्रावृत्य श्रमणवेषधारी[3] जातिस्मरश्च । स भगवतो महाश्रावकाणां च प्रवृत्तिमन्वेषत इति ॥ ततो राज्ञा प्रसेनजिता तस्यानुग्रहार्थं भगवान्सश्रावकसङ्घो भक्तेनोपनिमन्त्रितः ॥ अथ भगवान्भिक्षुगणपरिवृतो भिक्षुसङ्घपुर-

---

1) B °कोशलो, D corr.

2) B डिम्वतमरं, P corr.

3) MS °वेश°, and likewise in the sequel.

4) As to this necessary addition, which restores the purport, if not the very words lost in the tradition of manuscripts, cp. Feer's note on p. 318. The Tibetan has ཁྱེད་ཀྱི་སྲས་.

स्कृतो येन राज्ञः प्रसेनजितो भक्ताभिसारस्तेनोपसंक्रान्त उपसंक्रम्य पुरस्ताद्भिनुसङ्घस्य प्रज्ञप्त एवासने निषण्णः। ततो राजा प्रसेनजित्कौशल्ः[1] पुत्रमुत्सङ्गे कृत्वा भगवतो दर्शयति। अयं मे भगवन्पुत्रो जातमात्र एव भगवन्तं स्मरति महाश्रावकांश्चेति ॥ ततो भगवांस्तं कुमारमामन्त्रयते। आरोग्यं ते त्रिपिटेति ॥ स कथयति। वन्दे तथागतमर्हन्तं सम्यक्संबुद्धमिति ॥ ततो राजा प्रसेनजित्परं विस्मयमापन्नः ॥ 5

यदा सप्तवर्षो जातस्तदा भगवच्छासने प्रव्रजितस्तैरेव[2] काषायैः प्रावृतः ॥ तेन युज्यमानेन घटमानेन व्यायच्छमानेनेदमेव पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः शतनपतनविकरणविध्वंसनधर्मतया पराहत्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्। अर्हन्संवृत्तस्त्रैधातुकवीतरागः समलोष्टकाञ्चन आकाशपाणितलसमचित्तो वासीचन्दनकल्पो विद्याविदारिताण्डकोशो विद्याभिज्ञाप्रतिसंवित्प्राप्तो भवलाभलोभसत्कारपराङ्मुखः सेन्द्रोपेन्द्राणां देवानां पूज्यो मान्यो ऽभिवाद्यश्च संवृत्तः ॥ 10

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। कानि भदन्त त्रिपिटेन कर्माणि कृतानि येन काषायवस्त्रप्रावृतो[3] जातः श्रमणवेषधारी जातिस्मरः प्रव्रज्य चार्हत्त्वं साक्षात्कृतमिति ॥ भगवानाह। त्रिपिटेनैव भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि। त्रिपिटेन कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति। न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ[4] न तेजोधातौ न वायुधातावपि तूपात्तेष्वेव[5] स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च। 15

---

1) MS कोशलो पुत्र° (D कौ°).

2) P has here °तस्तैचकाषायैः (cp. Feer, p. 319 n. 1). The good reading in B and its other copies agrees with the Tibetan translation. Likewise, *infra* p. 80, 6, P alone has कृमिन (Feer, ll. n. 2), whereas the other MSS have कृकिनः.

3) B प्रावृत्तो, D corr.

4) B नाव्धाधौ, DP corr.

5) Cp. *supra*, I, p. 74 n. 9.

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम्॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि अस्मिन्नेव भद्रके कल्पे विंशतिवर्षसहस्रायुषि प्रजायां काश्यपो नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकवि-
5 दनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान्। स वाराणसीं नगरीमुपनिश्रित्य[1] विहरति ऋषिपतने मृगदावे॥ यावद्राज्ञः कृकिणः पुत्र ऋषिपतनं गतः। अथासौ ददर्श बुद्धं भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः समलङ्कृतमशीत्या चानुव्यञ्जनैर्विराजितगात्रं व्यामप्रभालङ्कृतं [79 a] सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकं सह-
दर्शनाच्चास्य प्रसादो जातः। स प्रसादजातो भगवतः पादाभिवन्दनं कृत्वा पुरस्तान्निषण्णो धर्म-
10 श्रवणाय। तस्य भगवता आशयानुशयं धातुं प्रकृतिं च ज्ञात्वा तादृशी संसारवैराग्यिकी धर्मदेशना कृता यां श्रुत्वा संसारे दोषदर्शी निर्वाणे गुणदर्शी भूत्वा राजानं विज्ञापयामास। अनुजानीहि मां तात भगवच्छासने प्रव्रजिष्यामीति॥ राजोवाच। न शक्यमेतन्मया कर्तुं यस्मात्ते युवराज्याभिषेको नचिरेण भविष्यतीति॥ कुमारः कथयति। अलं मे राज्येन बहुदोषदुष्टधर्मसंपन्नेनावश्यमेवाहं भगवच्छासने प्रव्रजिष्यामीति॥ स पित्रा नानुज्ञातः।
15 तेनैको भक्तच्छेदः कृतः। द्वौ[2] त्रयो वा यावत्षड्भक्तच्छेदाः कृताः॥ ततो ऽस्य वयस्यैः राजा विज्ञप्तः। देव[3] अनुजानीहि कुमारं प्रव्रजितुं[4] मा हैव कालं करिष्यतीति॥ ततो राज्ञा पुत्रः[5] प्रतिज्ञां कारितस्तावत्ते ऽस्माकं दर्शनं न देयं यावत्त्रयः पिटका अधीता इति॥ यावदसौ पितरमनुज्ञाप्य भगवच्छासने प्रव्रजितः॥

---

1) MS °निसृत्य.

2) Ex conject., cp. *infra*, avad. nr. **90**, B f. 85 b; MS द्वेत्रयो वा (P द्व°).

3) B देवमनुज्ञा°, the interlinear म is evidently a wrong correction of a sec. m., in the copies it has been put instead of अ.

4) Anusvāra wanting in MS.

5) B राज्ञाय प्रति°, the sign ˘ refers to the bottom of the page, where we find पुत्रा to be inserted here. Hence all the copies have राज्ञा पुत्राय प्रति°. But the corrector meant पुत्रा (an alteration of पुत्रः) should be put for य, not before य.

तेन युज्यमानेन घटमानेन व्यायच्छमानेन नचिरेण त्रयः पिटका अधीताः। युक्तमुक्तप्रतिभानी[1] धार्मकथिकः संवृत्तः॥ तस्यैतदभवत्। यन्न्वहं पूर्विकां प्रतिज्ञां निर्यातयेयमिति। स पितुः सकाशं गतः। स पृष्टश्च किं पुत्रास्ति किञ्चिदधीतमिति॥ तेनोक्तं त्रयः पिटका इति॥ ततस्तेन पितुस्तादृशी धर्मदेशना कृता यां श्रुत्वा राजा आत्तमनाः[2] संवृत्तः। ततः प्रसादजातः कथयति। पुत्र केन ते प्रयोजनमिति॥ तेनोक्तम्। इच्छाम्यहं भगवन्तं 5 सश्रावकसङ्घमुपनिमन्त्र्य षड्भिः परिष्कारैराच्छादयितुमिति॥ राजा कथयति। यथेष्टं कुरुष्व विस्तीर्णं राजकुलमिति॥ ततस्त्रिपिटेन भगवान्विंशतिसहस्रपरिवारः प्रणीतेनाहारेण संतर्पित एकैकश्च भिक्षुः षड्भिः परिष्कारैराच्छादितः॥ ततः पादयोर्निपत्य प्रणिधानं कृतम्। यन्मया इदानीं कृच्छ्रेण प्रव्रज्या प्रतिलब्धा तथागते च <स>श्रावकसङ्घे कारा[2] कृता अनेनाहं कुशलमूलेन चित्तोत्पादेन देयधर्मपरित्यागेन च यत्र यत्र जायेय[3] तत्र 10 तत्र काषायवस्त्रप्रावृत एव[4] श्रमणवेषधारी[5] जातिस्मरश्च स्यामिति॥

---

1) Ex conject., cp. Divy. 329, 2 and 6. 493, 8 — in both places the two adjectives are accompanied by त्रिपिट as their samānādhikaraṇa —; MS युक्तमुक्ता अभिलाषी धार्मकथिकः. It is evident that अभिलाषी is badly corrupted; from the comparison with the places quoted from Divy., which likewise apply to monks and nuns thoroughly acquainted with the Tripiṭaka and able to expound the Law and to preach on its topics, the correction is very probable. That the third term must signify 'power of expounding' appears from its Tibetan equivalent སྤོབས་པ་ (preaching, expounding); the whole sentence is rendered thus: རིག་པ་དང་གྲོལ་བ་སྤོབས་པ་ཆོས་སྟོན་པར་གྱུར་ནས། Cp. also Childers, s. v., Kern, *Manual of Indian Buddhism*, p. 60, n. 2 and Cikṣāsamuccaya (ed. Bendall) 15, 13 foll., where from the Adhyāçayasaṃcodanasūtra is quoted a passage illustrative of the meaning of *pratibhāna*.

The corresponding çloka in R (f. 201 a 3) runs as follows:

युक्तमुक्तविधानज्ञः सर्वशास्त्रविशारदः।
त्रियानसमुपादेष्टा सद्धर्मकथिताभवत्॥

*kathitā* is here carelessly put for *kathayitā*.

2) Visarga wanting in MS.

3) MS जायेयं. Cp. *supra*, p. 76, 17.

4) MS एवं. 5) B श्रवण°, P corr.

भगवानाह। किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन कृकिणः पुत्रो ऽयं त्रिपिटः[1]। तेनैव हेतुना ग्राघे राजकुले पुत्रो जातो[2] ऽभिरूपो दर्शनीयः प्रासादिको जातिस्मरश्च संवृत्तः। इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रस्तस्मात्तर्हि[3] भिक्षव एकान्तकृष्णानि 5 कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम्॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्॥

---

1) The greater part of the arguments put forth in the identification seems to have been lost before the time when the text was translated into Tibetan. The Tibetan text closely agrees here with the transmitted original. The paraphrase of R supplies for that wanting portion this çloka: यदनेन पुरा तत्र काश्यपशासने मुदा। कारा (sic) कृता प्रणविवं प्रणिधानं कृतं तथा (f. 201 b 6).

2) So P. But in BCD °जात अभि°.

3) B °श्रस्तस्तात्तर्हि, DP corr.

## यशोमित्र इति ८५ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यत्नैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयत्नासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्डद- 5
स्यारामे । श्रावस्त्यामन्यतमस्सार्थवाह[1] आढ्यो महाधनो महाभोगो विस्तीर्णविशालपरिग्रहो वैश्रवणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी । तेन सदृशात्कुलात्कलत्रमानीतम् । स तया सार्धं क्रीडति रमते परिचारयति ॥ तेन खलु समयेन दुर्भिक्षमभूत्कृच्छ्रम् । कान्तारदुर्लम्भः[2] पिण्डको याचनकेन । नैमित्तिकैश्च निर्दिष्टं देवो न वर्षिष्यतीति ॥ यावत्सार्थवाहपत्नी आपन्नसत्त्वा संवृत्ता । साष्टानां वा नवानां वा मासानामत्ययात्प्रसूता । दारको 10
जातो ऽभिरूपो दर्शनीयः प्रासा[79b]दिकः सर्वाङ्गोपेतः । यत्र च दिवसे दारको जातस्तत्रैव दिवसे ऽनावृष्टिर्भग्ना । तस्य यशसा सर्वा[3] श्रावस्ती आपूरिता ॥ तस्य ज्ञातौ ज्ञातिमहं कृत्वा नामधेयं व्यवस्थाप्यते किं भवतु दारकस्य नामेति । ज्ञातय ऊचुः । यस्मादस्य समन्ताद्यशो विसृतं[4] तस्माद्भवतु दारकस्य यशोमित्र इति नामेति ॥ यशोमित्रो दारको[5] ऽष्टाभ्यो धात्रीभ्यो दत्तो द्वाभ्यामंसधात्रीभ्यां[6] द्वाभ्यां क्षीरधात्रीभ्यां द्वाभ्यां मलधात्रीभ्यां

---

1) B °मन्यत्तम°, DP corr.

2) Cp. PW, I, *s. v.* अतिदुर्लम्भ and Pāṇini VII, 1, 68 न सुदुर्भ्यां केवलाभ्याम्. Patañjali, when discussing this sūtra, does not mention this case of *su* (or *dus*) + *labh* + the kṛt *khal*, if the whole word is employed as the latter member of a tatpuruṣa.

3) Ex conject.; MS सर्वश्रा° (D सर्वश्रा°).

4) MS विसृतस्तस्मा°.

5) So D; B has दारकश्रष्टा°.

6) MS द्वाभ्यांमत्स°.

द्वाभ्यां क्रीडनिकाभ्यां धात्रीभ्याम्। सो ऽष्टाभिर्धात्रीभिरुन्नीयते वर्ध्यते[1] क्षीरेण दध्ना नवनीतेन सर्पिषा सर्पिमण्डेनान्यैश्चोत्तप्तोत्तप्तैरुपकरणविशेषैराशु वर्धते ह्रदस्थमिव पङ्कजम्॥

यदा यशोमित्रो महान्संवृत्तस्तदा जेतवनं निर्गतः केनचिदेव करणीयेन। अथासौ

5 ददर्श बुद्धं भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः समलङ्कृतमशीत्या चानुव्यञ्जनैर्विराजितगात्रं व्यामप्रभालङ्कृतं सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकं सहदर्शनाच्चास्य प्रसादो जातः। प्रसादजातो भगवतः पादाभिवन्दनं कृत्वा पुरस्तान्निषण्णो धर्मश्रवणाय। तस्य भगवता तादृशी संसारवैराग्यिकी धर्मदेशना कृता यां श्रुत्वा संसारदोषदर्शी निर्वाणगुणदर्शी भूत्वा मातापितरावनुज्ञाप्य भगवच्छासने प्रव्रजितः। तेन युज्य-

10 मानेन घटमानेन व्यायच्छमानेनेदमेव पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः शतनपतनविकिरणविध्वंसनधर्मतया पराहत्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्। अर्हन्संवृत्तस्त्रैधातुकवीतरागः समलोष्टकाञ्चन आकाशपाणितलसमचित्तो वासीचन्दनकल्पो विद्याविदारिताण्डकोशो विद्याभिज्ञाप्रतिसंवित्प्राप्तो भवलाभलोभसत्कारपराङ्मुखः सेन्द्रोपेन्द्राणां देवानां पूज्यो मान्यो ऽभिवाद्यश्च संवृत्तः। तस्य दंष्ट्राभ्या-

15 मष्टाङ्गोपेतं पानीयं प्रस्रवति येनास्य तृषा न बाधते। यदा निदाघकाले भिक्षवस्तृषार्ताः पानकस्यार्थे[2] सङ्घमवतरन्ति तदाप्यसौ नावतरति॥ ततो ऽस्य सुप्रेमका[3] भिक्षवः पृच्छन्ति केन हेतुना भवतस्तृषा न बाधत इति॥ स कथयति। ममैताभ्यां[4] दंष्ट्राभ्यामष्टाङ्गोपेतं पानीयं प्रस्रवति येन न मे तृषा बाधत इति[5]॥

---

1) MS वर्द्धते, as usual.

2) Ex conject.; MS °कस्यार्थि.

3) Cp. Feer, p. 323 n. 5.

4) Ex conject.; B मन्नोभ्यां (ता), which has become variously corrupted in the three copies.

5) MS has after इति a superfluous akṣara ह्नि.

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः । कानि भदन्त यशोमित्रेण कर्माणि कृतानि येनाभिरूपो दर्शनीयः प्रासादिकः दंष्ट्रान्तराच्चाष्टाङ्गोपेतं पानीयं प्रस्रवति प्रव्रज्य चार्हत्त्वं साक्षात्कृतमिति ॥ भगवानाह । यशोमित्रेणैव भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि । यशोमित्रेण कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति । न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ न तेजोधातौ न वायुधातावपि तूपात्तेष्वेव[1] स्कन्धधात्वायतनेषु कर्माणि कृतान्युपचितानि विपच्यन्ते शुभान्यशुभानि च ।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि ।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वन्यस्मिन्नेव भद्रके कल्पे विंशतिवर्षसहस्रायुषि प्रजायां काश्यपो नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान् । <स>[2] वाराणसीं नगरीमुपनिश्रित्य[3] विहरति ऋषिपतने मृगदावे । यावदन्यतरः श्रेष्ठिपुत्रो ऽन्यतरस्य वृद्धभिक्षोः सकाशे प्रव्रजितः । सो ऽलसो नेच्छति सम<या>चारिकां[4] चरितुम् । ततः सब्रह्मचारिभिः स्थविरस्योपस्थायको दत्तः । स उपस्थायकमात्मानं मत्वा वृद्धतराणां भिक्षूणां सकाशादुपस्थानं स्वीकरोति । तस्याकुशलमू[80a]लान्यपर्यन्तानि ॥

यावदपरेण समयेन ग्लान्यं पतितः । स्थविरेणास्य वैद्योपदेशाद्धृतं पानाय दत्तम् । स[5]

---

1) Cp. *supra*, I, p. 74 n. 9.

2) D adds the missing pronoun.

3) MS °निसृत्य.

4) Ex conject.; MS समचारिकांचवत्तं (D °चरत्तं). Cp. Feer, p. 324, 2 «il..... n'avait aucune prévenance pour ceux avec qui il se trouvait».

5) Ex conject.; MS संरात्रौ.

रात्रौ तृषा त्रासितः[1] स्वकं कमण्डलुकमुपगृह्य[2] पानीयं पास्यामीति पश्यति निरुदकम्। एवमाचार्योपाध्यायानाम्। यावत्साङ्घिकं पानीयमण्डपमवतीर्णः। तदपि निरुदकं पश्यति। यावन्नदीचारिकामवतीर्णः। सापि निरुदका संवृत्ता॥ स उद्विग्नः स्वकानां सब्रह्मचारिणामुद्वेजनार्थं श्रद्धादेयस्य[4] च गुरुत्वसंदर्शनार्थं ' नदीचारिकायाः[5] पारे वृत्तः ' तत्र शाटकं

5 बद्ध्वा समभिरूढः स्वकर्माणि ममेत्यवेत्य कर्मप्रतिसरणावस्थितः[6]॥ यावद्द्वितीये दिवसे प्रभातायां रजन्यामेतद्वृत्तान्तं[7] सब्रह्मचारिणामारोचयति। ततो ऽस्य <स>ब्रह्मचारिणः प्रेतकरणं[8] श्रुत्वोद्विग्ना इतश्चामुतश्चारोचयितुमारब्धाः॥ ततो ऽस्य उपाध्यायेन पानीयमुपना-

---

1) Ex conject.; MS तृषांत्रामितः (D °श्रामितः).

2) B स्वकं कँरुकं, the sign refers to the bottom of the page, where मण्ड is written to be inserted before रु. As to र for ल, cp. *supra*, I, 53 n. 3, 55 n. 6, 69 n. 7; C कमण्डरुस्तमुप°, D कमण्डलुमुप°, P मण्डकरुकमुप.

3) I have adopted the correction of D; B स्वब्रह्म°.

4) On *çraddhādeya* cp. Divy. 336, 27. 571, 6 and Çikṣāsamuccaya (ed. Bendall) 137, 17 foll.

5) MS नदीचारकायाः, but cp. l. 3 and *infra*, avad. nr. 89, B f. 85a.

6) I have followed P; B प्रतिशरणा°. I think *pratisaraṇa* is a would-be sanskritization of some pāli (or prākrit) word *paṭisaraṇa* = skt. *pratismaraṇa*. It is possible, but less probable, that the transmitted form is a depravation of original प्रतिस्मरणा°. In Tibetan *karmapr.* has been translated thus: ལས་ལ་རྟེན་ཅིང་འདུག།.

7) Cp. *supra*, I, p. 29 n. 9. A few lines lower (p. 87, 4) *vṛttānta* is a masculine again.

8) If the reading is right, the meaning must be 'doing as a preta'. One might think of *pretakāraṇām* (torment of a preta, preta-torment). The Tibetan translation does not lead in that direction, it has སྐྱབས་རེ = «son cas» apud Feer, p. 324, 20. That, on the other hand, something like «preta-hood» or «preta-suffering» is meant and *pretakāraṇām* is accordingly to be considered as the true reading, may be inferred from its Chinese equivalent. Though the Chinese translation of the passage from यावद्द्वितीये to पानीयमुपनामितम् — for which I am indebted to my friend Prof. De Groot — is, as usual, a very free rendering with modifications, it runs thus: «the other morning he told the matter to his chief, who after hearing his story, spoke: 'the suffering happened to you is somewhat similar to that of the Pretas; now take the water in my waterpot'».

मितम्। तदपि न पश्यति। तेनापि संविग्नेन भगवतः काश्यपस्य निवेदितम्। भगवता काश्यपेनोक्तो [1] गण्डीराकोट्यतामिति ॥ तत उपधिवारिकेण गण्डीराकोटिता। बुद्धप्रमुखो भिक्षुसङ्घः संनिपतितः ॥

एष वृत्तान्तो वाराणस्यां नगर्यां समन्ततो विसृतः। ततो ऽनेकानि प्राणिशतसहस्राणि संनिपतितानि ॥ यावदुपाध्यायेन [2] वृद्धान्ते निषादयित्वा उदकपूर्णा कुण्डिका [3] 5 दत्ता। वत्सैतत्पानीयं [4] सङ्घे चारयेति ॥ स प्रत्यक्षफलदर्शी तेनैव संवेगेन बुद्धे भगवति श्रावकेषु च प्रसादमुत्पाद्य तीव्रेणाशयेन तदुदकं सङ्घे चारितवान्। ततो भगवता तस्यानुग्रहार्थं गजभुजसदृशं बाहुमभिप्रसार्य भीतानामाश्वासनकरेण <करेण> तदुदकं गृहीतं महाश्रावकैश्च न च क्षीयते। यावत्सर्वसङ्घे चारितं तदपि न क्षीयते॥ तदत्यद्भुतं देवमनुष्यावर्जनकरं प्रातिहार्यं दृष्ट्वानेकैः प्राणिशतसहस्रैः सत्यदर्शनं कृतम्। तस्यापि संताने [5] ऽकुशल- 10 मूलानि प्रतिसंहृतानि ॥ यदा तस्माद्ध्यानाद्व्युत्थितस्तदा [6] तेन बुद्धप्रमुखो भिक्षुसङ्घः पानीयेनाल्पोत्सुकः कृतः। द्वादश वर्षसहस्राणि तेन सङ्घे पानीयं चारितम्। यावन्मरणकालसमये प्रणिधानं कृतवान्। अनेनाहं कुशलमूलेन चित्तोत्पादेन देयधर्मपरित्यागेन च यो

---

1) Ex conject.; MS गण्डीमाकोट्यतामिति. Cp. Index s. v. *gaṇḍī*.

2) Cp. *vṛddhānte* in the Index on Divy.

3) Ex conject.; MS कुण्डलिका. Cp. PWK, II, 73 s. v. कुण्डिका and Jtkm. 144, 10 समादाय त्रिदण्डकुण्डिकाद्यां परिव्राजकभाण्डिकाम्. That the name *kuṇḍikā* may signify also big waterpots serving the wants of many, appears from Mahābhāṣya on Pāṇini 1, 4, 24 (ed. Kielhorn I, 327) with Kaiyaṭa's scholion, cp. Weber *Indische Studien*, XIII, 391. The Tibetan equivalent of this word is སྤྱི་བླུགས་, according to Sarat = 'vase'.

4) Ex conject.; MS पानीयसंघेचारयति (P °यिति).

5) I have added the avagraha; for the meaning is 'his roots of unwholesomeness were taken back — vanished'. As to the expression 'his *santāna*', see De la Vallée Poussin, *La négation de l'âme* in *Journ. Asiat.*, Neuv. S. XX, p. 283 foll.

6) Ex conject.; MS तस्माद्ध्याना°.

ऽसौ भगवता काश्यपेन उत्तरो नाम माणवो व्याकृतो भविष्यसि त्वं[1] मानववर्षशतायुषि प्रजायां शाक्यमुनिर्नाम तथागतोऽर्हन्सम्यक्संबुद्धस्तमहमारागयेयं मा विरागयेयं दंष्ट्रा-न्तराच्च मेऽष्टाङ्गोपेतं पानीयं निर्गच्छेदिति ॥

भगवानाह । किं मन्यध्वे भिक्षवो योऽसौ तेन कालेन तेन समयेन भिक्षुरासीदयं
5 सः[2] । यत्तेन[3] <द्वादश> वर्षसहस्राणि सङ्घे पानीयं चारितं प्रणिधानं च कृतं तेनेह जन्मनि दंष्ट्रान्तरादष्टाङ्गोपेतं पानीयं निर्गच्छति । तेनैव हेतुनार्हत्त्वं साक्षात्कृतम् । इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रस्तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशु-क्लेष्वेव कर्मस्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

1) B नाणव°, D corr.

2) All MSS, P included, have this reading. Feer's note 4 on p. 325 of his translation contains an error in the fact.

3) B यत्तन, DP corr.

## [1]औपपादुक इति ८६।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुड-किन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयना-सनग्लानप्रत्ययभैषज्यपरिष्काराणां देवेषु त्रयस्त्रिंशेषु वर्षा उपगतः पाण्डुकम्बलशिलायां (5) पारिजातस्य कोविदारस्य नातिदूरे मातुर्जनित्र्या धर्मं देशयत्यन्येषां च देवानाम्। तेन खलु समयेनायुष्मान्महामौद्गल्यायनः श्रावस्त्यां वर्षा[2] उपगतो जेतवनेऽनाथपिण्डदस्या-रामे। अथ चतस्रः पर्षदो येनायुष्मान्महामौद्गल्यायनस्तेनोपसंक्रान्ता महामौद्गल्यायनपादौ शिरसा वन्दित्वा एकान्ते निषण्णाः। चतस्रः प[80b]र्षद आयुष्मान्महामौद्गल्यायनो धर्मक-थया संदर्शयति <समादापयति> समुत्तेजयति संप्रहर्षयति। अनेकपर्यायेण धर्म्यया[3] कथया (10) संदर्श्य समादाप्य समुत्तेज्य संप्रहर्ष्य तूष्णीम्। अथ चतस्रः पर्षद उत्थायासनादेकांसमुत्त-रासङ्गं कृत्वा येनायुष्मान्महामौद्गल्यायनस्तेनाञ्जलिं[4] [5]प्रणमय्यायुष्मन्तं महामौद्गल्यायनमि-दमवोचन्[6]। [7]कच्चित्ते भदन्त महामौद्गल्यायन श्रुतं कुत्र भगवानेतर्हि वर्षा उपगत इति॥

---

1) The hero of this avad. is called throughout *upapāduko bhikṣuḥ* in the text of the tale, likewise in the *uddāna* of this *varga*, at least the name by which he is designated commences with *upa*, not *aupa*. It is only in this title, that *aupupāduka* has been transmitted in MS. Cp. Divy. 533, 25. 627, 17 foll.

P has here द्रौप°, cp. Feer's note on p. 326 of his translation.

2) B वर्षां, D corr.

3) MS धर्मया.

4) B स्तेनाजलिं, D corr.

5) When I wrote *supra*, p. 3, my note 6, I was mistaken. The expression *añjaliṃ praṇamayya* has nothing irregular or abnormal.

6) MS °वोचत्.

7) Ex conject.; MS किंचित्ते, cp. *supra*, I, p. 325, n. 2.

महामौद्गल्यायन आह। श्रुतं मे भवन्तो भगवान्देवेषु त्रयस्त्रिंशेषु[1] वर्षा उपगतः पाण्डुकम्बलशिलायां पारिजातस्य कोविदारस्य नातिदूरे मातुर्जनित्र्या धर्मं देशयत्यन्येषां च देवानां त्रयस्त्रिंशानां(?)मिति॥ अथ चतस्रः पर्षद आयुष्मतो महामौद्गल्यायनस्य भाषितमभिनन्द्यानुमोद्य पादौ शिरसा वन्दित्वोत्थायासनेभ्यः प्रक्रान्ताः॥

5 अथ चतस्रः पर्षदस्त्रयाणां वार्षिकाणामत्ययाद्येनायुष्मान्महामौद्गल्यायनस्तेनोपसंक्रान्ताः। उपसंक्रम्यायुष्मतो महामौद्गल्यायनस्य पादौ शिरसा वन्दित्वा एकान्ते निषण्णाः। चतस्रः पर्षद आयुष्मान्महामौद्गल्यायनो[2] धर्म्यया कथया संप्रदर्शयति समादापयति समुत्तेजयति संप्रहर्षयति। अनेकपर्यायेण[2] धर्म्यया कथया संदर्श्य समादाप्य समुत्तेज्य संप्रहर्ष्य तूष्णीम्। अथ चतस्रः पर्षद उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा येनायुष्मान्महामौ-

10 द्गल्यायनस्तेनाञ्जलिं प्रणमय्यायुष्मन्तं महामौद्गल्यायनमिदमवोचन्[3]। यत्खलु भदन्तमहामौद्गल्यायनो जानीया[4]च्चिरदृष्टो ऽस्माभिर्भगवान्परितृषिताः[5] स्मो वयं भगवतो दर्शनेन इच्छामो वयं भगवन्तं द्रष्टुम्। सचेद्भदन्तमहामौद्गल्यायनस्यागुरु[6] साधु भदन्तमहामौद्गल्यायनो[7] येन भगवांस्तेनोपसंक्रामेत्। उपसंक्रम्यास्माकं[8] वचनेन भगवतः पादौ शिरसा वन्दस्वा[9]ल्पाबाधतां च पृच्छाल्पातङ्कतां च लघूत्थानतां च यात्रां च बलं च सुखं चानवद्यतां च ‹स्पर्शविहा-

15 रतां च›[10] एवं च वद। जम्बूद्वीपे भदन्त चतस्रः पर्षद आकाङ्क्षन्ति भगवतो दर्शनमेवं चाहुः।

---

1) B वर्षा, D corr.

2) MS धर्मया.

3) MS °वोचत्.

4) Ex conject.; MS °मौद्गल्यायन जानीयाचिर°.

5) MS °षितास्मो.

6) Cp. *supra*, I, 230, 1 and 9.

7) MS °यना (D °यन).

8) B °म्यात्माकं, DP corr.

9) Ex conject., cp. *supra*, I, 325, 13; MS वन्द्त्वा° (D वन्दित्वा°).

10) I have added the omitted words from *infra*, p. 93, 16, cp. also *supra*, I, 326, 1.

नास्ति खलु भदन्त जम्बूद्वीपकानां मनुष्याणां तद्रूपा ऋद्धिर्वा[1] अनुभावो ‹वा›[2] येन जम्बूद्वीपका मनुष्या देवांस्त्रयस्त्रिंशानभिरोहेयुर्भगवन्तं दर्शनायोपसंक्रमणाय पर्युपासनाय। अस्ति खलु देवानां त्रयस्त्रिंशानां तद्रूपा ऋद्धिश्चानुभावश्च येन देवास्त्रयस्त्रिंशा जम्बूद्वीपमवतरेयुर्भगवन्तं दर्शनायोपसंक्रमणाय पर्युपासनाय। साधु भगवान्देवेभ्यस्त्रयस्त्रिंशेभ्यो जम्बूद्वीपमवतरेद-नुकम्पामुपादायेति ॥ अधिवासयत्यायुष्मान्महामौद्गल्यायनश्चतसृणां पर्षदां तूष्णीभावेन। 5 अथ चतस्रः पर्षद आयुष्मतो महामौद्गल्यायनस्य तूष्णीभावेनाधिवासनां विदित्वा आयु-ष्मतो महामौद्गल्यायनस्य पादौ शिरसा वन्दित्वोत्थायासनेभ्यः प्रक्रान्ताः॥

अथायुष्मान्महामौद्गल्यायनो[3] ऽचिरप्रक्रान्तास्चतस्रः पर्षदो विदित्वा तद्रूपं समाधिं समापन्नो यथा समाहिते चित्ते तद्यथा बलवान्पुरुषः[4] संकुचितं वा बाहुं प्रसारयेत्प्रसारितं वा संकुचयेदेवमेवायुष्मान्महामौद्गल्यायनः श्रावस्त्यामन्तर्हितो देवेषु त्रयस्त्रिंशेषु प्रत्यष्ठा- 10 त्पाण्डुकम्बलशिलायां पारिजातस्य कोविदारस्य नातिदूरे॥ तेन खलु समयेन भगवान-नेकशताया देवपर्षदो धर्मं देशयति। अद्राक्षीच्च महामौद्गल्यायनो भगवन्तम‹ने›कशताया देवपर्षदः पुरस्तान्निषण्णं धर्मं[5] देशयन्तं दृष्ट्वा च पुनः स्मितं प्राविरकार्षीत्। इहापि भगवा-नाकीर्णो[6] विहरति तद्यथा जम्बूद्वीपे चतसृभिः पर्षद्भिरिति ॥ अथ भगवानायुष्मतो महा-मौद्गल्यायनस्य चेतसा चित्तमाज्ञायायुष्मन्तं महामौद्गल्यायनमिदमवोचत्। न खलु मौद्- 15

---

1) B तद्रूप ऋषिर्वा, D corr. As to the depravation of ऋषि in ऋद्धि and inversely cp. *supra*, p. 13 n. 8 and Feer, p. 149 n. 4.

2) D adds the particle lost in MS.

3) MS °यनअचिर° (P °यअचिर°).

4) MS संकुंचितवांवाकुंप्रसारयेत्प्रसारितवांसंकुंचये°.

5) B धर्म, D corr.

6) Ex conject.; MS भगवानातीर्णो. Cp. Feer's n. 1 on p. 328.

ल्यायन स्वैरत्वमे‹षां›[1] अपि तु यदा मे एवं भवति आगच्छन्त्विति[2] तदा आगच्छन्ति। यदा मे एवं भवति गच्छन्त्विति तदा गच्छन्ति। इति मे चेतसा चित्तमाज्ञाय आगच्छन्ति च गच्छन्ति [81a] च ॥

अथायुष्मान्महामौद्गल्यायनो येन भगवांस्तेनोपसंक्रान्तः[3]। उपसंक्रम्य भगवतः पादौ 5 शिरसा वन्दित्वा एकान्ते निषण्णः। ‹एकान्तनिषण्णो›[4] आयुष्मान्मौद्गल्यायनः सर्वां देवपर्षद-मवलोक्य भगवन्तमिदमवोचत्। विचित्रा बतेयं देवपर्षत्संनिषण्णा संनिपतिता। सन्त्यस्यां देवपर्षदि देवता या बुद्धे ऽवेत्य[5] प्रसादेन समन्वागताः[6] कायस्य भेदादिहोपपन्नाः[7]। सन्ति धर्मे सन्ति सङ्घे सन्ति आर्यकान्तैः[8] शीलैः समन्वागताः कायस्य भेदादिहोपपन्नाः[6] ॥ अथ भग-वानायुष्मतो महामौद्गल्यायनस्य भाषितमनुवर्णयन्नायुष्मन्तं महामौद्गल्यायनमिदमवोचत्। 10 एवमेतन्मौद्गल्यायन एवमेवमेतत्। विचित्रा बतेयं देवपर्षत्संनिषण्णा संनिपतिता[9]। सन्त्य-स्यां देवता या बुद्धे ऽवेत्य प्रसादेन समन्वागताः कायस्य भेदादिहोपपन्नाः। सन्ति धर्मे सन्ति सङ्घे सन्ति आर्यकान्तैः शीलैः समन्वागताः[6] कायस्य भेदादिहोपपन्नाः ॥

---

1) Ex conject.; MS संस्कारमे. I have preferred to put into the text a plausible emendation the rightness of which, as to its meaning, appears from its Tibetan equivalent འདི་དག་ལ་ནི་རང་དབང་མེད་དེ་ (see Feer, p. 328 n. 2) rather than retaining the nonsense transmitted by MS.

2) MS °च्छत्विति.

3) B °क्रातउप°, DP corr.

4) The lost words I have inserted from the Tibetan, see Feer, p. 328, n. 3.

5) Ex conject., cp. the Pāli gerund *avecca* in the same connection as here (Childers, *Pali Dict.*, *s. v.*, Majjh. Nik. I, 37); MS चेत्य, which error is repeated in the sequel, wheresoever the Sanskrit equivalent of *aveccappasādena samannāgato* occurs. The term corresponding to अवेत्य in the Tibetan is ཤེས་ནས་ 'from knowing', cp. Feer, p. 328, n. 4.

6) Visarga wanting in MS.

7) B पन्ना।, D corr.

8) MS आर्यंकान्तैः.

9) MS संनिपतितानि.

अथ शक्रो देवानामिन्द्रो भगवत आयुष्मतश्च महामौद्गल्यायनस्य भाषितमनुवर्णापन्नायुष्मन्तं महामौद्गल्यायनमिदमवोचत् । एवमेतद्भदन्तमहामौद्गल्यायन एवमेतत् । विचित्रा बतेयं देवपर्षत्संनिषण्णा संनिपतिता । सन्त्यस्यां देवपर्षदि देवता या बुद्धे ऽवेत्य प्रसादेन समन्वागताः कायस्य भेदादिहोपपन्नाः[1] । सन्ति धर्मे सन्ति सङ्घे सन्त्यार्यकान्तैः शीलैः समन्वागताः कायस्य भेदादिहोपपन्नाः[1] ॥ 5

अथान्यतमो देवपुत्रो भगवत आयुष्मतश्च महामौद्गल्यायनस्य शक्रस्य ‹च› देवानामिन्द्रस्य भाषितमनुवर्णापन्नायुष्मन्तं महामौद्गल्यायनमिदमवोचत् । एवमेतद्भदन्तमहामौद्गल्यायन एवमेतत् । विचित्रा बतेयं देवपर्षत्संनिषण्णा संनिपतिता । सन्त्यस्यां देवपर्षदि देवता या बुद्धे ऽवेत्य प्रसादेन समन्वागताः कायस्य भेदादिहोपपन्नाः[1] । सन्ति धर्मे सन्ति सङ्घे । * * * * वयमार्यकान्तैः[2] शीलैः समन्वागताः कायस्य भेदादिहोपपन्ना इति ॥ 10

तत्रानेकानि देव‹ताश›तानि अनेकानि देवतासहस्राण्यनेकानि देवताशतसहस्राणि भगवतः पुरस्तात्प्रत्येकं प्रत्येकं स्रोतापत्तिफलं[3] साक्षात्कृत्य तत्रैवान्तर्हितानि ॥

अथायुष्मान्महामौद्गल्यायनः प्रविविक्तां देवपर्षदं विदित्वा एकांसमुत्तरासङ्गं कृत्वा येन भगवांस्तेनाञ्जलिं प्रणमय्य[4] भगवन्तमिदमवोचत् । जम्बूद्वीपे भदन्त चतस्रः पर्षदो भगवतः पादौ शिरसा वन्दन्ते[5] अल्पाबाधतां च पृच्छन्त्यल्पातङ्कतां[6] च लघूत्थानतां च यात्रां[7] च बलं च सुखं चानवद्यतां च स्पर्शविहारतां च ॥ भगवानाह । सुखिनो मौद्गल्यायन भवन्तु जम्बू- 15

---

1) Visarga wanting in MS.

2) It appears from the Tibetan that there is here a large gap, which, however, may be easily supplied from the translation of Feer, p. 329, cp. his note 2.

3) MS श्रोतापत्ति°.

4) Ex conject.; MS प्रणाम्य. Cp. *supra*, p. 89, 12 and 90, 10.

5) MS वन्दिते. Cp. *supra*, 90, 14 and I, 326, 8.

6) MS पृच्छन्त्य°.

7) Anusvāra wanting in MS.

द्वीपे चतस्रः पर्षदस्त्वं च ॥ महामौद्गल्यायन आह । जम्बूद्वीपे भदन्त चतस्रः पर्षद आकाङ्क्षन्ति भगवतो दर्शनमेवं चाहुः । नास्ति भदन्त जाम्बूद्वीपकानां[1] मनुष्याणां तद्रूपा ऋद्धिर्वा अनुभावो वा येन जाम्बूद्वीपका[1] मनुष्या देवांस्त्रयस्त्रिंशानभिरोहेयुर्भगवन्तं[2] दर्शनायोपसंक्रमितुं पर्युपासनाय । अस्ति तु भदन्त देवानां त्रयस्त्रिंशानां तद्रूपा ऋद्धिश्चानुभावश्च येन देवास्त्र-
5 यस्त्रिंशा जम्बूद्वीपमवतरेयुर्भगवन्तं दर्शनायोपसंक्रमितुं पर्युपासनाय । साधु भगवान्देवेभ्यस्त्रयस्त्रिंशेभ्यो ऽवतरेदनुकम्पामुपादाय ॥ भगवानाह । तेन हि त्वं गच्छ मौद्गल्यायन जम्बूद्वीपं गत्वा <च> चतसृणां पर्षदामारोचय । अवतरिष्यति भवन्तो भगवानितस्सप्तमे दिवसे देवेभ्यस्त्रयस्त्रिंशेभ्यो जम्बूद्वीपं सांकाश्ये नगरे आपञ्जुरे दावे उदुम्बरमूल इति ॥

अथायुष्मान्महामौद्गल्यायनो भगवतः प्रतिश्रुत्य पादौ शिरसा वन्दित्वा तद्रूपं
10 समाधिं संपन्नो यथा समाहिते चित्ते तद्यथा बलवान्पुरुषः संकुञ्चितं बाहुं प्रसारयेत्प्रसारितं वा संकुञ्चये<देवमेवायुष्मान्महामौद्गल्यायनो देवेषु त्रयस्त्रिंशेष्वन्तर्हितो जम्बूद्वीपे प्रत्यष्ठात् ॥ अथायुष्मान्महामौद्गल्यायनो जम्बूद्वीपमागत्य चतसृणां पर्षदामारोचयति । अवतरिष्यति भवन्तो भगवानितः सप्तमे दिवसे देवेभ्यस्त्रयस्त्रिंशेभ्यो [81 b] जम्बूद्वीपं सांकाश्ये[3] नगरे आपञ्जुरे दावे उडुम्बरमूल इति ॥

15 अवतीर्णो भगवांस्ततः सप्तमे दिवसे देवेभ्यस्त्रयस्त्रिंशेभ्यः[4] सांकाश्ये[3] नगरे आपञ्जुरे दावे उडुम्बरमूले । यदा भगवान्सांकाश्यं[5] नगरमवतीर्णस्तदानेकानि प्राणिशतसहस्राणि भगवतो दर्शनाय संनिपतितानि ॥ तत्रोपपादुको भिक्षुः प्रादुर्भूतः । तेन भगवान्सश्रावक-

---

1) So MS. The writing जाम्बू° is here as constant, as *supra*, p. 91, 1 foll. the writing जम्बू°.

2) MS °रुहेयुः । भग°, cp. *supra*, p. 91, 2.

3) MS सांकाशे (D शाकोशे).

4) B °स्त्रिशे°, D corr.

5) P भगवांकाश्यं, cp. Feer's n. 1 on p. 331.

सङ्घस्ते च देवासुरगरुडकिन्नरमहोरगा भक्तेनोपनिमन्त्रिताः ॥ यावद्गण्डीदेशनाकाले[1] सह-चित्तोत्पादा[2]द्दिव्यान्यासनान्युदारपटाच्छादितानि प्रादुर्भूतानि दिव्यानि च भक्ष्यभोज्यानि। तत उपपादुकेन भगवान्दिव्येनाहारेण संतर्पितस्ते च देवासुरगरुडकिन्नरमहोरगाः सम्यगुपस्थिताः। ततो ऽस्य भगवता आशयानुशयं धातुं प्रकृतिं च ज्ञात्वा तादृशी धर्मदे-शना कृता यां श्रुत्वोपपादुकेन भिक्षुणा इदमेव पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा 5 सर्वसंस्कारगतीः शतनपतनविकिरणविध्वंसनधर्मतया पराहत्य सर्वक्लेशप्रहाणादर्हत्वं साक्षात्कृतम्। अर्हन्संवृत्त[3]स्त्रैधातुकवीतरागः समलोष्टकाञ्चन आकाशपाणितलसमचित्तो वासीचन्दनकल्पो विद्याविदारिताण्डकोशो विद्याभिज्ञाप्रतिसंवित्प्राप्तो भवलाभलोभस-त्कारपराङ्मुखः सेन्द्रोपेन्द्राणां देवानां पूज्यो मान्यो ऽभिवाद्यश्च संवृत्तः।

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। कानि भदन्त उपपादु- 10 केन कर्माणि कृतानि येनोपपादुकः संवृत्तः सह(?)चित्तोत्पादाच्चास्य यच्चिन्तयति यत्प्रार्थयते तत्सर्वं समृध्यतीति[4]॥ भगवानाह। उपपादुकेनैव भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि। उपपादुकेनैव कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति। न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ न तेजोधातौ न वायुधाता- 15 वपि तू[5]पात्तेष्वेव स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च।

---

1) «At the time of giving the sign with the gong, that is: at mealtime». *Supra*, I, p. 258, l. II, 10, 8 I had retained the reading of MS: गण्डीदेशकाले, since I did not venture to change anything in a transmitted reading, which might be sufficiently accounted for by considering *deçakāla* as having got the *rūḍha*-meaning of «the right, the proper time». But after all, I think it more probable now, that in the passages quoted, too, *deçakāle* is to be hold for a corruption of °*deçanākāle*.

2) Ex conject., cp. *infra*, l. 11; MS सहचित्तात्पोदंतव्यान्यास°, in D and P this has been variously altered.

3) MS °र्हत्सं° (D °र्हत्तसं°).

4) Cp. *supra*, I, p. 104, 11. 106, 2.

5) Cp. *supra*, I, p. 74 n. 9.

न प्रणश्यन्ति कर्माणि अपि कल्पशतैरपि।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम्॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वन्येकनवते[1] कल्पे विपश्यी नाम सम्यक्संबुद्धो लोक उदपादि तथागतो ऽर्हन्सम्यक्संबुद्धो विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषद-
5 म्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान्। स बन्धुमतीं[2] राजधानीमुपनिश्रित्य वि-हरति। यावदन्य‹त›रस्मिन्[3] ग्रामके ऽरण्यायतने पञ्च भिक्षवो वर्षा उपगताः। तत्रैकेन भिक्षुणा चतुर्णां भिक्षूणां वैयावृत्यं[4] कृतम्। तैर्युज्यमानैर्घटमानैर्व्यायच्छमानैः सर्वक्लेशप्रहा-णादर्हत्त्वं साक्षात्कृतम्। पञ्चमेन[5] पादयोर्निपत्य प्रणिधानं कृतम्। यथैभिर्ममागम्या[6]र्हत्त्वं साक्षात्कृतमनेन मे[7] कुशलमूलेन चित्तोत्पादेन देयधर्मपरित्यागेन च प्रव्रजितस्य उपकरण-
10 विशेषैरवैकल्यं स्यादिति॥

‹किं मन्यध्वे भिक्षवः। यो ऽसौ तेन कालेन तेन समयेन वैयावृत्यं कृतवानयं स उपपादुक इति॥ भिक्षव ऊचुः।›[8] किं कर्म कृतं येनोपपादुकः संवृत्तः॥ भगवानाह। भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि ‹अस्मिन्नेव भद्रके कल्पे› विंशतिसहस्रायुषि प्रजायां काश्यपो नाम सम्यक्संबुद्धो लोक उदपादि तथागतो ऽर्हन्सम्यक्संबुद्धो विद्याचरणसं-

---

1) B °न्यकनवते, D corr.

2) Anusvāra wanting in MS. As usual, MS °पनिसृत्य, likewise *infra*, p. 97, 2.

3) D °न्यतमस्मिं. Cp. *supra*, p. 85, 14, *infra*, p. 97, 2 and my *Sanskrit Syntax*, § 280, Rem. 1.

4) MS वैयाधृत्यं कृतं (D वैमाध्यं कृतं).

5) In B the word भगवतः stands between पञ्चमेन and पादयोः, but it has been cancelled.

6) Ex conject.; MS यथैभिर्ममागम्य. As to *āgamya*, cp. *supra*, I, p. 239 n. 2.

7) Ex conject.; MS °नेनाहं, an error of thoughtlessness, which, if not corrected, would destroy the composition of the phrase.

8) In the Tibetan there is no gap at all, cp. Feer, p. 332 n. His translation of what is wanting here has enabled me to supply its Sanskrit original almost exactly.

पन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान् । ‹स›[1] वाराणसीं नगरीमुपनिश्रित्य विहरति ऋषिपतने मृगदावे । तत्रान्यतरः श्रेष्ठी । तस्य भार्या प्रसवकाले दुःखवेदनाभिभूता ग्रार्तस्वरा क्रन्दति । स तं शब्दं श्रुत्वा परं संवेगमापन्नः । स शोकागारं प्रविश्य करे कपोलं दत्त्वा चिन्तापरो व्यवस्थितः । तस्य बुद्धिरुत्पन्ना । यन्न्वहं भगवच्छासने प्रव्रज्य प्रणिधानं कुर्यां येन न कदाचिद्गर्भशय्यां प्रत्यनुभवामीति ॥ स तेनैव संवेगेन भगवतः काश्यपस्य प्रवचने प्रव्रजितः । तेन प्रणिधानं कृतम् । ग्रनेनाहं कुशलमूलेन चित्तोत्पादेन देयधर्मपरित्यागेन च यत्र यत्र जायेय[2] तत्र तत्रोपपादुको भवेयं [82 a] मा कदाचिद्गर्भशय्यां[3] प्रत्यनुभवेयमिति ॥

किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन सार्थवाह ग्रासीदयं स उपपादुकः । यत्प्रणिधानं कृतं तेनोपपादुकः संवृत्तः । यत्तत्रानेनेन्द्रियाणि परिपाचितानि तेनेदानीमर्हत्वं साक्षात्कृतम् । इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रस्तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो ‹भगवतो›[4] भाषितमभ्यनन्दन् ॥

---

1) स added in D.

2) Ex conject.; MS जायते. Cp. *supra*, p. 76, 17. 81, 10.

3) B कदाचिद्गभ°, D corr.

4) added in D.

# शोभित[1] इति ८७ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्[2]नागैर्यक्षैरसुरैर्गरुडैः किंनरैर्महोरगैरिति देवनागयक्षासुरगरुडकिंनरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपात[3]शयनासनग्लानप्रत्ययभैषज्यपरिष्कारााणां सश्रावकसङ्घः कपिलवस्तुनि[4] विहरति न्यग्रोधारामे । कपिलवस्तुन्य[4]न्यतमः शाक्य आढ्यो महाधनो महाभोगो विस्तीर्णविशालपरिग्रहो वैश्रवणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी । तेन सदृशात्कुलात्कलत्रमानीतम् । स तया सार्धं क्रीडति रमते परिचारयति । तस्य क्रीडतो रममाणस्य परिचारयतः पत्नी आपन्नसत्त्वा संवृत्ता । साष्टानां वा नवानां वा मासानामत्ययात्प्रसूता । दारको जातो[5] ऽभिरूपो दर्शनीयः प्रासादिको[5] ऽतिक्रान्तो मानुषव[6]र्णमसंप्राप्तश्च दिव्यं वर्णम् । तस्य जन्मन्यनेकान्यद्भुतानि प्रादुर्भूतानि यैः कपिलवस्तु[4] नगरं समन्ततः शोभितम् । तस्य ज्ञातौ ज्ञातिमहं कृत्वा नामधेयं व्यवस्थाप्यते किं भवतु दारकस्य नामेति । ज्ञातय ऊचुः । यस्मादस्य जन्मनि कपिलवस्तु नगरं समन्ततः शोभितं तस्मादस्य भवतु शोभित इति नामेति ॥ शोभितो दारको[5] ऽष्टाभ्यो धात्रीभ्यो दत्तो द्वाभ्यामंस[7]धात्रीभ्यां द्वाभ्यां क्षीरधात्रीभ्यां द्वाभ्यां

1) B शोहित, C corr.

2) B °र्दैवैना°, D corr.

3) MS पिण्डपात्र.

4) B कपिलवास्तु° three times, D corr.; the fourth and fifth time (*infra* p. 98, 13. 100, 1) B has कपिलवस्तु.

5) MS जात अभिरूपो and प्रासादिक अभिक्रान्तो, D corr. अतिक्रान्तो. Some lines below (l. 14) MS दारक अष्टाभ्यो.

6) B मानुषस्वर्षम°, D corr.

7) MS °भ्यांमत्स°.

मलधात्रीभ्यां ‹द्वाभ्यां›[1] क्रीडनिकाभ्यां धात्रीभ्याम्। सो ऽष्टाभिर्धात्रीभिरुन्नीयते वर्ध्यते[2] क्षीरेण दध्ना नवनीतेन सर्पिषा सर्पिमण्डेनान्यैश्चोत्त‹प्तोत्त›[1]प्तैरुपकरणविशेषैराशु वर्धते ह्रदस्थमि  ङ्कजम्॥

स यदा महान्संवृत्तस्तदा न्यग्रोधारामं गतो भगवतो दर्शनाय। अथासौ ददर्श बुद्धं भगवन्तं द्वात्रिंशता महापुर[illegible]णैः समलङ्कृतमशीत्या चानुव्यञ्जनैर्विराजितगात्रं व्या-[3] 5 मप्रभालङ्कृतं सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकं सहदर्शनाच्चानेन भगवतो ऽन्तिके चित्तं[4] प्रसादितम्। प्रसादजातो भगवतः पादाभिवन्दनं कृत्वा पुरस्तान्नि-षण्णो धर्मश्रवणाय। तस्य भगवताशयानुशयं[4] धातुं प्रकृतिं च ज्ञात्वा तादृशी चतुरार्यस-त्यसंप्रतिवेधिकी[5] धर्मदेशना कृता यां श्रुत्वा शोभितेन दारकेण विंशतिशिखरसमुद्गतं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रोतआपत्तिफलं साक्षात्कृतम्। स दृष्टसत्यो मातापि- 10 तरावनुज्ञाप्य भगवच्छासने प्रव्रजितः। तेन युज्यमानेन घटमानेन व्यायच्छमानेनेदमेव पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः शतनपतनविकरणविध्वंसन-धर्मतया पराहत्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्। [6]अर्हन्संवृत्तस्त्रैधातुकवीतरागः समलोष्टकाञ्चन आकाशपाणितलसमचित्तो वासीचन्दनकल्पो विद्याविदारिताण्डकोशो विद्याभिज्ञाप्रतिसंवित्प्राप्तो भवलाभलोभसत्कारपराङ्मुखः सेन्द्रोपेन्द्राणां देवानां पूज्यो 15 मान्यो ऽभिवाद्यश्च संवृत्तः।

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। कानि भदन्त शोभितेन कर्माणि कृतानि येनाभिरूपो दर्शनीयः प्रासादिको[7] ऽतिक्रान्तो मानुषवर्णमसंप्राप्तश्च दिव्यं

---

1) added in D.
2) MS वर्द्धते.
3) B व्योम°, P corr.
4) Anusvāra wanting in MS.
5) B has here °वेधकी.
6) MS °तमर्हत्सं°.
7) MS °दिक अति°.

वर्णो जन्मनि चास्यानेकानि अद्भुतानि प्रादुर्भूतानि यैः कपिलवस्तु नगरं समन्ततः शो-
भितम् ॥ भगवानाह । शोभितेनैव भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि
लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि । शोभितेनै[82b]व
कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यतीति । न भिक्षवः कर्माणि कृतान्युप-
5 चितानि बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ न तेजोधातौ न वायुधातावपि [1]तूपात्ते-
ष्वेव स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च ।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि ।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वन्यस्मिन्नेव भद्रके कल्पे चत्वारिंश[2]द्वर्षसहस्रायुषि
10 प्रजायां क्रकुच्छन्दो नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोक-
विदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां ‹बुद्धो›[3] भगवान् । स शोभावतीं राजधा-
नीमुपनिश्रित्य[4] विहरति । तस्य शोभेन राज्ञा केशनखस्तूपः प्रतिष्ठापितः ॥ यावत्क-
स्मिंश्चित्पर्वणि[5] प्रत्युपस्थिते गोष्ठिकाः[6] स्तूपसमीपं गताः । तैस्तं स्तूपं दृष्ट्वा प्रसादजातैः
पुष्पारोपणं कर्तुमारब्धम्[7] । तत्रैको गोष्ठिकः कथयत्यहं न करोमि मम विभवो नास्तीति ।
15 स तैश्च गोष्ठिकमध्यान्निष्कासितः । तस्य विप्रतिसारो जातः । तेन विचित्रपुष्पसंग्रहं
कृत्वा तस्मिन्नेव स्तूपे पुष्पारोपणं कृतम् ॥

भगवानाह । किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन गोष्ठिक आसी-
द्येन[8] विप्रतिसारजातेन क्रकुच्छन्दस्य केशनखस्तूपे पुष्पारोपणं कृतमयमसौ शोभितः ।

---

1) Cp. *supra*, I, p. 74, n. 9.
2) Ex conject.; MS चत्वारिंशतिवर्ष°.
3) D fills up the gap.
4) MS °निसृत्य.
5) MS कस्मिंश्चपर्वणि.
6) So MS.
7) MS °लब्धं.
8) Ex conject.; MS आसीदेनं.

अन्यान्यपि हि भिक्षवः शोभितेन कर्माणि कृतान्युपचितानि ॥ भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि वाराणस्यां नगर्यामन्यतमः श्रेष्ठी । तेन ग्लानः प्रत्येकबुद्धो दृष्टः । ततः प्रसादजातेन पादयोर्निपत्य पिण्डकेन प्रतिपादितः पटेन चाच्छादितः ॥

किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन श्रेष्ठी अयं शोभितः । भूयः काश्यपे भगवति दरिद्रो ऽभूत्काष्ठहारकः । स काष्ठानामर्थे पर्वतदरीं प्रविष्टः । तेन 5 स्तूपो दृष्टस्तत्र च स्तूपाङ्गणे तृणानि जातानि । ततस्तेन प्रसादजातेन तृणान्युत्पाट्य संमार्जनीं गृहीत्वा स्तूपाङ्गणं च संमृष्टम् । ततः पादयोर्निपत्य प्रणिधानं कर्तुमारब्धः । अनेनाहं कुशलमूलेन चित्तोत्पादेन देयधर्मपरित्यागेन चाभिरूपः स्यां दर्शनीयः प्रासादिकः अनागतांश्च बुद्धानारागयेयं मा विरागयेयमिति ॥

भगवानाह । किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन काष्ठहारक 10 आसीदयमेवासौ शोभितः । यदनेन स्तूपाङ्गणं संमृष्टं तेन यत्र यत्र जातस्तत्र तत्राभिरूपो दर्शनीयः प्रासादिकः संवृत्तः । तेनैव हेतुनेदानीमर्हत्त्वं साक्षात्कृतम् । इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रस्तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम् ॥ 15

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

## कप्फिण इति ८८।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति स्म जेतवने ऽनाथपिण्डदस्यारामे। तेन खलु समयेन दक्षिणापथे[1] कल्पो नाम राजा राज्यं कारयति ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं चाकोर्णबहुजनमनुष्यं च प्रशान्तकलिकलहडिम्बडमरं तस्कररोगापगतं शालीक्षुगोमहिषीसंपन्नं प्रियमिवैकपुत्रकं राज्यं पालयति। सो ऽपरेण समयेन देव्या सार्धं क्रीडति रमते परिचारयति। तस्य क्रीडतो रममाणस्य परिचारयतः पुत्रो जातो ऽभिरूपो[2] दर्शनीयः प्रासादिकः सर्वाङ्गप्रत्यङ्गोपेतः। तस्य ज्ञातौ ज्ञातिमहं कृत्वा कप्फिण इति नामधेयं व्यवस्थापितम्। कप्फिणो दारको[3] ऽष्टाभ्यो धात्रीभ्यो दत्तो द्वाभ्यामंसधात्रीभ्यां[4] द्वाभ्यां क्षीरधात्रीभ्यां द्वाभ्यां मलधात्रीभ्यां द्वाभ्यां क्रीडनिकाभ्यां धात्रीभ्याम्। सो ऽष्टाभि[83a]र्धात्रीभिरुन्नीयते वर्ध्यते[5] क्षीरेण दध्ना नवनीतेन सर्पिषा सर्पिमण्डेनान्यैश्चोत्तप्तोत्तप्तैरुपकरणविशेषैराशु वर्धते ह्रदस्थमिव पङ्कजम्[6]। यस्मिन्नेव दिवसे कप्फिणः[7] कुमारो जातस्तस्मिन्नेव दिवसे अष्टादशानाममात्यसहस्राणां पुत्रा जाताः[8] सर्वे महानग्नाः। तेषां प्रतिरूपाणि नामानि व्यवस्थापितानि॥

---

1) MS °पथि.
2) MS जात अभि°.
3) MS दारक अ°, likewise *infra* p. 103, 3 °कप्फिण अ°.
4) MS द्वाभ्यांमह्न° (D °मत्स°).
5) MS वर्द्धते.
6) B पंकज।, DP corr.
7) MS कप्फिणकुमारो, but *infra* p. 103, 1 कप्फिणः कुमारो.
8) MS जातः.

[(1)] यद्राजा कल्पः कालधर्मेण संयुक्तस्तस्यात्ययात्कप्फिणः कुमारो राज्ये प्रतिष्ठितः तानि चाष्टादशामात्य‹पुत्र›सहस्राणि सर्वाण्यमात्यत्वे नियुक्तानि ॥ अथापरेण समयेन राजा महाकप्फिणो ऽष्टादशामात्यसहस्रपरिवृतो मृगवधाय निर्गतः। पुरस्तात्पृष्ठतश्च सर्वबलौ-घमवलोक्यामात्यानामन्त्रयते। अस्ति [(2)] भवन्तः कस्यचिदेवंरूपो बलौघस्तद्यथा ममैवेत[(3)]र्हि-ति ॥ ततः प्रियवादिभिरमात्यैरभिहितम्। देव नान्यस्य कस्यचिदिति ॥ अथ मध्यदेशा- 5 द्वणिजो दक्षिणापथं गताः। तै राज्ञो महाकप्फिणस्य प्राभृतमुपनीतम्। राज्ञा उक्ता भो [(4)] वणिजः कस्तत्र राजेति ॥ वणिजः कथयन्ति[(5)]। देव केचिद्देशा गणाधीनाः[(6)] केचिद्राजाधीना इति ॥ यावद्राज्ञा[(7)] महाकप्फिणेन श्रावस्त्यादिषु षट्सु महानगरेषु दूतसंप्रेषणं कृतम्। यद्युत्थिता भवथ नोपवेष्टव्यं शीघ्रमागन्तव्यमन्यथा व उत्तमेन दण्डेन समनुशासिष्यामी-ति ॥ एतद्वचनमुपश्रुत्य षण्महानगरवासिनो राजानो भीतास्त्रस्ताः[(8)] संविग्ना आहृष्टरो- 10 मकूपाः संगम्य समागम्य एकसमूहेन श्रावस्तीमनुप्राप्ताः। ततो भगवत्सकाशं गताः। तैस्स[(9)] वृत्तान्तो भगवतो विस्तरेण निवेदितः। भगवता ते समाश्वासिता उक्ताश्च स दूतो मत्सकाशमानेतव्य इति ॥ ततस्तैर्दूतस्य निवेदितम्। अस्त्यस्माकं राजाधिराजस्तं ता-वत्पश्येति ॥

---

1) If the reading is without fault, the composer of our text has here used *yat* = *yadā*, an archaic construction. See my *Vedische und Sanskrit Syntax*, § 279*f*. Or should we correct यावद्राजा? which, certainly, is more in accordance with the habitual style of our author.

2) Ex conject., cp. **Feer**, p. 336, n. 4; MS भदन्त, cp. *supra*, I, 114 n. 7.

3) MS ममेवैतर्ह्येति.

4) Ex conject.; MS भोवनिजकस्तत्र.

5) MS कथयति.

6) Visarga wanting in MS.

7) MS °द्राजा.

8) MS भीतास्त्रतासंविग्ना.

9) MS तैस्संवृत्ता°.

ततो भगवता दूतागमनमवेत्य जेतवनं चतूरत्नमयं[1] निर्मितं देवानामिव सुदर्शनं नगरम्। अत्र चत्वारो महाराजानो[2] दौवारिकाः स्थापिता ऐरावतसदृशा हस्तिनो बालाहकसदृशा अश्वा नन्दीघोषसदृशा[3] रथा व्याडयत्तसदृशा मनुष्याः स्वयं च भगवता चक्रवर्तिवेषो[4] निर्मितः सप्ततालोद्गतं च सिंहासनं यत्र भगवान्निषण्णः। ततो दूतस्तथाविधां[5] शोभां दृष्ट्वा परं विस्मयमापन्नः॥ ततो भगवता लेखं लेखयित्वा[6] स दूतो ऽभिहितः। कप्फिणो मद्वचनाद्वक्तव्यो लेखवाचनसमकालमेव यद्युत्थितो भवसि नोपवेष्टव्यं शीघ्रमागन्तव्यम्। अथवा नागच्छसि अहमेव महता बलौघेन सार्धमागमिष्यामीति॥ ततो दूतेन गत्वा राज्ञो महाकप्फिणस्य लेखं वाचिकं[7] च यत्संदिष्टं तत्सर्वं निवेदितम्॥

ततः कप्फिणो राजा अष्टादशामात्यगणसहस्रपरिवृतो ऽनुपूर्वेण चञ्चूर्यमाणः श्रावस्तीमनुप्राप्तः। प्रातिसीमाश्च राजानो राजानं महाकप्फिणं प्रत्युद्गताः। तैर्महासत्कारेण नगरं प्रवेशितः। मार्गश्रमं प्रतिविनोद्य भगवतो निवेदितवन्तः॥ ततो भगवता तस्यागमनमवेत्य जेतवनं चतूरत्नमयं[8] निर्मितं देवानामिव सुदर्शनं नगरं[9] यत्र चत्वारो महाराजानो दौवारिका[10] स्थापिता ऐरावतसदृशा हस्तिनो बालाहकसदृशा अश्वा नन्दीघोषसदृशा रथा व्याडयत्तसदृशा मनुष्याः स्वयं च भगवता चक्रवर्तिवेषो निर्मितस्सप्ततालोद्गतं च सिंहासनं सर्वं तथैव निर्मितम्। ततो राजा महाकप्फिणो जेतवनं प्रविष्टः। सहदर्श-

---

1) MS चतुरत्न°.

2) Ex conject., cp. *infra*, l. 12; MS चत्वारो राजामहादौवा° (D °महाराजा दौवा°).

3) Cp. *infra*, l. 13; B नन्दीघोर्घ, D corr.

4) MS °वेशो. Likewise *infra*, l. 14.

5) Ex conject.; MS दूतोपथाविधां, in B the second akṣara is somewhat indistinct, the copyists of D and C read it तो, that of P ता.

6) Ex conject.; MS लिखयित्वा, an ungrammatical form not to be put on the account of the author.

7) MS लेखवाचिकं च. Note the neuter gender of *lekha*.

8) MS चतुर°.

9) B मगरं, DP corr.

10) So MS.

नादस्य यो रूपे रूपमद ऐश्वर्य[1] ऐश्वर्यमदः स प्रतिविगतः। [2]बलदर्पो ऽप्यपि प्रतिबाधत एव ॥ ततो भगवता लौकिकं चित्तमुत्पादितम्। अहो बत शक्रो देवेन्द्र ऐन्द्रं धनुरादायागच्छत्विति। सहचित्तोत्पादाद्भगवतः शक्रो देवेन्द्रः सारथिवेषेण ऐन्द्रं धनुरुपनामयति। भगवता महाकप्फिणस्योपनामितम्। तच्च राज्ञा महाकप्फिणा [3]उत्क्रष्टुमपि न शक्नोति कुतः पुनरारोपयिष्यति ॥ ततो भगवता सप्तायोभेर्यो निर्मिताः स्वयं च तद्धनुरर्धचन्द्राकारेणारोप्य [4]शरः क्षिप्तो येन ‹ताः› सप्तायोभेर्यश्छिद्रीकृताः। ततः शब्दो निर्गतः। 5

आरभध्वं निष्क्रामत युज्यध्वं बुद्धशासने।
धुनीत मृत्युनः सैन्यं [83 b] नडागारमिव कुञ्जरः[5] ॥
यो ह्यस्मिन्धर्मविनये अप्रमत्तश्चरिष्यति।
प्रहाय जातिसंसारं दुःखस्यान्तं करिष्यति ॥ 10

स च शब्दो यावदकनिष्ठान्देवान्गतः ॥ ततो राज्ञः कप्फिणस्य यो ऽभूद्बलमदः स प्रतिविगतः। तस्य बुद्धिरुत्पन्ना किमिदमिति ॥ ततो भगवान्राज्ञो महाकप्फिणस्य चित्तप्रकारमुपलक्ष्य राजवेषमन्तर्धाप्य इदं सूत्रमारब्धवान् ॥

दशबलसमन्वागतो भिक्षवस्तथागतो ऽर्हन्सम्यक्संबुद्धश्च[6]‹तु›र्वैशारद्यविशारद उदारमार्षभं स्थानं प्रतिजानीते ब्रह्मचर्यं प्रवर्तयति पर्षदि सम्यक्सिंहनादं नदति। यदुतास्मिन्सतीदं भवत्यस्योत्पा‹दा›दिदमुत्पद्यते[7]। यदुता [8]ऽविद्याप्रत्ययाः[9] संस्काराः[10]। संस्का- 15

1) MS with irregular sandhi ऐश्वर्यैश्वर्यमदः (DP ऐश्वर्यश्वर्य°).

2) Ex conject.; MS बलदर्पाप्यापि.

3) Ex conject.; MS उत्क्रोष्टुमपि (D उत्को°).

4) MS शरं क्षिप्तो.

5) B कुंजलः, D corr.

6) MS °श्चवैशारद्य°.

7) MS °स्योत्पादितमुत्पद्यते.

8) Avagraha in MS. In B there is no interpunction between the different links of the series; D has added the daṇḍas.

9) Visarga wanting in MS.

10) B संस्कारासंस्का°, D corr.

रप्रत्ययं विज्ञानम्। विज्ञानप्रत्ययं नामरूपम्। नामरूपप्रत्ययं षडायतनम्। षडायतनप्रत्ययः स्पर्शः। स्पर्शप्रत्यया वेदना। वेदनाप्रत्यया तृष्णा। तृष्णाप्रत्ययमुपादानम्। उपादानप्रत्ययो भवः। भवप्रत्यया जातिः। जातिप्रत्यया जरामरणशोकपरिदेवदुःखदौर्मनस्योपायासाः संभवन्ति। एवमस्य केवलस्य महतो दुःखस्कन्धस्य समुदयो भवति[1]॥ यदुत्तास्मिन्नसतीदं न भवति अस्य निरोधादिदं निरुध्यते। यदुताविद्यानिरोधात्संस्कारनिरोधः। संस्कारनिरोधाद्विज्ञाननिरोधः। विज्ञाननिरोधान्नामरूपनिरोधः। नामरूपनिरोधात्षडायतननिरोधः। षडायतननिरोधात्स्पर्शनिरोधः। स्पर्शनिरोधाद्वेदनानिरोधः। वेदनानिरोधात्तृष्णानिरोधः। तृष्णानिरोधादुपादाननिरोधः। उपादाननिरोधाद्भवनिरोधः। भवनिरोधाज्जातिनिरोधः। जातिनिरोधाज्जरामरणशोकपरिदेवदुःखदौर्मनस्योपायासा निरुध्यन्ते। एवमस्य केवलस्य महतो दुःखस्कन्धस्य निरोधो भवति॥ स्वाख्यातो मे भिक्षवो धर्म उत्तानो विवृतश्छिन्नप्लोतिको यावद्देवमनुष्येभ्यः[2] सम्यक्सुप्रकाशितः। एवं स्वाख्याते[3] मे धर्म उत्ताने विवृते छिन्नप्लोतिके[4] यावद्देवमनुष्येभ्यः सम्यक्सुप्रकाशिते यावदलमेव भिक्षवः श्रद्धाप्रव्रजितेन[5] कुलपुत्रेण अलं योगाय अलमप्रमादाय अलं शास्तुः शासने योगमापत्तुं[6] कामं[7] त्वक्स्नायुरस्थ्यवतिष्ठतां परिशुष्यतु[8] शरीरान्मांसशो-

---

1) We have here the same formula of the *pratītyasamutpāda* as in Lalitavistara (p. 347, 16 foll. ed. Lefm.).

2) MS °मनुषेभ्यः.

3) MS °ख्यातो.

4) B यावद्देवमनुषेभ्यः (cp. note 2), P corr. यावद्देव°.

5) B प्रव्रजितेनतेनकुल°, D drops the superfluous syllables तेन.

6) Ex conject.; B °मापत्तु. or आपत्तु; of its copies C has °पत्तु, D °पर्त्तु, P °यत्तु.

7) Ex conject.; MS °कामस्त्वकस्नेष्ठवावतिष्ठतां with some slight strokes crossing each other above the akṣ. वा. My correction has been suggested partly by Feer's translation (p. 20, 16): «doit faire dessécher sa chair et son sang, jusqu'à ce qu'il ne reste plus que la peau, les os et les nerfs» — all of them, the skin པགས', the sinews རྒྱུ་པ', the bones རུས་པ' are represented in the Tibetan

णितम्। अथ च पुनर्यत्तदारब्धवीर्येण प्राप्तव्यं स्थामवता वीर्यवतोत्साहिना दृढपराक्रमे-
णानिक्षिप्तधुरेण कुशलेषु धर्मेषु [1]तद्वहना‹द›नुप्राप्ता न वीर्यस्य स्रंसनं भविष्यति ॥ तत्क-
स्य हेतोः। दुःखं हि [2]कुसीदो विहरति व्यवकीर्णः पापकैरकुशलैर्धर्मैः सांक्लेशिकैः पौ-
नर्भविकैः सज्वरैर्दुःखविपाकैरायत्यां जातिजरामरणीयैर्महतश्चार्थस्य परिहाणि[3]र्भवति।
आरब्धवीर्यस्तु सुखं विहरत्यव्यवकीर्णः पापकैरकुशलैर्धर्मैः सांक्लेशिकैः पौनर्भविकैः 5
सज्वरैर्दुःखविपाकैरायत्यां जातिजरामरणीयैर्महतश्चार्थस्य [4]परिपूरिर्भवति ॥ [5]मण्डपेय-
मिदं प्रवचनं यदुत शास्ता च संमुखीभूतो धर्मश्च देश्यत[6] औपशमिकः पारिनिर्वाणिकः
संबोधिगामी सुगतप्रवेदितः। तस्मात्तर्हि भिक्षव आत्मार्थं च समनुपश्यद्भिः परार्थं चोभ-
यार्थं चेदं प्रतिसंशिक्षितव्यम्। कच्चिन्नः[7] प्रव्रज्या अमोघा भविष्यति सफला सुखोदया
सुखविपाका येषां च परिभोक्ष्यामहे चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरि[8]ष्का- 10

— and also by this parallel passage of the Comm. on Jātaka (I, 71, 24 ed. Fausb.): *kāmaṁ taco ca nahāru ca aṭṭhi ca avasussatu upasussatu sarīre maṁsalohitaṁ*, where I suppose the true reading is *avasissatu* (= 'may be left') not *avasussatu*; cp. *avasissanaṁ* apud Childers.

8) Ex conject.; MS परिशुष्यन्त. In A the vowel *u* of the last akṣara may have been denoted by a stroke parting from the vertical line down to the right.

1) Ex conject.; MS तद्वहनानुप्राप्तात्तवीर्यस्य, unmeaning. The pronoun in the compound *tadvahana-* refers to *dhur.* 'By bearing his burden the perseverant Bauddha monk shall certainly reach his aim; he will not be deficient in heroic patience.' Cp. Feer, p. 20, 19 «obtiendra», who must have found the future in the Tibetan.

2) MS कुशीदो, cp. *supra*, I, p. 15, n. 8.

3) B °णिर्भवत्ति, P corr.

4) So B, D परिपूरि°. Cp. Senart on Mhv. (5, 13) I, 373.

5) Cp. *supra*, I, p. 1, n. 3.

6) MS देश्यतो (P दृश्यतो).

7) Ex conject.; MS कच्चिनः (D कश्चिनः).

8) Ex conject.; MS °परिष्काराणां, a clerical error, I suppose, the accus. is here indispensable. Cp. also Majjh. Nikāya I (ed. Trenckner), 33 *yesâhaṁ cīvarapiṇḍapātasenāsanagilānapaccayabhesajjaparikkhāraṁ paribhuñjāmi tesaṁ te kārā mahapphalā assu mahānisaṁsā.*

रांस्तेषां च ते काराः कृताः कच्चिदत्यर्थमहाफला भविष्यन्ति महानुशंसा महाद्युतयो महाविस्तारा[1] इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

अस्मिन्खलु धर्मपर्याये भाष्यमाणे राज्ञा महाकप्फिणेन अष्टादशामात्यगणसहस्रपरिवारेण विंशतिशिखरसमुद्गतं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रोतापत्तिफलं साक्षात्कृतम् । ततो दृष्टसत्यो भगवच्छासने प्रव्रजितः । तेन युज्यमानेन घटमानेन व्यायच्छमाने[2]नेदमेव पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः शतनपतनविकरणविध्वंसनधर्मतया पराहत्य सर्वक्ले[84a]शप्रहाणादर्हत्वं साक्षात्कृतम् । अर्हन्संवृत्तस्त्रैधातुकवीतरागः समलोष्टकाञ्चन आकाशपाणितलसमचित्तो वासीचन्दनकल्पो विद्याविदारिताण्डकोशो विद्याभिज्ञाप्रतिसंवित्प्राप्तो भवलाभलोभसत्कारपराङ्मुखः सेन्द्रोपेन्द्राणां देवानां पूज्यो मान्यो ऽभिवाद्यश्च संवृत्तः ।

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः । कानि भदन्त कप्फिणेन कर्माणि कृतानि येनाभिरूपो दर्शनीयः प्रासादिको[3] ऽष्टादशामात्यगणसहस्रपरिवारो महानग्नबलः प्रव्रज्य चार्हत्वं साक्षात्कृतमिति ॥ भगवानाह । कप्फिणेनैव भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि । कप्फिणेन कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति । न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ न तेजोधातौ न वायुधातावपि तू[4]पात्तेष्वेव स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च ।

---

1) Sic MS. Though *vaistārika* (see Index on Divy. and Index on Mhv.) is good Sanskrit and correctly made, the subst. *vaistāra* is strange; can it have been sanscritized out of vulgar *vetthāro* answering to skt. *vistāraḥ*?

2) The omitted portion has been added in D.

3) MS °दिक अष्टा° (DP °दिकः अ°).

4) Cp. *supra*, I, p. 74, n. 9.

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम्॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वन्येकनवते कल्पे विपश्यी नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान्। स बन्धुमतीं राजधानीमुपनिश्रित्य विहरति बन्धुमतीयके दावे॥ याव- 5 दन्यतमेन सार्थवाहेन महासमुद्रात्प्रभूतानि रत्नान्यानीतानि। विपश्यी सम्यक्संबुद्धः सश्रावकसङ्घस्त्रैमास्यं भक्तेनोपनिमन्त्रितः विहारं च कारयित्वा चातुर्दिशाय भिक्षुसङ्घाय निर्यातित‹(1)›वान्॥

किं मन्यध्वे भिक्षवो› यो ऽसौ सार्थवाह एष एवासौ कप्फिणो राजा तेन कालेन तेन समयेन। यदनेन विपश्यी सम्यक्संबुद्धः सश्रावकसङ्घस्त्रैमास्यं स्वान्तर्गृहे भक्तेनोप- 10 निमन्त्रितः विहारं च कारयित्वा चातुर्दिशाय भिक्षुसङ्घाय निर्यातितो* *(2) * * * * *॥ अप- राण्यपि भिक्षवः कप्फिणेन कर्माणि कृतान्युपचितानि। भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि वा- राणस्यां महानगर्यां ब्रह्मदत्तो नाम राजा राज्यं कारयति ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं चाकीर्णबहुजनमनुष्यं च प्रशान्तकलिकलहडिम्बडमरं तस्कररोगापगतं शालीक्षुगोमहि- षीसंपन्नं धार्मिको धर्मराजो धर्मेण राज्यं कारयति। सो ऽपरेण समयेन संप्राप्ते वसन्तकाल- 15 समये संपुष्पिते‹षु›(3) पादपेषु हंसक्रौञ्च(4)मयूरशुकशारिकाकोकिलजीवञ्जीवकनिर्घोषिते वन-

1) Ex conject.; MS °तितं. As, after this word, there is doubtless a small gap, it is more probable that we should read that which I have put into the text than that we should acquiesce in *vihāra* being a neuter. Cp. Feer's note 3 on p. 339 of his translation.

2) The text is defective and perverted until the phrase which commences by अपराण्यपि. Cp. Feer, p. 340, n. 1. Comparing the subsequent explications which account for Kapphiṇa's bodily strength and his attainment of the Arhatship, it may be inferred that something like तेनेदानीमभिरूपो दर्शनीयः प्रासादिकः संवृत्तः has been lost and nothing more.

3) Ex conject.; MS सुपुष्पिते पादपेषु. Cp. *supra*, I, p. 179, 3. 225, 9. 307, 10.

4) B क्रोञ्च, P corr.

षण्डे अष्टादशामात्यगणसहस्रपरिवृत उद्यानं[1] निर्गतः। तेन तत्रोद्याने ग्लानः[2] प्रत्येकबुद्धो दृष्टः। स तेन सांप्रेयभोजनेन[3] त्रैमास्यमुपस्थितः परिनिर्वृतस्य च शरीरस्तूपं[4] कारयित्वा अमात्यगणसहायेन तैलाभिषेको दत्तः। तेन सपरिवारो[5] महानग्रबलाधानेन संवृत्तः॥ भूयः काश्यपे भगवति प्रव्रजितो बभूव। तत्रानेनेन्द्रियपरिपाकः[6] कृतः। तेनेदानीमर्हत्त्वं साक्षा-
5 त्कृतम्। इति ‹हि›[7] भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाक एकान्तशुक्लाना-मेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रस्तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव कर्मस्वाभोगः[8] करणीय इत्येवं वो भिक्षवः शिक्षितव्यम्॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्॥

---

1) Anusvāra wanting in MS.

2) Visarga wanting in MS.

3) This word for «wholesome food» occurs also *supra*, I, 255, 2. It probably is some alteration of a word of the vulgar language, the Pāli representant of which is *sappāya*, cp. Childers *s. v.*, especially the combination *sappāyāni bhesajjāni* mentioned there. The Tibetan translator renders it by «wholesome food» ཕན་པའི་ཟས་ཀྱིས་. Çikṣāsamuccaya (ed. Bendall) p. 55, 17 प्रणीतानि च संप्रेयाणि (so MS).... खादनीयभोजनीयानि.

4) Ex conject.; MS शरीरं स्तूपं.

5) The Tibetan translator seems to have taken this for two words: स परिवारो; see Feer's translation, p. 340, n. 2.

6) B is here somewhat altered, and it is uncertain, whether it has exactly the very reading I have put into the text; something like this is doubtless meant. D has तत्रानिन्द्रिय°, P तत्रासरेनेन्द्रिय°, the copyist who wrote C has omitted the akṣaras he could not read, between त and न्द्रियं.

7) Added in D.

8) B °भोगकर°, D corr.

## भद्रिक इति ८६ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्डदस्यारामे ॥ 5

यदा भगवान्षड्वर्षाभिसंबुद्धो द्वादशवर्षनिर्गतः कपिलवस्तु[1] अनुप्राप्तस्तदा द्रोणोदनामृतोदनप्रमुखैरनेकैः शाक्यसहस्रैः सत्यदर्शनं कृतं स्थापयित्वा राजानं शुद्धोदनम् ॥ ततो राजा शुद्धोदनस्तां पुत्रशोभां दृष्ट्वा परं विस्मय[84 b]मापन्नः । तस्य बुद्धिरुत्पन्ना । यदि मे पुत्रो न प्रव्रजितो ऽभविष्यत्सो ऽयमभविष्यद्राजा चक्रवर्ती चतुरन्त[2]विजेता धार्मिको धर्मराजः । स एतर्हि जटिलप्रव्रजितपरिवारो न शोभते । यन्वहं शाक्यकुलेभ्य[3] एकैकं प्रव्राजयेयमिति ॥ ततो राज्ञा[4] शुद्धोदनेन नगरे घण्टावघोषणं कारितं सर्वशाक्यैः 10

---

1) Ex conject.; MS कपिलवास्तुमनुप्रा° (D °वस्तु°).

2) Ex conject.; MS चतुरंगविजेता (D चतुरङ्गोवि°). I suppose that, *caturaṅga* being more common to them than *caturanta* or *-antā* = 'the whole earth', copyists have put the former word instead of the latter, which is necessarily required. The Tibetan translation represents the genuine text, it has མཐའ་བའི་, see Feer, p. 350, n. 2.

3) Ex conject.; B शाक्यकुले 'पिकया' (पा) प्रव्राजयेयमिति, and at the top of the page, with reference to this passage, there is written विषयां [for विषयात् 'from my territory'] intended as a correction of the cancelled akṣaras पिकया (or पिपाकया). I do not, however, hold this for genuine, and have put into the text that which seems to express exactly the phrase wanted and rendered in the Tibetan version, as exposed by Feer, p. 350 n. 3. Cp. Mhv. III, 176, 6 कुलातो कुलातो एकः क्षत्रियकुमारो प्रव्रजतु.

4) MS राजा.

संन्निपत्तव्यमिति[1] । ततः सर्वशाक्येषु संनिपतितेषु राज्ञा शुद्धोदनः[2] कथयति । शृण्वन्तु भवन्तः[3] शाक्या यदि सर्वार्थसिद्धः कुमारो न प्रव्रजितो ऽभविष्यद्युष्माभिरेवोपस्थानं कृतम-[4]भविष्यत् । तदिदानीमस्य प्रव्रजितस्य एकैकेन कुलपुरुषेण शाक्येनोपस्थायकेन प्रव्रजितव्यमिति ॥ ततो भद्रिकानिरुद्धरेवतदेवदत्तप्रभृतीनि पञ्च कुमारशतानि ‹प्रव्रजितानि› ॥

5 तेषामुपालिर्नाम कल्पक उपस्थायकस्तान्प्रव्रजितान्दृष्ट्वा[5] रोदितुमारब्धः ॥ ततः शाक्यैः पृष्टः । किमर्थमुपाले[6] रुद्यत इति ॥ स करुणादीनविलम्बितैरक्षरैरुवाच । यूयं प्रव्रजिताः को ममेदानीं भक्ताच्छादनेन[7] परिपालनं करिष्यतीति ॥ ततः शाक्या ऊचुः । तेन ह्युपाले पटकं प्रसारयेति ॥ तेन पटकः प्रसारितः । ततः शाक्यैः शरीरावलग्नानां हारार्धहारमणिमुक्तावैडूर्यकेयूराङ्गुलीयकानां[8] महान्राशिः कृतः ॥ तत उपालेः कल्पकस्य तान्दृष्ट्वा वि-

10 चित्रं चालङ्कारमभिवीक्ष्य योनिशो मनसिकार उत्पन्नः । इमे तावच्छाक्याः कुलरूपयौव-

---

1) Cp. Mhv. III, 177—181.

2) B शुद्धादनः, CP corr.

3) MS भद्न्तः, cp. Feer, p. 350, n. 4 and *supra*, p. 103 n. 2. Feer has not well understood the purport of Çuddhodana's allocution.

4) Ex conject.; B मंविष्यत्तदि°, the sign • refers to the top of the page, where the akṣ. भ is found to be inserted here. The copyists have put भ in its right place, in P वि has been omitted.

5) Ex conject.; MS कल्पकः उपाशकतान्प्र°. Feer, p. 350, n. 6 makes a quite just observation about the Tibetan equivalent of the corrupt *upāçaka*, བསྙེན་བཀུར་བྱེད་པ་, he fails only in the correct form of the Sanskrit word, the meaning of which he found out. How it happened that *upasthāyaka* was changed by copyists into *upāçaka* (sic) is easy to understand.

6) Ex conject.; MS उपालि. Further on the vocative of *Upāli* has kept its correct form in MS.

7) Ex conject.; MS भक्ताच्छादेन. Though *ācchāda* is also met with in Buddhist Sanskrit (see Index on Mhv.), yet in this combination of «food and dress» *ācchādana* is the standing term (cp. e. g. Mhv. III, 177, 16).

8) B केयूरांगुलीकायां (ना written above), which has become °गुलीकानां in CP, whereas D has instead of it केयूरीकानां.

नवत्तो ऽन्तःपुराणि इमं[1] चालङ्कारं खेटवडुत्सृज्य प्रव्रजिताः किमुताहमल्पविभव <इम>[2]म-
ल<ङ्कारं> गृहं नेष्यामि । अलमनेन । यन्न्वहमेताननुप्रव्रजेयमिति ॥ अथोपालिः[3] कल्पको येन
भगवांस्तेनोपसंक्रान्तः । उपसंक्रम्य भगवतः पादयोर्निपत्य भगवन्तमिदमवोचत् । यदि
भगवन्मादृशानां[4] प्रव्रज्यास्ति[5] लभेयाहं[6] स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावं
चरेयमहं भगवतो ऽन्तिके ब्रह्मचर्यमिति । ततो भगवता एहिभिक्षुकया प्रव्राजितः[7] ॥ 5

ततो भद्रिकप्रमुखाणि पञ्च शाक्यशता<नि>[8] भिक्षुवेषधारीणि[9] बुद्धप्रमुखस्य भिक्षुस-
ङ्घस्य प्रणामं कर्तुं प्रवृत्तानि । ते उपालिं ज्ञात्वा कुलरूपविभवा[10]न्वितत्वान्नेच्छन्त्युपालेः
प्रणामं कर्तुम् ॥ तत्र भगवानायुष्मन्तं भद्रिकमामन्त्रयते । भद्रिक कर्तव्यो ऽस्य प्रणामो
यस्मादिदं[11] मामकं शासनं न कुलरूपयौवनैश्वर्यचातुर्वर्ण्य[12]विशुद्धिमपेक्षत इति ॥ ततो मूल-

---

1) Ex conject.; MS इमे.

2) Ex conject.; MS °विभवःमलंगृहंनेष्यामि. As the transmitted text is here manifestly defective, I have ventured to restore the original form of it, as best I could, availing myself of the Tibetan translation, where the word for *alamkāra* is used a second time: རྒྱན་འདི་དག་ཁྱིམ་དུ་བཀུར་དུ་ཅི་ཡོད་. Cp. Feer, p. 351, 9.

3) Ex conject.; MS अथोपालिक°.

4) Ex conject.; MS भगवांमा° (D भगवामा°).

5) Ex conject.; MS प्रव्रज्याभि (D प्रव्रज्या भवति, a conjectural correction).

6) MS लभेयं, but cp. *supra*, I, p. 347, 5, II, p. 3, 9. 33, 8 and Divy. 15, 18. 48, 16. 49, 13. 97, 21. 340, 13. For this reason I have corrected लभेयाहं, changing the opinion I expressed *supra* I, 248 n. 4.

7) B °जिता, D corr.

8) D adds the missing akṣara.

9) B भिक्षुवेवच्छधारिणी, modified by several erasures and additions, in order to change it into °वेशधारीणि. But as the writing is somewhat indistinct, the copyists who wrote DCP wrongly put °वेशधारिणी.

10) The Tibetan translator seems to have had here before him *yauvana*, not *vibhava*, cp. Feer, p. 351, 21. On the other hand, in the foregoing (p. 112, 10) he must have found in his text both *yauvana* and *vibhava*, cp. Feer, ll. n. 3.

11) MS °स्मादियं.

12) MS चातुर्वर्ष°.

निकृत्ता[1] इव द्रुमा भद्रिकप्रमुखाणि पञ्च शाक्यशतानि धर्मतामवलम्ब्य पादयोर्निपतितानि। तेषां पादवन्दनसमकालमेवेयं महापृथिवी षड्विकारं प्रकम्पिता॥

तत्रायुष्मता भद्रिकेण युज्यमानेन घटमानेन व्यायच्छमानेनेदमेव पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः शतनपतनविकरणविध्वंसनधर्मतया पराहत्य
5 सर्वक्लेशप्रहाणादर्हत्वं साक्षात्कृतम्। अर्हन्संवृत्तस्त्रैधातुकवीतरागः[2] समलोष्टकाञ्चन आकाशपाणितलसमचित्तो वासीचन्दनकल्पो विद्याविदारिताण्डकोशो विद्याभिज्ञाप्रतिसंवित्प्राप्तो भवलाभलोभसत्कारपराङ्मुखः सेन्द्रोपेन्द्राणां देवानां पूज्यो मान्यो ऽभिवाद्यश्च संवृत्तः। स च महात्मा हीनदीनानुकम्पी॥ सो ऽपरेण समयेन पूर्वाह्णे निवास्य पात्रचीवरमादाय श्रावस्तीं गोचराय प्रस्थितः। यावदन्यतरचण्डालकठिनं पिण्डाय प्रविष्टः॥
10 तेन खलु समयेन राजा प्रसेनजित्कौशल[3] एकपुण्डरीकं हस्तिनागमभिरुह्य दीर्घेण चारायणेन सारथिना भगवतो दर्शनाय संप्रस्थितः। ददर्श राजा प्रसेनजित्कौशलो[3] भद्रिकं शान्तेन्द्रियं शान्तमानसं परमेण च चित्तदमव्युपशमनसमन्वागतं पांसुकूलप्रावृतं[4] लूहं पिण्डपातं गृहीत्वा तस्माच्चण्डालकठिनान्निर्गच्छन्तं दृष्ट्वा च पुनर्दीर्घं चारायणं[5] सारथिमामन्त्रयते। स्यादयं चारायण भद्रिको भिक्षुः॥ एवं यथा वदसि॥ इति श्रुत्वा राजा प्रसेनजित्कौशलः[3]
15 संमोहमापन्नः[6] पृथिव्यां मूर्छितः[7] पतितः। ततो जलपरिषेकप्रत्यागतप्राणचेतसो[8][9] लब्धमानसश्चारायणेन सा[85 a]रथिनोत्थापितः॥

---

1) MS °निकृत्ता (D °त्त), cp. *supra*, I, p. 3, n. 9.

2) B °र्हत्सं°, DP corr.

3) B °जित्को°, D corr.

4) MS पांशुकुल° (P पाशु°).

5) Ex conject.; MS दीघचा°.

6) B संमाहमा°, D corr.

7) MS मूर्छितोपतितः.

8) °षेकाप्रात्या°, D corr.

9) Ex conject.; MS प्राणः चेतसा. Perhaps the right reading is °प्राणचेतनो.

ततो राजा भगवत्सकाशमुपसंक्रम्य भगवतः पादाभिवन्दनं कृत्वा भगवन्तमुवाच । भगवन्नद्भुतं[1] मे दृष्टम् । असौ भद्रिकः शाक्यराजः पांसुकूलप्रावृतो लूहं पिण्डपातं गृहीत्वा देवमनुष्यावर्जनकरेणातिप्रशान्तेनेर्यापथेन पिण्डपातमादाय चण्डालकठिनान्निर्गतः । तस्य ममैतदभवत् । आश्चर्यं यावत्सुविनीतं भगवच्छासनं[2] यत्र नामैवंविधाः[3] कुमाराः सुवेधिता एवंविनीतप्रचाराः[4] संवृत्ता इति ॥ भगवानाह । अपरमपि महाराज भद्रिकस्याश्चर्यं शृणु । 5
अयं महाराज भद्रिको ऽरण्यगतो[5] वा वृक्षमूलगतो वा शून्यागारगतो वा त्रिरुदानयति । अहो बत सौख्यम् । यदहमप्रव्रजितः सन्राजकुलमध्यगतो[6] ऽमात्यनैगमजानपदसुसंरक्षितः प्राकारपरिखाद्वारस्तूपाभिनिगूढः[7] परिशङ्कितहृदयः संविग्नः समन्ततःशङ्की[8] निद्रां नासादयामि सो ऽहमेतर्हि[9] निरपेक्षः काये[10] जीविते च सुखं यत्रतत्रस्थो विहरामीति ॥

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः । कानि भदन्त भद्रिकेण 10
पूर्वमन्यासु जातिषु कर्माणि कृतानि येनाभिरूपो दर्शनीयः प्रासादिक आढ्ये राजकुले

---

1) The copyist of P could not read the akṣara द्भु, and left a blank space between न्न and तं. This may account for Feer's n. 6 on p. 352.

2) MS भगवन्शासनं (D भगवत्शा°).

3) MS नामैकंविधाः.

4) B °प्रवारासंवृत्ताः, DP °प्रचारासंवृत्ताः.

5) MS भद्रिकअरण्य°.

6) MS °मध्यागतः । अमात्य° (D °माध्यगतः । अ°).

7) It is not easy to account for स्तूप here. Its Tibetan equivalent is གཅན་ཟན་རྣམས་ (beasts of prey). Feer, p. 353, n. 1 supposes, rightly, I think, that „turrets representing such images" are meant. Cp. Jtkm. avad. nr. 25, vs. 9. This must be, therefore, a *laukika* meaning of *stūpa*. The Chinese translator has abridged here so much that his testimony cannot settle the point.

8) B शकी made out of शकि; the copies have शकी.

9) Ex conject.; MS योऽहमेतर्हि (D मोऽह°).

10) The Tibetan translator did not read in his text कार्ये, as might be inferred from Feer, p. 353, s «et maintenant, sans souci des affaires et de la vie, partout où je me trouve, j'y réside en paix»; for he has ལུས་དང་སྲོག་ལ་ = *kāye jīvite ca*. The Paris ms. (P) has here कोपे.

प्रत्याज्ञातः प्रव्रज्य चार्हत्त्वं साक्षात्कृतमिति ॥ भगवानाह । भद्रिकेणैव भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि । भद्रिकेण कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति । न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ[1] न तेजोधातौ
5 न वायुधातावपि तूपात्तेष्वेव[2] स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च।

न प्रणश्यन्ति कर्माणि अपि कल्पशतैरपि ।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि वाराणस्यां नगर्यामन्यतमः कोट्टमल्लकः[3] क्षुत्क्षामपरि-
10 गतशरीर इतश्चामुतश्चान्वाहिण्डते । यावदन्यतरा दारिका पूपलिका[4] आदाय गच्छति । ततस्तेन कोट्टमल्लकेन सा दारिका पूपलिकानामर्थे अभिभूता। ततो बलादेकां पूपलिकामादाय त[तस्त]तः पलायितुमारब्धः । सा चास्य दारिका पृष्ठतः समनुबद्धैव । ततो ऽसौ कोट्टमल्लकः सहसा नदीचारिकामुत्तीर्णः ॥ असति बुद्धानामुत्पादे प्रत्येकबुद्धा लोक उत्पद्यन्ते हीनदीनानुकम्पकाः प्रान्तशयनासनभक्ता एकदक्षिणीया लोकस्य । तदान्यतरः[5] प्रत्ये-
15 कबुद्धस्तस्य कोट्टमल्लकस्याग्रतः स्थितः । ततः कोट्टमल्लस्य तं प्रत्येकबुद्धं शान्तेर्यापथं[6] दृष्ट्वा महान्प्रसादो[7] जातः । तेन स्वं व्यसनमगणय्य[8] प्रत्येकबुद्धाय पूपलिका[9] प्रतिपादिता ।

---

1) B नाव्धाधौ, DP corr.

2) Cp. *supra*, I, p. 74 n. 9.

3) In Divy. the word is written *kroḍamallaka*, see p. 85, 20 foll. 89, 21 171, 16 of Cowell and Neil's edition. Cp. Burnouf, *Introduction*, p. 199 n. 1, and Feer, p. 353 n. 2.

4) Ex conject., MS °लिकामादाय.

5) B °तरप्रत्ये, D corr.

6) B शान्तेर (with a small stroke at the left top-side, a sign for cancelling that akṣ.) र्यापथं. Hence D शांतेरिर्य्यापथं, C शाकेर्यापथं, P शांतेर्यापथं.

7) I have followed D; B महाप्रसादो.

8) Note the ungrammatical gerund *agaṇayya* for *agaṇayitvā*.

9) B here पूप°, D corr.

तस्य विप्रकर्षसंजननार्थं विततपत्न इव हंसराजो गगणतलमभ्युद्गम्य विचित्राणि प्रातिहार्याणि विदर्शयितुमारब्धः। ततः कोट्टमल्लकस्तदत्यद्भुतं[1] देवमनुष्यावर्जनकरं प्रातिहार्यं दृष्ट्वा मूलनिकृत्त[2] इव द्रुमः पादयोर्निपत्य प्रणिधानं कर्तुमारब्धः। यन्मे सिद्धव्रतो दक्षिणीयः पूपलिकया[3] प्रतिपादितो ऽनेनाहं कुशलमूलेन चित्तोत्पादेन देयधर्मपरित्यागेन च यत्र यत्र जायेय[4] तत्र तत्रोच्चकुलीनः स्यामेवंविधानां च धर्माणां लाभी स्यां प्रति‹वि›शि-[5] 5 ष्टतरं चातः शास्तारमारागयेयं मा विरागयेयमिति॥

भगवानाह। किं मन्यध्वे भिक्षवो[6] यो ऽसौ तेन कालेन तेन समयेन कोट्टमल्लको ऽयमसौ[7] भद्रिकः। यत्तेन प्रत्येकबुद्धः पूपलिकया प्रतिपादितस्तस्य कर्मणो विपाकेनाढ्ये शाक्ये प्रत्यागतः[8]॥ भूयः काश्यपे भगवति प्रव्रजितो बभूव। तत्रानेन दश वर्षसहस्राणि ब्रह्मचर्यावासः प्रतिपालितः। तेनेदानीमर्हत्त्वं साक्षात्कृतम्। इति हि भिक्षव एकान्तकृ- 10 ष्णानां कर्मणामेकान्तकृष्णो विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रस्तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव कर्मस्वाभोगः[9] करणीय इत्येवं वो भिक्षवः शिक्षितव्यम्॥

इदमवोचद्भग[85 b]वानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्॥

---

1) B तदस्त्युद्भूतं, D corr.

2) MS °निकृत्त, cp. *supra*, p. 114 n. 1.

3) Ex conject., cp. *infra*, l. 8; MS पूपलिका, the copyist of B or some prototype of B may have blended two constructions.

4) MS ज्ञायेयं, cp. *supra*, p. 76, n. 7. 81, n. 3.

5) D adds the missing akṣara.

6) B भिक्षवा, DP corr.

7) MS °ल्लकग्रयम°.

8) MS प्रत्यागताः. In the same sense *supra*, p. 116, 1 *pratyājātaḥ*.

9) B °भोगक°, D corr.

# राष्ट्रपाल इति[1] ९०।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः
श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुड-
किन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयना-
5 सनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः स्थूलकोष्ठकमुपनिश्रित्य[2] विहरति स्थू-
लकोष्ठकीये वनषण्डे। तेन खलु समयेन स्थूलकोष्ठके कौरव्यो[3] नाम राजा राज्यं कारयति
ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं चाकीर्णबहुजनमनुष्यं च प्रशान्तकलिकलहडिम्बडमरं त-
स्कररोगापगतं शालीक्षुगोमहिषीसंपन्नमखिलमकण्टकमेकपुत्रमिव राज्यं पालयति। तस्य
भ्रातृपुत्रो राष्ट्रपालो नाम्ना अभिरूपो दर्शनीयः प्रासादिकः सर्वाङ्गप्रत्यङ्गोपेतः॥ तस्य विन-
10 यकालमवेक्ष्य भगवान्पूर्वाह्णे निवास्य पात्रचीवरमादाय भिक्षुगणपरिवृतो भिक्षुसङ्घपुर-
स्कृतः स्थूलकोष्ठकं पिण्डाय प्रविष्टः। ददर्श राष्ट्रपालो बुद्धं भगवन्तं द्वात्रिंशता महापुरु-
षलक्षणैः समलङ्कृतमशीत्या चानुव्यञ्जनैर्विराजितगात्रं व्यामप्रभालङ्कृतं सूर्यसहस्रातिरे-
कप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकं सहदर्शनाच्चास्य भगवतोऽन्तिके चित्तं प्रसन्नम्।
स प्रसादजातो भगवतः पादयोर्निपत्य प्रव्रज्यां याचते॥ ततस्तं भगवानाह। वत्स अनुज्ञातो
15 ऽसि मातापितृभ्यामिति॥ राष्ट्रपालः कथयति। नो भदन्तेति॥ भगवानाह। न हि

---

1) A different redaction of this story how Rāṣtrapāla became a monk makes up the first part of Majjhima Nikāya, Majjhima Paññāsa IV, 2, as Feer rightly observes, see his remark I on p. 360.

2) MS °निसृत्य. In the Pāli redaction quoted in the preceding note it is explicitly said that Bhagavān stayed at that time in the land of the Kurus, and that Thullakoṭṭha was a market-place *(nigama)* in that country. But there is no question there of a king. Raṭṭhapālo is styled a *kulaputto*, nothing more.

3) B कोरव्यो, D corr. Açokāv. nr. 21, which is the paraphrase of this avad. of our text, has likewise कौरव्यः (f. 263 a 5).

वत्स तथागता वा तथागतश्रावका वा अननुज्ञातं मातापितृभ्यां प्रव्राजयन्त्युपसंपादयन्ति चेति ॥

ततो राष्ट्रपालो मातापित्रोः सकाशमुपसंक्रान्तः । उपसंक्रम्य बुद्धस्य वर्णं भाषते । दृष्टो मया भगवाञ्छाक्यमुनिः सम्यक्संबुद्धः स्फीतं चक्रवर्तिराज्यमपहाय प्रव्रजितः [(1)]षष्टिं चान्तःपुरसहस्राणि [(2)]मुण्डः सङ्घाटिप्रावृतो ऽस्मिन्नेव स्थूलकोष्ठके पिण्डपातमटति । 5 [(3)]तदर्ह<तो> युवां मामनुज्ञातुं यदहं तं भगवन्तं प्रव्रजितमनुप्रव्रजेयमिति ॥ ततो ऽस्य मातापितरौ नानुजानीतः ॥

ततस्तेनैको भक्तच्छेदः कृतः । द्वौ त्रयो वा यावत्षड्भक्तच्छेदाः [(4)]कृताः ॥ अथ राष्ट्रपालस्य मातापितरौ येन राष्ट्रपालो गृहपति<पुत्र>स्तेनोपसंक्रान्तौ । उपसंक्रम्य राष्ट्रपालं गृहपतिपुत्रमिदमवोचतां[(5)]म् । यत्खलु तात राष्ट्रपाल जानीयास्त्वं हि [(6)]सुकुमारः सुखैषी । न 10 त्वं जानको दुःखस्य[(7)] । दुष्करं ब्रह्मचर्यं दुष्करं प्राविवेक्यं दुरभिरममेकत्वं दुरभिसंबोधान्यरण्यवनप्रस्थानि प्रान्तानि शयनासनान्यध्यावस्तुम् । इहैव त्वं तात राष्ट्रपाल निषद्य कामांश्च परिभुङ्क्ष्व दानानि च देहि पुण्यानि च कुरु ॥ एवमुक्ते राष्ट्रपालो गृहपतिपुत्रस्तूष्णीम् ॥

अथ राष्ट्रपालस्य गृहपतिपुत्रस्य मातापितरौ [(8)]ज्ञातीनुद्योजयतः । अङ्ग तावज्ज्ञा- 15

---

1) MS षष्टिंचान्तःपुर°.

2) MS मुण्डाः.

3) Ex conject.; MS तदर्हंयुवांमामनुज्ञातं.

4) Cp. *supra*, p. 80, 15.

5) MS °वोचत्.

6) MS नुकुमारः सुखैषी, the same words are preserved without fault some lines below (p. 120, 3).

7) B दुःखस्म, CDP corr.

8) The effort of the kinsmen to dissuade Rāṣṭrapāla does not occur in the Pāli redaction of the story. After the unsuccessful entreaty of the parents there is only one repetition of those instances, by the comrades, not two, as here.

तयस्तातं राष्ट्रपालमुत्थापयत[1]॥ अथ राष्ट्रपालस्य गृहपतिपुत्रस्य ज्ञातयो येन राष्ट्रपालो गृहपतिपुत्रस्तेनोपसंक्रान्ताः । उपसंक्रम्य राष्ट्रपालं गृहपतिपुत्रमेवमवोचन्[2] । यत्खलु तात राष्ट्रपाल जानीयास्त्वं हि सुकुमारः सुखैषी । न त्वं जानको दुःखस्य। दुष्करं ब्रह्मचर्यं दुष्करं[3] प्राविवेक्यं दुरभिरममेकत्वं[4] दुरभिसंबोधान्यरण्यवनप्रस्थानि[5] प्रान्तानि शयनास-
5 नान्यध्यावस्तुम् । इहैव त्वं तात राष्ट्रपाल निषद्य कामांश्च परिभुङ्क्ष्व दानानि च देहि पुण्यानि च कुरु ॥ एवमुक्ते राष्ट्रपा[86a]लो गृहपतिपुत्रस्तूष्णीम् ॥

अथ राष्ट्रपालस्य गृहपतिपुत्रस्य मातापितरौ राष्ट्रपालस्य गृहपतिपुत्रस्य वयस्यकानुद्योजयतः । अङ्ग तावत्कुमारा[6]स्तातं राष्ट्रपालमुत्थापयत[7] ॥ अथ राष्ट्रपालस्य गृहपतिपुत्रस्य वयस्यका येन राष्ट्रपालो गृहपतिपुत्रस्तेनोपसंक्रान्ताः । उपसंक्रम्य राष्ट्रपालं
10 गृहपतिपुत्रमिदमवोचन्[8]। यत्खलु सौम्य राष्ट्रपाल जानीयास्त्वं हि सुकुमारः सुखैषी[9] । न त्वं जानको दुःखस्य। दुष्करं ब्रह्मचर्यं दुष्करं प्राविवेक्यं दुरभिरममेकत्वं दुरभिसंबोधान्यरण्यवनप्रस्थानि प्रान्तानि शयनासनान्यध्यावस्तुम् । इहैव त्वं सौम्य राष्ट्रपाल निषद्य कामांश्च परिभुङ्क्ष्व दानानि च देहि पुण्यानि च कुरु ॥ एवमुक्ते राष्ट्रपालो गृहपतिपुत्रस्तूष्णीम् ॥

15 अथ राष्ट्रपालस्य गृहपतिपुत्रस्य वयस्यका यन राष्ट्रपालस्य गृहपतिपुत्रस्य मा-

1) MS °यतः.

2) MS °वोचत्.

3) MS प्रातिवेत्तं (D °वेक्यं).

4) MS °कत्वे.

5) MS वनप्रस्थितानि.

6) MS कुमारस्तातं.

7) Ex conject.; MS °पयतु. It is also possible that उत्थापयन्तु should be meant, but the comparison of the analogous phrase *supra*, l. 1 makes this improbable.

8) MS °वोचत्.

9) MS सुखेषो.

तापितरौ तेनोपसंक्रान्ताः । उपसंक्रम्य राष्ट्रपालस्य गृहपतिपुत्रस्य मातापितराविदम-वोचन् । अम्ब तातानुजानीतं[2] सौम्यं राष्ट्रपालं प्रव्रजितुं[3] सम्यगेव श्रद्धया अगारादनगारिकां[4] किं मृतेन करिष्यथ[5] । सचेत्तातः[6] प्रव्रज्यायामभिरंस्यते जीवन्तमेनं द्रक्ष्यध्वे[7] सचेन्नाभिरमते कान्या पुत्रस्य गतिरन्यत्र मातापितरावेव[8] ॥ एवमावां कुमारकास्तातं[9] राष्ट्रपालमनुजानीयावः सचेत्प्रव्रज्योपदर्शिष्य * * * * * * * * * * * * * * * * * * * *[10] 5

(1 marks गृहपति above.)

1) B गृहपनिपु°, D corr.

2) Ex conject.; MS °नीथ सौम्यरा°.

3) B प्रव्रजितं, CD corr.

4) I have followed D; B आगाराद°.

5) By the insertion of सौम्य and of the formula सम्यगेव श्रद्धया the original metrical form of the phrase has been obscured, whether the interpolation was made by the composer of Avadānaç. or by scribes. The original form must have been that of an anuṣṭubh çloka, such as:

अम्ब तातानुजानीतमगारादनगारिकाम् ।
राष्ट्रपालं प्रव्रजितुं किं मृतेन करिष्यथः ॥

6) Ex conject.; MS तातप्र°.

7) MS द्रक्ष्यध.

8) Ex conject.; MS गतिर्नान्यत्र मातापितरावेव. I believe that I thus have met the doubts of Feer (p. 357 n. 4) as to the sound condition of the text. I see here no discrepancy between the original Sanskrit and the Tibetan translation. *Anyatra* (save, except) is construed with acc., a construction seldom met with. Another instance is Mahābh., IV, 18, 3 का नु जीवति मादृशी...... अन्यत्र द्रौपदीं प्रभो.

9) Ex conject.; MS तातरा°.

10) MS सचेत्प्रव्रज्योपदर्शयिष्यामिभगवन्तथ राष्ट्रपालो etc. There can not exist the least doubt about the corrupt and defective state of this passage in the transmitted text. I have left out the four akṣaras before अथ राष्ट्रपालो, since they are utterly depraved and precede a considerable gap. I suggest that the uncorrupted and original shape of that portion of the phrase that precedes the gap was सचेत्प्रव्रज्योपदर्शयिष्यत्यात्मानम् = Feer p. 357, 24 «pourvu que après son initiation, nous puissions le voir»; what follows, «nous rencontrer avec lui» (འཕྲད་དུ་འོང་ན་), falls already into the gap. The first six lines of Feer, p. 358 are translated from the Tibetan and correspond to the portion lost in the Sanskrit. For the sake of completeness I transcribe them: «Alors les compagnons de Râṣṭrapâla, le fils du maître de maison, se rendirent au lieu où était le fils du maître de maison Râṣṭrapâla;

अथ राष्ट्रपालो गृहपतिपुत्रो ऽनुपूर्वेण कायस्य स्थामं च बलं च संजनय्य येन भगवांस्तेनोपसंक्रान्तः। उपसंक्रम्य भगवत्पादौ शिरसा वन्दित्वैकान्ते ऽस्थात्। एकान्ते स्थितो राष्ट्रपालो गृहपतिपुत्रो भगवन्तमिदमवोचत्। अनुज्ञातो ऽस्मि भगवन्मातापितृभ्याम्। लभेयाहं स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावं चरेयमहं भगवतो ऽन्तिके ब्रह्म-5 चर्यम्॥ लब्धवान्राष्ट्रपालो(1) <गृहपति>पुत्रः स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावम्॥ स एवं प्रव्रजितः सन्निदमेव पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः शतनपतनविकरणविध्वंसनधर्मतया पराहत्य सर्वक्लेशप्रहाणादर्हत्वं साक्षात्कृतवान्। अर्हन्संवृत्तस्त्रैधातुकवीतरागः(2) समलोष्टकाञ्चन आकाशपाणितलसमचित्तो वासीचन्दनकल्पो विद्याविदारिताण्डकोशो विद्याभिज्ञाप्रतिसंवित्प्राप्तो भवलाभलोभसत्का-

---

et quand ils y furent arrivés, ils parlèrent ainsi à Râṣṭrapâla: 'Gentil Râṣṭrapâla, ton père et ta mère consentent à ce que tu sois initié, pourvu que, après ton initiation, ils puissent se rencontrer avec toi et voir ton visage'. — 'Oh! ils se rencontreront avec moi', répondit Râṣṭrapâla».

The narrative of the consent of R.'s parents in Açokāv. is somewhat different. It is not the comrades who report to R. the permission of his father, but the father himself goes up to him and tells him that he and also his mother give their permission, but on this condition: सर्वदा नौ मुखं पुत्र दर्शयितुं त्वमर्हसि (MS °ति). After this,

इति पित्रोदितं श्रुत्वा राष्ट्रपालः (MS °लं) स मोदितः।
तथेति संप्रतिज्ञाय शयनादुदतिष्ठत॥
ततः स साञ्जलिः पित्रोः पादान्नत्वा प्रमोदितः।
कृत्वार्थिभ्यः प्रदानानि सहसा निर्ययौ गृहात्॥ (f. 268a 6 sq.).

It may be apposite to adduce here in full the corresponding passage of the Pāli redaction: *sace tumhe Raṭṭhapālaṁ kulaputtaṁ nānujānissatha agārasmā anagāriyaṁ pabbajjāya tattheva maraṇaṁ bhavissati | sace pana tumhe R. k. anuj. a. a. p. pabbajitaṁ pi naṁ dakkhessatha | sace R. k. nābhiramissati agārasmā a. p. kā tassa aññā gati bhavissati idheva paccāgamissati.* The answer of the parents follows immediately: *anujānāma tāta R. k. a. a. p. pabbajitena ca pana te mātāpitaro uddassetabbāti.*

1) MS लब्धवान्राष्ट्रपालपुत्रः. Feer (p. 358, 16) following the Tibetan, as I have examined, has here only «Râṣṭrapâla obtint».

2) B °र्हत्संवृ°, D corr.

स्पराङ्मुखः सेन्द्रोपेन्द्राणां देवानां पूज्यो मान्यो ऽभिवाद्यश्च संवृत्तः। तत्र भगवान्भिक्षूना-मन्त्रयते स्म। एषो ऽग्रो मे भिक्षवो भिक्षूणां मम श्रावकाणां * * * *[1] यदुत राष्ट्रपालो भिक्षुरिति॥

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। कानि भदन्त राष्ट्रपालेन कर्माणि कृतानि येनाढ्ये राजकुले प्रत्याजात इति अभिरूपो दर्शनीयः प्रासादिकः प्रव्रज्य चार्हत्त्वं साक्षात्कृतमिति॥ भगवानाह। राष्ट्रपालेनैव भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि। राष्ट्रपालेन कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यतीति। <न> भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ न तेजोधातौ न वायुधातावपि [2]तूपात्तेष्वेव स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम्॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि विदेहराजः सपरि<वारः>[3] परचक्रवित्रासितो ऽटवी-

---

1) According to Feer (p. 358 n.) the gen. plural lost is आरण्यकानाम् or a synonymous word, on account of the Tibetan term དགོན་པ་པ་རྣམས་ཀྱི་; in Açokāv. the utterance of the Buddha is a little different. His praise of R. is related in this çloka:

एषो ऽग्रो भिक्षवः सर्वभिक्षूणां पुण्यवांछिनाम्।
यदुत राष्ट्रपालो ऽयं श्रद्धाभि(sic)भक्तिमान्सुधीः॥ (f. 268 b 5)

the last pāda, I think, must be read श्रद्धालुर्भक्ति°.

2) Cp. *supra*, I, p. 74 n. 9.

3) Ex conject.; MS सपरःपरचक्र°. Feer (p. 358, 28) translates «entouré de sa suite», after the Tibetan, of course. For this reason I have put सपरि<वारः>, though I had also thought of सबलः, as is found in Açokāv., which here closely clings to the text of Avadānaç. Its paraphrase is as follows:

तस्मिंश्च [MS तस्मिं च] समये राजा विदेहविषयाधिपः।
परचक्रभयोद्विग्नः[MS °ग्नाः] ससैन्यस्तद्वने ऽविशत्॥

मनुप्राप्तः। स मध्याह्ने तीक्ष्णसूर्यरश्मिपरितापितः सबलौघ इतश्चामुतश्च परिभ्रमति मार्गं च नासादयति॥ असति च बुद्धानामुत्पादे प्रत्येकबुद्धा लोक उत्पद्यन्ते हीनदीनानुकम्पकाः प्रान्तशयनासनभक्ता एकदक्षिणीया लोकस्य॥ यावदन्यतरः प्रत्येकबुद्धस्तस्मिन्कान्तारमार्गे प्रतिवसति। तेन कारुण्यमुत्पाद्य तस्य विदेहराजस्य मार्गो व्यपदिष्टः पानीयहृदश्च दर्शितो येन स राजा इष्टेन जीवितेनाच्छादितः॥ ततो राज्ञा प्रसादजातेन स्वनगरमानीय त्रैमास्यं सर्वोपकरणैरुपस्थितः। परिनिर्वृतस्य चास्य शरीरस्तूपं(1) कारयामास प्रणिधानं च कृतवान्। अहमप्येवंविधानां गुणानां लाभी स्यां प्रतिविशिष्टतरं च शास्तारमारागयेयं मा विरागयेयमिति॥

भगवानाह। किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन राजा बभूवायं स राष्ट्रपालः। अपराण्यपि राष्ट्रपालेन कर्माणि कृतान्युपचितानि। अस्मिन्नेव भद्रके कल्पे विंशतिवर्षसहस्रायुषि प्रजायां काश्यपो नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देव[86b]मनुष्याणां बुद्धो भगवान्। स वाराणसीं नगरीमुपनिश्रित्य(2) विहरति ऋषिपतने मृगदावे॥ तेन खलु समयेन वाराणस्यां नगर्यां कृकी राजा राज्यं कारयति ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं चाकीर्णबहुजनमनुष्यं च प्रशान्तकलिकलहडिम्बडमरं तस्कररोगापगतं शालीक्षुगोमहिषीसंपन्नं धार्मिको धर्मराजो धर्मेण राज्यं कारयति। तस्य कनीयान्पुत्र ऋषिपतनं गतः। अथासौ ददर्श बुद्धं भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः समलङ्कृतमशीत्या चानुव्यञ्जनैर्विराजितगात्रं व्यामप्रभालङ्कृतं सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकं सहदर्शनाच्चास्य भगवतो ऽन्तिके चित्तमभिप्रसन्नम्। प्रसादजातो भगवतः पादाभिवन्दनं कृत्वा

---

तत्र स सबलश्चण्डरुग्रश्मि[MS °स्मि]परितापितः।
इतस्ततः परिभ्रम्य मार्गं न समुपाचरत् [MS °रन्]॥

In the second çloka quoted I analyze *caṇḍarugraçmi* as made up of *caṇḍa* + *ruc* (= *sūrya*) + *raçmi*.

1) MS सरीरं स्तूपं (D श°, P शरीरस्तूपं).

2) MS °निसृत्य.

पुरस्तान्निषण्णो धर्मश्रवणाय । ततो ऽस्य भगवता काश्यपेन धर्मो देशितः । तेन प्रसादजातेन भगवान्काश्यपः सपरिवार उपस्थितः शरणगमनशिक्षापदानि गृहीतानि परिनि-[1]र्वृतस्य च स्तूपे कनीयान्छत्त्रमारोपित<वान्>[2] ॥

किं मन्यध्वे भिक्षवो यो ऽसौ राजपुत्रो [3]ऽयमेवासौ राष्ट्रपालस्तेन कालेन तेन समयेन । अपराण्यपि राष्ट्रपालेन कर्माणि कृतान्युपचितानि । भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि वाराणस्यां महानगर्यामन्यतमो मूलिको[4] ब्राह्मणः । स मूलानामर्थे ऽन्यतमं पर्वतमभिरूढः । तेन तत्र पर्यटता वनान्ते ग्लानः प्रत्येकबुद्धो दृष्टः । ततस्तेन प्रसादजातेन तस्योपस्थानं कृतम् । यदा [5]ग्लान्याद्युत्थितस्तदा पिण्डकेन प्रतिपाद्य प्रणिधानं कृतम् । अहमप्येवंविधानां लाभी स्यां प्रतिविशिष्टतरं चातः शास्तारमारागयेयं मा विरागयेयमिति ॥

किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन मूलिको ब्राह्मणो ऽयमेवासौ राष्ट्रपालः[6] । तस्य कर्मणो विपाकेन संसारे न कदाचिद्दुःखमनुभूतवानिदानीमप्याढ्ये राजकुले प्रत्याजातो ऽभिरूपो दर्शनीयः प्रासादिकः । तेनैव हेतुनार्हत्त्वं साक्षात्कृतम् । इति हि

---

1) B परिनिवृ°, D corr.

2) Ex conject.; MS °रोपितं.

3) MS राजपुत्र अय° and on l. 13 °जात अभि°.

4) *Mūlika* with the meaning of an ascetic «who lives on the roots of herbs» is not instanced from literature in the PW and PWK. It occurs also Divy. 647, 1 *çatabhiṣāyāṃ jāto mūliko bhavati.* The paraphrast of our avadāna employed *mūlika* in both cases, where he found this word in his source, see Açokāv. f. 269 b 6 and 270 a 1. About its Tibetan equivalent རྩ་བ་ཟོ་བ་ཞིག་ see Feer, p. 360 n. 1.

5) Ex conject.; MS ग्लानाद्यु°. The same fault *supra*, p. 87, 11. Cp. *supra*, p. 85, 18 and Divy. 25, 8.

6) In B there was written at first राष्ट्रपालेन, a *sec. manus* has erased न with a stroke which may have been intended as a daṇḍa, and the scribe of C accepted it so. Probably there is here a small gap containing something like यदनेन तस्य प्रत्येकबुद्धस्योपस्थानं कृतं, according to the ordinary style of the conclusions. But perhaps the missing portion is larger.

भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रस्तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्[1] ॥

---

1) After this conclusion MS has this colophon इत्यवदानशतके नवमी उद्दानगाथा समाप्ता; then follows the cipher ९० written by a second hand.

## दशमो वर्गः ।

### [1] सुभूतिरिति ९१ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्दे[2]वैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्डदस्यारामे ॥ यदा भगवतानुत्तरां सम्यकसंबोधिमभिसंबुध्य श्रावका नियुक्तास्तेषु तेषु जनपदेषु विनेयजनानुग्रहार्थं तदा ये ऽध्यायिनस्ते [3]सुमेरुपरिषण्डायां ध्यानपरा स्थिताः ॥ यावत्सुपर्णिपक्षिराजेन महासमुद्रान्नागपोतलक उद्धृतः । स तं सुमे[4]रुपरिषण्डायामारोप्य भक्षयितुमारब्धः । ततो नागपोतलको जीविताद्यपरोप्यमाणो महाश्रावकाणामन्तिके चित्तमभिप्रसाद्य कालगतः ॥

स कालं कृत्वा श्रावस्त्यां [5]भूतिर्नाम ब्राह्मणस्तस्याग्रमहि[6]ष्याः कुक्षावुपपन्नः ।

---

1) In MS the *uddāna* of the tenth *varga* precedes. It runs as follows: उद्दानं सुभूति स्थविरश्चापि हस्ते[or स्त]लेकुंविदेकेन च ससारो गुप्तिकश्चापि विद्रूपो गंगिकेन च दीर्घनखः संगीतिश्च वर्गो भवति समुद्दितः. Of this çloka of six pādas the second is very corrupt; read हस्तो लेकुञ्चिकेन च, and in the third pāda संसारो.

2) B °र्दै वैनागै°, D corr.

3) MS तेषुसुमेरु° with superfluous षु. For the rest cp. Divy. 344, 11 foll., in the nāgakumārāvadāna, nr. XXIV of that collection.

4) सुमेन्द्रपरि°.

5) Note the absence of the relative pronoun, corresponding with *tasya*. For similar instances of the simple and colloquial style of this work cp. my observation LXXII, in W. Z., XVI, 343.

6) महिष्या, D corr.

साष्टानां वा नवानां वा मासानामत्ययात्प्रसूता। दारको जातो[(1)] ऽभिरूपो दर्शनीयः प्रासादिकः। तस्य ज्ञाती ज्ञातिमहं कृत्वा नामधेयं व्यवस्थाप्यते किं भवतु दारकस्य नामेति। ज्ञातय ऊचुः। यस्मादस्य पिता भूतिस्तस्मा[87 a]द्भवतु दारकस्य सुभूतिरिति नामेति॥ सुभूतिर्दारक उन्नीतो वर्धितो महान्संवृत्तः॥ स पूर्वेण हेतुबलाधानेनातीवरोषणः क्रोधप-
5 र्यवस्थानबहुलो[(2)] मातापितृभ्यामाथर्वणाद्विनिवर्त्य[(3)] ऋषिषु प्रव्राजितः। स च तत्र ध्यानपरः संयतो[(4)] ऽन्यतरद्वनषण्डमुपनिश्रित्य[(5)] विहरति। तत्र च वनषण्डे देवता प्रतिवसति दृष्टसत्या। तस्याः कारुण्यमुत्पन्नम्। अयं कुलपुत्रः क्रोधपर्यवस्थानबहुलो[(6)] विशेषं नाधिगच्छति। यन्न्वहमेनं भगवद्दर्शने नियोजयेयमिति॥ ततस्तया देवतया सुभूतेः पुरस्ताद्बुद्धस्य वर्णो भाषितो धर्मस्य च सङ्घस्य च। ततः सुभूतेर्भगवद्दर्शनहेतोरभिलाष उत्पन्नः। ततो

---

1) MS जात अभि°.

2) Ex conject.; MS °स्थानेवहुलो. Cp. Divy. 186, 9.

3) Ex conject.; B मातापितृभ्यामाथर्वणाद्विनिर्दय, the last akṣara being indistinct has for clearness' sake been written a second time between the lines, yet wrongly, for it ought to be written र्त्य; of B's copies, C and P have °णाद्विनिर्दव्य, D °णाद्विनिद्रव्य. My correction is almost certain, *vinivartya* being the appropriate Sanskrit verbal form here wanted; it is indirectly confirmed by its Tibetan equivalent ལྡུང་སྟེ (cp. Feer, p. 367 n.). The parallel passage in K's paraphrase is: अथर्वणाद्वि(ms. न्वि)निर्वृत्य (K, f. 69 b 7).

Our text is here very condensed. K gives a better and fuller account of the angry temper of Subhūti, which prompted him to become rather an Ātharvaṇa.

4) Ex conject.; B ध्यानपरः संवतोन्यत्तरद्वन° (the copyists of C and P neglected the of interlinear स, D has संवसतो°). The correction in MS by means of an inserted स is doubtless wrong. I have put *saṃyata* as a synonym of *saṃyatendriya*, *dānta*. The Tibetan translation is here not quite literal: བསམ་ གཏན་ ལ་བྱེད་པར་གྱུར་ཏེ། དགེ་ཁོན་གཅིག་ etc. 'having wholly given himself to *dhyāna* etc.' The paraphrast of K, who dwells very long on Subhūti's *ṛṣipravrajyā* (f. 71 a — 78 b), gives here no help.

5) MS °निसृत्य.

6) Sic MS.

देवतया [1] ऋद्ध्यानुभावाद्भगवत्सकाशमुपनीतः ॥ अथासौ ददर्श बुद्धं भगवन्तं द्वात्रिंशता महा-
पुरुषलक्षणैः समलङ्कृतमशीत्या चानुव्यञ्जनैर्विराजितगात्रं व्यामप्रभालङ्कृतं सूर्यसहस्रा-
तिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकं सहदर्शनाच्चास्य यो ऽभूत्[2]सत्त्वेष्वाघातः स
प्रतिविगतः । ततः प्रसादजातो भगवतः पादाभिवन्दनं कृत्वा पुरस्तान्निषण्णो धर्मश्रव-
णाय । तस्य भगवताशयानु[3]शयं धातुं प्रकृतिं च ज्ञात्वा तादृशी चतुरार्यसत्यसंप्रतिवेधिकी 5
धर्मदेशना कृता यां श्रुत्वा सुभूतिना कुलपुत्रेण विंशतिशिखरसमुद्गतं सत्कायदृष्टिशैलं
ज्ञानवज्रेण भित्त्वा स्रोतआपत्तिफलं साक्षात्कृतम् । स दृष्टसत्यो भगवच्छासने प्रव्रजितः ॥
तेन युज्यमानेन घटमानेन व्यायच्छमानेन मैत्रीभावनया चित्तं [4] दमयित्वा सर्वक्लेशप्रहाणा-
दर्हत्त्वं साक्षात्कृतम् । [5] अर्हन्संवृत्तस्त्रैधातुकवीतरागः समलोष्टकाञ्चन आकाशपाणितलस-
मचित्तो वासीचन्दनकल्पो विद्याविदारिताण्डकोशो विद्याभिज्ञाप्रतिसंवित्प्राप्तो भवला- 10
भलोभसत्कारपराङ्मुखः सेन्द्रोपेन्द्राणां देवानां पूज्यो मान्यो ऽभिवाद्यश्च संवृत्तः ॥

तत्र आयुष्मान्सुभूतिः समन्वाहर्तुं प्रवृत्तः कुतो ऽहं च्युतः कुत्रो[6]पपन्नः केन कर्मणे-
ति । पश्यति पञ्च जातिशतानि नागेभ्यश्च्युतो नागेष्वेवोपपन्नः [7] । तस्य बुद्धिरुत्पन्ना ।
मयातीव एवंविधो द्वेषप्रत्ययोपसंभारः [8] कृतो येनाहं पञ्च जन्मशतानि नागेषू[9]<प>पन्नस्तेनैव
हेतुना महद्व्यसनमनुभूतवान् । इदानीं पुनस्तथा करिष्यामि यत्परेषामन्तिके द्वेषोपसंभारो 15

---

1) I have not changed the long *ā* of the second syllable; *ṛddhyānubhāva* may be a Pālicism.

2) B योभूतसत्वे°, D corr. Cp. *supra*, p. 105, 11.

3) Anusvāra wanting in MS.

4) MS दामयित्वा, a clerical error, it seems. Feer omitted to translate this clause; it is found also in the Tibetan: བྱམས་པ་བསྒོམས་པས་སེམས་བདུལ་ནས་.

5) B °तमर्हत्संवृ°, D corr.

6) MS कुतोपपन्नः, cp. *supra*, I, 292, 2. 296, 7. 304, 6 etc.

7) B °पन्नस्थस्य, D corr.

8) Ex conject.; MS °योपसंहारः.

9) D fills the gap.

नोत्पत्स्यते येन समन्वागतः कायस्य भेदादपायं दुर्गतिं विनिपातं नरकेषूपपद्यते ॥ सो ऽरण्यप्रतिपदं[1] समादाय वर्तते। यदा सङ्घे वा ग्रामे वा देशे वा जनपदे वा भिक्षाहेतोर्वि- हर्तुकामो भवति तदा पूर्वतरं गोचरमवलोकयति । मा[2] मां कश्चित्कारणेन दृष्ट्वा चित्तं प्रदूषयिष्यति अन्ततः कुन्तपिपीलिका[3] अपीति । स[4] तानीर्यापथेन प्रश्रितेनाभिरमयति। तेन 5 तेषां सत्त्वानां चित्तप्रसादो भवति । एवंविधां[5] सो ऽर्हत्‹त्वप्राप्तो› ऽप्यपत्रपामनुभवतीति ॥ तत आयुष्मतः सुभूतेर्बुद्धिरुत्पन्ना । यन्न्वहमिदानीं[6] महाजनानुग्रहार्थं कुर्यामिति । ततस्तेन ऋद्ध्या पञ्च सुपर्णिशतानि[7] निर्मितानि ‹यानि› दृष्ट्वा नागा भीतास्त्रस्ताः संविग्ना इतश्चा-

---

1) Ex conject.; MS °रण्यं प्रतिपदं. I interpret *aranyapratipad* as «the rules of forest-life». *Pratipad* = *pratipatti* 'conduct' in Buddhistic Sanskrit, cp. e. g. Jtkm. p. 100, 10 पुण्यां प्रतिपदमुद्भावयन्, ibid. XVII, 32 वाक्प्रग्रहेण प्रतिपन्मयेन; ibid. VI, 5.

2) Ex conject.; MS न मां. *Mā* with the future to express apprehension is of frequent occurrence in the avadāna-literature; see e. g. Divy. 57, 25. 88, 7. This idiom is also found in the epics, e. g. Mhbh. II, 75, 5. III, 146, 68. ibid. 249, 38 and in Kathāsaritsāgara, e. g. 19, 105. 71, 41. 92, 57.

3) Ex conject.; B पिपोल्ल -ı- a blotted akṣ. unreadable -ı-कीपीत, in the three copies the blurred akṣ. has been passed over, and the copyists were right accepting the interlinear ल as a rectification of the somewhat indistinct ल on the main line; they write °कोपीत. *Antataḥ* is here employed like Pāli *antamaso*. Cp. K, f. 80a 9,

तदहं सर्वसत्त्वेषु कुन्तपिपीलिकादिषु ।
दयाचित्तं समालम्ब्य वसेयं ध्यानसंरतः ॥

4) Ex conject.; MS is here utterly corrupted (cp. Feer, p. 368 n. 3), B स तमीर्यपथम(or न)पशृतेनाभिनमयति; of its copies D alone has °समयति, and all have distinctly °पथमपशृ°. I translate: «he delighted them by his humble and decent behaviour.»

5) Ex conject., which fully agrees with the Tibetan version quoted by Feer, p. 369 n.; MS एवंविधांसोर्हण्यत्रयाणामनुभवतोति. As to my filling up of the small gap, answering to Tibet. ཉེད་ཡིན་དུ་ཟིན་ཀྱང་, cp. *supra*, I, p. 285, 4. °प्राप्तो ऽपि व्यपत्रपाम् may also be thought of.

6) Anusvāra wanting in MS.

7) सुपर्षिा, D corr.

मुतश्च संभ्रान्ताः । ततः सुभूतिना ऋद्धिबलेन पुनः परित्राताः । ततस्तेषां प्रसन्नचित्तानां मैत्री व्यपदिष्टा ॥ पुनरपि महान्तं नागरूप[1]मभिनिर्माय पञ्च गरुडशतान्यभिद्रुतानि । तेषा[2]-नपि भीतानां मैत्री व्यपदिष्टा ॥ एवं तेन नागानां गरुडानां च पञ्च कुलशतानि विनीतानि ॥

तत्र भगवान्भिक्षूनामन्त्रयते स्म । एषो ऽग्रो मे भिक्षवो भिक्षूणां मम श्रावकाणाम- 5
रणाविहारिणां[3] यदुत सुभूतिः कुलपुत्रः ॥

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः । कानि भदन्त सुभूतिना कर्माणि कृतानि येनारणाविहारिणामग्रो निर्दिष्ट इति ॥ भगवानाह । सुभूतिनैव भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृ[87 b]तान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि । सुभूतिना कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्य- 10
नुभविष्यति । न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ न तेजोधातौ न वायुधातावपि [4]तूपात्तेष्वेव स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च ।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि ।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ॥ 15

---

1) नागरूप is a masculine of the type taught by Pāṇini V, 3, 66.

2) Ex conject.; MS तेषामभि (D तेषामतो).

3) Cp. PWK III, 253 *s. v.*, wrongly retracted ib. IV, 295. That among the Buddhist clergy there were some who explained *araṇāvihārin* as 'living in peace', as if the first member of the compound were the opposite of *raṇa*, is plain from the Tibetan translation, see Feer, p. 368 n. 1. And we are not far from the truth, if we credit that etymology and explanation to the composer of our Avadānaçataka; it is for his peace-making that the forest anchoret Subhūti is called number one of the *araṇāvihāriṇas*. Divy. 401, 4 *araṇāvihārin* is an epithet of the Buddha himself, cp. Mhv. II, 292, 17 *araṇāsampanna*. This throws also light on the epithet of the Buddhas *raṇaṃjaha*, which occurs in several places of Lalitavistara (p. 358, 2. 423, 22. 437, 21 ed. Lefm., ibid. p. 361, 20 *raṇajaha*), and conveys the meaning of 'pacifier, peace-maker'.

4) Cp. *supra*, I, p. 74 n. 9.

भूतपूर्वं भिक्षवो ऽतीते ऽध्वन्यस्मिन्नेव भद्रके कल्पे विंशतिवर्षसहस्रायुषि प्रजायां काश्यपो नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान्। स वाराणसीं नगरीमुपनिश्रित्य[1] विहरति ऋषिपतने मृगदावे। तत्रायं प्रव्रजितो बभूव। तत्रानेन दानप्रदानानि दत्तानि 5 दश वर्षसहस्राणि ब्रह्मचर्यवासः परिपालितः प्रणिधानं च कृतम्[2]। अनेनाहं कुशलमूलेन चित्तोत्पादेन देयधर्मपरित्यागेन च यो ऽसौ भगवता काश्यपेन उत्तरो नाम माणवो[3] व्याकृतो भविष्यसि त्वं मानववर्षशतायुषि प्रजायां शाक्यमुनिर्नाम तथागतो ऽर्हन्सम्यक्संबुद्ध इति तस्याहं शासने प्रव्रज्यारणाविहारिणामग्रः[4] स्यामिति॥

कानि कर्माणि कृतानि येन नागेषूपपन्नः॥ अप्रहीणत्वात्क्लेशानामुद्धतत्वादि-[5] 10 न्द्रियाणामपर्यन्तीकृतत्वात्कर्मपथानां शैक्षाशैक्षभिक्षु<षु> चित्तं प्रदूष्याशीविषवादेन समु-[6] दाचरिताः। तेन नागेषूपपन्नः। यत्तेन दानप्रदानानि दत्तानि ब्रह्मचर्यवासः[7] परिपालितस्तेनेदानीमर्हत्त्वं साक्षात्कृतमरणाविहारिणां चाग्रो निर्दिष्टः। इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रस्तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव 15 कर्मस्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम्॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्॥

---

1) MS °निसृत्य.

2) MS चाकृत° (D leaves out चा).

3) MS मानवो. Cp. *supra*, I, p. 239, 7.

4) B °रिणा अग्रस्यमिति, D corr.

5) Ex conject.; MS अप्रहीणत्वात्. Cp. K (f. 84b 6) यतः क्लेशाप्रहीणत्वाडुद्धतेन्द्रियचेतसा......चित्तानि संप्रदूष्य.

6) Ex conject.; MS °वादेनासमुदाचरितास्तेन. As to the construction see PW, II *s. v.* 2). It is here said that in his former existence Subhūti in his anger upbraided the monks, calling them serpents, and this is also the meaning of the parallel passage in K (cp. Feer, 370 n.) महाशीविषवादेन विक्रुश्याभाणि साङ्घिके.

7) MS ब्रह्मचर्यावासः.

## स्थविर इति ६२ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घो राजगृहमुपनिश्रित्य[1] विहरति वेणुवने कल- 5 न्दकनिवापे ॥ अन्यतमः श्रेष्ठी आढ्यो महाधनो महाभोगो विस्तीर्णविशालपरिग्रहो वैश्रवणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी । तेन सदृशात्कुलात्कलत्रमानीतम् । स तया सार्धं क्रीडति रमते परिचारयति । ‹तस्य›[2] क्रीडतो रममाणस्य परिचारयतः पत्नी आपन्नसत्त्वा संवृत्ता न प्रसूयते । यावद्भूयस्तयैव सार्धं क्रीडति रमते परिचारयति । तस्य क्रीडतो रममाणस्य परिचारयतः पुत्रो जातः । स प्रथमगर्भो यथावस्थित एव मातुरुदरे ॥ या- 10 वत्तस्याः[3] क्रमशो दश पुत्रा जाताः । स प्रथमगर्भो मातुरुदरस्थ एव ॥ यावदसौ गृहपतिपत्नी ग्लान्यपतिता । सा उपस्थीयते[4] मूलगण्डपत्त्रपुष्पफलभैषज्येन न चासौ व्याधिरुपशमं गच्छति । यदा चास्या[5] मरणान्तिकी वेदना प्रादुर्भूता नचिरेण कालं करिष्यतीति तदा [6]तया स्वामी उक्तः । यत्खल्वार्यपुत्र जानीया ममात्र प्रथमगर्भो ऽवतिष्ठते । यदाहं मृता

1) MS °सृत्य·

2) DP fill up the gap.

3) MS यावत्तस्याक्रमसो·

4) Cp. Divy. 100, 16. 347, 6. 486, 16; in all these places the same formula *sa mūlagaṇḍapattra(puṣpa)phalabhaiṣajyair upasthīyamāno hīyata eva.* This word *gaṇḍa* here means 'stalk', as appears from its Tibetan equivalent སྡོང་བུ; Divy. 125, 10 there is mentioned a ripe *gaṇḍa* which must be taken of with the knife. Cp. also Pischel, *Die Inschrift von Paḍeriya*, S. 6 (Sitzb. der kgl. preuss. Akad., 1903, no. 35).

5) B मवणान्तिकी, D corr.

6) Ex conject.; MS तदालयंस्वामो (D तदास्वयं°).

भवामि तदा दक्षिणपार्श्वं शस्त्रेण घातयित्वा ततः प्रथमस्थितं दारकमुद्धरेथा इत्युक्त्वा[1]।

सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः।
संयोगा विप्रयोगान्ता[2] मरणान्तं हि जीवितम्[3]॥

इत्युक्त्वा[1] कालधर्मेण संयुक्ता॥

5 तस्याः कालगताया नीलपीतलोहितावदातैर्वस्त्रैः शिबिकामलङ्कृत्य शीतवनं श्मशानं नीत्वा जीविको[4] वैद्यराज आहूतः। एष च शब्दो राजगृहे[5] नगरे समन्ततो विसृतः। एवममुकस्त्रिया इयन्ति वर्षाणि गर्भे स्थितस्तस्याश्चान्ये दश पुत्रा जाता न चासौ प्रथमतरमवस्थितो गर्भो निर्गतः। अद्य जीविको वैद्यराजः शस्त्रेण मृताया उदरं घातयित्वा तं प्रथमस्थितं दारकमु[88 a]द्धरिष्यतीति। तं शब्दं श्रुत्वा कुतूहलाद्बहूनि प्राणिशतसह-
10 स्राणि शीतवनश्मशाने[6] संनिपतितानि पूरणप्रभृतयश्च षट् शास्तृप्रतिज्ञाः[7]॥ तत्र भगवानायुष्मन्तमानन्दमामन्त्रयते। गच्छानन्द भिक्षूणां कथय भगवान् श्मशानचारिकां गन्तुकामो यो ऽद्भुतानि द्रष्टुकामः स आगच्छत्विति॥ यावद्भगवानाज्ञातकौण्डिन्यबाष्पमहानामानि-

1) Ex conject.; MS इत्युक्ता.

2) B °योगान्ममरणा°, above न्म there is a sign of reference, but the akṣara to be put instead of न्म is wanting on the margins; hence the scribes of the copies, regarding न्म as simply cancelled, have °योगामरणा°. The çloka uttered by the wife at the point of death — in Kalpadrumāv. nr. 19, the paraphrase of this tale, it is the husband who pronounces it — is a much quoted saying (vide e. g. Divy. 100, 18. 486, 20) which is also met with outside of the Buddhist lore, see e. g. schol. on Rāmāyaṇa, IV, 1, 116. It occurs in a Çivaite story Kathās. 51, 26, where it is ascribed to Vyāsa!

3) MS जीवित.

4) The great physician of the Buddha's time is here called throughout Jīvika, not Jīvaka, likewise in Kalpadrumāv.

5) B राजगृहेणागरे, D corr.

6) MS °श्मशानसन्निपतितानि. Cp. K, f. 154 a 1, श्मशाने समुपाययुः.

7) Cp. Divy. 145, 27. 146, 15. Feer's n. 1 on p. 375 is based on the corrupt reading of P पतृज्ञास्तृ°; the scribe of P must have misread what he found in B.

रुद्दशारिपुत्रमौद्गल्यायनकाश्यपा[1]नन्दरेवतप्रभृतिभिर्महाश्रावकैः परिवृतः शीतवनश्मशानं गतो जनकायेन च भगवन्तं दृष्ट्वा विवरं कृतम्[2] ॥ तत्र जीविकेन तस्याः स्त्रिया दक्षिणः कुक्षिः पाटितः । ततः स्वयमेव निर्गतो वलिपलितचिताङ्गः[3] परिजीर्णशरीरावयवः[4] परिणतेन्द्रियः कृशो[5] ऽल्पस्थामो निर्गतमात्रश्च[6] तं जनकायमवलोक्य वाचं निश्चारयति स्म । मा भवन्तो गुरुषु गुरुस्थानीयेषु मातापितृष्वाचार्योपाध्यायेषु खरां[7] वाचं निश्चारयत[8] 5 मा[9] ह्येवंविधामवस्थामनुभविष्यथ । यदहमामाशयपक्वाशय‹य›योर्मध्ये षष्टि[10] वर्षाण्युषितः । इत्युक्त्वा तूष्णीमवस्थितः ॥ तत्र भगवान्भिक्षूनामन्त्रयते स्म । तृप्यत[11] भिक्षवः सर्वभवोपपत्तिभ्यस्तृप्यत सर्वभवोपपत्त्युपकरणेभ्यो यत्र नाम चरमभविकस्य सत्त्वस्येयमवस्था ॥ तत्र भगवांस्तं दारकमामन्त्रयते । स्थविरको ऽसि दारक[12] ॥ स्थविरको ऽहं भगवन् ॥ स्थवि-

---

1) Query: काश्यपनन्दरेवत°, cp. *supra*, I, p. 213, 10.

2) Ex conject.; MS विवरं कृत. I have put *vivara* as a neuter into the text, because K, f. 154 a 6, has also विवरं कृतम् (nominative).

3) Ex conject.; MS °पलितविताण्डः (D °वितण्डः, P °चिताण्डः). Cp. K, f. 154 a 7:

दक्षिणं पार्श्वं शस्त्रेण समघातयत् ॥
तद्घातात्पुरुषो ह्रस्वो जीर्णपरिणतेन्द्रियः ।
परि(sic)पलितपुक्ताङ्गः स्वयमेव विनिर्ययौ ॥

4) Visarga wanting in MS.

5) MS कृषो (P कृपो).

6) Ex con ect.; MS निर्गतगात्रश्च. Cp. K, f. 154 a 8, तस्यास्स पार्श्वान्निर्यात एव हि.

7) MS खरं.

8) Ex conject., confirmed by K, f. 154 a 9; MS निश्चारयतः.

9) Ex conject.; MS मा चैवं.

10) It is uncertain whether षष्टि is genuine or to be corrected into षष्टिं; cp. *supra*, I, 135 n. 5 and 138 n. 2.

11) MS here तृप्यथ, but the second time it has तृप्यत. In K (f. 154 b 2) तृप्यत is found both times.

12) MS °कौशि(दा)रक (C कौशिरक, D कौशिदारकः, P कौशिरक).

रको ऽसि दारक॥ ‹स्थविरको ऽस्मि सुगत›(1)॥ स्थविरक इति संज्ञा जाता॥ ततो भगवता तदधिष्ठाना (2)तथाविधा धर्मदेशना कृता यां श्रुत्वा संविग्नैर्बहुभिः सत्त्वशतैर्महान्विशेषो ऽधिगतः॥

स च (3)दश वर्षाणि गृहागारमध्यास्य सप्ततिवर्षो भगवच्छासने प्रव्रजितः। गृध्रकूटे पर्वते पञ्चविंशत्या(4) भिक्षुभिः सार्धं वर्षा उपगतः। तत्र सङ्घस्थविरेण क्रियाकारं कारितो न केनचित्पृथग्जनेन प्रचारयितव्यमिति॥ त्रयाणां मासानामत्ययाच्चतुर्विंशत्या भिक्षुभिरर्हत्त्वं प्राप्तं। स्थविर एकः पृथग्जन एव। ततः सङ्घस्थविरेण प्रचारणायां वर्तमानायां सुबहु परिभाष्य गणमध्यान्निष्कासितः। स शस्त्रमादाय (5)कुटिं प्रविश्य (6)रुदन्बहुविधं परिदेवते। आह च।

आदीप्तं काननं सर्वं पर्वता पि पल्लीकृता(7) (sic)।
अद्येदं पापकं चित्तमद्यापि न विमुच्यते॥ १

---

1) I have added this from the Tibetan, where it has been rendered thus: བདེ་བར་གཤེགས་པ་[= *Sugata*]བདག་ནི་རྒན་པོ་ལགས་སོ།. It is evident that the second answer of the child has been lost in our tradition. Feer, p. 375, 27 tacitly follows the Tibetan.

2) Ex conject., cp. *supra*, I, 91, n. 1; MS °ष्ठानात्तथा°.

3) B दर्श, D corr.

4) Feer rightly observes, p. 376 n. 1, that this number of twenty five disagrees with that of the twenty four who reached Arhatship. This contradiction is not found in K, nor in the Tibetan.

5) Here in B कु is followed by a blotted akṣara, in whose place is to be inserted a somewhat indistinct correction — टिं or टं — on the upper margin; D कुटं, P कुर्या. K, f. 156 a 8, has कुटिं प्रविश्य and this I have put into the text. Feer (p. 376, 13) translates it by 'caverne', but I think that its Tibetan equivalent ཁང་སྦུག་སུ་ means rather the innermost part of his dwelling, viz. his «cell».

6) MS रुद°.

7) There can be no doubt at all that these five çlokas are Sanscritized gāthās, originally composed in some vulgar dialect. The second pāda of çl. 1 may represent a vulgar *pabbatā pi palikatā* = skt. *parvatā api palīkṛtāḥ*. K (f. 156 a 9), has पर्वताः पि पल्लीकृताः. Feer's quotation (p. 376, n. 2) from the Tibetan is here

शान्ता गिरिनदीशब्दा[1]ः परीत्तसलिलोदका[2]ः ।
अथेदं पापकं चित्तमद्यापि न विमुच्यते ॥ २
[3]एते ह्यण्डजाः पक्षिणो विरता मन्दघोषका[1]ः ।
अथेदं पापकं चित्तमद्यापि न विमुच्यते ॥ ३
पाण्डुपत्रं वनं ह्येतच्छीर्णपत्रो वनस्पतिः । 5
अथेदं पापकं चित्तमद्यापि न विमुच्यते ॥ ४
[4]शस्त्रमाराधयिष्यामि को न्वर्थो जीवितेन मे ।
कथं पृथग्जनो भूत्वा शास्तारमुपसंक्रम इति ॥ ५

---

not quite correct; it has རི་[not རོ་]རྣམས་སེར་པོར་གྱུར་ཟིན་ན, which seems to signify «the mountains have become yellow». It must have been the time of sunset, when the monk was about to commit suicide. *Palīkṛta* = 'a-glowing', cp. Index s. v.

1) Visarga wanting in MS.

2) Pāda 1 has in MS one superfluous syllable: शान्ता गिरिनदीषुशब्दाः. The compound which makes up the 2d pāda is added in a somewhat loose manner to that which precedes. If the reading be corrupt, *parīttasalilāpagāḥ* (cp. *supra* I, 20 n. 6; 23, 14 etc.) would fit better. K (f. 156a 9) शान्ता गिरिनदीशब्दाः परीत्तशलि-लाश्रया. The spelling शलिल is also in MS.

3) K transposes the words of the first pāda so as to become अण्डजाः पक्षिणो ह्येते, in this way rectifying the metre.

4) Ex conject.; MS शास्तुर्मारा° (CDP शास्तुमारा°). The text was already corrupt in the manuscript or manuscripts used by the composer of Kalpadru-māvadāna. K (f. 156b 2) शास्तुराराधयिष्यामि. Feer (p. 376, 30) rendering this passage thus: «c'est à l'arme tranchante que je me consacre» implies that we have to read शस्त्रमारा°, and this, in fact, is the most probable solution of the difficulty, for the Tibetan renders this pāda rather freely as follows: བདག་ནི་ཚོན་གྱིས་ལྡེབ་སྡེ་གཏང་ཞེས་ཟེར་རོ། = 'I shall allow myself to kill my useless person, so he said'. The Tibetan has a stanza more, between ४ and ५, the latter half of which corresponds to the repeated line अथेदं पापकं etc. Its former part is in Tibetan: ལུང་འབོག་པའི་གནས་བརྟན་རྣམས། ཕྱོགས་ཕྱོགས་དག་ཏུ་སོང་ཟིན་ན, in Feer's translation (p. 376, 27): «Les Sthaviras dispensateurs de la doctrine sont partis pour aller les uns d'un côté, les autres d'un autre.»

अत्रान्तरे नास्ति किंचिद्बुद्धानां भगवतामज्ञातमदृष्टम[1]विदितमविज्ञातम्। धर्मता खलु बुद्धानां भगवतां महाकारुणिकानां लोकानुग्रहप्रवृत्तानामेकारक्षाणां शमथविपश्यनाविहारिणां त्रिदमथवस्तुकुशलानां चतुरोघोत्तीर्णानां चतुर्ऋद्धिपादचरणतलसुप्रतिष्ठितानां पञ्चाङ्गविप्रहीणानां पञ्चगतिसमतिक्रान्तानां षडङ्गसमन्वागतानां षट्पारमितापरिपूर्णानां सप्तबोध्यङ्गकुसुमाढ्यानामष्टाङ्गमार्गदेशिकानां नवानुपूर्वसमापत्तिकुशलानां दश-〈बल〉[2]बलिनां दशदिक्समापूर्णयशसां दशशतवशवर्तिप्रतिविशिष्टानां[3] त्री रात्रेस्त्रिर्दिवसस्य बुद्धचक्षुषा लोकं व्यवलोक्य ज्ञानदर्शनं प्रवर्तते। को हीयते को वर्धते कः कृच्छ्रप्राप्तः कः संकटप्राप्तः कः संबाधप्राप्तः कः कृच्छ्रसंकटसंबाधप्राप्तः[4] कोऽपायनिम्नः कोऽपायप्रवणः कोऽपायप्राग्भारः कमहमपायादुद्धृत्य स्वर्गे मोक्षे च प्रतिष्ठापयेयं कस्यानवरोपितानि कुशलमूलान्यवरोपयेयं कस्य परिपक्वानि विमोचयेयम्। आह च।

अप्येवातिक्रमेद्वेलां सागरो मकरालयः।
न तु वैनेयवत्सानां बुद्धो वेलामतिक्रमेत्॥

यावद्भगवता समन्वाहृत्य[5] ऋद्ध्या चोपसंक्रम्य तथाविधा धर्मदेशना कृता यां श्रुत्वा आयुष्मता स्थविरकेण इदमेव पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः शतनपतनविक[88 b]रणविध्वंसनधर्मतया पराहत्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्। अर्हन्संवृत्तस्त्रैधातुकवीतरागः समलोष्टकाञ्चन आकाशपाणितलसमचित्तो वासीचन्दन-

---

1) B °दृष्टमवित्तमविदित°, but the त्त and perhaps also the म is expunged; P has, instead of वित्तम, चित्तं, D omits the three superfluous akṣaras.

2) D adds the lost syllables.

3) MS त्रिरात्रेस्त्रिदि°.

4) B सवाध°, D corr.

5) Ex conject.; MS समन्वाहृत. Cp. K, f. 157 a 2:

ततश्च सहसा दृष्ट्वा समन्वाहृत्य दाशु तं।
ऋद्ध्या तत्रोपसंक्रम्य दिदेश धर्ममुत्तमं॥

कल्पो विद्याविदारिताण्डकोशो विद्याभिज्ञाप्रतिसंवित्प्राप्तो भवलाभलोभसत्कारपराङ्मुखः सेन्द्रोपेन्द्राणां देवानां पूज्यो मान्यो ऽभिवाद्यश्च संवृत्तः ॥

तत स्थविरो ऽर्हत्त्वप्राप्तः समन्वाहर्तुं प्रवृत्तः। ममापि कश्चिद्विनेय इति। पश्यति पञ्चमात्राणि वणिक्छतानि कालिकावातवित्रासितानि[1] *अपायाद्*[2]व्यसनाभिमुखानि। मया तस्माद्भयात्परित्रातव्यानीति तेन मम विनेया भविष्यन्तीति। ततः स्थविरकेण ऋद्ध्या गत्वा तस्माद्भयात्परित्राताः ॥ ततः प्रसादजाताः सर्व एव प्रव्रजिता मनसिकारश्चैष दत्तः। तैः सर्वैरेव युज्यमानैर्घटमानैर्व्यायच्छमानैः सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतं तेषां च गुणेषु न कश्चित्प्रत्यक्षः[3]। षड्वर्गिका[4] अवध्यापितुं प्रवृत्ताः[5]। [6]महल्लेन भूत्वा पञ्च सार्ध-

1) MS वित्रामितानि.

2) I doubt the genuineness of *apāyāt*. The Tibetan has here but one word: སྡུག་བསྔལ་, = 'calamity, distress, misery' (Sarat). The abl., too, is strange.

3) Cp. K, f. 157b 6: तेषां गुणेषु धर्मेषु प्रत्यक्षो न हि कश्चन. In this signification of 'witness', however, *pratyakṣin* ought to be the proper word, not *pratyakṣa*, cp. Jtkm., p. 128, 8. But Divy. 71, 8 *pratyakṣa* has, it seems, also the meaning of *pratyakṣin*, quite the same as here.

4) Ex conject., cp. the parallel passage Divy. 494, 8; B अवध्यापितुं, but the akṣ. व bears two dots which denote cancelling; of its copies, DP have अध्यापितुं, C has kept अवःध्यापितुं. I think the corrector who eliminated व was wrong, and believe that अवध्यायितुं, though not conformable to grammar, is from the hand of the author of our collection. This is confirmed by the parallel passage of K (f. 157b 6):

तदा षड्गतिकाः सर्वे दृष्ट्वा तान्ब्रह्मचारिणः।
अवध्यायितुकामास्ते उपतस्थुः प्रमादिनः॥

and by the Tibetan translation ཟྲུག་སྡེ་རྣམས་འཕྱ་བར་གྱུར་ཏེ 'The Ṣaḍvargikās commenced to censure them'. Cp. also its counterpart उद्भावयितुम्, *infra*, p. 140, 3.

5) Visarga wanting in MS.

6) I think, the difficulty of this passage «d'un laconisme obscur», as Feer observes (p. 377 n. 2), will be removed, if we make the *oratio recta* begin with *mahallena*. (The Ṣaḍvargikās said ironically to one another): «This stupid old fellow has procured himself a retinue of 500 who dwell with him. And in this very way they will be converted, forsooth!» The word *mahalla* is rendered in the Tibetan ཀན་ཧྲུན་. Now ཧྲུན་པ is, according to Sarat, = «dull, foolish, stupid, जड».

विहारिणां[1] शतानि उपस्थापितानि। एते ऽप्येवमेव विनीता भविष्यन्तीति ॥

तत आयुष्मानानन्दः सब्रह्मचारिवत्सलः परानुग्रहप्रवृत्त आयुष्मन्तं स्थविरकनामानमुद्भावयितुकामो येनायुष्मान्स्थविरनामा तेनोपसंक्रान्तः। उपसंक्रम्यायुष्मता स्थविरेण स्थविरनाम्ना भिक्षुणा सार्धं संमुखं[2] संमोदनीं संरञ्जनीं विविधां कथां व्यतिसार्यै-
5 कान्ते निषण्णः। एकान्ते निषण्ण आयुष्मानानन्दः स्थविरं स्थविरकनामानमिदमवोचत्। पृच्छेम वयमायुष्मन्तं स्थविरं स्थविरकनामानं कञ्चिदेव प्रदेशं[3] सचेदवकाशं कुर्याः प्रश्नस्य व्याकरणाय ॥ [4]आयुष्मन्नानन्द श्रुत्वा ते वेदयिष्ये ॥ अरण्यगतेनायुष्मन्स्थविर भिक्षुणा वृक्षमूलगतेन शून्यागारगतेन कतमे[5] धर्माभीक्ष्णं मनसिकर्तव्याः ॥ [6][आह।] अरण्यगतेनायुष्मन्[7]नानन्द भिक्षुणा वृक्षमूलगतेन शून्यागारगतेन द्वौ धर्मावभीक्ष्णं मनसिकर्तव्यौ शमथश्च
10 विपश्यना च ॥ शमथ स्थविर आसेवितो भावितो बहुलीकृतः कमर्थं[8] प्रत्यनुभविष्यति[9]' विपश्यना आसेविता भाविता बहुलीकृता कमर्थं प्रत्यनुभवति ॥ शमथ आयुष्मन्नानन्द[10] आसेवितो भावितो बहुलीकृतो विपश्यनामागम्य विमुच्यते' विपश्यना आसेविता भाविता बहुलीकृता शमथमागम्य विमुच्यते। शमथविपश्यनापरिभावितमायुष्मन्नानन्द श्रुतवत आर्यश्रावकस्य चित्तं[8] धातुशो विमुच्यते ॥ तत्र स्थविर कतमे धातवः ॥ [11]पञ्चा-

---

1) Ex conject.; MS सार्द्धविहारिणा. Cp. *saddhiṁvihāri* apud Childers, *Dict.* s. v., and *sārdhaṃvihārin* in the Index on Divy.

2) MS संमोदनीयं संरञ्जनीयं. Cp. *supra*, I, p. 229, 2; Divy. 70, 10. 156, 19; etc. and *passim* in the Pali Tipiṭaka.

3) MS सचेदमवकाशं.

4) Ex conject.; MS आयुष्माना°.

5) Sandhi in MS, cp. *supra*, I, p. 20 n. 6.

6) Added in MS between the lines. I take it for a gloss.

7) B °युष्मानानन्द, with cancelled first *ā*, DP °युष्माना°.

8) Anusvāra wanting in MS.

9) The future tense is only used here, not in the repetitions, cp. *infra*, p. 141, 11. 142, 9.

10) MS आयुष्मानानन्दः.

11) B पञ्चा, CP पञ्चा, D corr.

युष्मन्नानन्द प्रहाणधातु‹र्यश्च विरागधातुर्य›श्च निरोधधातुः ॥ कस्य नु स्थविर प्रहा-
णात्प्रहाणधातुरित्युच्यते ' ‹कस्य विरागाद्विरागधातुरित्युच्यते› ' कस्य निरोधान्निरोध-
धातुरित्युच्यते ॥ सर्वसंस्काराणामायुष्मन्नानन्द प्रहाणात्प्रहाणधातुरित्युच्यते ' सर्वसं-
स्काराणां विरा‹गाद्विरा›गधातुरित्युच्यते ' सर्वसंस्काराणां निरोधान्निरोधधातुरित्यु-
च्यते ॥ 5

अथायुष्मानानन्द[1] स्थविरस्य स्थविरकनाम्नो भिक्षो[2]र्भाषितमभिनन्द्यानुमोद्य येन पञ्च
भिक्षुशतानि तेनोपसंक्रान्तः । उपसंक्रम्य पञ्च भिक्षुशतानीदमवोचत् । अरण्यगतेनायुष्मन्तो[3]
भिक्षुणा वृक्षमूलगतेन शून्यागारगतेन कतमे[4] धर्मा अभीक्ष्णं मनसिकर्तव्याः ॥ अरण्यगते-
नायुष्मन्नानन्द[5] भिक्षुणा वृक्षमूलगतेन शून्यागारगतेन द्वौ धर्मावभीक्ष्णं मनसिकर्तव्यौ
शमथश्च विपश्यना च ॥ शमथ आयुष्मन्त आसेवितो ‹भावितो› बहुलीकृतः कमर्थं प्रत्य- 10
नुभवति ' विपश्यना आसेविता भाविता बहुलीकृता कमर्थं प्रत्यनुभवति ॥ शमथ आयु-
ष्मन्नानन्द आसेवितो भावितो बहुलीकृतो विपश्यनामागम्य विमुच्यते ' विपश्यना आसे-
विता ‹भाविता› बहुलीकृता शमथमागम्य विमुच्यते । शमथविपश्यनापरिभावितमायु-
ष्मन्नानन्द[6] श्रुतवत आर्यश्रावकस्य चित्तं धातुशो विमुच्यते ॥ तत्र आयुष्मन्तः कतमे धा-
तवः ॥ [7]यश्चायुष्मन्नानन्द प्रहाणधातुर्यश्च विरागधातुर्यश्च निरोधधातुः ॥ कस्य न्वायु[8]- 15
ष्मन्तः प्रहाणात्प्रहाणधातुरित्युच्यते ' कस्य विरागाद्विरागधातुरित्युच्यते ' कस्य निरो-
धान्निरोधधातुरित्युच्यते ॥ सर्वसंस्काराणामायुष्मन्नानन्द प्रहाणात्प्रहाणधातुरित्युच्यते

---

1) B °युष्मान्नान°, D corr.
2) MS भिक्षवो भाषित°.
3) MS °युष्मतो (D °युष्मता).
4) B धर्म अभीक्ष्णं, P corr.
5) MS °युष्मतानन्द.
6) MS °युष्मान्नानन्द (D °युष्मानानन्द).
7) MS पश्चा° (D पश्या°).
8) MS त्वायुष्मन्तः.

सर्वसंस्काराणां [89 a] विरागाद्विरागधातुरित्युच्यते ' सर्वसंस्काराणां निरोधान्निरोधधा-
तुरित्युच्यते ॥

आयुष्मानानन्दः पञ्चानां भिक्षुशतानां भाषितमभिनन्द्यानुमोद्य येन भगवांस्तेनो-
पसंक्रान्तः । उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वैकान्ते ऽस्थात् । एकान्तस्थित आ-
5 युष्मानानन्दो भगवन्तमिदमवोचत् । अरण्यगतेन भदन्त भिक्षुणा वृक्षमूलगतेन शून्यागार-
गतेन कतमे धर्मा [1]अभीक्ष्णं मनसिकर्तव्याः[2] ॥ अरण्यगतेनानन्द भिक्षुणा वृक्षमूलगतेन
शून्यागारगतेन द्वौ धर्मा<व>भीक्ष्णं मनसिकर्तव्यौ[3] शमथश्च विपश्यना च ॥ शमथो भदन्त
आसेवितो भावितो बहुलीकृतः[4] कमर्थं प्रत्यनुभवति ' विपश्यना आसेविता भाविता बहु-
लीकृता कमर्थं प्रत्यनुभवति ॥ शमथ आनन्द आसेवितो भावितो बहुलीकृतो विपश्य-
10 नामागम्य विमुच्यते ' विपश्यना आसेविता भाविता बहुलीकृता शमथमागम्य विमुच्यते ।
शमथविपश्यनापरिभावितमानन्द श्रुतवत आर्यश्रावकस्य चित्तं धातुशो विमुच्यते ॥ तत्र
भदन्त कतमे धातवः ॥ यश्चानन्द प्रहाणधातुर्यश्च <विरागधातुर्यश्च> निरोधधातुः ॥ कस्य
नु भदन्त प्रहाणा[5]त्प्रहाणधातुरित्युच्यते ' कस्य विरागाद्विरागधातुरित्युच्यते ' कस्य नि-
रोधान्निरोधधातुरित्युच्यते ॥ भगवानाह । सर्वसंस्काराणामानन्द प्रहाणात्प्रहाणधातु-
15 रित्युच्यते ' सर्वसंस्काराणां विरागाद्विरागधातुरित्युच्यते ' सर्वसंस्काराणां निरोधान्निरो-
धधातुरित्युच्यते ॥ आश्चर्यं भदन्त यावच्छास्तुः श्रावकाणां चार्थेनार्थः पदेन पदं व्यञ्जनेन
व्यञ्जनं <सं>[6]स्यन्दते समेति यदुताग्रपदैः । तत्कस्य हेतोः । इहाहं भदन्त येन स्थविरः
स्थविरकनामा भिक्षुस्तेनोपसंक्रान्त उपसंक्रम्य स्थविरं स्थविरकनामानं भिक्षुमेतमेवार्थ-

---

1) B धर्मा आभी°, D corr.

2) Visarga wanting in MS.

3) B कर्त्तव्यो, D corr.

4) MS °कृताः (D °कृतो).

5) B प्रहाणान्प्र°, P corr.

6) MS व्यंजनं स्मन्दते (CD व्यञ्जनं स्यन्दते). Cp. *infra*, p. 143, 6.

मेभिः पदैरेभिर्व्यञ्जनैः प्रश्नं पृष्टवांस्तेन[1] मम एष एवार्थ एभिः पदैरेभिर्व्यञ्जनैः प्रश्नं पृष्टेन व्याकृतस्तद्यथैतर्हि[2] भगवता। सो ऽहमायुष्मतः स्थविरस्य स्थविरनाम्नो भिक्षोर्भाषितमभिनन्द्यानुमोद्य येन पञ्च भिक्षुशतानि तेनोपसंक्रान्त उपसंक्रम्य पञ्च भिक्षुशतान्‹्ये›तमे-[3] वार्थमेभिः पदैरेभिर्व्यञ्जनैः प्रश्नं पृष्टवांस्तैरपि[4] मम एष एवार्थ एभिः पदैरेभिर्व्यञ्जनैः प्रश्नं पृष्टैर्व्याकृतस्तद्यथैतर्हि भगवता। तदिदं भदन्त आश्चर्यं यावच्छास्तुः श्रावकाणां चार्थेनार्थः[5] पदेन पदं व्यञ्जनेन व्यञ्जनं संस्यन्दते समेति[6] यदुताग्रपदैः॥ 5

कं पुनस्त्वमानन्द स्थविरकं भिक्षुं[7] संजानीयाः॥ स्थविरको भदन्त भिक्षुरर्हन्क्षीणास्रवः[8] कृतकृत्यः कृतकरणीयो ऽपहृतभारो ऽनुप्राप्तस्वकार्थः परिक्षीणभवसंयोजनः सम्यगाज्ञासुविमुक्तचित्तः। तान्यपि भिक्षुशतानि सर्वाण्यर्हन्ति[9] क्षीणास्रवाणि कृतकृत्यानि कृतकरणीयान्यपहृतभाराण्यनुप्राप्तस्वकार्थानि परिक्षीणभवसंयोजनानि सम्यगाज्ञासुविमुक्तचित्तानि[10]॥ 10

यदा भगवता आयुष्मदानन्देन[11] स्थविरकस्ते च भिक्षव उद्भाविताः प्रकाशिताश्च तदा भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः[12]। कानि भदन्त स्थविरकेण

---

1) Anusvāra wanting in MS.

2) MS °कृतंतद्य°.

3) Ex conject.; MS भिक्षुशतातमेवा° (D भिक्षुशतानितमेवा°).

4) Ex conject.; MS तैरपि समय एष.

5) MS चार्थेनार्घ.

6) B समैति, D corr.

7) Anusvāra wanting in MS.

8) MS °र्हत्क्षीणाश्रवः.

9) Ex conject.; MS सर्वाण्यर्हत्क्षीणाश्र° (D °र्हन्तो°).

10) B °वित्तानि, CD corr.

11) Note the compound. There is no sufficient reason to correct आयुष्मतानन्देन, though compounding is not usual here. I understand the passage, in a slightly different manner from Feer (p. 380,8), as follows: «When the Lord, owing to the Āyuṣmat Ānanda, had extolled and made renowned Sthaviraka and those (500) Bhikṣus —».

12) MS पपच्छुः (D प्रप°).

Digitized by Madhuban Trust, Delhi



कर्माणि कृतान्युपचितानि येन[1] षष्टि वर्षाणि मातुः कुक्षावुषितः कानि कर्माणि कृतानि येन[2] धन्धः संवृत्तः परमधन्धः प्रव्रज्य चार्हत्वं साक्षात्कृतम्॥ भगवानाह। स्थविरकेणैव भिक्षवः पूर्वमन्यासु ज्ञातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि। स्थविरकेण कर्माणि कृतान्युपचितानि को ऽन्यः

5 प्रत्यनुभविष्यति। न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ न तेजोधातौ न वायुधातावपि तू[3]पात्तेष्वेव स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम्॥

10 भूतपूर्वं भिक्षवो ऽतीते ऽध्वन्यस्मिन्नेव भद्रके कल्पे विंशतिवर्षसहस्रायुषि प्रजायां काश्यपो नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान्। स वाराणसीं नगरीमुपनिश्रित्य[4] विहरति ऋषिपतने मृगदावे॥ तत्रान्यतरः श्रेष्ठिपुत्रः स्थविरसकाशे प्रव्रजितः। स च स्थविरो ऽर्हन् स रागविप्रकीर्णः[5]॥ यावत्तत्र देशे पर्व प्रत्युपस्थितम्। ततस्तरुण-

1) Cp. *supra*, I, 135 n. 5.

2) MS धन्वः and परमधन्वः, the same spelling as in **Divy.** and **Çikṣāsamuccaya** (see the Indexes on both). I have nevertheless adopted the form *dhandha*, not *dhanva*, on account of the Pāli word *dandha* and Skt. *dhāndhya* (in **Trikāṇḍaçeṣa**); see **Bendall's** Additional Notes on his edition of **Çikṣās.**, p. 395.

3) Cp. *supra*, I, p. 74 n. 9.

4) MS °निसृत्य.

5) Ex conject.; B स्थविरोऽर्हनस (or some other akṣ., it is very indistinct) रागवि°. At the top of the page the word दहरा seems to refer to the akṣaras रोऽर्हन, but it may rather be intended as a correction of तरुण on the same line of the text. In B's copies the text is still worse corrupted. The true reading appears from a passage in avad. nr. 95 (B 92a), where an analogous unbecoming action of some young monk is related with almost the same words.

भिक्षुणा स्थविर उत्थाप्यते । उत्तिष्ठ गोचरग्रामं गमिष्याव इति ॥ स्थविर आह । [(1)]वत्साद्यापि [(2)]प्रग एव गच्छ तावत्कुशलपक्षं [(3)]प्रतिजागृहीति ॥ द्विरपि ‹त्रिरपि› तरुण-भिक्षुणा स्थविर [(4)]उत्थाप्यते । उत्तिष्ठ गोचरग्रामं गमिष्याव इति ॥ द्विरपि त्रिरपि स्थविर आह । [(1)]वत्साद्यापि [(2)]प्रग एव गच्छ तावत्कुशलपक्षं [(3)]प्रतिजागृहीति ॥ ततस्तेन तरुणभिक्षुणा आहारगृध्रेण खरं वाक्कर्म निश्चारितम् । * * * * * * * * * * * [(5)] ॥ 5

1) B the first time वत्स्या°, the second time वत्स्मा°, D corr. both times.

2) Ex conject.; MS युग unmeaning. Since in the parallel passage of avad. nr. 95 प्रातरेव is used synonymously, and the Tibetan translator renders both terms similarly by ད་ང་སྔས་ — cp. Feer, p. 380 n. 2 — some synonym of *prātar* is wanted. Now *praga eva* is the very expression required. It was wrongly written *yuga eva* by copyists who did not understand the word *prage*; in ancient Nepalese writing *yu* and *pra* are very similar. That the fault is an old one, appears from the paraphrase in K, f. 159b 1

युग एव समालोक्य गच्छ त्वमेव भिक्षुक ।
तावत्कुशलपक्षाणां प्रतिज्ञां प्रतिपूरय ॥

3) Ex conject.; MS प्रतिज्ञागृहीति. Cp. *supra*, I, 257,14. Divy. 124, 9. 306, 12 and the places of Mhv. quoted in the Index of Senart's edition of that work (III, 559). *Pratijāgarti* = *rakṣati*, cp. Pāli *paṭijaggati*. The paraphrast of our story in the Kalpadrum. must have found this perverted reading, too, in his ms. of Avadānaç.

4) MS उपथाप्यते.

5) The portion wanting here is preserved in the Tibetan version rendered thus by Feer (p. 381, 1): «Hé bien! toi, dit-il, ne sors pas de la maison pendant soixante ans! quant à moi, je pars.». — Bhagavat reprit: Que pensez-vous, Bhixus? Celui qui, en ce temps-là, à cette époque là, fut le jeune Bhixu, c'était précisément ce bhixu Sthavira. C'est par avoir éprouvé des dispositions perverses envers un Arhat et lui avoir adressé des paroles dures par un acte de méchanceté —

It is plain that this portion has been lost by a mistake of some scribe whose eyes deviated from the first खरं वाक्कर्म निश्चारितं to those same words repeated some lines below, which close the portion lost.

In K, f. 159b 4, this is paraphrased as follows.

ततो रुषा स शिष्यस्तं गुरुं साक्ष[(.)] ततोवदत् । (·) So MS. I propose प्रेत्य
अहमेव प्रयास्यामि त्वं तिष्ठ[(§)] पयोदरे ॥ (§) Read तिष्ठेह

**** तस्य कर्मणो विपाकेन षष्टि वर्षसहस्राणि[1] मातुः कुक्षावुषितः। यद्भूद्धर्म[2]-मात्सर्यं तेन दुःप्रज्ञः कृच्छ्रेणेन्द्रियाणि परिपाचितानि। यदनेन तत्र पठितं स्वाध्यायितं स्कन्धकौशलं प्रतीत्यसमुत्पादकौशलं स्थानास्थानकौशलं च कृतं तेन मम शासने प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्। तस्मात्तर्हि भिक्षवो वाग्दुश्चरितप्रहाणाय व्याय-
5 न्तव्यम्[3]। एते दोषा न भविष्यन्ति ‹ये› स्थविरकस्य पृथग्जनभूतस्य एष एव गुणगणो भविष्यति यस्तस्यैवार्हत्त्वं प्राप्तस्येत्येवं[4] वो[5] भिक्षवः शिक्षितव्यम्॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्॥

---

इत्यसौ दहरो भिक्षुस्तं गुरुं स्थविरं यतिं।
रुषा प्र(·)रुषवाक्येन प्रतिक्षिप्य ततो ययौ॥ (·) Read परुष°
योसौ दहरको भिक्षुः पारुष्यमवदद्गुरोः।
अयं स्थविरको भिक्षु(§)र्ज्ञानीध्वमिति मान्यथा॥ (§) Read भिक्षुर्ज्ञा°

1) Cp. Feer's note 3 on p. 381.

2) MS यद्भूद्धर्म° (D यद्याभूत्सर्व°).

3) MS व्यापत्तव्यमेते, cp. *supra*, I, p. 226 n. 3; 245 n. 7.

4) MS °त्यैवं.

5) B वा, D corr.

## हस्तक इति ६३ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्डदस्यारामे । श्रावस्त्यामन्यतमः श्रेष्ठी आढ्यो महाधनो महाभोगो विस्तीर्णविशालपरिग्रहो वैश्रवणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी । तेन सदृशात्कुलात्कलत्रमानीतम् । स तया सार्धं क्रीडति रमते परिचारयति । तस्य क्रीडतो रममाणस्य परिचारयतः पत्नी आपन्नसत्त्वा संवृत्ता । सा अष्टानां वा नवानां वा मासानामत्ययात्प्रसूता । दारको जातो[1] ऽभिरूपो दर्शनीयः प्रासादिकः सर्वाङ्गप्रत्यङ्गोपेतः प्रकृतिजातिस्मरश्च । स स्वकं हस्तं गृहीत्वा आलिङ्गते चुम्बति परिष्वजति[2] वाचं भाषते । अहो बत मे हस्तकौ सुचिरेण लब्धौ अहो बत मे हस्तकौ सुचिरेण लब्धकाविति ॥ तस्य ज्ञातौ ज्ञातिमहं कृत्वा नामधेयं व्यवस्थाप्यते किं भवतु दारकस्य नामेति । ज्ञातय ऊचुः । यस्मादयं जातमात्र एव हस्तावालिङ्गते चुम्बति तस्माद्भवतु दारकस्य हस्तक इति नामेति ॥ हस्तको दारको ऽष्टाभ्यो धात्रीभ्यो दत्तो द्वाभ्यामंस[3]धात्रीभ्यां द्वाभ्यां क्षीरधात्रीभ्यां द्वाभ्यां मलधात्रीभ्यां द्वाभ्यां क्रीडनिकाभ्यां धात्रीभ्याम् । सो ऽष्टाभिर्धात्रीभिरुन्नीयते वर्ध्यते[4] क्षीरेण दध्ना नवनीतेन सर्पिषा सर्पिमण्डेनान्यैश्चोत्तप्तोत्तप्तैरुपकरणविशेषैराशु वर्धते ह्रदस्थमिव पङ्कजम् । यदा

---

1) MS °तः । अभि°.

2) BCD परिस्वजति, P परिष्वजति.

3) MS here °मन्स°, DP °मत्स°, as usual.

4) MS वर्द्धते.

तत्र देशे किञ्चिद्भवति भयं तदा स जनकायो भीत इतश्चामुतश्चोद्भ्रान्तो[1] भाण्डं गोपायति[2] स तु हस्ती गोपायति जनकायस्य चैवं कथयति। मा भवन्तो दक्षिणीयेषु चित्तं प्रदूषयत[3] मा परुषां वाचं भाषयध्वमहो बत मे हस्तकौ सुचिरेण लब्धकावहो बत मे हस्तकौ सुचिरेण लब्धकाविति ॥

5 यावदपरेण समयेन हस्तको जेतवनं गतः। अथासौ ददर्श बुद्धं भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः समलङ्कृतमशीत्या चानुव्यञ्जनैर्विराजितगात्रं व्यामप्रभालङ्कृतं सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकं सहदर्शनाच्चानेन भगवतो ऽन्तिके चित्तं प्रसादितम्। स प्रसादजातो भगवतः पादाभिवन्दनं कृ[90a]त्वा पुरस्तान्निषण्णो धर्मश्रवणाय। ततो ऽस्य भगवताशयानुशयं धातुं प्रकृतिं च ज्ञात्वा तादृशी चतुरार्यसत्यसंप्र-
10 तिवेधिकी धर्मदेशना कृता यां श्रुत्वा हस्तकेन विंशतिशिखरसमुद्गतं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रोतापत्तिफलं साक्षात्कृतम्। स दृष्टसत्यो मातापितरावनुज्ञाप्य भगवच्छासने प्रव्रजितः ॥ तेन युज्यमानेन घटमानेन व्यायच्छमानेनेदमेव पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः शतनपतनविकरणविध्वंसनधर्मतया पराहत्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम्। अर्हन्संवृत्त[4]स्त्रैधातुकवीतरागः समलोष्टकाञ्चन आ-
15 काशपाणितलसमचित्तो वासीचन्दनकल्पो विद्याविदारिताण्डकोशो विद्याभिज्ञाप्रतिसंवित्प्राप्तो भवलाभलोभसत्कारपराङ्मुखः सेन्द्रोपेन्द्राणां देवानां पूज्यो मान्यो ऽभिवाद्यश्च

---

1) MS °द्भ्रान्तौ.

2) B गोपीयमिति; the copies neglect the interlinear akṣara. I am not quite certain of the correction. Ratnāv. nr. 11, which is the paraphrase of this avadāna, is here slightly different: जनकायः समुद्भ्रान्तो गोपायस्वस्वभाण्डकम् (f. 94b 3), where the true reading may be °ऽगोपायत्स्वस्वभाण्डकम्, as seems to be meant in Cambr. MS Add. 1620.

3) MS °षयतः.

4) MS °र्हत्संवृ°.

संवृत्तः। सो ऽर्हत्त्वप्राप्तो[1] ऽप्येवमेव भिक्षूणां धर्मं देशयति। मा भवन्तो दक्षिणीयेषु चित्तं प्रदूषयत मा खरां वाचं निश्चारयत। अहो बत मे हस्तकौ सुचिरेण लब्धकावहो बत मे हस्तकौ सुचिरेण लब्धकाविति॥

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। कानि भदन्त हस्तकेन कर्माणि कृतान्युपचितानि येनार्हत्त्वप्राप्तो ऽप्येवमेव कथयति। अहो बत मे हस्तकौ 5 सुचिरेण लब्धकावहो बत मे हस्तकौ सुचिरेण लब्धकाविति॥ भगवानाह। प्रत्यक्ष-कर्मफलदर्शी भिक्षवो ऽयं पुद्गलः[2]। इच्छथ यूयमवधारयितुम्[3]॥ एवं भदन्त॥ हस्तकेनैव भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्यया-न्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि। हस्तकेन कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति। न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते 10 नाब्धातौ न तेजोधातौ न वायुधातावपि तूपात्तेष्वेव[4] स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम्॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वन्यस्मिन्नेव भद्रके कल्पे विंशतिसहस्रायुषि प्रजायां 15 काश्यपो नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नस्सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां[5] बुद्धो भगवान्। स वाराणसीं नगरीमुपनिश्रित्य[6]

---

1) MS °र्हत्त्वंप्राप्तो, but cp. *infra*, l. 5 and *supra*, I, 285, 4. II, 139, 3.

2) I have adopted Feer's emendation (p. 385, n. 1); MS पिंगलइच्छथ.

3) Ex conject.; MS यूयंसंधायायमेवं, utterly corrupt (D यूयंसमाधाय अयमेवं, quite nonsense). My correction has been suggested by the phrase इच्छथ भिक्षवः श्रोतुम् in analogous cases (vide *supra*, I, p. 65, 9. 69, 3); *avadhārayati* is a synonym of *çṛṇoti*.

4) Cp. *supra*, I, p. 74 n. 9.

5) B °ष्याणा, P corr., D, as usual, देवानां च मनुष्याणां च.

6) MS °निसृत्य.

विहरति ऋषिपतने मृगदावे। यावत्तत्र द्वौ भिक्षू संशीलिकौ[1]। तत्रैको बहुश्रुतो ऽर्हन्द्वि-
तीयो ऽल्पश्रुतः पृथग्जनश्च। तत्र यो ऽसावर्हन्बहुश्रुतः स ज्ञातो महापुण्यो लाभी ची-
वरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां बहूनि च निमन्त्रणकानि प्रतिल-
भते। स तं संशीलिकभिक्षुं[1] यत्र निमन्त्रितो भवति तत्र पश्चाच्छ्रमणं[2] नयति ॥ यावदन्य-
5 तमस्मिन्दिवसे ऽर्हन्निमन्त्रितो[3] निमन्त्रणकं गन्तुकामस्तं पश्चाच्छ्रमणमागच्छति[2] न च प्रति-
लभते। ततस्तेन तस्यादर्शनादन्यो[4] भिक्षुर्नीतः[5] ॥ यावत्तत्र तरुणभिक्षुभिरौद्धत्याभिप्राये-
‹र›[6]वमुक्तम्। पश्यत भदन्ता यावत्तेनायं पश्चाच्छ्रमणो[7] ऽद्य न नीतो ऽन्यो नीत इति।

---

1) Ex conject.; MS संशीतिकौ and l. 4 संशीतिकभिक्षुं. I take this word *saṃçītika*, which is also found in the paraphrase of the Ratnāv. (f. 98 a 6)

काश्यपस्य जगद्गुरोः
शासने द्वौ यती भिक्षू संशीतिकौ बभूवतुः ॥

for a corrupt reading, and have corrected it into *saṃçīlika*. From the context it is plain that it must have the meaning «comrade, cohabitant, living together». The Tibetan translation of it is མཛའ = 'friend'. Cp. Feer, p. 385 n. 3; the passage of the Kanjur quoted there is to be thus corrected: གཉིས་ཤིག་མཛའ་ཞིང་འདུག་སྟེ. Now, संशीलन is proved in PW, VII, 478 *s. v.* to mean 'häufiger Verkehr mit' —, and here we have the new word संशीलिक with a cognate meaning.

2) MS °च्छ्रवणं.

3) B °न्निमत्रितो, DP corr.

4) Ex conject.; MS तस्यादर्शाद°.

5) B भिक्षुर्णीतः, cp. *supra*, p. 134 n. 5; D corr.

6) If *auddhatya* is right — and there is no reason to doubt it — it must be taken here in the pregnant sense of Greek ὕβρις. The young monks were intent on jeering him; Çikṣāsamuccaya (ed. Bendall) 106, 15 *auddhatya* is conjoint with *hāsya*. The Tibetan renders *auddhatyābhiprāyaiḥ* by སེམས་དགོད་པ་དག་གིས.

In R the parallel passage is somewhat corrupt; f. 98 b 4 तस्यौद्धत्यमनः कर्तुमेवमूचुः परस्परं (likewise in Cambr. Add. 1620, f. 90 b 4, only the anusvāra on त्य is wanting). If I am right correcting this line as follows: तस्यौद्धत्यमधः कर्तुमेवमूचुः परस्परम्, the ordinary meaning of *auddhatya* will do here, for the phrase quoted would signify: «in order to abate his haughtiness they spoke thus to each other».

7) MS °च्छ्रवणो.

ततस्तेन क्रोधाभिभूतेनार्हतो ऽन्तिके चित्तं प्रदूष्य खरं वाक्कर्म निश्चारितम्। ******

********[1] तेन पञ्च जन्मशतान्यहस्तो जातः। यदाशयतो विप्रतिसारजाते-
नात्ययमत्ययतो देशितं विवृत[2]मुत्तानीकृतं तेन हस्तौ प्रतिलब्धौ। यत्पुनस्तेन पठितं
स्वाध्यायितं स्कन्धकौशलं धातुकौशलमा[3]यतनकौशलं प्रतीत्यसमुत्पादकौशलं च कृतं
तेन मम शासने प्रव्रज्य सर्वक्लेशप्रहाणादर्हत्वं साक्षात्कृतम्। इति हि भिक्षव एकान्तकृ-
ष्णानां कर्मणामेकान्तकृष्णो विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्यति-
मिश्रस्तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव
कर्मस्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम्॥

इदमवोच[90 b]द्भगवानात्तमनसस्ते भिक्षवो ‹भगवतो›[4] भाषितमभ्यनन्दन्॥

---

1) The imprecation itself has been lost with the first part of the explicative conclusion of the tale, quite as in the preceding avadāna, cp. the judicious remark of Feer, p. 386 n. There is no gap in the Tibetan. Feer in his translation (p. 386, 5) has put this missing portion within brackets. I transcribe it here for easiness' sake: «Si désormais, dit-il, je touche à son vase à aumônes pour le laver, je veux n'avoir plus mes deux mains». — Bhagavat ajouta: «Que pensez-vous, Bhixus, celui qui, en ce temps-là fut le Bhixu compagnon, c'était précisément ce Hastaka. Pour avoir, dans un accès de mauvais sentiments contre l'Arhat, laissé échapper l'acte d'une parole violente —».

The gap must have existed already, when the Ratnāvadānamālā was composed. The long narration R, f. 98b 5—100a, is not the paraphrase of the few phrases preserved in the Tibetan, but it has a different content; it may be a product of the paraphrast's own invention to fill up the lost portion of the text he worked upon.

2) Ex conject.; MS विवृत्तमुत्तानी° (P विवृत्तानी°). Cp. *supra*, I, p. 287, 5.

3) धातुकौशलम् has been left out in P.

4) D fills up the gap.

## लेकुञ्चिक इति ६४।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुड-किन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयना-5 सनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपि-ण्डदस्यारामे। श्रावस्त्यामन्यतमो ब्राह्मण आढ्यो महाधनो महाभोगो विस्तीर्णविशा-लपरिग्रहो वैश्रवणधनसमुदितो वैश्रव‹णा›[1]धनप्रतिस्पर्धी। तेन सदृशात्कुलात्कलत्रमा-नीतम्। स तया सार्धं क्रीडति रमते परिचारयति। तस्य क्रीडतो रममाणस्य परिचा-रयतः पत्नी आपन्नसत्त्वा संवृत्ता। साष्टानां वा नवानां वा मासानामत्ययात्प्रसूता। दारको 10 जातो दुर्वर्णो दुर्द‹र्श›नो ऽवहोडिमको[2] जातमात्रस्य चास्य मातुः स्तनाभ्यां क्षीरमन्तर्हि-तम्। यावत्तेन ब्राह्मणेन तस्यान्या धात्री आनीता। तस्या अपि क्षीरमन्तर्हितं तस्य दारकस्य कर्मविपाकतः। यदास्य क्षीरसंभवः[3] सर्वैरप्युपायैर्न[4] संभवति तदासौ लेहेनोद्धृतः[5]।

---

1) D fills up the gap.

2) MS दुर्दन अव°. — Cp. *supra*, I, p. 280, 8, where MS has अवहोटिमको, which I have changed into अवकोटिमको. Here it is written अवहोडिमको, which is also found in the paraphrase of this tale in Ratnāv. nr. 21:

ततः सा समयेसूत दारकं दुर्भगाकृतिं। (·) Read दुर्वर्णं वि°
दुर्व(·)र्णविकृताकारमवहोडिमकेन्द्रियं॥ (f. 203b 6)

Its Tibetan equivalent is བྱད་ངན་པོ་ཞིག་པཙམ་ཏེ.

3) Tib. འོ་མ་འབྱུང་བ་.

4) MS सवैरप्यु° (D सर्वै°).

5) MS °नोद्दृत°.

तस्य लेकुञ्चिक[1] इति नामधेयं कृतम्॥ सो[2] ऽल्पेशाख्यो ऽल्पपुण्यश्च॥

यदा महान्संवृत्तस्तदा उदरपूरणमपि नासादयति। पश्यति च ‹भि›क्षून्[3]सुनिवसि-
तान्सुप्रावृतान्भ्रमरसदृशानि पात्राणि गृहीत्वा श्रावस्तीं पिण्डाय प्रविशतस्तांश्च पूर्ण-
हस्तान्पूर्णपात्रान्प्रतिनिष्क्रामतः। तस्य दृष्ट्वा भगवच्छासने प्रव्रज्याभिलाष उत्पन्नः। स
मातापितरावनुज्ञाप्य भगवच्छासने प्रव्रजितो ऽप्युदरपूरणं नासादयति। तेन तेनैव संवेगेन 5
युज्यमानेन घटमानेन व्यायच्छमानेनेदमेव पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्व-
संस्कारगतीः शतनपतनविकरणविध्वंसनधर्मतया पराहत्य सर्वक्लेशप्रहाणादर्हत्त्वं सा-
क्षात्कृतम्। अर्हन्संवृत्तस्त्रैधातुकवीतरागः समलोष्टकाञ्चन आकाशपाणितलसमचित्तो
वासीचन्दनकल्पो विद्याविदारिताण्डकोशो विद्याभिज्ञाप्रतिसंवित्प्राप्तो भवलाभलोभ-
सत्कारपराङ्मुखः[4] सेन्द्रोपेन्द्राणां देवानां पूज्यो मान्यो ऽभिवाद्यश्च संवृत्तः॥ 10

यावदसावपरेण[5] समयेन भगवतो गन्धकुटीं संमार्जितुं प्रवृत्तः। स तां संमृज्य पात्र-
चीवरमादाय श्रावस्तीं[6] पिण्डाय प्राविक्षत्। ततस्तेन प्रभूतः प्रणीतश्च पिण्डपात आसा-
दितो येनास्य संतर्पितानीन्द्रियाणि महाभूतानि। ततस्तेन संतर्पितेन्द्रियेण कृत्स्ना[7]
रात्रिर्ध्यानविमोक्षसमापत्तिभिरतिनामिता। ततो ऽस्य बुद्धिरुत्पन्ना। शोभनो ऽयमुपायो

---

1) B लेकुंचिकलेकुंचिक इति, likewise C. In D and P the name is written but once, and in fact the repetition seems to be merely dittography.

2) Ex conject., cp. R, f. 204b 4 स्वल्प(sic)शाख्योल्पपुण्यवान्; MS स्ते ऽल्पे-सौख्यो (D सो ऽल्पे°). Cp. Feer, p. 388 n. 2.

3) Ex conject., suggested also by the Tibetan, cp. Feer, p. 388 n. 3; MS पश्यतिचक्षुषंनिवशतांसुप्रावृत्ता(D ता)न्भ्रमर°, utterly corrupt. Cp. also R, f. 204b 6 foll.

4) B °लोभसंस्कार°, DP corr.

5) Ex conject.; MS यावदसौपरेण.

6) Anusvāra wanting in MS.

7) Ex conject.; MS कृत्स्नंरात्रिं...... °नामितं. Cp. the paraphrase in Ratnāv.: तद्रात्रिं सुसमाहितः .......सुखेनैवात्य(ms. भ्य)नामयत् (f. 206b 2).

यन्वहं भिक्षुसङ्घं विज्ञापयेयमिति । तेन सर्व एव भिक्षुसङ्घो विज्ञापितः । अहं भदन्ताल्प-[1]
पुण्यो यदा गन्धकुटीं संमृज्य पिण्डपातं प्रविशामि तदा तृप्तिं[2] लभे । तन्मे सङ्घः कारुण्यं
करोतु नान्येन भगवतो गन्धकुटी संम्राष्टव्येति[3] ॥ ततः सङ्घेन क्रियाकारः[4] कृतो न केन-
चिद्भगवतो गन्धकुटी संम्राष्टव्येति । स विस्रब्धो गन्धकुटीं[2] संमृज्य पश्चाच्छ्रावस्तीं पि-
5 ण्डाय प्रविशति ॥

तस्मिंश्च समये आयुष्माञ्छारद्वतीपुत्रः[5] पञ्चशतपरिवारो जनपदे[6] वर्षोषितः[7] श्राव-
स्त्यामभ्यागतः । ततः शास्तुर्गौरवजातो गन्धकुटीं संमार्ष्टुमारब्धः[8] । स आयुष्मता लेकु-
ञ्चिकेन लक्षितः । तेनोच्यते । स्थविर उदरे मम प्रहारो दत्तो यत्ते गन्धकुटी संमृष्टेति ॥
स्थविरः प्राह । कथमिति ॥ लेकुञ्चिकः कथयति । स्थविर यदाहं गन्धकुटीं[9] न संमा-
10 र्जितवांस्तदा पिण्डपातं नासादयामीति ॥ ततः स्थविरशारिपुत्रेणोक्तम् । यद्येवमहमन्यत्र
निमन्त्रितः । अल्पोत्सुकस्त्वं भव अहं तत्र तुभ्यं पिण्डपातं दास्यामीति ॥ ततः स्थविर-
शारिपुत्रः पञ्चशतपरिवारो निमन्त्रणकं प्रस्थितः । लेकुञ्चिको ऽपि तेनैव सार्धं संप्रस्थितः ॥
यदा गृहपतेर्गृहसमीपं गतस्तदा [91a] लेकुञ्चिकस्य कर्मविपाकेन तस्मिन्गृहे महान्क-
लहः[4] समुत्पन्नः । तत आयुष्मतो लेकुञ्चिकस्यैतदभवत् । ममाल्पपुण्यतया[10] तत्र कलहो[11]

---

1) Irregular sandhi, cp. *supra*, I, 20 n. 6; or may the singular *bhadanta* perhaps be used also when addressing a plurality of persons, in the same way as is sometimes the case with *tāta*?

2) Anusvāra wanting in MS.

3) Note this new form with metathesis, cp. ved. fut. *mrakṣyate*, compared to *mārṣṭavya* and the subst. *mārṣṭi*.

4) Visarga wanting in MS.

5) MS °ष्माच्छा°.

6) B जनपदं, D corr. Cp. also Feer, p. 389 n. 2.

7) B °र्षोषितश्रा°, D corr.

8) MS संमाष्टु° (D समाष्ट, P संमाष्ट).

9) MS गन्धकुटीनसंमार्जितवान् । तदा.

10) In B मा and the last akṣ. of पुण्यतया are very indistinct.

11) MS कलको.

ज्ञात इति। ततः प्रतिनिवृत्य विहारं गत्वा भक्तच्छेदमकरोत्॥ ततो द्वितीये दिवसे स्थविरशारिपुत्रेणोच्यते। किमर्थं त्वं न गत इति॥ तेनोक्तम्। स्थविरेण नावगतं[1] ममाल्पपुण्यतया यादृशस्तत्र कलहो ज्ञात इति॥ ततः स्थविरशारिपुत्रेणान्यत्र दिवसे तं पुरस्कृत्य[2] तद्गृहं प्रवेशितः। सङ्घमध्ये चोपविष्टस्य सतः ‹प्र›दक्षिणाद्याहारो[3] दीयते। तत्र परिवेषकजनो विस्मरति[4]। तेन सङ्घमध्ये द्वितीयो भक्तच्छेदः[5] कृतः॥ 5

यावदियं प्रवृत्तिः स्थविरानन्देन श्रुता[6]। श्रुत्वा च लेकुञ्चिकमुवाच। तेन हि त्वमिहैव जेतवने तिष्ठाहं ते पिण्डपातमानेष्यामीति॥ स्थविरानन्दस्यैवंविधा स्मृतिः। यदा भगवतो ऽन्तिकादशीतिर्धर्मस्कन्धसहस्राण्युद्गृहीतानि * * * *[7]। लेकुञ्चिकस्य च कर्मावरणेन स्थविरानन्देन विस्मृतम्। तत्रानेन तृतीयो भक्तच्छेदः[8] कृतः॥ चतुर्थे दिवसे स्थविरा‹नन्दे›नास्थां[9] कृत्वा पिण्डपातो दत्तः सो ऽपि निर्गच्छतः[5] श्वभिरपहृतः। तत्रानेन 10 चतुर्थो[10] भक्तच्छेदः कृतः॥

---

1) Ex conject.; MS स्थविरेणावगतं (DP °वगत). I accept the first sentence as an interrogation: «has the thera not noticed how —»?

2) Ex conject.; MS संपुर°. Cp. R, f. 207 a 4, तं पुरः समुपादाय.

3) Ex conject.; MS सतो दक्षि°. My insertion of प्र is justified by the Tibetan translation (Feer, p. 390 n. 1) as well as by the words of the paraphrast in R (f. 207 a 5) परिवेषकाः। प्रदक्षिणक्रमेणैवमभ्यर्च्य पर्यवेश(sic)यन्. Perhaps there is also a small gap; the repetition of the conjunction च is singular.

4) Ex conject.; MS विस्मरिते.

5) Visarga wanting in MS.

6) Ex conject.; MS श्रुतं.

7) At the place which I have marked by asterisks the words वृद्धे च भिक्षुभ्यः follow in MS. The rest of the sentence has been lost in a gap, which is not mentioned by Feer, but he must have translated the portion missing in Sanskrit from the Tibetan, since he relates in his translation (p. 390, 7 foll.) that Ānanda was able to learn by heart 80.000 *dharmaskandhas* taught by Bhagavān in the same time as the other bhikṣus could learn but 20.000. Feer has not wholly caught this passage. It is not said here that Ānanda had in memory this teaching at that time, but only this: «his memory was such as to remember etc.»

8) MS भक्ताछेदः (D भक्तछेदः).

9) The correction is certain from the Tibetan, see Feer, p. 390 n. 2.

10) B चतुर्था, CDP corr.

पञ्चमे दिवसे स्थविरमौद्गल्यायनेन श्रुत्वा लेकुञ्चिकस्यार्थाय पिण्डपातं गृहीत्वा ऋद्ध्या[1] संप्रस्थितम् । लेकुञ्चिकस्य कर्मविपाकेन सुपर्णिना पक्षिराजेन पक्षैः पराहृत्य महासमुद्रे पातितः । तत्रानेन पञ्चमो भक्तच्छेदः कृतः ॥

षष्ठे दिवसे शारिपुत्रेण श्रुतम् । तस्यैतदभवत् । यन्न्वहं ‹लेकुञ्चिकस्य पिण्डपातं›
5 * * * * * * * * * *[2] लेकुञ्चिकस्य कुटिकाद्वारे ऽवस्थितः । ततो लेकुञ्चिकस्य कर्मविपाकेन तदपि द्वारं शिलाभिरावृतम् । ततः शारिपुत्रेण ऋद्ध्या मोदयामीति[3] तत्पात्रं पृथिव्यां स्थापितम् । तदपि लेकुञ्चिकस्य कर्मविपाकेनाधाशीतिषु[4] योजनसहस्रेषु काञ्चनमय्यां[5] पृथिव्यामवस्थितम्[6] । ततो ऽपि स्थविरशारिपुत्रेण ऋद्ध्या समुद्धृत्य तत्पिण्डकं मुखद्वारश्लेषिते पिण्डपाते तस्य कर्मावरणेन[7] तन्मुखमेकघनं संवृत्तम्[6] । तत आयुष्माञ्छारिपुत्रो
10 लेकुञ्चिकस्याभव्यतां ज्ञात्वा संविग्नस्तेन च भदन्तेन षड्भक्तच्छेदाः कृताः ॥

---

1) Ex conject.; MS ऋध्यात्संप्रस्थितः.

2) Again a gap in consequence of the carelessness of some scribe, whose eyes must have deviated from the first लेकुञ्चिकस्य to the third. The missing portion is represented by the italicized words of this passage of Feer's translation (p. 390, 21) from the Tibetan: «Si je *recueillais moi-même, de mes propres mains, les aumônes de Lekuncika?» Le Sthavira Çāriputra, ayant donc recueilli les aumônes de Lekuncika, disparut de cette maison et* se présenta à la porte de l'habitation de Lekuncika.» In the paraphrase of R this is related in almost the same way (f. 209 a).

3) MS मोत्ता°.

4) Note the ungrammatical plural *açītiṣu*. R (f. 209 b 3) अशीति योजनानां च सहस्रेषु [च] रसातले.

5) Ex conject.; MS काञ्चनशय्यां. Feer (p. 390, 29) «sur un sol formé d'une couche d'or.» Tibet. གསེར་གྱི = 'of gold' = *kāñcanamaya.*

6) MS °वस्थितस्ततो................संवृत्तस्तत (D संवृत्तः तत्र). The sentence which begins with ततो ऽपि is badly constructed. I think that between तत्पिण्डकं and मुखद्वार° a clause has been lost relating that Çāriputra opened the door of L.'s cell and brought his meal within reach of his mouth.

7) B कर्माकरणेन, D corr.; cp. *supra*, p. 155, 9.

ततः सप्तमे दिवसे आयुष्मांल्लेकुञ्चिकः सत्त्वानामुद्वेजनार्थं कर्मणां[1] चाविप्रणाशसंदर्शनार्थं कर्मबलोद्भावनार्थं च भस्मना पात्रं पूरयित्वा बुद्धप्रमुखस्य भिक्षुसङ्घस्य पुरस्तान्निषद्य उदकेनालोड्य[2] पीत्वा निरुपधिशेषे निर्वाणधातौ परिनिर्वृतः ॥ तमभिवीक्ष्य भिक्षवः संविग्नास्तस्य शरीरे शरीरपूजां कृत्वा संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। कानि भदन्त लेकुञ्चिकेन कर्माणि कृतानि येनार्हत्त्वप्राप्तो ऽपि[3] षड्भक्तच्छेदान्कृत्वा 5 सप्तमे दिवसे निरुपधिशेषे निर्वाणधातौ परिनिर्वृत इति ॥ भगवानाह । लेकुञ्चिकेनैव भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि[4]। लेकुञ्चिकेन कर्माणि कृतानि को ऽन्यः प्रत्यनुभविष्यति। न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ न तेजोधातौ न वायुधातावपि[5] तूपात्तेष्वेव स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते 10 शुभान्यशुभानि च।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि वाराणस्यां नगर्यामन्यतमा गृहपतिपत्नी आढ्या

---

1) Ex conject.; MS कर्मणोश्चा°.

2) Ex conject.; MS उदकेनालोडयित्वा निरुपधि°. The Tibetan translation has འཐུངས་ནས་ = 'et les but', cp. Feer, p. 391 n. 2. Ratnāv. expresses the same fact by means of the verb *bhuj:* f. 209 b 7 अंबुनालोड्य तद्भस्म भुञ्जमानस्ततः क्षणात्। त्रिरत्नस्मरणं कृत्वा निर्वृतिं परमां ययौ, and f. 210 a 3 सप्तमे दिवसे भस्म भुक्त्वैव परिनिर्वृतः.

3) P here येनार्हत्वप्राप्तोकप, which Feer misreads °कृप; hence his note 3 on p. 391. B has the right reading, likewise its copies C and D.

4) B °वश्यभा°, D corr.

5) Cp. *supra*, I, p. 74 n. 9.

भद्रा कल्याणाशया । सा अभीक्ष्णं श्रमणब्राह्मणकृपणवनीपक[1]याचनके[2]भ्यो दानानि ददा-
ति ॥ तस्या[3] अपरेण समयेन भर्ता कालगतः । यावदस्याः पुत्रः स्वगृहे स्वामी संवृत्तः । स
च मत्सरी ‹कुटु›कुञ्चक[4] अगृहीतपरिष्कारः काकाय बलिं न प्रदातुं व्यवस्यति । स श्रम-
णब्राह्मणकृपणवनीपका[1]न्दृष्ट्वा चित्तं प्रदूषयति । तस्य माता तेनैव पूर्वक्रमेण ‹श्रमण›-
5 ब्राह्मणकृपणवनीपके[1]भ्यो दानप्रदानान्यनुप्रयच्छति । तस्याः पुत्रो मात्सर्याभिभूतः कथ-
यति । अम्ब न मे रोच्यते[5] मा दानमनुप्रयच्छेति ॥ सा कथयति । पुत्रक इह कुले एष
कुलधर्म इति ॥ ततस्तेन पृथग्भक्तेन स्थापिता । [91b] तथाप्यसावुपा[6]र्धाद्दानमनुप्रयच्छ-
त्युपार्धमात्मना परिभुङ्क्ते ॥ ततस्तेन मात्सर्याभि[7]भूतेन क्रोधेना[8]वृतबुद्धिना भूयो निवार्यत
एव । यदा सर्वावस्थायां न शक्नोति वारयितुं तदा मातरमुवाच । अम्ब किञ्चित्करणी-
10 यमस्त्यववर[9]कं प्रविशेति ॥ सा ऋजुस्वभावतया अववरकं प्रविष्टा । ततस्तेन द्वारं बद्ध्वा
एकं भक्तच्छेदं कारिता ॥ सा कथयति । पुत्र बुभुक्षितास्मीति । ततस्तेन खरं वाक्कर्म

1) B पनीप°, D the first and second times वनोप°, the third time वणोप°.

2) Ex conject.; MS °नोपकाया°. I have put into the text वनीपकयाचनकेभ्यः, since *yācanaka* — not *āyācanaka* — is the usual word in this kind of writings.

3) MS तस्यापरेण.

4) Cp. *supra*, I, p. 248, 2. 257, 4. 262, 3; the same word *kuṭukuñcaka* (fem. *-ikā*) is also used by the periphrast, R f. 210b 2.

5) If the reading is genuine, *rocyate* may be explained as a passive of the causative; cp. the Rāmāyaṇa çloka (5, 77, 6) quoted in PW, VII, 361.

6) Ex conject.; MS °सावुपापाद्दान°.

7) B मांसर्या°, D corr.

8) Ex conject.; MS क्रोधेनाद्दतवुद्धिना. My correction is confirmed by the Tibetan ཁྲོ་བ་སྒྲིབ་པའི་བློ་ཅན་, Sarat translates སྒྲིབ་ 'to eclipse; to cover over'.

9) Cp. अपवरक Kathās. 32, 59, and Divy. 471, 8 foll. 479, 25 foll.; in some of the Divy. passages the mss. tradition may lead to *avavaraka* rather than *apavaraka*, cp. Pāli *ovarako*. *Supra*, II, 54, 5. 55, 7, the subterranean room is called *avaraka*.

निश्चारितं भस्म खादेति ॥ यावत्तेनासौ कृच्छ्रसंकटसंबाधप्राप्ता सकरुणाकरुणं विक्रोश-[1]
माना षड्भक्तच्छेदान्कारिता[2] तथापि न प्रतिमुक्ता कालगता । तदास्य मात्सर्येणावृतस्य
मातृवियोगाद्विप्रतिसारो जातः ॥

भगवानाह । किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन गृहपतिपुत्रो ऽयं
स[3] लेकुञ्चिकः । यदनेन मातुरपकारः कृतस्तस्य कर्मणो विपाकेन कल्पमवीचौ महानरक 5
उत्पन्नः । तेनैव हेतुना इदानीमप्यर्हत्त्वप्राप्तः षड्भक्तच्छेदान्कृत्वा भस्मादनाहार[4] एव परि-
निर्वृतः ॥ अन्यान्यपि भिक्षवो लेकुञ्चिकेन कर्माणि कृतान्युपचितानि । भूतपूर्वं भिक्षवो
ऽतीते ऽध्वनि वाराणस्यां नगर्यामन्यतमो ब्राह्मणो देवतार्चिकः[5] सर्वेषां[6] वाराणसेयानां ब्रा-
ह्मणगृहपतीनां सत्कृतो गुरुकृतो मानितः पूजितो ऽभिमतश्च[7] सर्वजनस्य ॥ धर्मता चैषा[8]
यदसति बुद्धानामुत्पादे प्रत्येकबुद्धा लोक उत्पद्यन्ते हीनदीनानुकम्पकाः प्रान्तशयनास- 10
नभक्ता एकदक्षिणीया लोकस्य । यावदन्यतमः प्रत्येकबुद्धो[9] वाराणसीं पिण्डाय प्रविष्टस्स
च तत्र पूर्णहस्तः पूर्णपात्रो निर्गच्छति । तेन ब्राह्मणेन दृष्टः । तस्य मात्सर्यमुत्पन्नम् ।
कथयत्यानय यावत्पात्रं पश्यामीति । असमन्वाहृत्य च श्रावकप्रत्येकबुद्धानां ज्ञानदर्शनं

1) Ex conject.; MS विक्रोशयमाना.

2) Ex conject.; MS °च्छेदाः कारिता. Cp. *supra*, I, p. 263, 6.

3) MS सः.

4) Ex conject.; MS तस्मादनाहार एव. The Tibetan translation ཐལ་བ་ཟོས་ནས་ = Feer, p. 392, 23 «n'ayant eu pour toute nourriture que des cendres.»

5) Ex conject.; MS देवतटिकः, B has टि, somewhat indistinctly, but it has thus been copied in CDP. Feer, p. 392, 26 «un brahmane adorateur des dieux» = Tib. བྲམ་ཟེ་ལྷ་ལ་རྟེན་པ་.

6) B वाराणस्येया°, D corr.

7) Ex conject.; MS पूजिताभितश्चससर्वजनस्य. I suppose that म having been omitted in the archetype, was erroneously inserted after तश्च, and subsequently became स.

8) MS चैषांयदासति.

9) B वुद्धा, D corr.

न प्रवर्तते[1] इति । तेन भदत्तेनोपनामितम् । ततस्तेन पृथिव्यामुत्सृज्य[2] पादेनाभिमृदितम् । ततस्तेन प्रत्येकबुद्धेन भक्तच्छेदः[3] कृतः ' न च तस्य ब्राह्मणस्य विप्रतिसारो ज्ञातः ॥

किं मन्यध्वे भिक्षवो यो ऽसौ ब्राह्मणो ऽयमेवासौ[4] लेकुञ्चिकः । भूयः काश्यपे भगवति प्रव्रजितो बभूव । तत्रानेन ब्रह्मचर्यवासः परिपालितः । तेनेदानीमर्हत्त्वं साक्षात्कृतम् । 5 इति हि भिक्षव एकान्तकृष्णानामेकान्तकृष्णो विपाक एकान्तशुक्लानां कर्मणामेकान्तशुक्लो[5] व्यतिमिश्राणां व्यतिमिश्रस्तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

1) MS प्रवर्त्तयत. Cp. *supra*, I, p. 244, 16.

2) Ex conject.; B °मुत्मुत्र (last akṣ. uncertain), D °मुत्सृन्न.

3) B °च्छेद्कृतः, D corr. The half daṇḍa is in B.

4) MS °ह्मणा अयमे°.

5) Note the abnormal place of the word *karmaṇām*. The copyist of D restored the usual order of words.

## संसार इति ९५ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः
श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकि-
न्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासन-
[1]‹ग्लान›प्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्ड- 5
दस्यारामे । श्रावस्त्यामन्यतमो गृहपतिराढ्यो महाधनो महाभोगो विस्तीर्णविशालप-
रिग्रहो वैश्रवणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी । तेन सदृशात्कुलात्कलत्रमानीतम् ।
स तया सार्धं क्रीडति रमते परिचारयति । तस्य क्रीडतो रममाणस्य परिचारयतः पत्नी
आपन्नसत्त्वा संवृत्ता । सा अष्टानां वा नवानां वा मासानामत्ययात्प्रसूता । दारको जातो[2] ऽभि-
रूपो दर्शनीयः प्रासादिकः सर्वाङ्गप्रत्यङ्गोपेतः । स जातमात्र एव गृहमवलोक्य वाचं[3] नि- 10
श्चारयति स्म । दुःखो भवन्तः[4] संसारः परमदुःखः[5] संसारः । इत्युक्त्वा तूष्णीमवस्थितः । तस्य
जातौ जातिमहं कृत्वा नामधेयं व्यवस्थाप्यते किं भवतु दारकस्य नामेति । ज्ञातय ऊचुः ।
यस्मादयं जातमात्र एव संसार इति घोषयति तस्माद्भवतु दारकस्य संसार इति नामेति ॥
संसारो दारको अष्टाभ्यो धात्रीभ्यो दत्तो द्वाभ्यामंसधात्रीभ्यां[6] द्वाभ्यां क्षीरधात्रीभ्यां द्वाभ्यां
मलधात्रीभ्यां द्वाभ्यां क्रीडनिकाभ्यां धात्रीभ्याम् । सो ऽष्टाभि[92a]र्धात्रीभिरुन्नीयते 15

---

1) DP fill up the gap.

2) MS जात अभि°.

3) In B the second akṣ. is uncertain, I read it च्; the copyists of CDP copied it variously, that of C imitated the strokes mechanically, P has वाङ्, D चाङ्क.

4) So I read with Feer, p. 401 n. 2; MS भदत्त ससंारः. Cp. *supra*, I, p. 114, 5.

5) Visarga wanting in MS.

6) MS °भ्यांमत्स°.

वर्ध्यते[1] क्षीरेण दध्ना नवनीतेन सर्पिषा सर्पिर्मण्डेनान्यैश्चोत्तप्तोत्तप्तैरुपकरणविशेषैराशु वर्धते ह्रदस्थमिव पङ्कजम् ॥

यदा संसारो दारकः क्रमेण महान्संवृत्तः स प्रकृतिजातिस्मरत्वाच्च[2] जनकायस्य धर्मं देशयति । मा भवन्तो गुरुषु गुरुस्थानीयेषु[3] मातापितृष्वाचार्योपाध्यायेषु वा
5 खरवाचं[4] निश्चारयत[5] । दुःखं संसार इति ॥ यावदपरेण समयेन इतश्चामुतश्च परि-
भ्रमञ्जेतवनं[6] निर्गतः । अथासौ ददर्श बुद्धं भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः समल-
ङ्कृतमशीत्या चानुव्यञ्जनैर्विराजितगात्रं व्यामप्रभालङ्कृतं[7] सूर्यसहस्रातिरेकप्रभं जङ्गममिव
रत्नपर्वतं समन्ततो भद्रकं सहदर्शनाच्चानेन भगवतो ऽन्तिके चित्तं प्रसादितम् । प्रसादजातो
भगवतः पादाभिवन्दनं कृत्वा पुरस्तान्निषण्णो धर्मश्रवणाय । तस्मै भगवता संसारवैरा-
10 ग्यिकी धर्मदेशना कृता यां श्रुत्वा संसारो दारकः संसारे दोषदर्शी भूत्वा मातापितरावनुज्ञाप्य भगवच्छासने प्रव्रजितः॥ तेन युज्यमानेन घटमानेन व्यायच्छमानेनेदमेव पञ्चगण्डकं
संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः[8] शतनपतनविकरणविध्वंसनधर्मतया
पराहत्य सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्कृतम् । अर्हन्संवृत्तस्त्रैधातुकवीतरागः[9] समलोष्ट-[10]

---

1) MS वर्द्धते (D वद्धते).

2) The presence of *ca* rouses the suspicion that before प्रकृति° the ablat. of some noun has dropped, denoting the *other* motive. Yet the *one* motive mentioned is sufficient for the understanding and the Tibetan version དེ་རང་བཞིན་ཚེ་རབས་དྲན་པ་སྐྱེ་བོའི corresponds exactly with the tradition of MS.

3) B मात्रा, D corr.

4) I have retained here and below, p. 163, 4, the reading of MS, taking it as a karmadhāraya compound, though the usual expression in avadāna texts is *kharā vāc*.

5) MS °रयतः. Likewise *infra* p. 163, 4.

6) Ex conject.; MS परिभ्रमतो जेतवनं.

7) B व्योम°, P corr.

8) B °गतीशतन°, D corr.

9) MS °र्हत्सं° (P °हन्सं°).

10) Visarga wanting in MS.

काञ्चन स्राकाशपाणितलसमचित्तो वासीचन्दनकल्पो विद्याविदारिताण्डकोशो विद्याभि-
ज्ञाप्रतिसंवित्प्राप्तो भवलाभलोभसत्कारपराङ्मुखः सेन्द्रोपेन्द्राणां देवानां पूज्यो मान्यो
ऽभिवाद्यश्च संवृत्तः । सो ऽर्हत्वप्राप्तो ऽपि भिक्षूणां धर्मं देशयति । मायुष्मन्तो[1] गुरुषु गुरु-
स्थानीयेषु मातापितृष्वाचार्योपाध्यायेषु खरवाचं निश्चारयत । दुःखं[2] संसारः परमदुःखं[2]
संसार इति । * * * * * * * * * * * * *[3]॥ 5

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः । कानि भदन्त संसारेण
कर्माणि कृतान्युपचितानि येन पञ्च जन्मशतानि मृतकुणप एव मातुः कुक्षेर्निर्गतः प्रव्रज्य
चार्हत्वं साक्षात्कृतमिति ॥ भगवानाह । संसारेणैव भिक्षवः पूर्वमन्यासु ज्ञातिषु कर्माणि
कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि ।
संसारेण कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति । न भिक्षवः कर्माणि 10
कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ न तेजोधातौ न वायुधातावपि
तूपात्तेष्वेव[4] स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च ।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि ।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वन्यस्मिन्नेव भद्रके कल्पे विंशतिवर्षसहस्रायुषि[5] प्रजायां 15
काश्यपो नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः

---

1) Ex conject.; MS स्रायु°. Cp. *supra*, p. 162, 4.

2) B °दुख, D °दुःखं; I have adopted this correction.

3) I assume a gap here. It is very improbable that the composer of our avadāna should have forgotten to make Saṃsāra tell his audience, that in 500 former existences he has been born a dead corpse, whereas he makes the monks allude to this as something known. Yet, the Tibetan translation has the same incoherence.

4) Cp. *supra*, I, p. 74 n. 9.

5) B विंशतिवष°, DP corr.

पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान्। स वाराणसीं नगरीमुपनिश्रित्य[1] विहरति ऋषिपतने मृगदावे। वाराणस्यां नगर्यामन्यतमः श्रेष्ठिपुत्रः स्थविरसकाशे प्रव्रजितः। स च स्थविरो ऽर्हन् स रागविप्रहीणः॥ यावत्तत्र देशे पर्व समुपस्थितम्। ततस्तरुणभिक्षुणा स्थविर उत्थाप्यते। उत्तिष्ठ गोचरग्रामं गमिष्याव इति॥ स्थविर आह।
5 वत्साद्यापि प्रातरेव[2] गच्छ तावत्कुशलपक्षं प्रतिज्ञागृहीति॥ द्विरपि त्रिरपि तरुणभिक्षुणा स्थविर उत्थाप्यते। उत्तिष्ठ गोचरग्रामं गमिष्याव इति॥ द्विरपि त्रिरपि स्थविर आह। वत्साद्यापि प्रातरेव[2] गच्छ तावत्कुशलपक्षं प्रतिज्ञागृहीति॥ ततस्तेन तरुणभिक्षुणा [3]रसगृध्रेण [4]खरं वाक्कर्म निश्चारितम्। मा त्वं पञ्चभिरपि जन्मशतैर्जीवः कोशान्नि[5]र्गच्छ [6]एषो ऽहं निर्गत इति॥

10 भगवानाह। किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन तरुणभिक्षुरयं संसारः। यदनेनार्हतो ऽन्तिके चित्तं प्रदूष्य खरं वाक्कर्म निश्चारितं तस्य कर्मणो विपाकेन

---

1) MS °निसृत्य.

2) Ex conject.; MS प्रातरएव. Cp. *supra*, p. 145, 2.

3) MS रशगृध्रण (D °ध्रन).

4) MS खरवा°, but *infra*, l. 11 it has खरं वा°.

5) Ex conject.; MS जीर्षकायान्निर्गच्छ, it is plain that this imprecation uttered by the young monk disagrees with the fruit it bears, whereas the different Tibetan version quoted by Feer, p. 403 n., is more suitable to the purpose. In avad. nr. **92** the very same story has been told with almost the same words, but the imprecation itself has perished. Now the words used *here* in B, if we read them °कायान्निर्गच्छ, «that you may not leave your old body for five hundred existences» are wanted in the story of Sthavira. The malediction wanted here ought to have a somewhat different wording, since it is on account of *this* that the guilty monk was reborn 500 times as a corpse. In fact, the Tibetan — not the Sanskrit — has here the appropriate phrase: གསོན་པོར་ཁྱིམ་ནས་ཕྱིར་མ་འབྱུང་ཞིག་ 'do not get alive out of the house'. For this reason I have put into the text *koçān* rather than *kāyān*, as is proposed by Feer. For the rest कोशा°, written कोषा°, as usual in the tradition of MS, could easily have been altered into काया°.

6) Ex conject.; MS रेखो (D षो)हं.

पञ्च जन्मशतानि मृतकुणप एव मातुः कुक्षेर्निर्गतः[1]। निर्गतेषु[2] पञ्च<सु> जन्मशतेषु इदानीमनेन [92b] मनुष्यत्वमासादितम्[3]। ततस्तत्स्मृत्वा कथयति दुःखं संसारः परमदुःखं संसार[4] इति । यदनेन विप्रतिसारजातेन स्थविरस्यात्ययो देशितो ब्रह्मचर्यवासश्च परिपालितस्तेनेदानीमर्हत्त्वं साक्षात्कृतम् । इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रस्तस्मात्तर्हि  भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

1) MS कुक्षौर्निर्गतः (D कुक्षेनिर्गतः).

2) *Nis+gam* has here the meaning 'to come to an end, to elapse', cp. Mallin. on Raghuv. 19, 46 मधुनिर्गमाद्वसन्तापगमात्.

3) MS सादितस्ततस्तं स्मृत्वा (D साद्दि°).

4) MS दुःखसंसारः परमदुःखसंसार.

---

## गुप्तिक इति ९६ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किंनरैर्महोरगैरिति देवनागयक्षासुरगरुडकिंनरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो[1] लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपिण्डदस्यारामे ॥ यदा भगवता स्तवकर्णिकनिमन्त्रितेन सौपारके[2] नगरे महाजनविनेयाकर्षणं कृतं तदा सर्वः[3] सौपारकनिवासी जनकायो बुद्धनिम्नो धर्मप्रवणः सङ्घप्राग्भारो व्यवस्थितः । सौपारके[4] नगरे ऽन्यतमो गृहपतिराढ्यो महाधनो महाभोगो विस्तीर्णविशालपरिग्रहो वैश्रवणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी । तेन सदृशात्कुलात्कलत्रमानीतम् । स तया सार्धं क्रीडति रमते परिचारयति । तस्य क्रीडतो रममाणस्य परिचारयतः पत्नी आपन्नसत्त्वा संवृत्ता । साष्टानां वा नवानां वा मासानामत्ययात्प्रसूता[5] । दारको जातः ।

1) B महांपु°, DP corr.

2) The name of that town is variously spelt in MS. I have put into the text सौपारक, as it is spelt throughout in D. It is the same famous sea-port, which is the seat of the events recorded in Divy. nr. II, and in Jtkm. nr. XIV. In the former text it is called *Çūrpāraka* or *Sūrpāraka*, the latter form being adopted by the editors (vide Divy., p. 24 n. 3), in Jtkm. (p. 88,12 foll.) *Supāraga* and *Sūpāraga*. The Tibetan translator who renders the name of the town by སློབ་མ་ཅན་ (cp. Feer, p. 404, n. 2) must have pronounced it *Supāraga*, as he analyzes it = *su* + *pāraga* 'beset with scholars, — with learned people'. Stavakarṇika is the Stavakarṇin of Divy. II.

3) Visarga wanting in MS. In P the akṣ. सौ, too, has been omitted; hence Feer's (erroneous) statement l. l., that the town is also written in our text *Sarvapāraka*.

4) B सौर्पारके, D and P सौपारके; l. 6 it is uncertain whether B has सौर्पाररके or सौपरिरके as the copyists of C and P wrote, D corr. सौपारके.

5) B °त्ययान्प्रसूता, P corr.

जातमात्रस्य सर्वशरीरं पिटकैः स्फुटं संवृत्तम् । यदा ते पिटकाः स्फुटितास्तदा एकघनो मांसपिण्डः[1] संस्थितः पूयशोणितं चास्य शरीरात्प्रघरन्महद्दौर्गन्धं जनयति ॥ ततो ऽस्य पिता ऐश्वर्यबलाधानेन[2] द्रव्यमन्त्रौषधिपरिचारकसमेतः स्वयमेवा(र)ब्धश्चिकित्सां[3] कर्तुं न[4] चासौ व्याधिरुपशमं गच्छति कर्मबलाधानप्राप्तत्वात्[5] । स स्वशरीरं तथा वितत्तमपत्राप्य परिगृहीतं वस्त्रैर्गोपायति[6] । तस्य गुप्तिक इति नाम कृतम् ॥ यावद्गुप्तिको दारको महान्संवृत्तस्तस्य वयस्यकाः[1] सहजातकाः श्रावस्त्याः[7] सौपारकनगरमनुप्राप्ताः[8] । ततस्तैः पितुरस्य कथ्यते । तात यद्येष श्रावस्तीं नीयते शक्येतास्माद्व्याधेः परिमोचयितुं यस्मात्तत्र सन्ति वैद्यभिषजादयः सुलभा इति ॥

ततः पित्रा तद्वचनमुपश्रुत्य प्रभूतानि[9] रत्नानि परिचारकांश्च दत्त्वा श्रावस्तीमनुप्रेषितः । सो ऽनुपूर्वेण वयस्यकसहायः श्रावस्तीमनुप्राप्तः । तत्राप्यस्य कर्मजो व्याधिः सत्यपि वैद्यद्रव्यौषधिपरिचारकबाहुल्ये[10] न शक्यते चिकित्सितुम् ॥ यावदसावपरेण समयेन जेतवनं निर्गतः । अथासौ ददर्श बुद्धं भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः समलङ्कृतमशीत्या चानुव्यञ्जनैर्विराजितगात्रं व्यामप्रभालङ्कृतं सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकं सहदर्शनाच्चानेन भगवतो ऽन्तिके चित्तं प्रसादितम् । प्रसादजातो भगवतः पादाभिवन्दनं कृत्वा पुरस्तान्निषण्णो धर्मश्रवणाय । तस्मै भगवताशयानुशयं धातुं

1) Visarga wanting in MS.

2) MS द्रव्योमंत्रोषधि° (D °मन्त्रौषधी°).

3) Ex conject.; MS °मेवाद्वचिकित्सां.

4) Ex conject.; MS न चास्यौ (D °स्यै).

5) MS °प्तत्वास्त्व°.

6) MS वस्त्रैगोपायति.

7) Ex conject., the ablative being required, cp. *supra*, II, p. 10, 6; MS श्रावस्त्यां (D श्रावत्यां).

8) MS शौर्पारक° (P शौपरिक°).

9) MS प्रसूतानि.

10) B वैद्ये, D corr.

प्रकृतिं च ज्ञात्वा पञ्चोपादानस्कन्धा[1] रोगतो गण्डतः शल्यतो [2]ऽघतो ऽनित्यतो दुःखतः शून्यतो ऽनात्मतश्च देशिताः[3]। स संस्कारा[4]नित्यतां विदित्वा भगवच्छासने प्रव्रजितः। तेन युज्यमानेन घटमानेन व्यायच्छमानेनेदमेव पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्व-संस्कारगतीः शतनपतनविकिरणविध्वंसनधर्मतया पराहत्य सर्वक्लेशप्रहाणादर्हत्त्वं सा-
5 क्षात्कृतम्। अर्हन्संवृत्तस्त्रैधातुकवीतरागः समलोष्टकाञ्चन आकाशपाणितलसमचित्तो वासीचन्दनकल्पो विद्याविदारिताण्डकोशो विद्याभिज्ञा[93a]प्रतिसंवित्प्राप्तो भवलाभ-<लोभ>[5]सत्कारपराङ्मुखः सेन्द्रोपेन्द्राणां देवानां पूज्यो मान्यो ऽभिवाद्यश्च संवृत्तः। ते ऽप्यस्य सहृज्ज्ञातकास्तेनैव संवेगेन प्रव्रजिताः॥

ते येनायुष्मान्गुप्तिकस्तेनोपसंक्रान्ताः[6]। उपसंक्रम्यायुष्मन्तं गुप्तिकमिदमवोचन्[7]।
10 किमायुष्मन्गुप्तिक प्रलोपधर्म किं वा अत्र लोके ऽप्रलोपधर्म[8]॥ <रूप>मायुष्मन्तः प्रलोपधर्म'

---

1) Ex conject.; MS पञ्चापादानस्कन्धा(D °स्कन्ध). Cp. Mhv. III, 332, 4.

2) Ex conject.; MS शल्यत अपतो, if not rather अयतो, P has अपता, D अ-त्यता. My conjecture complies with the Tibetan equivalent of *aghataḥ*, སྡིག་པ་ = पाप (Jäschke), = अशुभ, अकल्याण, अघ, मल (Sarat).

As to the idiomatic use of the adverb in *-taḥ*, it is akin to that spoken of in my *Sanskrit Syntax*, § 108, 2ly. Cp. also Manu, III,6; Mhbh. I, 171, 25; Jtkm. XXXIV, 3; and, to quote also a Pāli text, Suttanipāta vs. 199 and 424.

3) Ex conject.; MS देशितः.

4) संस्काराानि° is a necessary correction of MS संसाराानि°.

5) DP insert the dropped member of the compound.

6) MS °क्रान्त उपसं°.

7) MS °वोचत्। The following dialogue has been also translated by Burnouf, *Introduction*, p. 509.

8) The whole phrase is utterly confused and perverted in MS, but comparatively easy to be restored by the light of the regular course of the dialogue and the many repetitions. MS किं आयुष्मन् गुप्तिके प्रलोपधर्म किं वा लोके अप्रलोके प्र-लोपधर्म किं वा लोके अप्रलोके प्रलोपधर्ममायुष्मन्तः etc., with manifest dittography It was Feer (p. 406 n. 2) who perceived that under the corruption अप्रलोके there was hidden अत्र लोके.

तस्य निरोधान्निर्वाणमप्रलोपधर्म[1]। वेदना संज्ञा संस्कारा विज्ञानमायुष्मन्तः प्रलोपधर्म[2]। तस्य निरोधान्निर्वाणमप्रलोपधर्म[3]। किं मन्यध्वे आयुष्मन्तः। रूपं नित्यं वा अनित्यं वा॥ अनित्यमिदमायुष्मन्गुप्तिक॥ यत्पुनरनित्यं दुःखं वा तन्न वा दुःखम्[4]॥ दुःखमिदमायुष्मन्गुप्तिक॥ यत्पुनरनित्यं दुःखं विपरिणामधर्म[5] सत्यमपि[6] तच्छ्रुतवानार्यश्रावक आत्मत उपगच्छेदेतन्मम एषो ऽहमस्मि[7] एष मे आत्मेत्येवमेतत्॥ नो आयुष्मन्गुप्तिक॥ किं 5 मन्यध्वे आयुष्मन्तः। वेदना संज्ञा संस्कारा विज्ञानं[8] नित्यं वा अनित्यं वा॥ अनित्यमिदमायुष्मन्गुप्तिक॥ यत्पुनरनित्यं दुःखम्॥ दुःखमिदमायुष्मन्गुप्तिक॥ यत्पुनरनित्यं दुःखं विपरिणामधर्म अपि[9] तच्छ्रुतवानार्यश्रावक आत्मत उपगच्छेदेतन्मम एषो ऽहमस्म्येष[10] मे आत्मेति॥ नो आयुष्मन्गुप्तिक॥ तस्मात्तर्ह्यायुष्मन्तो यत्किञ्चिद्रूपमतीतानागतप्रत्युत्पन्नमाध्यात्मिकं[11] <वा> बाह्यं वा औदारिकं वा सूक्ष्मं वा हीनं वा प्रणीतं वा 10 यद्वा दूरे यद्वान्तिके तत्सर्वं नैतन्मम नैषो ऽहमस्मि नैष मे आत्मेत्येवमेतद्यथाभूतं सम्यक्प्रज्ञया द्रष्टव्यम्। या काचिद्वेदना संज्ञा संस्कारा यत्किञ्चिद्विज्ञानमतीतानागतप्रत्यु-

---

1) MS °धर्मे.

2) The neuter sing. of the adjective *pralopadharman* and the pronoun *tasya*, though grammatically belonging to *vijñāna* alone, apply of course to the whole set: *vedanā, saṃjñā, saṃskārāḥ, vijñānam.*

3) Ex conject.; MS तस्य निरोधान्निरोधर्मप्रलोपधर्मः.

4) MS दुःख (the scribes of both D and P have left out this word).

5) Ex conject.; MS दुःखविपरिणामधर्मसंज्ञा अपि, in this complex संज्ञा is unmeaning and doubtless corrupt. My correction is derived from the consideration that some modal particle expressive of the interest taken in the question is required here and that *satyam* = Pāli *saccam* is frequently employed in such cases.

6) MS °पिनुच्छ्रुत°.

7) MS एषोऽहमस्मिन् एवमे(D °स्मिन्नषमे)आत्मन्येवमेतत्.

8) MS विज्ञानां.

9) MS अपिनच्छ्रुत°.

10) MS एषोऽहमहस्येष मे (D एषोऽहमहमस्यैष मे).

11) MS °न्नमप्यात्मकं वाह्यं.

त्पन्नमाध्यात्मिकं वा बाह्यं वा औदारिकं वा सूक्ष्मं वा हीनं वा प्रणीतं वा यद्वा दूरे यद्वान्तिके तत्सर्वं नैतन्मम नैषो ऽहमस्मि नैष मे आत्मेत्येवमेतद्यथाभूतं सम्यक्प्रज्ञया द्रष्टव्यम्। एवंदर्शी आयुष्मन्तः श्रुतवानार्यश्रावको रूपादपि निर्विद्यते वेदनायाः संज्ञायाः संस्कारेभ्यो विज्ञानादपि। निर्विण्णो विरज्यते विरक्तो विमुच्यते। विमुक्तमेवं ज्ञानदर्शनं 5 भवति क्षीणा मे जातिरुषितं ब्रह्मचर्यं कृतं करणीयं नापर(म)स्माद्भवं प्रजानामीति[1]॥

अस्मिन्खलु धर्मपर्याये भाष्यमाणे तेषां सहज्ञातकानां विरजो विगतमलं धर्मेषु धर्मचक्षुरुत्पन्नम्॥ भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। कानि भदन्त गुप्तिकेन कर्माणि कृतानि येनास्य शरीरमेवं बीभत्सव्याधिबहुलं दुर्गन्धं[2] संवृत्तं किं कर्म कृतं येन तीक्ष्णनिशितबुद्धिः संवृत्तः प्रव्रज्य[3] चार्हत्त्वं साक्षात्कृतमिति॥ भगवानाह। 10 गुप्तिकेनैव भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि। गुप्तिकेन कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति। न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ न तेजोधातौ न वायुधातावपि[4] तूपात्तेष्वेव स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च।

15 न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम्॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि वाराणस्यां नगर्यामन्यतमः श्रेष्ठी। स द्वितीयश्रेष्ठिना सार्धं विरुद्धः॥ ततस्तेन राज्ञा[5] प्रभूतं धनं दत्त्वा विज्ञापितः। देव अयं श्रेष्ठी

---

1) Cp. *supra*, I, p. 234, 3, where, perhaps, also नापरम° should be read as here.

2) Anusvāra wanting in MS.

3) MS प्रव्रज्या.

4) Cp. *supra*, I, p. 74 n. 9.

5) Ex conject.; MS राज्ञप्रभूतं.

‹श्र›पराधिकः[1] क्रियतामस्य दण्डनिग्रह[2] इति ॥ ततो ‹रा›ज्ञा तस्यैवानुज्ञातः[3] । तेनासौ स्वगृहमानीय लताभिस्ताडितः । ततो रुधिरावसिक्तशरीरस्य प्रभूतं तीक्ष्णं च विषचूर्णं दत्त्वोप्तं[4] येनास्य तच्छरीरमेकघनं मांसपिण्डवदवस्थितम् ॥ ततस्तस्य श्रेष्ठिनो वयस्यैः श्रुतं यथा तेनैवंविधं कर्म कृतमिति । ततस्तैः समेतैर्भूत्वा * * यैरुपकरणविशेषैस्तस्मा-द्व्याधेः परिमोचितः[5] ॥ ततो ऽसौ तेनैव च संवेगेन गृ[93b]हान्निष्क्रम्य प्रव्रजितः । तेना-‹ना›चार्यकेण[6] सप्तत्रिंशद्बोधिपक्ष्यान्धर्मान्[7]भावयित्वा प्रत्येका[8] बोधिः साक्षात्कृता ॥ ततो ऽस्य चित्तमुत्पन्नं बहुनेन श्रेष्ठिना मत्संतापात्[9]पुण्यं प्रसूतम्[10] यन्नूहमेनं गत्वा संवेजयेयमि-ति ॥ ततस्तस्याग्रतो गत्वा उपरि विहायसमभ्युद्गम्य विचित्राणि प्रातिहार्याणि विदर्श-

---

1) Ex conject.; MS श्रेष्ठीपदाधिकः.

2) Ex conject.; MS दण्डविग्रह.

3) Ex conject.; MS ततोज्ञातस्यैवानु°. Cp. Feer, p. 408 n. 1.

4) Ex conject.; MS दत्वा with a following akṣara of uncertain meaning, but which may be read as well प्तं, as त्तं (so copied in D) or तुं (so copied in P). The copyist of D read it दत्वात्तं, that of P दत्वातुं. That *uptam* (if not rather *optam* from *ā* + *vap*) is the participle used by the author of our collection is not only probable in itself, but may also be inferred from its Tibetan equivalent བཏབ་ཏེ, which expresses that the powder was *applied to* the wounds.

5) Perhaps विविधैरुपकरणविशेषैः. The Tibetan, however, ཡོ་བྱད་ཀྱི་ཁྱད་པར་དག་གིས་ corresponds with *upakaraṇaviçeṣaiḥ* alone, and has nothing answering to *vividhaiḥ*.

6) I have put into the text Feer's certain correction, confirmed moreover by the Tibetan (p. 408 n. 5 of his translation).

7) MS °पक्ष्याधर्मा.

8) MS प्रत्येकोबोधिः.

9) Ex conject.; MS मत्सन्तानाद°. I think it less probable that *matsaṃtāna*, the Buddhistic equivalent of «my person» would make good sense in this connection. As to *saṃtāpa*, cp. Kathās. 44, 18 संतापकारी शत्रूणाम्.

10) Ex conject.; the reading of B is uncertain. In D and P it has been copied प्रश्रुतं; yet, the middle akṣ. cannot mean *çru*, its vowel is rather *u*, affixed to *gh* or *ç*, it seems.

पितुमारब्धः। आशु पृथग्जनानामृद्धिरावर्जनकरी। स मूलनिकृत्त[1] इव द्रुमः पादयोर्निपत्य कृतकरपुटो भगवन्तं विज्ञापयति। अवतरावतर महादक्षिणीय कृतापराधो ऽहं तवान्तिके त्वामेव निश्रित्य[2] पुनः प्रत्युपस्थास्यामीति। तेनासौ प्रत्येकबुद्धः क्षमापयित्वा पिण्डकेन प्रतिपाद्य पटेनाच्छादितः ‹प्रणिधानं च कृतम्›[3]। यन्मया क्रोधाभिभूतेन तवापराधः[4] कृतः 5 मा अस्य कर्मणो विपाकं प्रत्यनुभवेयम्[5]। यन्मया सत्कारः कृतो[6] ऽनेनैवंविधानां गुणानां लाभी स्यां प्रतिविशिष्टतरं चातः शास्तारमारागयेयमिति॥

भगवानाह। किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन श्रेष्ठी आसीदयं स गुप्तिकः। तस्य कर्मणः प्रभावात्पञ्च जन्मशतानि कशाभिस्ताड्यमानः कालं कृतवान्। तेनैव हेतुना अयमेवंविध आश्रय आसादितः। भूयः काश्यपे भगवति सहज्ञातकैर्वयस्यकैः- 10 स्सार्धं प्रव्रजित आसीत्। तत्रैभिर्ब्रह्मचर्यवासः परिपालितः। तेनेदानीमर्हत्वं साक्षात्कृतम्। इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां[7] व्यतिमिश्रस्तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम्॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्॥

---

1) MS °निकृत्त, as usual.

2) MS निसृत्य, as usual.

3) Cp. Feer, p. 408 n. 6. The Tibetan has here སྨོན་ལམ་བཏབ་པ, the equivalent of the supplement I have added.

4) Ex conject.; MS कवापरोधकृतः (P केवा°).

5) B प्रत्यमुभवेययन्मया, D corr.

6) MS कृतअनेनै°.

7) B व्यतिनि°, D corr.

# विरूप इति ९७ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुड-किन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घः श्रावस्त्यां विहरति जेतवने ऽनाथपि- 5 ण्डदस्यारामे ॥[1] * * * अन्यतमो गृहपतिराढ्यो महाधनो महाभोगो विस्तीर्णविशालपरिग्रहो वैश्रवणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी । तेन सदृशात्कुलात्कलत्रमानीतम् । स तया सार्धं क्रीडति रमते परिचारयति । तस्य क्रीडतो रममाणस्य परिचारयतः पत्नी आपन्नसत्त्वा संवृत्ता । साष्टानां ‹वा›[2] नवानां वा मासानामत्ययात्प्रसूता । दारको जातः । जातमात्रस्य सर्वशरीरं विकृतिस्फुटं[3] प्रवृत्तम् । दुर्वर्णो दुर्दर्शनो ऽष्टादशभिर्दोषवर्णकैः[4] 10 समन्वागतः स दारको भूतः । तस्य मातापितरौ[5] सर्वाङ्गं दुर्वर्णं दुर्दर्शनं विकृतरूपं[6] दृष्ट्वा

---

1) The place where the householder lived has been lost in MS. It appears from the Tibetan that it is not Çrāvastī. Cp. Feer, p. 411, n. 1. In the Tibetan it is called བྲ (or བྲེ, not clear in the blockprint) སྒ = Bhārga, it seems. A Bhārgavana is mentioned in the Harivaṃça, see PW *s. v.*

2) D adds the particle, left out in B.

3) Ex conject.; MS विकृतिंस्फुटं. In Sanskrit Buddhistic texts *sphuṭa* answers to Pali *phuṭo*, on which vide Childers' *Dict.* s. v. The prototype of Pāli *phuṭo* is **sphṛtá*, which belongs to *sphurati*; the gerund *sphuritvā* occurs *supra*, I, 24, 4 (cp. I, 171, 9). This *sphuṭa* is often almost the same as *vyāpta*, cp. *supra*, I, 79, 14. II, 20, 7; Divy. 157, 19—21. 201, 21—24. 204, 22. 245, 4—7; Lalitavistara (ed. Lefm.) 16, 20 and 17, 2.

4) Here and *infra*, p. 175, 6 MS °र्शनः अष्टा°.

5) Ex conject.; MS मातापितासर्वाङ्गदु° . . . . . चिन्तापरःस्थितः. The copyist who wrote D has changed this into चिन्तापरो व्यवस्थितः. Cp. *supra* I, 55, 4. II, 2, 8. 16, 6 etc.

6) MS विकृतिरूपं. Likewise *infra*, p. 174, 2.

चित्तापरौ ‹व्यव›स्थितौ ॥ तस्य जातौ जातिमहं कृत्वा नामधेयं व्यवस्थाप्यते किं[1] नाम
भवतु दारकस्य । ज्ञातय[2] ऊचुः । यस्मादयं जातमात्र एवं विकृतरूपस्तस्माद्भवतु दार-
‹क›स्य[3] विरूप इति नाम ॥

यदा[4] महान्संवृत्तस्तदा तस्य लज्जया महान्संकोचो[5] जातः । कुत्रान्यत्र गमिष्यामि
5 क्व तिष्ठामि ।[6] इति विचार्य सुजीर्णोद्यानं जगाम[7] ॥ अथ भगवान्महाश्रावकपरिवृतः[8] सुजी-
र्णोद्यानं[9] गतः । स भगवन्तं दृष्ट्वा जेह्रीयमाणा[10] इतश्चामुतश्च पलायितुमारब्धः । ततो भगवता
ऋद्ध्या तथाधिष्ठितो यन्न शक्नोति पलायितुम् । ततो भगवान्सह श्रावकैर्निरोधसमापत्तिं
समापन्नः । ततो निरोधाद्व्युत्थाय[11] विरूपमात्मानं निर्मितवान् । निर्माय शरावं भोजनपूर्ण-
मादाय विरूपमागतं दृष्ट्वा हर्षजात आमन्त्रितवान् । एहि सहायक कुत आगमिष्यते तिष्ठ
10 उभावपि सहितौ[12] वत्स्याव इति । ततो ऽस्य भगवता[13] भोजनं द[94a]त्तं प्रीणितेन्द्रियश्च
संवृत्तः ॥ ततो भगवता ह्यात्मा स्ववेषेण स्थापितः । ततो विरूपो बुद्धं भगवन्तं दृष्ट्वा

---

1) B कि, D corr. — Note that the wording of the phrase is somewhat different from the stereotype formula in the nāmakaraṇa passages of our text.

2) B ज्ञातस्य, D corr.

3) D adds the missing akṣara.

4) MS महात्मवृत्तः(D महासंवृत्तः)तदा.

5) Ex conject.; MS महन्संकोचजातः.

6) I have followed the correction of D (तिष्ठामीति विचार्य) for the corrupt reading of B तिष्ठातीति.

7) MS सुजीर्णोद्यानं जगाम इति । अथ. I have dropped the superfluous इति. In B the portion from दारस्यविरूप (l. 2—3) to जगा[म इति is written on the margin, to be inserted into the context, where it had been omitted at first.

8) B परिनिर्वृतः, D corr.

9) Anusvāra wanting in MS.

10) Ex conject., cp. Divy. 39, 7; MS जह्रीयमान (D चह्री°).

11) Ex conject.; MS निरोधाव्यु°.

12) MS वस्याव.

13) Ex conject.; MS भगवतो.

कथयति । अभिरूपतरस्त्वमिदानीं संवृत्तः कस्य कर्मणः प्रभावादिति ॥ भगवानाह । विद्या मे अस्ति चित्तप्रसादजननी[1] नाम्ना तस्या एष[2] प्रभाव इति ॥ ततस्तेन भगवतो ऽन्तिके चित्तं[3] प्रसादितं तेषां च महाश्रावकाणामालयसमापन्नानाम् । ततो ऽस्य लक्ष्मीः[4] प्रादुर्भूता प्रव्रज्य चार्हत्वं साक्षात्कृतमिति ॥

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः । कानि भदन्त विद्रूपेण[5] कर्माणि कृतानि येनैवं दुर्वर्णो दुर्दर्शनो ऽष्टादशभिर्वैवर्णिकदोषैः समन्वागतः प्रव्रज्य[6] चार्हत्वं साक्षात्कृतमिति ॥ भगवानाह । विद्रूपेणैव भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि । विद्रूपेणैव[7] कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति । न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ न तेजोधातौ न वायुधातावपि तूपात्तेष्वेव[8] स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च ।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि ।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि पुष्यो[9] नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान् ।

---

1) B चित्तप्रसादज्ञातजननी. I have adopted the correction of D. The right reading thus restored is also clear from the Tibetan (vide Feer, p. 412 n. 1).

2) Ex conject.; MS एव.

3) Anusvāra wanting in MS.

4) Visarga wanting in MS.

5) MS विद्रूपेणे (P विपेण out of विपोण).

6) MS प्रव्रज्या.

7) B निद्रू°, D corr.

8) Cp. *supra*, I, p. 74 n. 9.

9) The akṣ. ष्यो is here not very distinct in B. Yet there can be no question about the right reading पुष्यो, though in B's copies the ancient Buddha is named *Puṣpa* here and sometimes below, where the name comes again.

सो ऽपरेण समयेनान्यतमां राजधानीमुपनिश्रित्य[1] विहरति । अथ पुष्यः सम्यक्संबुद्धः समन्वाहर्तुं प्रवृत्तः । पश्यति तस्मिन्काले द्वौ बोधिसत्त्वौ संनिकृष्टौ भगवाञ्छाक्यमुनि-मैत्रेयश्च[2] । मैत्रेयस्य [3]‹स्व›संततिः परिपक्वा[4] शास्तुर्वैनेया ‹अ›परिपक्वाः शाक्यमुनेस्तु स्व-संततिरपरिपक्वा वैनेयाः परिपक्वाः[5] ॥ अथ पुष्यः सम्यक्संबुद्धः शाक्यमुनेर्बोधिसत्त्वस्य 5 संततिपरिपाचनार्थं[6] हिमवन्तं पर्वतमभिरुह्य रत्नगुहां प्रविश्य [7]पर्यङ्कं बद्ध्वा तेजोधातुं समापन्नः । तस्मिंश्च ‹काले› शाक्यमुनिर्बोधिसत्त्वः[8] फलमूलानामर्थे हिमवन्तं पर्वतमभिरूढः । स इतस्ततश्चूर्यमाणो ददर्श पुष्यं सम्यक्संबुद्धं द्वात्रिंशता महापुरुषलक्षणैः समलङ्कृत-मशीत्या चानुव्यञ्जनैर्विराजितगात्रं[9] व्यामप्रभालङ्कृतं सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकम् । सहदर्शनाच्चानेन तथाविधं चित्तसमाधानं समासादितं यदेक-10 पादेन सप्त रात्रिंदिवानि एकया गाथया स्तुतवान् ।

न दिवि भुवि वा नास्मिँल्लोके न वैश्रवणालये ।
न मरुभवने दिव्ये स्थाने न दिक्षु विदिक्षु वा ।
चरतु वसुधां स्फीतां कृत्स्नां सपर्वतकाननाम् ।
पुरुषवृषभास्त्यन्यस्तुल्यो महाश्रमणास्तव[10] ॥

---

1) MS °निसृत्य.

2) MS °मुनिर्मैत्रेयश्च. Note the subaudition of *iti*.

3) I have followed D, where स्व, which is not in B, has been added. The necessity of this addition appears from the Tibetan རང་གི་རྒྱུད་, mentioned by Feer, p. 413 n. 1.

4) Ex conject.; MS संततिपरिपावना(D पाचना)र्थ(D र्थं)पक्वा. I have left out the four akṣaras between परि and पक्वा, as I am convinced that they are put there by mistake, for they come back again l. 5, in their proper place. Cp. Feer l. l.

5) Visarga wanting in MS.

6) B परिपावनार्थं, D corr.

7) MS पर्यकं (D पय्यङ्कं) वधा.

8) B °मुनिबोधि°, D corr.

9) B °नैविरा°, D corr.

10) Pāda 1—3 of this hāriṇī stanza are preserved complete. But pāda 4 has been transmitted in a very depraved condition. In MS it runs thus: पुरुषवृषभस्तुतु

अथ पुष्यः सम्यक्संबुद्धः परिपक्वसंततिं शाक्यमुनिं बोधिसत्त्वं दृष्ट्वा साधुकारम-दात्। साधु साधु सत्पुरुष।

अनेन बलवीर्येण संपन्नेन द्विजोत्तम।
नव कल्पाः परावृत्ताः[1] संस्तुत्याद्य तथागतम्॥

ततो भगवान्मह्वेशाख्या‹भिर्देवता›भिः[2] परिवृतस्तस्यां[3] गुहायां स्थितः। तत्र गुहानिवा- 5
सिनी देवता अल्पेशाख्यत्वान्न शक्नोति तां गुहां समभिरोढुम्। ततो विकृतनयना भूत्वा भगवन्तं भीषयते। यदा सुचिरमपि भीषयमाणा न शक्नोति भगवतो ऽपकारं कर्तुं तदा तया प्रसादो लब्धः शोभनो ऽयमृषिः[4] सिद्धव्रतश्चेति। ततः सा[5] उदारं रूपमभिनिर्माय भगवतः पादयोर्निपत्य क्षमापयित्वा पिण्डकेन प्रतिपादितवती॥

भगवानाह। किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन गुहानिवासिनी 10
देवता बभूवायं विद्रूपः सः। तस्य कर्मणो विपाकेन संसारे ऽनन्तं दुःखमनुभूतवान्। इदा-नीमपि तेनैव हेतुना विद्रूपः संवृत्तः। यदनेन पश्चाच्चित्तं[6] प्रसादितं तेनास्यापगता‹लक्ष्मी›-

---

(or भु)ल्लोत्यो(or न्यो) महाश्रमणाः कुतुवोः. The emendation restores the metre and supplies what is wanting to express the statement of a Buddha's superiority over everybody and everything in the Universe, which is doubtless the import of our stanza and which agrees with the Tibetan translation.

*Marubhavana*, which Feer translates by mistake 'le palais du Meru' means 'the dwellings of the gods', cp. Pāli *maru*. In the Tibetan *maru* is here rendered by ལྷ.

1) Feer's note 1 on p. 414 rests on the erroneous reading of P; B has परावृत्ताः. As to the use of this participle to signify time 'elapsed' cp. PW VI, 768 and Matsyapurāṇa 47, 34 युगे...परावृत्ते. The purport of the Buddha's declaration is to state that Çākyamuni, by his pious praise, has jumped over nine Kalpas of the time he wanted to attain Buddhahood.

2) My insertion is in accordance with Feer's observation, p. 414 n. 2.

3) B परिवृत्त°, D corr.

4) MS शोभनोयं ऋषिः.

5) Ex conject.; MS साधुदारं unmeaning (the copyist of D changed it into साधुकारं).

6) Anusvāra wanting in MS.

र्लक्ष्मी:[1] प्राडुर्भूता प्रव्रज्य चार्हत्त्वं साक्षात्कृतम् । इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रस्त-स्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशु[94 b]क्लेष्वेव कर्मस्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

5 इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

1) Visarga wanting in MS.

## गङ्गिक इति १८ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः[1] किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घो वाराणसीं नगरीमुपनिश्रित्य[2] विहरति 5 ऋषिपतने मृगदावे । वाराणस्यामन्यतमो गृहपतिराढ्यो महाधनो महाभोगो विस्तीर्णविशालपरिग्रहो वैश्रवणधनसमुदितो वैश्रवणधनप्रतिस्पर्धी । तेन सदृशात्कुलात्कलत्रमानीतम् । स तया सार्धं क्रीडति रमते परिचारयति । तस्य क्रीडतो रममाणस्य परिचारयतो न पुत्रो न दुहिता । स करे कपोलं दत्त्वा चिन्तापरो व्यवस्थितः । अनेकधनसमुदितं[3] मे गृहं न मे पुत्रो न दुहिता । ममात्ययात्सर्वस्वापतेयमपुत्रकमिति कृत्वा राज- 10 विधेयं भविष्यतीति । स श्रमणब्राह्मणनैमित्तिकसुहृत्संबन्धिबान्धवैरुच्यते[4] देवताराधनं कुरुष्वेति । सो ऽपुत्रः पुत्राभिनन्दी शिववरुणकुबेरशक्रब्रह्मादीनन्यांश्च देवताविशेषानायाचते । तद्यथारामदेवताश्चत्वरदेवताः शृङ्गाटकदेवताः सहजाः सहधार्मिका नित्यानुबद्धा अपि[5] देवता आयाचते स्म । अस्ति चैष लोके प्रवादो यदायाचनहेतोः पुत्रा जायन्ते दुहितरश्चेति । तच्च नैवम् । यद्येवमभविष्यदेकैकस्य पुत्रसहस्रमभविष्यत्तद्यथा[6] राज्ञश्चक्रव- 15

---

1) B °र्नागैय°, D corr.

2) MS °निसृत्य·

3) MS °दितोमे·

4) MS श्रमणब्राह्मणकृपणनैमित्तिक°. I have eliminated कृपण, which has come into this enumeration by mistake, transferred here from another series appropriate to such cases as *supra*, II, p. 64, 16. 158, 1.

5) MS अधि. Cp. *supra*, I, 14, 5. 120, 8. 134, 16. 195, 12.

6) So MS. The usual reading of this *cliché* is °भविष्यत्तद्यथा (sic), as is stated *supra* I, p. 13, n. 4; cp. my note 8 on I, p. 120.

र्तिनः। अपि तु त्रयाणां स्थानानां[1] संमुखीभावात्पुत्रा जायन्ते दुहितरश्च। कतमेषां त्रया-
णाम्। मातापितरौ[2] रक्तौ भवतः संनिपतितौ माता च कल्या भवति ऋतुमती गन्धर्वश्च
प्रत्युपस्थितो भवति। एषां त्रयाणां स्थानानां संमुखीभावात्पुत्रा जायन्ते दुहितरश्चेति॥

स चैवमायाचनपरस्तिष्ठत्यन्यतमश्च सत्त्वो ऽन्यतमस्मात्सत्त्वनिकायाच्च्युत्वा तस्य
5 प्रजापत्याः कुक्षिमवक्रान्तः। पञ्चावेणिका धर्मा एकत्ये पण्डितजातीये मातृग्रामे। कतमे
पञ्च। रक्तं पुरुषं जानाति विरक्तं जानाति। कालं जानाति ऋतुं जानाति। गर्भमवक्रान्तं
जानाति। यस्य सकाशाद्गर्भो ऽवक्रामति तं जानाति। दारकं जानाति दारिकां जानाति।
सचेद्दारको भवति दक्षिणं कुक्षिं निश्रित्य[3] तिष्ठति सचेद्दारिका भवति वामं कुक्षिं नि-
श्रित्य[3] तिष्ठति॥ सा आत्तमना‹त्तमनाः› स्वामिन आरोचयति। दिष्ट्यार्यपुत्र वर्धसे आपन्न-
10 सत्त्वास्मि संवृत्ता यथा च मे दक्षिणं कुक्षिं निश्रित्य[3] तिष्ठति नियतं दारको भविष्यतीति।
सो ऽप्यात्तमनात्तमनाः पूर्वकायमत्युन्नमय्य दक्षिणं बाहुमभिप्रसार्योदानमुदानयत्य[4]प्येवाहं
चिरकालाभिलषितं पुत्रमुखं पश्येयं जातो मे स्यान्नावजातः कृत्यानि मे कुर्वीत भृतः
प्रति‹बि›भृयाद्दायाद्यं[5] ‹प्रतिपद्ये›त कुलवंशो मे चिरस्थितिकः स्यादस्माकं चाप्यतीत-
कालगतानामल्पं वा प्रभूतं वा दानानि दत्त्वा पुण्यानि कृत्वा मम नाम्ना दक्षिणामादेक्ष्यते।
15 इदं तयोर्यत्रतत्रोपपन्नयोर्गच्छतोरनुगच्छत्विति। आपन्नसत्त्वां[6] चैनां विदित्वा उपरिप्रासादत-
लगतामयन्त्रितां धारयति शीते शीतोपकरणैरुष्णे[7] उष्णोपकरणैर्वैद्यप्रज्ञप्तैराहारैर्ना-

1) B समुखी°, DP corr.

2) In B the reading is not clear, whether रकौ or रक्तौ. Hence C रकौ, P रेकौ; but D रक्तौ.

3) MS निसृत्य. In the former instances of this common-place MS has नि-श्रित्य throughout, see *supra*, I p. 14, 10. 196, 9 etc.

4) B °यति अप्यवा°, CD corr.

5) B प्रतिभृयाद्दा(or द्य)याद्यतकुल°, P प्रतिभृयायायतकुल°, D प्रतिभोयाया-याद्यतकुल°, C प्रतिभृयाद्ययाद्यतकुल°.

6) Anusvāra wanting in MS.

7) MS रूष्णै उष्णो°. The scribe of B has, against his habit, carelessly written this tedious repetition of a standing description, and left out a considerable portion, which has not been added in the copies of B.

तितिक्तैर्नात्यम्लैर्नातिलवणैर्नातिमधुरैर्नातिकटुकैर्नातिकषायैस्तिक्ताम्ललवणमधुरकटुकक-
षायविवर्जितैराहारैर्हारार्धहारविभूषितगात्रीमप्सरसमिव नन्दनवनविचारिणीं मञ्चा-
न्मञ्चं पीठात्पीठमनवतरन्तीमधरां[1] भूमिम् । न चास्याः किंचिदमनोज्ञशब्दश्रवणं यावदेव
गर्भस्य परिपाकाय ॥ सा अष्टानां वा नवानां वा मासानामत्ययात्प्रसूता । दारको जातो
अभिरूपो दर्शनीयः प्रासादिकः सर्वाङ्गप्रत्यङ्गोपेतः[95 a] ॥ तस्य जातौ जातिमहं कृत्वा 5
गङ्गिक इति नाम कृतम् ॥ गङ्गिको दारको ऽष्टाभ्यो धात्रीभ्यो दत्तो द्वाभ्यामंस[2]धात्रीभ्यां
द्वाभ्यां क्षीरधात्रीभ्यां द्वाभ्यां मलधात्रीभ्यां द्वाभ्यां क्रीडनिकाभ्यां धात्रीभ्याम् । सो ऽष्टा-
भिर्धात्रीभिरुन्नीयते वर्ध्यते[3] क्षीरेण दध्ना नवनीतेन सर्पिषा सर्पिमण्डेनान्यैश्चोत्तप्तोत्तप्तै-
रुपकरणविशेषैराशु वर्धते ह्रदस्थमिव पङ्कजम् ॥

स च निर्वेधभागीयैः कुशलमूलैः समन्वागतो गृहावासे[4] नाभिरमते । स मातापितरौ 10
पादयोर्निपत्य विज्ञापयति । अम्ब तात अनुजानीतं[5] मां भगवच्छासने प्रव्रजिष्यामीति ।
ततो ऽस्य मातापितरावेकपुत्रक इति कृत्वा नानुज्ञानीतः ॥ ततो गङ्गिकस्य बुद्धिरुत्पन्ना ।
दुर्लभो मनुष्यप्रतिलाभो[6] दुर्लभश्च तथागतप्रादुर्भावस्तथेन्द्रियसंपदपि दुर्लभा । को मे
उपायो भवेद्यदहं भगवच्छासने प्रव्रजेयमिति ॥ तस्यैतदभवत् । यन्न्वहं प्रणिधानं कृत्वा
आत्मानमात्मना[7] जीविताद्व्यपरोपयेयं यथा मनुष्यत्वमासाद्य लघु लघ्वेव प्रव्रजेयमिति । 15
तेनैवं विचिन्त्य विषं भक्षितं न च कालं करोति । अग्नौ पतितः पर्वतादात्मानमुत्सृष्टवान्
नद्यां[8] चारकायां पतितस्तत्रापि कालं न करोति ॥ तस्य बुद्धिरुत्पन्ना । क उपायः स्या-

1) I have constituted the text according to *supra*, p. 74 n. 1, MS has here °न्तीमवराभूमिं.

2) MS °भ्यांमत्स°.

3) MS वर्द्धते.

4) B गृहापासे, D corr.

5) I have added the anusvāra. Cp. *supra*, p. 121 n. 2 and 5.

6) Cp. Pāli *manussapaṭilābho*.

7) Ex conject.; MS कृत्वा आत्मनः जीवि°.

8) MS नंद्या चारकाया, the anusvāra blurred in B. For the rest, cp. *supra*, p. 86, 3. 116, 13.

ऽयेन कालं कुर्यामिति । तस्यैतदभवत् । सर्वथायं राजा अजातशत्रुश्चण्डो रभसः कर्कशः
साहसिकश्च । यन्न्वहमस्य गृहे रात्रौ संधिं[1] छिन्द्यामिति[2] ॥ स राजगृहं नगरं गत्वा रात्रौ
संप्राप्तायां भग्ने चतुष्पथे[3] संधिमारब्धश्छेत्तुम्[4] । ततो रक्षिभिर्ग्रीवग्राहं गृहीत्वा राज्ञो ऽजा-
तशत्रोरुपनीतः । अयं देव चौरो दुष्टो[5] ऽपकारी च यो राजकुले रात्रौ संधिं छिन्दतीति[6] ॥
5 ततो राज्ञापराधिक[7] इति कृत्वा वध्य[8] उत्सृष्टः । ततो वध्यघातैर्नीलाम्बरवसनैः[9] करवी-
रमालासक्तकण्ठेगुणा उद्यतशस्त्रपाणिभी[10] रथ्यावीथीचत्वरशृङ्गाटकेषु आवणामुखेष्वनु-[11]
श्राव्य दक्षिणेन नगरद्वारेण निष्क्रास्य शीतवनं श्मशानं नीयते ॥ स नीयमानस्तान्वध्य-
घातानाह । शीघ्रं शीघ्रं भवन्तो गच्छन्तु मा कदाचिद्राज्ञश्चित्तस्यान्यथात्वं स्यादिति ॥ ततो
वध्यघातैरेषा[12] प्रवृत्ती राज्ञो निवेदिता । ततो राज्ञा[13] प्रतिनिवर्त्य पृष्टः । को हेतुर्य<द्व>-
10 मिष्टं जीवितं परित्यक्तुमिच्छसीति । तेन स वृत्तान्तो विस्तरेण राज्ञे समाख्यातः ॥ ततो
राजा अजातशत्रुः कदम्बपुष्पवद्धृष्टरोमकूपः साश्रुकण्ठो रुदन्मुख उदानमुदानयति ।

---

1) Anusvāra wanting in MS.

2) B °मीति, D corr.

3) MS भग्नेश्चतुष्पथे. Cp. *supra*, p. 53, 5.

4) Ex conject.; MS °श्छित्तं (D °श्छित्तः).

5) B दूष्टो, D corr.

6) So MS. I think *chindati* represents the hand of the author.

7) MS राजाप°.

8) Ex conject., cp. *supra*, I, p. 102, 7; MS वध्यै.

9) Ex conject., cp. *ibid.*; MS वसनः. The Tibetan confirms the correction; for it has དེ་ནས་གསེད་མ་གོས་སྔོན་པོ་གྱོན་པ། = ततो....... °वसनैः and then, after the interpunction, follows ཀ་ར་བི་ར་འི་མེ་ཏོག་ etc.

10) MS °पाणिभिरथ्या°.

11) Ex conject.; MS आवणामुखेम्वनुश्राव्य.

12) MS प्रवृत्तिराज्ञो.

13) Ex conject.; MS प्रतिनिवृत्य (D प्रतिनिर्वृत्य). Feer, p. 416, 28 «Le roi fit revenir....» which is doubtless meant.

अहो सुपरिपक्वास्य बुद्धिसंततिः[1] स्ववगतः संसारदोषः सुप्रतिलब्धा[2] श्रद्धासंपत् यत्र ना-
मायं प्रव्रज्याहेतोरिदमिष्टं जीवितं परित्यक्तुं व्यवसितः ॥ ततो राज्ञा समाश्वास्योक्तः ।
पुत्रक अहं प्रभुस्ते जीवितस्य । गच्छेदानीं भगवच्छासने प्रव्रजेति । स राज्ञोत्सृष्टो भग-
वच्छासने प्रव्रजितः ॥ तेन युज्यमानेन घटमानेन व्यायच्छमानेनेदमेव पञ्चगण्डकं संसा-
रचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः शतनपतनविकरणविध्वंसनधर्मतया पराहत्य 5
सर्वक्लेशप्रहाणादर्हत्वं साक्षात्कृतम् । अर्हन्संवृत्तस्त्रैधातुकवीतरागः समलोष्टकाञ्चन आ-
काशपाणितलसमचित्तो वासीचन्दनकल्पो विद्याविदारिताण्डकोशो विद्याभिज्ञाप्रतिसं-
वित्प्राप्तो भवलाभलोभसत्कारपराङ्मुखः सेन्द्रोपेन्द्राणां देवानां पूज्यो मान्यो ऽभिवाद्यश्च
संवृत्तः ॥

तत्र भगवान्भिक्षूनामन्त्रयते स्म । एषो ऽग्रो मे भिक्षवो भिक्षूणां मम श्रावकाणां 10
श्रद्धाप्रव्रजितानां यदुत गङ्गिको वाराणसेयः श्रेष्ठिपुत्र इति ॥

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः । कानि भदन्त गङ्गिकेन
कर्माणि कृतानि येषां विपाकान्नाग्निः[3] काये ऽवकाशति[4] न विषं न[5] च शस्त्रं नोदकेन कालं
करोति अर्हत्वं चानेन प्राप्तम् ॥ भगवानाह । गङ्गिकेनैव भिक्षवः पूर्वमन्यासु जातिषु

---

1) Ex conject.; MS बुद्धिः सत्ततिस्वभगवतिसंसारदोषः (P °ष). The correction is certain. The colon *suparipakvā buddhisaṃtatiḥ* exactly corresponds to the Tibetan བློའི་རྒྱུད་ནི་ [cp. Feer, p. 417 n. 1] ཡོངས་སུ་སྨིན་ཏོ་ and *svavagataḥ saṃsāradoṣaḥ* to འཁོར་བའི་ ཉེས་པའི་ ཤིན་ཏུ་ རྟོགས་སོ་

*saṃsārasya doṣasya samyak avagatatvam.*

2) Ex conject.; MS °लब्धश्रद्धासंपत्.

3) MS विपाकान्यग्निः.

4) Ex conject.; MS °कासति. The verb *avakāçati* is a new word. It is not the compound of *kāç* 'to shine' but a denominative of *avakāça* shaped in accordance with the theory and practice of classic Sanskrit grammar by means of the suffix *kvip*, cp. Whitney, *Sanskrit Grammar* ² § 1054. It may be rendered here by 'has hold of'.

5) MS विषंचनशस्त्रं.

कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यं-भावीनि । गङ्गिकेन कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति । न भिक्षवः कर्माणि कृता[95 b]न्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ न तेजोधातौ न वायुधातावपि (1)तूपात्तेष्वेव स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशु-
5 भानि च ।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि ।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि वाराणस्यां नगर्यामन्यतमः श्मशा(2)नमोषको मातङ्गः । यावत्तेन (3)पान्थान्हत्वा भाण्डमासादितम् । ततस्तस्य पृष्ठतस्तस्कराः प्रधाविताः । या(4)<व>-
10 दन्यतमस्मिन् श्मशाने प्रत्येकबु(5)द्धो निरोधसमापत्तिं समापन्नः । ततो ऽसौ श्मशानमोषको मातङ्गस्तस्य पुरस्ताद्भाण्डमपसृ(6)त्य तत्रैव निलीनः । ततस्ते तस्कराः प्रत्येकबुद्धं दृष्ट्वा-(7)स्यारब्धाः तेषुं शस्त्रमग्निं च न चास्य चीवरकर्णकमपि शक्नुवन्ति चालयितुं (8)यस्मादसौ निरोधस(9)माधिं समापन्नः ॥ यदा ते तस्क(10)राः श्रान्ताः प्रक्रान्तास्तदा स प्रत्येकबुद्धः क्रमेण

1) Cp. *supra*, I, p. 74 n. 9.

2) MS श्मशानौषको; the other times this word occurs it is written without fault in MS.

3) Ex conject.; MS पन्थानं हत्वा (in C and D still worse depraved). Cp. Feer, p. 417 n. 2.

4) Ex conject.; MS याघन्यतम°.

5) B °वुद्धा, D corr.

6) B °पसृत्य (with इत्य written above), the good correction has been neglected in the copies, they all have °सृत्य.

7) Ex conject.; MS दृष्ट्वामारब्धः तेषुं (D °रब्धाः°). In the Tibetan the robbers also throw stones against him.

8) Ex conject.; MS तस्माद°.

9) Ex conject.; MS °समाधिसमापन्नः.

10) Visarga wanting in MS.

समाधिव्युत्थितः। ततस्तेन श्मशानमोषकेण मातङ्गेन तं प्रत्येकबुद्धं पिण्डकेन प्रतिपाद्य प्रणिधानं कृतम्। ग्रहमप्येवंविधानां गुणानां लाभी स्यां यथा चायमपरोपक्रम एवमहमपि यत्र यत्र जायेय[1] तत्र तत्रापरो‹प›क्रमः स्यां प्रतिविशिष्टतरं चातः शास्तारमारागयेयं मा विरागयेयमिति॥

भगवानाह। किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन श्मशानमोषको मातङ्गो ऽयं स गङ्गिकः। भूयः काश्यपे भगवति प्रव्रजितो बभूव। तत्रानेन ब्रह्मचर्यवासः परिपालितः। तेनेदानीमर्हत्वं साक्षात्कृतम्। इति हि भिक्षव एकान्तकृष्णानां कर्मणामेकान्तकृष्णो विपाक एकान्तशुक्लानां कर्मणामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रस्तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम्॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन्॥

1) MS जायेयं.

# दीर्घनख इति ९९ ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुडकिन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्काराणां सश्रावकसङ्घो राजगृहमुपनिश्रित्य[1] विहरति वेणुवने कलन्दकनिवापे । तेन खलु समयेन नालदग्रामके तिष्यो[2] नाम ब्राह्मणः[3] । तेन शारी नाम दारिका माठरसकाशाल्लब्धा[4] ॥ यदा शारिपुत्रः[5] शारीकुक्षिमवक्रान्तस्तदा भ्रात्रा[6] सह <दीर्घनखेन विवादं[7]> कुर्वन्ती निग्रहस्थानं प्रापयति[8] । * * * * * * * * * * * * ॥ ततो दीर्घनखेन दक्षिणापथं गत्वा बहूनि शास्त्राण्यधीतानि ॥

---

1) MS °निसृत्य.

2) MS तिष्या.

3) Ex conject.; B प्र(or ब्र)ह्मणांण्डनशरा नाम, D ब्राह्मणांगुणसरा°, P ब्रह्मणांण्डनशरा°, C with dittography तिष्यानामब्रह्मणांण्डनके । तिष्यानामब्रह्मणांगुन(or र)शरा°. My correction has been suggested by the intelligence derived from the Tibetan, which has བྲམ་ཟེ་རྒྱལ་ = *brāhmanas Tiṣyaḥ*. Cp. Feer, p. 418 n. 1. The persons here mentioned and their adventures are dealt with more fully in the text communicated by Feer in A. M. G. II, 151—155. Cp. also Burnouf, *Introduction*, p. 456.

4) B माठरसकाशान्लब्धा. In Tib. the name is spelt མཋརེ.

5) MS here *l* for *r*: शालिपु° (also p. 187, 1) and शालीकु°, afterwards (p. 187, 7 etc.) शारि°. Cp. *supra*, I, 241, 7, where I was perhaps too cautious in not correcting the vicious orthography of MS.

6) MS भ्राता.

7) I have inserted विवादं by conjecture to restore if not the very words at least the meaning of the mutilated sentence. The Tibetan blockprint is here almost illegible.

8) Ex conject.; MS कुर्वन्तोतिनिग्रहस्थानं पाठयति. My substitution of *prā-*

यावत्क्रमेण शारिपुत्रो जातः। तेन द्विरष्टवर्षेणेन्द्रं व्याकरणमधीतं सर्ववादिनश्च निगृहीताः। सो ऽनुपूर्वेण भगवतः शासने प्रव्रजितः॥ यावद्दीर्घनखेन प्रव्राजकेन श्रुतम्। भागिनेयेन ते सर्वे तीर्थकरा निगृहीताः[1]। इदानीं श्रमणगौतमस्य शिष्यत्वमभ्युपगत इति। श्रुत्वा चास्य महती परिभवसंज्ञा उत्पन्ना सर्वशास्त्रेषु[2] चास्य अनैष्ठिकसंज्ञा उत्पन्ना। ततः क्रमशो राजगृहमनुप्राप्तः॥ 5

तस्मिंश्च समये भगवान्प्रतिसंलयनाद्व्युत्थाय चतसृणां पर्षदां मधुरमधुरं धर्मं देशयति तीक्ष्णं मध्विवानेडकं शारिपुत्रो ऽपि भगवतः पुरस्तात्स्थितो ऽभूद्व्यजनं[3] गृहीत्वा भगवन्तं वीजयन्। अथ <ददर्श> दीर्घनखपरिव्राजको भगवन्तमर्धचन्द्राकारेणोपविष्टं धर्मं देशयन्तं शारिपुत्रं <च>[4] व्यजनव्यग्रहस्तं भगवन्तं वीजयमानम्। दृष्ट्वा च पुनर्भगवन्तमिदमवोचत्। सर्वं मे भो गौतम न क्षमत इति॥ भगवानाह। एषापि ते अग्निवैश्यायन दृष्टिर्न 10 क्षमते येयं दृष्टिः सर्वं मे न क्षमत इति॥ एषापि मे भो गौतम दृष्टिर्न क्षमते ये[96a]यं मे दृष्टिः सर्वं मे न क्षमत इति[5]॥ अपि तु ते अग्निवैश्यायन[6] एवं जानतो ऽस्याश्च दृष्टेः प्रहाणं

---

*payati* to *pāṭhayati* (which, of course, is out of place here) is favoured also by the Tibetan equivalent of this phrase མེད་པོ་ཆད་པ་ལ་སྒྲུག་པར་བྱེད་དོ།

The period lost in the Sanskrit by oversight of the scribe who wrote B or A, is preserved in the Tibetan, and thus translated by Feer, p. 418, 26: «Alors cette pensée vint à l'esprit de Dīrghanakha: Elle a dans son sein un être à qui ses mérites feront une grande réputation: Cela est du moins fort vraisemblable. Sous cette influence puissante ne ferais-je pas bien de résider désormais dans quelque (autre) contrée?»

1) MS तीर्थकराणिगृहीता.

2) Ex conject.; MS सर्वशास्त्रेप्रवास्य अनैष्ठिक° etc. «When he heard the tidings about his nephew, the (old) feeling of uneasiness at his defeat arose within him together with a feeling of his lack of superiority in every science». Neither the translation of Burnouf nor that of Feer is satisfactory.

3) MS व्यंजनं (D व्यञ्जन).

4) Ex conject.; MS शारिपुत्रः व्यजन°; it may, however, be that in B the visarga is cancelled and replaced by anusvāra, but the copies have :.

5) This sentence has been left out in P, cp. Feer, p. 419, n. 6, but is found in the other mss.

6) B अग्निवे°, D corr.

भविष्यति प्रतिनिसर्गो वान्तीभावः अन्यस्याश्च दृष्टेरप्रतिसंधिरनुपादानमप्रादुर्भावः ॥ अपि मे भो गौतम एवं जानत एवं पश्यतो ऽस्याश्च[1] दृष्टेः प्रहाणं भविष्यति प्रतिनिसर्गो वान्तीभावः अन्यस्याश्च दृष्टेरप्रतिसंधिरनुपादान⟨म⟩प्रादुर्भावः ॥ बहुजनेन ते अग्निवैश्यायन[2] ⟨न⟩ संस्यदिष्यति । * * * * * * * * * * * * इम[3] उच्यन्ते तनुभ्यस्तनुतराः । लोके 5 त्रय इमे अग्निवैश्यायन दृष्टिसंनिश्रयाः ॥ कतमे त्रयः ॥ इहाग्निवैश्यायन एक[4] एवंदृष्टिर्भवत्येवंवादी सर्वं ⟨मे⟩ क्षमत[5] इति । पुनरपरमिहैक[6] एवंदृष्टिर्भवत्येवंवादी सर्वं मे न क्षमत इति । पुनरपरमेक एवंदृष्टिर्भवत्येवंवादी एकं मे क्षमते एकं न मे क्षमत इति । तत्राग्निवैश्यायन येयं दृष्टिः सर्वं मे क्षमत इति इयं दृष्टिः संरागाय संवर्तते नासंरागाय[7] संद्वेषाय नासंद्वेषाय संमोहाय नासंमोहाय संयोगाय नासंयोगाय ⟨सं⟩क्लेश⟨ाय न⟩[8] व्यवदानाय ⟨संच[9]- 10 याय ना⟩पचयाय अभिनन्दनायोपादानाय अध्यवसानाय[10] संवर्तते । तत्राग्निवैश्यायन येयं दृष्टिः[11] सर्वं मे न क्षमत इति इयं दृष्टिरसंरागाय संवर्तते न संरागाय असंद्वेषाय ⟨न संद्वेषाय⟩

---

दृष्टः

1) B पश्यतः । अस्याश्च भूष्टेः. Hence D °श्चभूद्दिष्टे, P °श्चभूदृष्टेः, C °श्चभूयोः, none of the copyists of B understood the interlinear correction.

2) Ex conject., cp. Feer, p. 420 n. 1; MS अग्निवैश्यायिनसंस्य(D स)दिस्यति इम. It is plain that a part of the argument has been lost. The missing portion is extant in the Tibetan. Feer, p. 420, 5, renders it as follows: «bien peu de gens (au contraire), ayant cette même pensée, ayant cette vue, tiendront un langage tel que le tien. Agnivaiçyāyana, les Çramaṇas et les Brahmanes qui abandonnent résolument cette vue sans en adopter une autre —».

3) MS उच्यते.

4) MS एवदृ°.

5) Ex conject.; MS सर्वक्षमत इति.

6) Ex conject.; MS °हैकः । एवंदृष्टिपातिभवत्येवै(D व)वादी (P °रादी).

7) Ex conject.; MS नसंरागाय.

8) The addition is certain from the Tibetan.

9) Ex conject.; MS अपचयाय अनभिनन्दनाय. The right reading is easily inferred from the many repetitions, which leave no doubt about the meaning and the arrangement of the terms, and from the Tibetan.

10) Ex conject., cp. *infra*, p. 189, 2 and 4; MS अवध्यसानाय. In B the second akṣ. may be read also च, as has been done by the copyist of P.

11) Visarga wanting in MS.

असंमोहाय <न संमोहाय>[1] विसंयोगाय न संयोगाय[2] व्यवदानाय न संक्लेशाय असंचयाय[3] <न संचयाय> अ<न>भिनन्दनायानुपादानाय अनध्यवसानाय संवर्तते । तत्र येयं दृष्टिरेकं मे क्षमते एकं मे न क्षमत इति यत्तावदस्य क्षमते तत्संरागाय संद्वेषाय[4] संमोहाय संयोगाय संक्लेशाय न व्यवदानाय[5] नापचयाय अभिनन्दनायोपादानाय अध्यवसानाय संवर्तते । यदस्य न क्षमते तदसंरागाय संवर्तते न सं<रा>गाय[6] असंद्वेषाय न संद्वेषाय असंमोहाय न संमोहाय असंयोगाय न संयोगाय व्यवदानाय न संक्लेशाय[7] अपचयाय न संचयाय अनभिनन्दनायानु-पादानाय अनध्यवसानाय संवर्तते ॥

तत्र श्रुतवानार्यश्रावक इदं[8] प्रतिसंशिक्षते । अहं चेवंदृष्टिः[9] स्यामेवंवादी[10] सर्वं मे क्षमते द्वाभ्यां मे सार्धं स्याद्विग्रहः स्याद्विवादः । यश्च एवंदृष्टिरेवंवादी सर्वं मे न क्षमत इति यश्च एवंदृष्टिरेवंवादी[11] एकं मे क्षमते एकं मे न क्षमत इति । विग्रहे सति विवादो

---

1) The terms that are lost in the transmitted Sanskrit text are represented in the Tibetan.

2) Ex conject.; MS न संयोगाय न व्यावदाराय.

3) Ex conject., cp. *supra*, p. 188, 9; B असचयाय, if I read it rightly, D असं-रयाय, P असरयाय.

4) B, with dittography, °गायसंद्वेषायासंद्वेषाय, D corr. It is, however, possible that the negative statement is really subjoined to the positive one; yet the negative statements are here also wanting in almost all the other terms. In none of the repetitions of the whole series is the parallelism of positive and negative terms maintained throughout.

5) MS अपचयाय नाभिनन्दानायो°, but ना is cancelled, P अभि°.

6) MS असंद्वेषायनसंद्वेषाय.

7) Ex conject.; MS here अपचनायनपचयाय (D °चनाय).

8) MS प्रतिसशिक्षते (D प्रतिसंशिष्यते, P प्रतिसंक्षि [or क्षे]ते). The parallel place in the Pāli has *paṭisañcikkhati* (Majjh. Nik., I, ed. Trenckner, p. 499, 10 and 25).

9) Here *ca* is equivalent to *cet* 'if', see Pāṇini 8, 1, 30, who denotes by *caṇ* this variety of *ca*. Two more instances of this idiom see Kathāsaritsāgara, ed. Durgaprasād, 45, 33 and 101, 61.

10) Ex conject.; B सर्वं न क्षमते, the insertion seems to be from a m. s., C सर्व-मेक्षते, D सर्वक्षमते, P सर्वं न क्षमते.

11) MS एवंदृष्टिएवंवादी.

विवादे सति विहिंसा। इति स [1]तां सविग्रहां सविवादां सविहिंसां च [2]समनुपश्यन्निमां च दृष्टिं [3]प्रतिनिसृजत्य[4]न्यां च दृष्टिं नो[5]पादत्ते। [6]एवमस्याश्च दृष्टेः प्रहाणं भवति प्रतिनिसर्गो वान्तीभावः। [7]अन्यस्याश्च दृष्टेरप्रतिसंधिरनुपादानमप्रादुर्भावः॥

[8]‹तत्र श्रुतवानार्यश्रावक इदं प्रतिसंशिक्षते। अहं चेदेवंदृष्टिः स्यामेवंवादी सर्वं मे न क्षमत इति द्वाभ्यां मे सार्धं स्याद्विग्रहः स्याद्विवादः। यश्च एवंदृष्टिरेवंवादी सर्वं मे क्षमत इति यश्च एवंदृष्टिरेवंवादी एकं मे क्षमते एकं मे न क्षमत इति। विग्रहे सति विवादो विवादे सति विहिंसा। इति स तां सविग्रहां सविवादां सविहिंसां च समनुपश्यन्निमां च दृष्टिं प्रतिनिसृजत्यन्यां च दृष्टिं नोपादत्ते। एवमस्याश्च दृष्टेः प्रहाणं भवति प्रतिनिसर्गो वान्तीभावः। अन्यस्याश्च दृष्टेरप्रतिसंधिरनुपादानमप्रादुर्भावः॥›

तत्र श्रुतवानार्यश्रावक इदं प्रतिसंशिक्षते। अहं चेदेवंदृष्टिः स्यामेवंवादी एकं मे क्षमते एकं मे न क्षमत इति द्वाभ्यां मे सार्धं स्याद्विग्रहः स्याद्विवादः। यश्चै‹वंदृष्टिरेवंवादी सर्वं मे क्षमत इति यश्च एवंदृष्टिरे›वंवादी सर्वं मे न क्षमते इति। विग्रहे सति विवादो

---

1) This sentence is wholly corrupt in MS. My conjectural emendation has been suggested by the comparison of the transmitted text with Majjh. Nik. l. l. p. 499, 5 foll. The Pāli redaction is shorter and more concise, cp. *supra*, I, 230 n. 4. MS विवादेसतिविहिंसाइतिसतिसविग्रहःसविवादश्चविहिंसाच.

2) MS समनुष्यपश्य°!

3) MS प्रतिनिःसृज्य°.

4) MS °न्याश्चदृष्टिं (D °दृष्टि).

5) B नापा°, D corr.

6) Ex conject.; MS °दत्तश्चेवमन्याश्च (D °दत्तश्चै°).

7) The scribe either of B or of B's prototype must have become perplexed here by the tedious repetitions of the prolix terms, for MS has: अन्यस्याश्च दृष्टेः प्रहाणं भवति प्रतिनिसर्गो वान्तीभावः the exact counterpart of the phrase required. In P it has been transcribed अस्याश्च etc. Cp. *infra*, p. 191, 3.

8) The bracketed portion, omitted in MS, has been easily restored. The restoration is confirmed by the Tibetan. Feer, p. 421 tacitly follows the integral Tibetan text.

विवादे सति विहिंसा।[1] इति स तां सविग्रहां सविवादां सविहिंसां च समनुपश्यन्निमां च दृष्टिं प्रतिनिसृ‹ज›त्यन्यां[2] च दृष्टिं नोपादत्ते। एवमस्याश्च दृष्टेः प्रहाणं भवति प्रतिनिसर्गो वान्तीभावः। अन्यस्याश्च दृष्टेरप्रतिसंधिरनुपादानमप्रादुर्भावः॥

अयं खल्वग्निवैश्यायन[3] कायो रूपी[4] औदारिकश्चातुर्महाभूतिक ‹इति›[5] आर्यश्रावकेण अभीक्ष्णमुदयव्ययानुदर्शिना विहर्तव्यं विरागानुदर्शिना प्रतिनिसर्गानुदर्शिना विहर्तव्यम्। यत्रार्यश्रावकस्य अभीक्ष्णमुदयव्ययानुदर्शिनो विहरतः यो ऽस्य भवति काये कायच्छन्दः[6] कायस्नेहः कायप्रेमा कायालयः[7] कायविषक्तिः कायाध्यवसानं तच्चास्य[8] चित्तं न पर्यादाय तिष्ठति॥ 5

---

1) MS विवादेसतिविहिंसाविहिंसतिविग्रहः सविवादश्चविहिंसाचसमनुपश्य°. Cp. *supra*, p. 190 n. 1.

2) Dittography in MS दृष्टिं प्रतिनिसृत्यन्यां च दृष्टिं प्रतिनिसृत्यन्यां च दृष्टिं नोपादत्ते.

3) MS खल्वाग्नि°.

4) The parallel place in the Pāli redaction (l. l. p. 500, 1 foll.), which, by exception, is here fuller than ours, makes the impression that *audārika*, a synonymous term with *sthūla* (cp. *supra*, p. 169, 10. 170, 1) takes the place of that which should be rather styled *audarika*. For the adj. *odanakummāsūpacayo* which is in the Pāli text means something like 'dependent on the functions of the organs of digestion', that is *audarika*. In every day speech *audarika* signifies one who makes much of his belly, whether prompted by hunger (see Kāç. on Pāṇini 5, 2, 67) or by gluttonny as in the case of the Vidūṣaka of the drama.

5) I have inserted इति, because it cannot be wanting here.

6) B m. pr. भवतिसाकयच्छन्दः, the akṣ. साकय are cancelled by superposition of dots, and instead of them the correction काय is added on the margin. D कायप्रच्छन्नः, P कायच्छंतिः, the vowel-sign of the last akṣ. has been cancelled.

7) Ex conject; MS कामालयः कायनिप(or य)न्नि. In P म्नि is written for न्नि; the scribe of D changed the corrupted tradition into कायान्नियाति (sic). With *viṣakti* 'attachment, clinging to —' cp. skrt. participle *viṣakta* and Pāli *visattikā* apud Childers.

8) Ex conject., cp. *supra*, I, 174, 9 and 12; MS °ध्यवसानां तत्रास्य चित्तेनपर्यादायतिष्ठति. The Tibetan དེའི་སེམས་ཟིན་གྱིས་ཟིན་ཅིང་ etc. is in accordance therewith.

तिस्र इमा अग्निवैश्यायन वेदनाः। कतमास्तिस्रः। [1]सुखा दुःखा अदुःखासुखा च। यस्मिन्समये श्रुतवानार्यश्रावकः [96 b] सुखां वेदनां वेदयते द्वे अस्य वेदने तस्मिन्समये निरुद्धे भवतो दुःखा च अदुःखासुखा च। सुखामेव च तस्मिन्समये आर्यश्रावको वेदनां वेदयते। सुखापि च वेदना अनित्या निरोधधर्मिणी। यस्मिन्समये आर्यश्रावको दुःखां
5 वेदनां वेदयते द्वे अस्य वेदने तस्मिन्समये निरुद्धे भवतः सुखा अदुःखासुखा च। दुःखामेव [2]<च> तस्मिन्समये आर्यश्रावको वेदनां वेदयते। दुःखापि वेदना अनित्या निरोधधर्मिणी। यस्मिन्समये आर्यश्रावको [3]अदुःखासुखां वेदनां वेदयते द्वे अस्य वेदने[4] तस्मिन्समये निरुद्धे भवतः सुखा दुःखा च। अदुःखासुखामेव च तस्मिन्समये आर्यश्रावको वेदनां वेदयते। अदुःखासुखापि वेदना अनित्या निरोधधर्मिणी। [5]तस्यैवं भवति। इमा[6] वेदनाः[7] किंनि-
10 दानाः किंसमुदयाः किंजातीयाः किंप्रभावा इति। इमा वेदना स्पर्शनिदानाः स्पर्शसमुदया स्पर्शजातीया स्पर्शप्रभावाः[8]। तस्य स्पर्शस्य [9]समुदयात्तास्ता वेदनाः[8] [10]समुदयन्ते तस्य स्पर्शस्य [9]निरोधात्तास्ता वेदना [11]निरुध्यन्ते व्युपशाम्यन्ति शीतीभवन्त्यस्तंगच्छन्ति[12]। स यां [13]काञ्चिद्वे-दनां वेदयते> सुखां वा दुःखां वा अदुःखासुखां वा तासां वेदनानां समुदयं चास्तंगमं चा-

---

1) B सुखाःदुःखा, D corr.

2) च added in D, cp. l. 3 and 8.

3) MS °वकः अदुःखा°.

4) MS वेदते (D वेदयते!).

5) B तस्येवं, D corr.

6) Ex conject.; MS here इतीमां, but on the following line it has किंप्रभावा इतीमा.

7) MS इतीमां वेदनां किंनिदानाकिंसमु°.

8) Visarga wanting in MS.

9) Ex conject.; MS समुदायात्तास्ता.......... निरोधात्तास्ता.

10) As to this form cp. *supra*, I, 6, 6. 12, 2 etc.

11) B निरू°, D corr.

12) MS गच्छति.

13) MS यांकाचिद्वे°.

स्वादं चादीनवं[1] च निःसरणं च यथाभूतं प्रजानामीति तस्य वेद‹ना›नां समुदयं चास्तंगमं
चास्वादं[2] चादीनवञ्च निःसरणं ‹च› यथाभूतं प्रजानत उत्पन्नासु[3] वेदनास्वनित्यतानुदर्शी[4] विहृ-
रति व्ययानुदर्शी विरागानुदर्शी निरोधानुदर्शी प्रतिसर्गानुदर्शी। स कायपर्यन्तिकां वेदनां
वेदयमानः कायपर्यन्तिकां वेदनां ‹वेद›य इति[5] यथाभूतं प्रजानाति। जीवितपर्यन्तिकां वेदनां
वेदयमानो जीवितपर्यन्तिकां वेदनां वेदय इति[6] यथाभूतं प्रजानाति। भेदाच्च कायस्योर्द्ध्वं 5
जीवित[7]पर्यादानादिहैवास्य[8] सर्वाणि वेदनानि[9] अपरिशेषं निरुध्यन्ते अपरिशेषमस्तं परिक्षयं
पर्यादानं गच्छन्ति[10]। तस्यैवं भवति। सुखामपि वेदनां वेदयतो भेदः कायस्य भविष्यति एष
एवान्तो दुःखस्य। दुःखामप्यदुःखासुखामपि वेदनां वेदयतो भेदः कायस्य भविष्यति एष
एवान्तो दुःखस्य। स सुखामपि वेदनां वेदयते विसंयुक्तो वेदयते न संयुक्तः। दुःखामपि
अदुःखासुखामपि[11] वेदनां वेदयते विसंयुक्तो वेदयते न संयुक्तः। केन विसंयुक्तः। विसंयुक्तो 10
रागेण द्वेषेण मोहेन विसंयुक्तो जातिजरामरणशोकपरिदेवदुःखदौर्मनस्योपायासैः विसंयु-
क्तो दुःखादिति वदामि॥

---

1) Ex conject.; B °स्तंगमंचास्वादवादीनंवंच, C °वास्त्रादवादीनंव, D °चास्त्रा-दंवादीनवञ्च, P °वास्वादवादीनंच. The two strokes above व in B denote cancelling, it seems.

2) MS चास्त्रादवादी°.

3) Ex conject.; MS प्रजानिनो (D and P °मिनो)त्प°. It is strange that the structure of the sentence changes suddenly, so as to cause a mixture of two types of phrase rather negligently combined. For the rest cp. my *Sanskrit Syntax* § 371.

4) Ex conject.; MS °नित्यारूद°.

5) Ex conject.; MS कायपर्यन्तिकांवदनायेति (D instead of this कायपर्य्यन्तावे-दनायेति).

6) MS, with sandhi, वेदयेति.

7) MS कायस्योर्द्धजीवित°.

8) MS °नादिहैवास्य (D °नादिभेदोस्य).

9) Note the neuter gender here.

10) MS गच्छति.

11) MS अदुःखामपिसुखामपि. In B the first पि looks as if expunged.

तेन खलु समयेनायुष्माञ्छारिपुत्रो ऽर्धमासोपसंपन्नो भगवतः पृष्ठतः स्थितो ऽभूद्व्य-
जनं गृहीत्वा भगवन्तं वीजयन्। अथायुष्मतः शारिपुत्रस्यैतदभवत्। भगवांस्तेषां धर्माणां
प्रहाणमेव[1] वर्णयति विरागमेव [2]निरोधमेव प्रतिनिःसर्गमेव वर्णयति। यन्न्वहं तेषां तेषां
धर्माणां प्रहाणानुदर्शी विहरेयं विरागानुदर्शी निरोधानुदर्शी विहरेयं प्रतिनिःसर्गानु-
5 दर्शी विहरेयमिति॥ अथायुष्मतः शारिपुत्रस्यैषां धर्माणामनित्यतानुदर्शिनो[3] विहरतो
व्ययानुदर्शिनो विरागानुदर्शिनो निरोधानुदर्शिनः प्रतिनिःसर्गानुदर्शिनो विहरतः अनु-
पादायास्रवेभ्यश्चित्तं विमुक्तं दीर्घनखस्य च परिव्राजकस्य विरजो विगतमलं धर्मेषु धर्म-
चक्षुरुत्पन्नम्॥

अथ दीर्घनखः परिव्राजको दृष्टधर्मा प्राप्तधर्मा विदितधर्मा पर्यवगाढधर्मा[4] तीर्ण-
10 काङ्क्षस्तीर्णविचिकित्सो ऽपरप्रत्ययो ऽनन्यनेयः शास्त्रशासने धर्मेषु वैशारद्यप्राप्त उत्था-
यासनादेकांसमुत्तरासङ्गं कृत्वा येन भगवांस्तेनाञ्जलिं प्रणमय्य[5] भगवन्तमिदमवोचत्। लभेयाहं
भदन्त स्वाख्याते धर्मविनये प्रव्रज्यामुपसंपदं भिक्षुभावं चरेयमहं भगवतो ऽन्तिके ब्रह्मच-
र्यम्॥ लब्धवान्दीर्घनखपरिव्राजकः स्वाख्याते धर्मविनये प्रव्र[97 a]ज्यामुपसंपदं भिक्षुभा-
वम्। [6]एवं प्रव्रजितः स आयुष्मानेको व्यपकृष्टो ऽप्रमत्त आतापी प्रहितात्मा व्यहार्षीत्।
15 एको व्यपकृष्टो ऽप्रमत्त आतापी प्रहितात्मा विहरन्यदर्थं कुलपुत्राः केशश्मश्रूवतार्य[7]
काषायाणि वस्त्राण्याच्छाद्य सम्यगेव श्रद्धया [8]अगारादनगारिकां प्रव्रजन्ति तदनुत्तरं

---

1) MS °णामेवं (C °णामवं).

2) MS विरो°.

3) MS °दर्शिना (D °दर्शीना).

4) Ex conject.; MS पर्यवगादधर्मा (P पयंव°, D पर्य्यापंवगाद°). Cp. Majjh. Nik. I, nr. 74, ed. Trenckner, p. 501, 10 *pariyogāḷhadhammo*. — In the Pāli redaction Dīrghanakha becomes an upāsaka, not a monk.

5) Ex conject.; MS प्रणाम्य. Cp. *supra* I, 347, 4. II, 89, 12.

6) B भिक्षुभावंसेवं प्रव्रजितः, P corr. (DC भिक्षुभावं प्रव्रजितः). Cp. the parallel passage *supra*, I, p. 233, 14 foll.

7) MS श्मश्रुवतार्य.

8) MS आगाराद°.

ब्रह्मचर्यपर्यवसानं[1] दृष्ट एव धर्मे स्वयमभिज्ञया[2] साक्षात्कृत्वा प्रतिपद्य[3] प्रवेदयते। क्षीणा मे जातिरुषितं ब्रह्मचर्यं[4] कृतं करणीयं नापरमस्माद्भवं प्रजानामीति। आज्ञातवान्स[5] आयुष्मानर्हन्बभूव सुविमुक्तचित्तः॥ तत्र भगवान्भिक्षूनामन्त्रयते स्म। एषो ऽग्रो मे भिक्षवो भिक्षूणां मम श्रावकाणां प्रतिसंवित्प्राप्तानां यदुत कोष्ठिलो भिक्षुरिति॥

भिक्षवः संशयजाताः सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः। कानि भदन्त महाकोष्ठिलेन[6] कर्माणि कृतान्युपचितानि येन महावादी संवृत्तः प्रव्रज्य चार्हत्वं साक्षात्कृतमिति॥ भगवानाह। कोष्ठिलेनैव भिक्षवः पूर्वमन्यासु जातिषु कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि। कोष्ठिलेन कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति। न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये पृथिवीधातौ विपच्यन्ते नाब्धातौ न तेजोधातौ न वायुधातावपि तूपात्तेष्वेव[7] स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम्॥

भूतपूर्वं भिक्षवो ऽतीते ऽध्वनि वाराणस्यां नगर्यां पञ्चमात्राणि तस्करशतानि सेनापतिप्रमुखाणि चौर्येण संप्रस्थितानि। यावत्ते चङ्क्रूर्यमाणा अन्यतमं[8] खदिरवणमनुप्राप्ताः[9]।

---

1) MS ब्रह्मचर्यपर्यवसानं. Cp. *supra*, I, p. 234, 2.

2) MS °भिज्ञाया.

3) Ex conject.; MS °कृत्वापतिपद्य (D °कृतोपसंपद्य, P कृत्वापसंपद्य). The wording is here somewhat different from *supra*, I, p. 234, 2.

4) B °चर्य, P corr.

5) MS आज्ञातन्वा. Cp. *supra*, I, p. 234, 4.

6) B कोथिलेन, D corr.

7) Cp. *supra*, I, p. 74 n. 9.

8) Ex conject.; MS चङ्क्रूर्यमाणान्यन्यतमं.

9) खदिरवदिरवणम° only in P, cp. Feer, p. 425, n. 5. MS has here °वण°, but *infra*, p. 196, 2 °वने.

यावत्सेनापतिनाभिहिताः । पश्यत यूयं कमलायताक्षः कश्चिदपरकीयो मनुष्यः संविद्यते[1] येन वयं यक्षबलिं दत्वा प्रक्रामेमेति[2] ॥ तत्र च खदिरवने प्रत्येकबुद्धः प्रतिवसति । तत-स्तैस्तस्करैः[3] पर्यटद्भिर्दृष्ट्वा सेनापतिसकाशं नीतः । ततश्चौरसेनापतिना वध्यतामयमित्या-ज्ञा दत्ता । ततो ऽसौ प्रत्येकबुद्धस्तेषामनुग्रहार्थं विततपक्ष इव हंसराजः[4] खगपथमभ्युद्गम्य 5 विचित्राणि प्रातिहार्याणि विदर्शयितुमारब्धः । ततः सेनापतिर्मूलनिकृत्त[5] इव द्रुमः पाद-योर्निपत्यात्ययं देशितवान् । पिण्डकेन प्रतिपाद्य प्रणिधानं कृतवान् । अहमप्येवंवि-धानां गुणानां लाभी स्यां प्रतिविशिष्टतरं चातः शास्तारमारागयेयं मा विरागयेयमिति ॥

भगवानाह । किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन चौरसेनापति-रयमेवासौ कोष्ठिलः । भूयः काश्यपे भगवति प्रव्रजितो बभूव । तत्रानेन दश वर्षसह-10 स्राणि ब्रह्मचर्यवासः परिपालितः । तेनेदानीमर्हत्त्वं साक्षात्कृतम् । इति हि भिक्षव एका-न्तकृष्णानां कर्मणामेकान्तकृष्णो विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रस्तस्मात्तर्हि भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्त-शुक्लेष्वेव कर्मस्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमनसस्ते भिक्षवो भगवतो भाषितमभ्यनन्दन् ॥

---

1) MS संविद्यत (D °द्यतः, P °द्येत).

2) Ex conject.; MS प्रक्रामेयेति. — Feer's translation (p. 425, 25) is here wrong. I take येन for a pronoun, not a conjunction. The captain of the highway men orders them to look out for some man suitable for sacrifice to the yakṣas; the paçu required must be nobody's property and have lotus-like and long eyes.

3) B तष्करैः, P corr.

4) MS °राजाः.

5) MS कृत्त, as usual (P °कृंतं).

## संगीतिरिति १०० ।

बुद्धो भगवान्सत्कृतो गुरुकृतो मानितः पूजितो राजभी राजमात्रैर्धनिभिः पौरैः श्रेष्ठिभिः सार्थवाहैर्देवैर्नागैर्यक्षैरसुरैर्गरुडैः किन्नरैर्महोरगैरिति देवनागयक्षासुरगरुड-किन्नरमहोरगाभ्यर्चितो बुद्धो भगवान् ज्ञातो महापुण्यो लाभी चीवरपिण्डपातशयना-सनग्लानप्रत्ययभैषज्यपरिष्कारणां सश्रावकसङ्घः कुशिनगर्यां विहरति मल्लानामुपवर्तने यमकशालवने[1] ॥ अथ भगवांस्तदेव परिनिर्वाणकालसमये आयुष्मन्तमानन्दमामन्त्रयते स्म । प्रज्ञापयानन्द तथागतस्यान्तरेण यम‹क›शालयोरुत्तराशिरसं[2] मञ्चमद्य तथागतस्य रात्र्या मध्यमे यामे निरुपधिशेषे निर्वाणधातौ परिनिर्वाणं भविष्यतीति । एवं भदन्तेत्यायुष्मा-नानन्दो भगवतः प्रतिश्रुत्यान्तरेण यमकशालयोरुत्तराशिरसं मञ्चं प्रज्ञप्य येन भग[97b]-वांस्तेनोपसंक्रान्तः । उपसंक्रम्य भगवतः पादौ[3] शिरसा वन्दित्वा एकान्ते ऽस्थात् । एकान्त-स्थित आयुष्मानानन्दो भगवन्तमिदमवोचत् । प्रज्ञप्तो भदन्त तथागतस्यान्तरेण यमकशा-लयोरुत्तराशिरसं[4] मञ्चः ॥ अथ भगवान्येन मञ्चस्तेनोपसंक्रान्तः । उपसंक्रम्य दक्षिणेन पार्श्वेन शय्यां कल्पयति पादे[5] पादेनोपधायालोकसंज्ञी[6] स्मृतः संप्रजानन्निर्वाणसंज्ञामेव मनसि कुर्वन्निति ॥

---

1) B °वले, D corr. This is the second time that the holy relation of The Lord's *paranirvāṇa* is borrowed from the Tripiṭaka. Cp. *supra*, I, p. 227.

2) MS °रुत्तरं°.

3) MS पादयोः शिरसा.

4) Sic MS. In the parallel passage, *supra*, I, p. 227, 12, I was perhaps wrong in changing the transmitted °शिरसं, cp. *ibid.*, n. 5; the compound may, after all, be accepted as an avyayībhāva.

5) Ex conject.; MS पादेपादेनोप°. The text is here somewhat different from *supra*, I, p. 228, 1.

6) MS °संज्ञा.

तत्र भगवान्रात्र्यां[1] मध्यमे यामे ऽनुपधिशेषे निर्वाणधातौ परिनिर्वृतः । समनन्तरप-रिनिर्वृते[2] बुद्धे भगवति अत्यर्थं तस्मिन्समये महापृथिवीचालो ऽभूदुल्कापा‹ता› दिशोदाहा अन्तरीक्षे देवदुन्दुभयो नदन्ति[3] ॥ समनन्तरपरिनिर्वृते[4] बुद्धे भगवति उभौ यमकशा-[5]लवनस्य[6] द्रुमोत्तमौ तथागतस्य सिंहशय्यां शालपुष्पैरवाकिरताम्[7] ॥ समनन्तरपरिनिर्वृते[8]
5 भगवत्यन्यतरो भिक्षुस्तस्यां वेलायां गाथां भाषते ।

सुन्दरौ[9] खल्विमौ शालवन[10]‹स्या›स्य द्रुमोत्तमौ ।
यदवाकिरतां[11] पुष्पैः शास्तारं परिनिर्वृतम् ॥

समनन्तरपरिनिर्वृते बुद्धे भगवति शक्रो देवेन्द्रो गाथां भाषते ।

अनित्या बत संस्कारा[12] उत्पादव्ययधर्मिणः ।
10 उत्पद्य हि निरुध्यन्ते तेषां व्युपशमस्सुखमिति ॥

समनन्तरपरिनिर्वृते बुद्धे भगवति ब्रह्मा सहांपतिर्[13]गाथां भाषते ।

सर्वभूतानि[14] लोके ऽस्मिन्निक्षेप्स्यन्ति[15] समुच्छ्रयम् ।

---

1) B रात्र्यां, D corr.

2) MS परिनिवृत्ते.

3) MS नन्दन्ति.

4) MS परिनिर्वृत्ते (P °निवृत्ते).

5) MS यमकशारवनस्य (D °शालकवनस्य).

6) B द्रुमोत्तमौतथा° m. s., out of °मास्तथा°; D and P द्रुमोत्तमैस्तथा°.

7) MS °ष्पैरवकिरतां.

8) MS परिनिर्वत्ते (P °निवृत्ते). But *infra*, l. 8 and 11 the word is written without fault.

9) Ex conject.; MS सुन्दरे.

10) Ex conject.; MS शालावनस्य.

11) Ex conject.; MS यावदवकिरतां (D यावदेवंकिरतां).

12) MS संस्कार.

13) MS सहापति°.

14) B सर्वभूतास्मिं, the last akṣ. may also be read त्मिं, the copies have स्मिं distinctly. For this and the other stanzas cp. my paper in *ZDMG*, LIII, 122 foll.

15) MS °स्मिन्नक्षेप्संति. The Pāli redaction has here *sabbe va nikkhipissanti bhūtā loke samussayaṁ.*

एवंविधो यत्र शास्ता लोकेष्वप्रतिपुद्गलः[1]।

तथागतबलप्राप्तः चक्षुष्मान्परिनिर्वृतः ॥

समनन्तरपरिनिर्वृते बुद्धे भगवति आयुष्मान[2]निरुद्धो गाथां[3] भाषते ।

स्थिता आश्वासप्रश्वासा[4] स्थिरचित्तस्य तायिनः[5]।

आनिञ्ज्यां शान्तिमागम्य चक्षुष्मान्परिनिर्वृतः ॥ 5

तदाभवद्भीषणकं तदाभूद्रोमहर्षणम् ।

सर्वाकारबलोपेतः शास्ता कालं यदाकरोत् ॥

असंलीनेन चित्तेन वेदना अधिवासयन्[6]।

प्रद्योतस्येव[7] निर्वाणं विमोक्षस्तस्य चेतस इति ॥

सप्ताहपरिनिर्वृते बुद्धे भगवति आयुष्मानानन्दो भगवतश्चितां[8] प्रदक्षिणीकुर्वन्गाथां 10 भाषते ।

[9]येन कायरतनेन नायको

ब्रह्मलोकमगमन्महर्द्धिकः ।

---

1) MS पुंगलः. Cp. *supra*, I, 245 n. 3.

2) MS आयुष्मान्निरुद्धो.

3) Ex conject.; MS गाथां भाषतान्यिता etc. (D °भाषत्तिता).

4) Sic MS.

5) MS तायितः.

6) The participle disturbs the construction. The aor. *ajjhavāsayi* of the Pāli redaction might have been expressed easily and in accordance with the metre by अध्यवासयत्, and this is probably the right reading.

7) Ex conject.; MS प्रद्योतस्यैव.

8) MS °श्चित्तां.

9) Metre rathoddhatā. MS °रत्नेन. I have put रतनेन, in accordance with the exigencies of the metre.

